# सागरिका

ऊनविंश-वर्षे प्रथमोऽङ्कः
२०३७ विक्रम संवत्सरे

•

## अर्वाचीन संस्कृत महाकाव्य विशेषाङ्कः

लेखकः : डॉ० रहसविहारी द्विवेदी

•

सम्पादकाः

डा० रामजी उपाध्यायः (प्रधानः) डा० रेवा प्रसादः द्विवेदो
डा० राधावल्लभः त्रिपाठी डा० रामगोपालमिश्रः

प्रवर्तन-स्थली

सागरिका-समितिः,
गौरनगर
सागर (म० प्र०)

भारतीय संस्कृति-संस्थानम्
नारीवारी
इलाहाबाद (उ० प्र०)

प्रकाशकः

डॉ० राधावल्लभः त्रिपाठी

अध्यक्षः

सागरिका समितिः

गौरनगर, सागर (म० प्र०)

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ४·०० रूप्यकाणि |
| वार्षिकम् | १५·०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००·०० रूप्यकाणि |
| प्राचीनाः सर्वेऽङ्काः सवस्त्रपुटबन्धाः (Cloth Bound Vols.) | ५००·०० रूप्यकाणि |
| आजीवन-ग्राहकाणां कृते सर्वेऽङ्काः | २००·०० रूप्यकाणि |
| वर्षं १-५ प्रत्यङ्कम् | ७·०० रूप्यकाणि, वार्षिकाङ्काः |
| वर्षं ६-१० ,, | ६·०० रूप्यकाणि, वार्षिकाङ्काः |
| वर्षं ११-१५ ,, | ५·०० रूप्यकाणि, वार्षिकाङ्काः |
| वर्षं १६-१९ ,, | ४·०० रूप्यकाणि, वार्षिकाङ्काः |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र [जून-सितम्बर-दिसम्बर-मार्च] मासेषु |

मुद्रकः

एकेडमी प्रेस

दारागंज, इलाहाबाद

# प्रस्तावना

विंशशतके संस्कृतकाव्यप्रणयने गतिरोधो नास्ति। सम्प्रति महाकाव्य-लघुकाव्य-रूपकोपन्यास-लघुकथा-बोधकथा-व्यङ्ग्यकथा-रेडियो रूपक-मुक्तक-हास्यकविता-सङ्गीतिका-चम्पू-स्तोत्र--यात्राविवरण-गीत-जीवनचरितादिविविध विधासु संस्कृत-काव्यस्य भूयसी-अभिसमृद्धिर्दरीदृश्यते। तत्रापि महाकाव्य-समृद्धौ कश्चिद् विशेषः सुखावहो विस्मयः सुरभारती-सुधारसरसिकानां चेत. प्रसादयति। विंशशतकस्य सप्तमे दशके (१९६१-७०) यावन्ति महाकाव्यानि प्रणीतानि नैतावन्ति संस्कृत-सहित्यस्यादिकालतोऽद्यावधि कस्मिन्नपि-एतावति लघौ समयविभागे प्राप्तानि।

दशकेऽस्मिन् एकतः परम्पराप्रेरिता उच्चकाव्यप्रतिभामण्डिताः स्व० प्रभुदत्त शास्त्रि-स्व० काशीनाथद्विवेदि-प्रभृतयो शास्त्रीय दृष्टिस्वीकुर्वाणा महाकाव्यप्रणयने प्रवृत्ता अपरतश्च स्व० श्रीमाधव श्रीहरि अणे प्रभृतयो वर्तमानयुगपरिस्थितिप्रभा-वितानि महाकाव्यानि-अलेखिषुः। एतासु रचनासु परम्परां प्रति श्रद्धाया आधुनिकतां प्रतिआकर्षणस्य मधुरतरः सङ्गमो वरीवर्ति। एतेषां सत्यपि परम्परागते हृदया-ह्लादकारित्वे महनीयमेकं तत्त्वं सर्वव्यापि राराजते, तद् राष्ट्रियाया अभिनयचेतनाया व्यापकमभिव्यञ्जनम्। भारतीयस्वातन्त्र्यान्दोलनेन चीनपाकाक्रमणेन चैतेषां महाकाव्यानां राष्ट्रियचेतना संस्कृतकाव्यजगति भृशं प्रतिष्ठिता शारीरिकी चेतनामतिक्रम्य विराजते। शृङ्गारस्य रसराजत्वं राष्ट्रभक्तिसमेधितेन वीरेणात्र दृढं स्वायत्तीकृतम्। 'तत्रैको नायकः सुर' इत्यादि शास्त्रगताग्रहोऽपि शिथिलितः। अधुना स्वातन्त्र्यसङ्गरे प्रथितयशसां धीरवीराणां शिवाजी-लक्ष्मीबाई-तिलक-गान्धि-सुभाषचन्द्र-राजेन्द्रप्रसाद-जवाहरलाल-लेनिन-प्रभृतीनां चरितमाश्रित्य नैका महाकाव्यकृतयो विलसन्तितराम्। साम्प्रतं प्रायः सर्वेऽपि राष्ट्रनेतारो महाकाव्यनेतृत्वमपि कुर्वाणाः विलसन्ति। रामायण-महाभारत-श्रीमद्भागवत पालिजातकादिभ्योऽपि काव्यवस्तूनि गृहीतानि सन्ति। प्राचीनकथावस्तुषु युगोचितं परिवर्तनमपि कतिपयैः प्रज्ञामण्डितैः कविभिरकारि। आधुनिकेषु महाकाव्येषु सीता-गङ्गा-उर्मिला-सावित्री प्रभृतिनारीं-पात्राण्यपि महाकाव्यनायकरूपेण प्रस्तुतीकृतानि सन्ति। केचन कवय. कस्यचिन्नायक-विशेषस्य चरितचित्रणमुपसर्जनीकृत्य राष्ट्रियां परिस्थितिमेव सर्गबन्धविधया प्रस्तुतीकृतवन्तः सन्ति। एता रचना महाकाव्यानि सन्ति न वा? अत्र विपश्चिद्वराः सहृदया एव प्रमाणम्। सम्प्रति काव्यशास्त्रिभि. प्रस्तुतीकृता वर्णनीय-विषय-सूच्यपि परिधूसरितैव दृश्यते। प्रायेण वस्तुसम्पृक्तानि स्वल्पतराणि स्वाभाविकानि च वर्णनानि परिदृश्यन्ते। आधुनिकविषयसम्बद्धेषु महाकाव्येषु प्रायेण नाट्यसन्धीन्

प्रति-आग्रहो नास्ति। प्रसादगुणवैदर्भीरीतिसंवलितानि ग्रन्थग्रन्थि-मुक्तानि सरसया सरलया च भाषयोपनिबद्धानि महाकाव्यानि सन्ति। महाकाव्यप्रणेतॄणां प्रयोजनान्यपि पूर्ववन्न सन्ति। सहृदयहृदयाह्लाद-यशोलिप्सादिभिः सह वर्तमानराष्ट्रव्यापिनी समस्यानामभिव्यञ्जनं, राष्ट्रियसांस्कृतिकचेतनाया गायनम्, आधुनिकाना लोकनायकाना स्थायि संरक्षणम्, अद्यावधि समुपेक्षिताना सस्कृतसाहित्ये चानुपलब्धानामुदात्त चरित्राणा प्रस्तुतीकरणं प्रख्याताना कथानामाक्षेपग्रस्तस्थलानां परिमार्जनमित्यादीनि प्रयोजनानि सन्ति।

निबन्धोऽयं मम 'संस्कृत महाकाव्यो का समालोचनात्मक अध्ययन' (सन् १९६१ से १९७० ई) इत्याख्यस्य विद्यावाचस्पतिशोधोपाधिकृते आचार्य डॉ० कृष्णकान्त चतुर्वेदिमहाभागाना निर्देशने जबलपुर विश्वविद्यालये प्रस्तुतस्य हिन्दीग्रन्थस्य साररूपोऽस्ति। निबन्धान्ते-अर्वाचीनसस्कृतमहाकाव्य-तत्त्वमनुशील्य महाकाव्यलक्षणस्य पुनर्निर्धारणं कृतमस्ति महाकाव्यप्राप्ति-स्थानसङ्केतो निबन्धान्ते लिखितोऽस्ति। केषाञ्चन महाकाव्यानां महाकाव्यसूच्या नामोल्लेखः कृतोऽस्ति किन्तु तत्प्राप्त्यभावे तेषा समीक्षण न कृतम्। लब्धेषु तेषु तेषामपि समीक्षणं करिष्यते।

नायं पन्था यदपि बहुधा नूतन. सस्कृतस्य
दृष्टः सम्यङ्नव इति धिया नादृतश्चापि कैश्चित्।
भूयो भूयो न खलु कृतिनस्तावदेवं हसन्तो
नव्यैः काव्यैर्यदि न सरसैः संस्कृतज्ञा रमन्ते॥

मकर सङ्क्रान्तिपर्व
वि० सं० २०३७
समहन (मेजारोड)
(उ० प्र०)

डा० रहसबिहारी द्विवेदी
प्राध्यापक. सस्कृतविभागे
जबलपुर विश्वविद्यालयस्य

# विषय-सूची


| | |
|---|---|
| गणपतिसम्भवम् | १ |
| भारतविजयं महाकाव्यम् | ५ |
| रुक्मिणीहरणम् | ६ |
| गङ्गासागरीयम् | ११ |
| सीताचरितम् | १४ |
| बोधिसत्त्वचरितम् | १८ |
| शिवराज्योदयम् | २२ |
| छत्रपतिचरितम् | २८ |
| तिलकयशोऽर्णवः | ३५ |
| सुभाषचरितम् | ३९ |
| श्रीनेहरूचरितम् | ४२ |
| गान्धिचरितम् | ४६ |
| लेनिनामृतम् | ५० |
| अद्भुतदूतम् | ५४ |
| कर्णार्जुनीयम् | ५८ |
| किरातार्जुनीयम् | ६१ |
| श्रीकृष्णचरितामृतम् | ६३ |
| परशुरामदिग्विजयमहाकाव्यम् | ६५ |
| वामनावतरणम् | ६७ |
| सुदर्शनोदयम् | ६९ |
| वीरोदयमहाकाव्यम् | ७२ |
| यशोधरामहाकाव्यम् | ७४ |
| उर्मिलीयं महाकाव्यम् | ७६ |
| रक्ताक्तहिमालयम् | ७८ |
| विश्वमानवीयम् | ८२ |

झांसीश्वरीचरितम् ८४
गोस्वामितुलसीदासचरितम् ८७
श्रीस्वामिविवेकानन्दचरितम् ८९
श्रीनारायणविजयः ९१
श्रीमालवीयचरितम् ९३
स्वराज्यविजयमहाकाव्यम् ९६
भूभामिनीविभ्रमम् ९८
तर्जनी १००
गान्धिविजयं महाकाव्यम् १०१
गान्धिसौगन्धिकम् १०२
भारतीस्वयंवरम् १०३
रामचरितम् १०४
उपसंहारः १०५
अर्वाचीनमहाकाव्यतत्त्वविमर्शः ११०
१९६१ ई० वर्षतः १९७० यावत् प्रणीतानि महाकाव्यानि तेषां कवयश्च १५१

———

# १. गणपतिसम्भवम्

गणपतिसम्भवमहाकाव्यस्य प्रणेता प्रभुदत्तशास्त्री काव्यस्यान्ते स्वपरिचयं लिखितवानस्ति। तदनुसारमस्य जन्म वि० सं० १९४८ तमेवर्षे फाल्गुनशुक्लपक्षे पञ्चम्यां तिथौ गुरुवासरे राजस्थानप्रान्तस्यालवरसमीपे 'तातारपुरग्रामे'ऽभवत्। अस्य पिता श्रीरामशरणमिश्र. पितामहश्च श्रीरामप्रतापमिश्र आसीत्। राजस्थान एव मण्डावानामके स्थाने श्रीविलासरायशुक्ल-श्रीसूर्यानन्दयो सन्निधौ सर्वाणि शास्त्राणि समधीत्य देहली समागतः तत्रैव संस्कृताध्यापने साहित्यरचनायां च संलग्नः ११ दिसम्बर १९७२ ई० तिथौ स्वर्गमगच्छत्। विशेषतः संस्कृतसुकविरूपेणास्य प्रतिष्ठाऽस्ति। अस्य रचना[१]—(१) गणपतिसम्भवम् (महाकाव्यम्) (२) भारतविजयम् (अपूर्णमप्रकाशितंचैतन्महाकाव्यम्) (३) धन्वन्तरिजन्मामृतम्, (४) झाँसीश्वरीशौर्यामृतम्, (५) राष्ट्रध्वजामृतम् (६) संस्कृतवाक्सौन्दर्यम् (७) नान्दीश्राद्धामृतम् (८) चर्खावन्दनामृतम् (९) श्रीरामकीर्तिकौस्तुभ (एतानि सप्त खण्डकाव्यानि) 'संस्कृतवाग्विजय'—इति नामकं पञ्चाङ्कात्मकं हिन्दीभाषयोपनिबद्धं रूपकम् संस्कृतस्योपयोगित्वमुद्दिश्य प्रणीतमस्ति। श्रीमद्भगवद्गीतायाः व्यङ्ग्यमन्दाकिनीति नामकं हिन्दीभाष्यं शिवमहिम्नःस्तोत्रस्य हिन्दीभाष्यमपि शास्त्रिमहोदयेनाकारि।

गणपतिसम्भवे पुराणादिग्रन्थेषु-आंशिक रूपेण समुपलब्धानां गणेशकथाना कविकल्पनया परिवर्धनं परिवर्तनं च कृतमस्ति। सर्वाऽपि कथा शैशवाद् गणपतित्वं यावत् यथाक्रमं महाकाव्योचितैः सन्निवेशैः पल्लविता। पदे-पदे वर्तमानराष्ट्रियचेतना समुद्भाविता। वस्तुनो नेतृ रसस्य च युगानुरूपमनुव्याहरणं कवेः काव्यशास्त्रयोः प्रतिभां व्यनक्ति। शास्त्रीयाणां मान्यतानां स्वाभाविके सन्निवेशे रसपेशलवर्णने च सिद्धहस्तोऽयं कविः। दशसर्गात्मकमिदं महाकाव्यं किन्तु दशमे सर्गे कवेर्वंशादिवर्णनमस्ति। अत. कथावस्तुविन्यासदृष्ट्या नवसर्गात्मकमेव स्थीयते। अस्मिन् त्रयः पञ्चाशदधिकाष्टशतं पद्यानि सन्ति। सर्गान्त्यानि पद्यानि विहाय समग्राऽपि रचना शार्दूलविक्रीडितेनच्छ-

---

१. २।१७८६ स्टेटबैंककालोनी चाँदनीचौक, दिल्ली—६ —इति सर्वासा रचनाना प्राप्तिस्थानम्।

न्दसा[1] कृतास्ति। सर्गगतकथावस्तुसूचकानि सर्गनामानि वर्तन्ते। तान्येवम्—
१—हिमगिरिपरिचयः २—गिरिशगिरिजापरिणयः ३—योगशक्तिचमत्कृति.
४—शास्त्रार्थशस्त्रीभावः ५—गजमनुजयोजनम् ६—तान्तैकदन्तप्रसङ्गः
७—महाभारतलेखाख्यानम् ८—देवमोदकोपहारः ९—गणशासनोत्कर्षः
१०—काव्यान्तरपुष्पार्पणम्—

अस्य महाकाव्यस्य वस्तुविन्यास काव्यशास्त्ररीत्या महाकाव्योचित-मास्त। अस्मिन् नाट्यसन्धीना कार्यावस्थानाम् अर्थप्रकृतीनाञ्च यथायथं संयोजनं दृश्यते। काव्यात्मभूतध्वनि-रस-रीति-गुणालङ्कार-बिम्बविधान-प्रभृतीनां चारुतमा योजना महाकाव्यस्य नामकरणादन्तिमं पद्यं यावद् दरीदृश्यते। मातृभूरक्षणे शिरश्छेदे सत्यपि प्रयोजनसिद्धिः सफलप्रशासकस्या-दर्शाश्चात्र प्रतिबिम्बिता सन्ति। काव्यमिदम् अभिधया गणेशस्य कथां कथयति, लक्षणया देशस्य वर्तमानं स्वातन्त्र्यं प्रशासनं च लक्षयति, व्यञ्जनया च सहृदयहृदयाह्लादेन सहादर्शराष्ट्ररक्षकस्य तस्य च प्रशासनचारुतामभिव्यनक्ति। उत्तमकोटिकमेतन्महाकाव्यं कर्ता चास्य महाकविरस्तीति नात्र संशयः।

पात्रचित्रणे यदि शास्त्रं कविबुद्धौ विराजते तर्हि हृदयेऽद्यतनं भारत-राष्ट्रं समाहितमिव विलसति। एकतः काव्यशास्त्रस्योचितं प्रकृतिविभाजनं समर्यादं विद्यतेऽपरतश्च वर्तमानसमाजस्य जीवच्चित्रणं पात्रेष्वभिव्यञ्जितं दृश्यते। अत्र कवेरुच्चतममाध्यात्मिकं चिन्तनं राष्ट्रानुरागश्च तस्य परमाराध्येन गणेशेन सह समरसतामुपैति। काव्यनायको गणेशः आदर्शलोकनायक-भूमिकाया चित्रितोऽस्ति। काव्यस्य सर्वाण्यपि पात्राणि दिव्यानि सन्ति, तेषां विविधानि प्रतीकात्मकरूपाण्यपि सन्ति। यथा शिवः (धवलित) पार्वती (पीतवर्णा) गणेशश्च (रक्तवर्ण) एतानि त्रीण्यपि पात्राणि पूर्णब्रह्मणो गुणत्रय-भूतानि सन्ति। द्वितीयाया स्थितो पार्वती (भारतमाता) गणेश. (राष्ट्ररक्षाया शिरश्च्छेदे विहितेऽपि जीवित सन्नादर्शो गणपतिः) शङ्कर (राष्ट्रभक्तस्य कठोर परीक्षकः)। पार्वतीशङ्कराववाङ्मनसगोचरौ वर्तेते। अनयोः क्रीडा लीलामात्रम्। मनसि योगः संचरति बहिश्च गृहस्थवत् कार्यं दृश्यते—'अन्तर्योगबहिर्विधिर्व्यवहृतिर्नित्यं गृहस्थक्रमैः' (गणपतिसं—४।४०)। गणपति-सम्भवस्य पात्राणामुद्घोषे भारतराष्ट्रस्य जयघोषः श्रूयते, तेषां शक्तौ भारतीय-

---

[1]. छन्दः प्रयोगदृष्ट्या कविः पाश्चात्यमहाकाव्यशिल्पमनुहरन्निव दृश्यते। —'It will Tell its Tele both largly and intensely, and the dicition will be carried On the volume of a powerfull flowing meter'
—Abercrombie The Epic, Page 55

योगस्य योगो दृश्यते, तेषां गायने भारतस्य राष्ट्रगीतमनुगीयते, तेषां स्वरूपे भारतीयाया जनताया आदर्शरूपमवलोक्यते. तेषां कार्येषु देवानामलौकिकता विद्यते, तेषामवलोकने आ हिमालयात्कन्याकुमारी यावद् भारतस्य वीरभोग्या वसुन्धरा दृग्गोचरीभवति, तेषामाचरणे धर्मशास्त्रस्थशासनं प्रतिफलितमिव दृश्यते। पात्रचित्रणे-अध्यात्मशास्त्र-राष्ट्रानुरागाणामद्भुतः समन्वयआस्ते।

चरितनायकस्य गणेशस्य सप्त रूपाण्यत्र प्राप्यन्ते—१—बालकः २—गजानन ३—गणपतिः ४—एकदन्त ५—लेखकः (महाभारतस्य) ६—मोदकप्रियः (पर्यटकः) ७—आदर्शप्रशासकश्च। पदे-पदे गणेशस्य चित्रणे राष्ट्रभक्तेर्दर्शनं भवति। शैशवावस्थाया मातुरादेशमनुस्मृत्य द्वाररक्षके तत्पर सन् स शिवं प्रति वक्ति—

'यस्या अंशकणाऽणुतोऽस्मि धृतवानेतामनूनां तनूम्
तस्या अङ्गुलिदघ्नदेहवलये नान्या गतिं सस्हे।
खण्डानां तु कथैव का ? चणकमो गृह्येत चेत् तत्कणः।
तस्मै चापि शरीरक शकलयन् कुर्यात् रण सत्रणम्॥
(गणपतिसं—४।१३

स वदति—

मातुर्वचो न भञ्ज्यां भञ्ज्या. शिरो मदीयं—

सुच्छेदो मम मस्तकस्तु भवता तीक्ष्णत्रिशूलिस्त्वया।
दुश्छेदं मयका तु मातृवचनाख्यं मातृभूवद् धनम्॥
गणपतिसं० ४।२१

महाकाव्येऽस्मिन् सर्वत्र राष्ट्रभक्तिपरिमलितो वीररसः प्रामुख्यं भजते। संयोगश्रृङ्गारस्यासामान्या स्थितिः योगशक्तिचमत्कृतिनामके तृतीये सर्गे वरीवर्ति। अपूर्वा काऽपि शैली कविनाऽङ्गीकृताऽस्ति। अत्र योगं समुपवर्णयन् श्रृङ्गारस्याप्यभिव्यञ्जन कुरुते। तथ्यमिदं कण्ठतोऽपि वक्ति—

केलि. केलिसमूह एव शिवयोर्वा योगभोगात्मक.।
गणपतिसं० ३।६

करुणं विहाय प्रायेण सर्वेषा रसानां परिपाकोऽत्र—दृश्यते। गणेशस्य शिरश्छेदावसरेऽपि करुणरसो नास्ति। करुणरसविषये कविः स्वविचारमेवं प्रकटयति—

हा ! कारुण्यरसः कुशिष्य ! भवता स्वप्नेऽपि नास्वादितः ।
हा ! हा ! हा ! करुणो रसः स तरुणः स्पृष्टो न दृष्टस्त्वया ॥
गणपतिसं० ६।६५।६६

आप्रबन्धं देवविषया रतिः परिव्याप्तेति काव्यस्यास्यान्यतमं वैशिष्ट्यमस्ति। यत्र-तत्र कवेर्विनोदपूर्णा प्रकृतिर्मुखरिता दृश्यते। सत्यपि भाषायामसाधारणेऽधिकारे नवप्रचलितशब्दानां प्रयोगं करोति।

यथा—

ग्रामोफोननखा च वृद्धवनिता गीताविगीतैव सा। २।६०
निष्पापोऽपि च सर्वथा भवति यः पापाख्यलापप्रियः ॥ ४।४५

यत्र-तत्रानुरणनात्मशब्दानामायोजनमपि कर्णप्रियतामुपैति—

घन्-घन्-घन्निति दुन्दुभिध्वनिमिषाद्ददस्वान यस्याह्वयं,
छन् छन् छन्निति मञ्जुलो ध्वनिरभून् मञ्जीरपुञ्जोद्भवः।
तत् ततच्च तडाक् तडागिति मुहुः खट्वालशब्दोऽभवत्,
शिञ्जाना रि रि रीति सा नूपुरवा सारङ्गिकाऽभूत् प्रिया ॥ १०।८०

महाकाव्येऽस्मिन् कविर्न केवलं जनतां तत्कर्त्तव्यविषय उपदिशति, (द्र० ८।३ आदि) अपितु राष्ट्राध्यक्षस्य योग्यतामपि निर्दिशति। गणपतिः शिरोबलिं दत्त्वैव पूजार्हो जातः। तथैव राष्ट्रशासकचरित्रे कश्चिन्महान् त्यागोऽवलोकनीयः केवलं राष्ट्रियोत्सवेषु राष्ट्रध्वजं स्पृशन् बाह्यगलेन राष्ट्रगीतं च गायन् न कश्चिद् राष्ट्रनायको भवेदिति कवेर्मतम्—

दत्त्वैवात्मशिरोबलिं गणपतिः प्राप्तोऽभवत् पूज्यताम्,
एवं राष्ट्रसुशासनेच्छुचरिते लोकेऽस्ति नः स्याद्बलिः।
न स्यात् केवलमुत्सवेषु मिलितो राष्ट्रध्वजस्पर्शकः,
बाह्येनैव गलेन गायति च यः स्वां राष्ट्रगीतावलीम् ॥
गणपतिसं० ८।४६

———

## भारतविजयं महाकाव्यम्

इदमपि महाकाव्यं प्रभुदत्तशास्त्रिणा विरचितमस्ति । सम्प्रति कृतिरियमप्रकाशितैव विद्यते । अस्य काव्यस्य प्रथमसर्गस्य प्रथमानि चत्वारि पद्यानि गणपतिसम्भवस्य पृष्ठभागे समुद्धृतानि । तेषु पद्यद्वयं प्रस्तूयते—

नीरक्षीरविवेकचञ्चुरिति यच्चञ्चुश्चिराच्चर्च्यते ।
तच्चञ्चूरिव लेखनी चलतु ये मुक्ताऽऽक्षरोच्चायिनी ॥
हंसत्वेष तथाऽम्ब ! निह्नुतिमितश्चित्तेऽपि नो दृश्यते ।
किन्त्वेषा जरतोऽपि ये करतले नृत्यत्यलङ्कारवत् ॥१॥
गीर्वाणेति पदं दधु. सुरगणास्त्वत्प्रत्तगीगौरवैः ।
तेभ्योऽद्याम्ब ! निधेहि मेऽपि वचने किञ्चिन्निजं गौरवम् ॥
राजस्थानदिशं प्रति स्वजननाऽनृण्यक्रियाऽपादकम् ।
निर्माया नवनीतनीरजसमं नव्यं स्वकाव्यं यत ॥

---

## २ रुक्मिणीहरणम्

रुक्मिणीहरणमहाकाव्यकर्तु: सुधीसुधानिधेः श्रीकाशीनाथस्य जन्म कांशीस्थ 'पिपरीपर'—नामके स्थाने १८५४ मिते विक्रमसंवत्सरे माघकृष्णा-मायां सरयूपारीणब्राह्मणवंशस्य द्विवेदिकुलेऽभवत्। अस्य पिता संस्कृतायुर्वेदयो-र्विशारदः श्रीरुद्रदत्तशर्मा द्विवेदी, माता कौशल्या, पितृव्यश्च सनातनधर्मो-द्धारग्रन्थप्रणेता महामहोपाध्याय उमापति. [नक-छेदराम] द्विवेदी आसीत्। अयमध्येतु स्वपितृव्यस्य म० म० नक-छेदरामस्य समीप एवावात्सीत्। अस्य प्रगाढसंस्कृतविद्यापाण्डित्यम्, अपूर्वोर्जस्वलब्राह्मण्यं सुमधुरसरसकवित्वं च समवलोक्य स्वामी श्रीमनीषानन्दोमहामनोमदनमोहनमालवीयप्रमुखाणां काशीस्थानां विदुषां सदसि 'सुधीसुधानिधि' रिति—उपाधिमस्मै प्रायच्छत्। २०२६ विक्रमसंवत्सरे पौषकृष्णप्रतिपदि केवलेनाविचलविमलयशःकायेन भूतलमलञ्चकीर्षु र्दिविषदां परिषदमलञ्चकार। अस्य कवेः केवलं रुक्मिणी-हरणमहाकाव्यमेवास्ति। यत्र तत्र स्फुटपद्यानि प्राप्यन्ते।

रुक्मिणीहरणमहाकाव्यस्य रचना श्रीमद्भागवतस्य दशमस्कन्धोत्तरा-र्द्धस्य द्वापञ्चाशत्तमत· चतु.पञ्चाशत्तममध्यायं यावत् वर्णितां कथामाश्रित्य कृताऽस्ति। अस्मिन् काव्ये रुक्मिण्या· पूर्वरागात् तस्या हरणं यावत् वर्णनमुप निबद्धमस्ति। काव्यलेखनतिथिसङ्केतं कुर्वता कविना व्यलेखि—श्रीरुक्मिणी-हरणमेतदपूरि तेन काव्यं द्वियुग्मगगनक्षणि विक्रमस्य (२१।१०५) अर्थात्' काव्यस्य पूर्तिः २०२२ विक्रमसंवत्सरेऽभवत्।

रुक्मिणीहरणकथामाश्रित्य प्रायः सर्वास्वेव विद्यासु काव्यरचना कृता-ऽस्ति[१]। तथापि महाकाव्यमिदं मौलिकोद्भावनाभिर्मण्डितं सत् गौरवपूर्ण-स्थानं भजते। अत्र सहृदयाः प्रमाणम्—

कल्पना नूतना चाऽस्मिन् महाकाव्ये स्थले स्थले।
नूनं श्रीहर्षकाव्यस्य कल्पनामतिशेरते॥
[श्रीकपिलदेव त्रिपाठी—'जटिलजी']

रुक्मिणीहरणं कर्तु शिशुपाले स्थिते सति।
काशीनाथ. कविः श्रीमान् कृष्णचन्द्रोऽथवा क्षमः॥
— (युगल किशोर विरला)

---

१. द्र० सुधीसुधानिधेः रुक्मिणीहरणम्—सागरिका—११-२

शृङ्गारपूरं न विलासलिप्तं रसोक्तिसिक्तं न च नारिकेलम् ।
ग्रन्थेर्विमुक्तं मधुवर्षिकाव्यं सुधीसुधानिध्यनुबन्धितं यत् ॥
—(डॉ० रहसविहारी द्विवेदी)

महाकाव्येऽस्मिन् शताधिकपद्ययुता एकविंशतिः सर्गा वर्तन्ते। तेषु २५४७ पद्यानि सन्ति। प्रत्येकं सर्गस्य कथावस्त्वेवं विद्यते—रुक्मिणीवर्णनम् २—नारदादेशः ३—रुक्मिणीपूर्वानुवर्णनम् ४—षड्ऋतुवर्णनम् ५—रजनीपरिवृढोपालम्भः ६—कामस्वभाववर्णनम् ७—मूर्च्छा ८—भीष्मकसभायां रुक्मिविकारः ९—रुक्मिणीसन्देशः १०—द्वारिकादर्शनम् ११—रुक्मिणीधर्मपरीक्षणम् १२—धर्मः १३—प्रभातवर्णनम् १४—शिवस्तुति. १५—श्रीकृष्णयात्रा १६—कुण्डिनपुरप्राप्ति १७—रुक्मिणीसान्त्वनम् १८—कुण्डिनपुरदर्शनम् १९—रुक्मिरोष २०—रुक्मिणीहरणम् २१—द्वारिकाप्राप्ति.।

श्रीमद्भागवतस्य रुक्मिणीहरणप्रसङ्गो मौलिकपरिवर्तनं विना कविकल्पनयाऽत्र परिवर्धितः। रुक्मिणीवर्णनस्यैव प्रामुख्यमत्र वर्तते, रुक्मिण्या एव प्राधान्यमत्राऽस्ति-अतो नारीप्रधानमेतत् काव्यमिति वक्तुं शक्यते। रुक्मिण्याः समग्रं जीवनमत्र न चित्रितं केवलं तस्याः पूर्वरागतः हरणं यावद्-अत्यल्पायाः कथाया वर्णन उत्तमानां पद्यानां पञ्चाशताधिकद्विसहस्रं यत्र कवेरगाधवर्णनशक्तिं पोषयति तत्र रजनी-प्रभात-चन्द्र-सागरदीनां सर्गव्यापि वर्णनं महाकाव्यवस्तुविन्यासदृष्ट्या न तावन् महत्त्वमर्हति। ऋतुवर्णन-समुद्रवर्णनादिप्रसङ्गो बलात् परिवर्धित इव दृश्यते। रुक्मिणीहरणस्य न कस्मिन्नपि पद्ये रमणीयताया अभावोऽस्ति। सर्वाण्यपि पद्यानि रमणीयनि रसमयानि च विद्यन्ते तथापि एकस्मिन्नेव प्रसङ्गे शताधिकानां पद्यानामास्वादने पाठकः शिथिलोत्साहो भवति। नैषधीयचरितस्य शिल्पमुपजीव्य रचितमिदं काव्यं श्रीहर्षस्य दर्पोक्ति महत्त्वहीनामिव कुर्वद्विराजते। काव्यस्य रचना शास्त्रीयान् नियमाननुसृत्य कृता, अतो नाट्यसन्धयोऽपि यथास्थलं विद्यन्ते। परिष्कृतया किन्तु सरलया भाषयोपनिबद्धत्वात् सामान्यपाठकोऽपि काव्यास्वादं गृह्णाति। प्राचीनमहाकाव्यै सह तुलना क्रियेत चेन्नेदमसुन्दरं दृश्यते किन्तु वर्तमानराष्ट्रस्वभावाभिव्यञ्जनमाधुनिकराष्ट्रियचेतनाया अभिव्यक्ति युगजीवनस्यच सम्यक् चित्रणं विना वर्तमानकाव्यधारातः पृथगिव दृश्यते। कविः किरातार्जुनीयशिशुपालवध-नैषधीयचरित-वर्णनेभ्यः प्रकृतिचित्रणादिवर्णनानि-आधिक्येन समुपस्थापयन् तानि अधरीकुर्वन्निव दृश्यते। अस्या दिशि विफलोऽपि कविरयं न प्रतीयते। बृहत्त्रयीकवीनां भाषासु पाण्डित्यप्रदर्शनमपि दृश्यते किन्तु समग्रमपि काव्यमिदं प्रसादगुणसंवलितवैदर्भीरीत्या प्रणीतमस्ति।

अस्मिन् लघुकथाया व्यापकं पल्लवनमस्त्यतः पात्राणां सङ्ख्याऽल्पीयसी विद्यते। श्रीमद्भागवतस्यैव पात्राणि सन्ति। कस्यचिदपि कविकल्पितपात्रस्य योजना नास्ति। पात्रचरितविकासे प्रायो व्यासेनानुव्याहृतरूपमेव परिवर्द्धितम्। पात्रेषु भारतीयायाः संस्कृतेः स्वरूपमभिव्यञ्जितं विद्यते। दिव्यादिव्यरूपेण नायकस्य श्रीकृष्णस्य परमोपदेशकसनातनधर्म-प्रतिष्ठापकरूपेण मितार्थदूतस्य ब्राह्मणस्य वासनारहिताया उपासिकाया नायिकायाश्च रुक्मिण्याः चित्रणेऽपूर्वं पाटवं कविना आविष्कृतम्। काव्यस्य विशालकायत्वात् पात्राणां स्वभावस्य प्रत्येकं पक्षः समुद्घाटितो विद्यते। रुक्मिण्यामेव समग्रमपि घटनाचक्रं केन्द्रीभूतमस्ति। अत इयमेव प्रमुखपात्रत्वं भजते। पात्रं समुपस्थापयन् कविः प्रथमं यथेच्छं तस्य शरीरसौष्ठवादेर्वर्णनं करोति तदनन्तरं तस्य स्वभावस्य रेखाङ्कनं कृत्वा चित्रणं कुरुते। काव्यारम्भ एव मालोपमया रुक्मिण्या वर्णनं कुर्वन् लिखति—

कमले कमलेव नीरदे चपलेवाम्बुजिनीव पुष्करे।
भवने किल तस्य रुक्मिणीत्यवतीर्णा स्वयमिन्दिराऽभवत्॥

(रुक्मिणीहरणे १।३)

रुक्मिणी कृष्णं प्रति-अनन्यभावेनानुरक्ताऽस्ति। स्वभ्रातुः शिशुपालेन विवाहस्याग्रहं श्रुत्वा सा वदति—

स्वाधीनाऽथ पराधीना सुभगा दुर्भगाऽपि वा।
तरुणी बालिका वा स्यात् सिंही किं शशकं श्रयेत्॥

(रुक्मिणीहर० ८।१५८)

रुक्मिण्या अनुरक्तिर्वासनाजन्या नास्ति तत्र देवविषया रतिरेव दृश्यते—

स्पर्शोत्प्रियस्य पदयोः सुखमात्मनोऽपि।
या विस्मृतिर्मम तु सैव मता विमुक्तिः॥

(रुक्मिणी० ६।६६)

श्रीकृष्णस्य चित्रणे वर्तमानस्य नेतुः स्वराः श्रूयन्ते। अस्पृश्यता-जाति-वादयोर्विरोधं प्रकटयति—

अमुं स्पृशेयं न विशेत्सुपर्वणां,
द्विजप्रवेश्यायतनानि नापरैः।
अमुष्य पेयं न पयोऽस्य पीयता—
मितीदृशी वो रुचिरा व्यवस्थितिः।

जनु. समानं परिदृश्यते यतः कुतस्तनी जातिभिदा तदिष्यते ।
निरूपिता यामवलम्ब्य जन्मिनां विभिन्नरूपा निगमेषु वृत्तयः ।।

(रुक्मिणी — ११।८४, ८५

समाजवादं प्रति श्रीकृष्णस्य भावना—

जनेषु कस्मान्न विभज्यते समं समानरूपेण समीहितं वसु ।
न कस्यचिद्यत्सहजं समीक्ष्यते न कोऽपि तत्राधिकृतो विशेषभाक् ।।

(रुक्मिणी — ११।८८)

पत्न्यां मृतायां सत्यां पुरुषस्य द्वितीयविवाहेन सुखानुभूति पत्यौ च मृते सति नार्या वैधव्यस्या सह्यवेदनां सतीप्रथां च सनातनधर्मस्य निरर्थकं पाखण्डमात्रं मनुते—

मृतास्वहो प्राणसमासु सत्वरं प्रमोदतेऽन्या परिणीय पूरुषः ।
कुलस्त्रिय स्वामिनि संस्थिते पुनर्वहन्ति वैधव्यमसह्यवेदनम् ।।

नमोऽस्तु पाखण्डविनिर्मिताय ते द्विजेन्द्र ! धर्माय विडम्बनात्मने ।
सहैधसा यत्र लतेव नूतना शवेन सत्रा तरुणी प्रदह्यते ।।

(रुक्मिणी — ११।९०।९१)

काव्यभाषाविषये कवि. स्वकीयां धारणां यथा व्यनक्ति तथैव काव्येऽस्मिन् प्रतिफलितमपि विद्यते—

जडस्य वाक्यस्य समुद्भवे स्वत. कथं विचारानुगतं निरीक्ष्यते ।
यथोचितं सन्धिविधिः क्रियास्थितिः यथायथं कारकसन्निवेशनम् ।।

—(रुक्मिणी ११।७३०)

अधोलिखितेषु पद्येषु रुक्मिणी विप्रेण कृष्णाय सन्देशं प्रेषयति । कविरत्र स्वकाव्यसमीक्षणमपि कुर्वन्निव दृश्यते—

धन्यास्त एव जगति श्रवणानि येषां वर्णं सदाऽभिलषितैर्निपुणंमृतानि ।
उत्कण्ठिता गुणकणांस्तव यै स्मरन्ती वाणी सुधामधुरिमाणमध.करोति ।।

(रुक्मिणी — ८।८४ तथा द्र० ९५, ९६)

प्रकृतेर्मानवीकरणे सिद्धहस्तोऽयं कविः । रुक्मिणी विप्रदूतं प्रति कथयति—

स्वच्छाः कटाक्षकुटिला. सरितो वनानि
तन्वीर्लताश्च कुसुमस्तवकाभिनम्राः ।
आलोक्यते कतिपयक्षणमात्रभावी
नेयो भविष्यति सुखं स्वजनैर्वियोगः ॥

(रुक्मिणी० ८।३०

---

# ३. गङ्गासागरीयम्

गङ्गासागरीयमहाकाव्यप्रणेतुः स्वर्गीयश्रीविष्णुदत्तशुक्लस्य जन्म १८९५ ई० वर्षे उत्तरप्रदेशस्योन्नावजनपदेऽभवत् । छात्रावस्थायामयं सन् १९२१ वर्षीयस्यासहयोगान्दोलनस्य सहभागी आसीत् । तदनन्तरं कवि-पत्रकारयो रूपेण हिन्दीजगति प्रतिष्ठितोऽभवत् । 'सहयोगी' ति नामधेयस्य हिन्दी-साप्ताहिकस्य प्रकाशनं 'सम्पादनं' चाकरोत् । हिन्दी-भाषया प्रणीतं 'सुलोचना सती' तिनामकं महाकाव्यमपि रचितवान् । हिन्दीभाषाया लेखकः सन्नपि संस्कृतं प्रति निष्ठावानासीत् । अत एव संस्कृतस्य महान् विद्वान्-भूत्वाऽपि संस्कृते न काव्यं रचयामास । श्रीशुक्लस्यापारदेशप्रेमैतेनैव प्रतीयते यत् केनचित् दाक्षिणात्येन कविना कृष्णानदीमधिकृत्य काव्यं व्यलेखीति श्रुत्वैव तावत् प्रथमं संस्कृतभाषाया अभ्यासं कृतवान् तदनन्तरं 'गङ्गासागरीयं' महाकाव्यं रचितवान् । एकमपरं सौलोचनीयमपि काव्यं संस्कृतभाषयोप-निबद्धं विद्यतेऽनेन यत् हिन्दीकाव्यस्य सुलोचनासतीत्याख्यस्यानुवादमात्रं विद्यते । गङ्गासागरीयकाव्यस्य प्रकाशनात्प्रागेव दिनाङ्क ५-२-१९६४ ई० तिथौ स्वर्गमगच्छत् । गङ्गासागरीयस्य रचनाकालः स्वयमेव कविना सङ्केतितः—

> वस्विन्द्राकाशनेत्राणां वत्सरे श्रावणीतिथौ ।
> विष्णुदत्तेन शुक्लेन पूर्णं काव्यमिदं कृतम् ॥
> अर्थात् विष्णुदत्तशुक्लेन सं० २०१८ श्रावणीतिथौ काव्यमिदमकारि ।

गङ्गासागरीयं संस्कृतस्य रूपकात्मकमेकं महाकाव्यमस्ति । पाश्चात्यविचारकैरियं विधा 'एलिगरी' (Allegory) इति नाम्ना कथ्यते । अस्मिन् 'प्रबोधचन्द्रोदयस्य' प्राचीनरूपककथाशिल्पं नानुसृतम् । आङ्गलसाहित्ये विंशशती यावत् रूपककथाया विकसितं शिल्पं वैदिके पौराणिके च साहित्येऽङ्गीकृतां च पद्धतिमनुसृत्य प्रणीतमेतन् महाकाव्यम् । काव्येऽस्मिन् पात्राणि प्राकृतिकानि सन्ति । यथा - सागरः गङ्गा हिमवान् मेघश्चेत्यादयः । अत्र एतानि पात्राणि प्राकृतिकदृश्यमात्रं न सन्ति-अपितु रक्तमांसनिर्मितानि मानवीयचेतनया स्वव्यक्तित्वेन च मण्डितानि चरित्राणि सन्ति । अत्र वैशिष्ट्यमेतद् यदेतेषां प्राकृतिकं भौगोलिकम् ऐतिहासिकं च रूपमपि रक्षितं विद्यते । हिमवतो गङ्गायाः सागरस्य च मानवीकरणं रामायण-महाभारत-

कालिदासीयादिसाहित्येषु बहुधा दृश्यते। अस्मिन् काव्ये मानवीकरणमेतत् व्यापकरूपेण कृतमस्ति। अत्र तृतीयकोटिकं रूपकत्वं स्वीकर्तुं शक्यते यत्र जडपदार्था मानवीयचेतनया युक्ताः सन्तः मानवसुलभया भाषया व्यवहरन्ति। शुद्धरूपेणात्र न काचित् शैली स्वीकार्या दृश्यते यतो हि सागरगङ्गादीनामैतिहासिक आख्याने प्राचीनकालादेव रूपकस्य मिश्रणं विद्यते। प्राचीनरूपकं गृह्णन् कविः नवरूपकत्वस्य साङ्केतिकार्थस्य वा योजनां कृतवानस्ति।

गङ्गासागरीयस्य कथावस्तु नवसर्गात्मकं विद्यते। ४७८ सङ्ख्याकानि पद्यानि सन्ति। लघुकायात्मकमेतत्महाकाव्यमस्ति। प्रत्येकं सर्गस्य कथावस्त्वेवं वर्तते। १—हिमवतो राज्यवर्णनम् २—राज्ञा हिमवता शिवस्य स्तुतिः कन्याभियाचनञ्च। ३—वरप्राप्ति तस्मात्कन्याजन्मसम्भावना ४—गङ्गाजन्म ५—गङ्गाया बाललीला ६—दूतानुबन्धः, वरुणपुत्रेण सागरेण दूतरूपेण गङ्गासमीपं मेघस्य संप्रेषणम् ७—उद्योगप्रकरणम्। गङ्गा वर्तमाननारीचेतनया समन्विता सती स्वाद्भुतान् तर्कान् प्रस्तूय स्वपितुः स्वयं पतिगृहगमनस्य स्वीकृतिं गृह्णाति। ८—प्रस्थानम्—गंगागमनमार्गस्योत्तरभारतस्य निसर्गश्री बहुधात्र चित्रिता। ९—सागरमिलनम्।

गङ्गापिता हिमवान्, तस्याः पतिश्च सागरोऽपरस्य कस्यचिद्राज्ञो भूभागमतिक्रमितुं न शक्नोति, भौगोलिकमेतत्तथ्यं कवि विश्वशान्तेर्महति समुद्देशे पर्यवसितं कुरुते। गङ्गा स्वयं पतिगृहं याति। कन्यायाः स्वयं पतिगृहगमनं लोकाचारविरुद्धमस्ति किन्तु यदा हिमवान् सागरश्च परराज्यातिक्रमणाय नोत्सहते तदा कः पन्था भवेत्? एतादृशी परिस्थितिं समुद्भाव्य कविर्वर्तमाननारीजागरणं काव्ये प्रतिबिम्बितं करोति। यत् परम्पराविरुद्धं सदपि समीचीनमेव प्रतीयते। नार्या स्वतोऽपि योग्यपतिवरणस्याधिकारोऽस्ति। समाजगतरुढयो लोकाचाराश्च यदि मानवनिर्मिताः सन्ति न तावत्प्रकृतिविधानभूतास्तर्हि यथासमयं केनचिदपि मानवेन संशोधनमपि तत्र कर्तुं शक्यते। यदि पितु स्वजातीयमपि प्रियं प्रति गमनं न संभाव्यते, प्रियस्यापि वरयात्रया सहागमनं न भवितुमर्हति तदाऽविवाहितत्वात् स्वयमेव योग्यं स्वजातीयं वरं प्रति गमनं नानुचितमिति। वैवाहिककार्यक्रमायोजनेऽपि कवेश्चातुर्यं श्लाघ्यमस्ति। अभिसरन्ती चञ्चला गङ्गा सागरस्य मिलनात्प्राक्लज्जाशीला सती मन्दं मदं प्रवहति। (प्राकृतिकं तथ्यमपि तादृशमेवास्ति)। तत्र स्थितः हिमवतो मित्रं कपिलः योगशक्त्या गङ्गाया अभिप्रायं जानाति। स एव सागरमाहूय विवाहविधिं सम्पन्नं कारयति। अत औचित्यरक्षणं भवति। आचार्येण भामहेन—'अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः। कथं दौत्यं प्रपद्येरन्निति युक्त्या न युज्यते'—इत्युक्तम्। गङ्गासागरीयं रूपकात्मकमेकं

महाकाव्यमस्ति । प्रकृतितः सागरादुत्थाय हिमवन्तं गच्छन् मेघोऽत्र दौत्यकर्म कुर्वाणो दृश्यते । मेघस्य गर्जनं गङ्गाम्भःपूरे हेतुभूतं च जलवर्षणं तस्माद् गङ्गाया द्रुतगत्या सागरं प्रति गमनं सत्यमेव । अतोऽत्र मेघस्य दूतरूपेणोपस्थापनं सर्वात्मनोचितमेव । कालिदासीयो मेघो दौत्यकर्म न करोति केवलं मेघं संबोध्य चेतनाचेतनेषु प्रकृतिकृपणः कामार्तो यक्षः सन्देशं श्रावयति । कालिदासेन विषयेऽस्मिन् स्पष्टीकरणमपि प्रदत्तम् (द्र० उत्तरमेघे—५७) । गङ्गासागरीयस्य मेघो निःशब्दो नास्ति । सागरो गङ्गां प्रति गमनस्यादेशमात्रं ददाति । सन्देशवाक्यं किञ्चिदपि न कथयति । गङ्गां प्राप्य मेघः स्वबुद्धिचातुर्येण सागरस्य गुणवर्णनं कृत्वा तं प्रति तामाकर्षितां करोति । गङ्गासागरीयस्य 'मेघदूतस्य' च मेघयोरयमेव भेदः ।

नारीप्रधानमेतन्महाकाव्यम् । कालिदासकाव्यवदत्र तीव्ररसाभिव्यञ्जनं नास्ति न च श्रीहर्षादिवत् कल्पनातिरेक एव । प्रसादगुणसंवलितवैदर्भीरीत्या प्रणीतमेतत्सरलं राष्ट्रभक्तिपूर्णं महाकाव्यमस्ति । रूपकात्मकशिल्पेन प्रणीतमेतत् संस्कृतसाहित्यस्य विरलं महाकाव्यम् । गङ्गामाध्यमेन कविः लोकाचारादिविषये स्वविचारं व्यनक्ति—

'यतो लोकाचारो भवति हि विधानं न नियतेः ।।
ततोऽस्यावज्ञाया विषय इह बाधा ननु कुतः ।।
(गंगा—७।११)

श्रमेणैव सिध्यन्ति कार्याणि लोके श्रमेणैव लोकोत्तरत्वं सुलभ्यम् ।
श्रमेणैव चोत्कर्षतां यान्ति लोकाः श्रमं साधयध्व श्रमं साधयध्वम् ।।
(गंगा—५।२८)

सगरमाध्यमेन विश्वशान्तिसन्देशं कविः प्रसारयति—

अपहरति कदासौ नैव कस्यापि राज्यं नहि खलु निजसीमां लंघते राष्ट्रवृद्ध्यै ।
परमनिरभिमान शीलसद्वृत्तिमूर्तिरभवदवनिचक्रे तादृशो नैव सम्राट् ।।
(गङ्गा—६।३६)

———

# ४. सीताचरितम्

सीताचरितकाव्यस्य सनातनोपनाम्नः पण्डितरेवाप्रसादद्विवेदिनो जन्म १९३५ ई० वर्षे २२ सितम्बरतिथौ रेवातटे भोपालसमीपे नादनेरनामके ग्रामेऽभवत्। पितुर्नाम श्रीनर्मदाप्रसादद्विवेदी मातुश्च श्रीमती लक्ष्मीदेवी आसीत्। बाल्यावस्थायामेव पित्रोःसुखाद् वञ्चितःसन् मातुलस्य श्रीशालिग्राम-परसाई महोदयस्याश्रये प्रारम्भिकमध्ययनं पूरितवान्। उच्चाध्ययन काशी-हिन्दूविश्वविद्यालये कृतवान्। विशेषतः साहित्यशास्त्रस्याध्ययनं श्रीमहादेव-शास्त्रिमहाशयादकरोत्। मध्यप्रदेशशासनस्य महाविद्यालयशिक्षासेवां सप्तवर्षाणि कृत्वा काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्यासङ्काये उपाचार्यत्वेना-ध्यापनं कुर्वन् पदोन्नत· सन् सम्प्रति (१९८० ई० वर्षे) साहित्यशास्त्रस्या-चार्योऽध्यक्ष. प्राच्यविद्यासङ्कायस्याधिष्ठाता, विश्वविद्यालयकार्यपरिषद सदस्यश्च विद्यते। १९६५ ई० वर्षे रविशङ्करविश्वविद्यालयरायपुरतः पी-एच० डी० इत्युपाधितः १९७४ ई० वर्षे जबलपुर विश्वविद्यालयतो डी० लिट् इत्युपाधित, १९७८ ई० वर्षे च राष्ट्रपतिपुरस्करेण सम्मानित.। कृतिष्वपि मध्यप्रदेशोत्तरप्रदेशराज्ययोर्विविधपुरस्कारेणानेकवारं सम्मानितः।

रचना.—काव्यग्रंथाः—१—सीताचरितं महाकाव्यम् २—यूथिका (नाटिका) ३—काङ्ग्रेसपराभवम् (नाटकमप्रकाशितम्) सम्पादितग्रन्था.—१—रघुवंशदर्पण २—कालिदासग्रन्थावली ३—रसार्णवसुधाकर, भाष्यम्—१—व्यक्तिविवेक., २—अलङ्कारसर्वस्वं ३—अलङ्कारविमर्शिनी। ४—अभि-धावृत्तिमातृका ५—शब्दव्यापारविचार., शोधप्रबन्धौ—१—हेमाद्रे रघुवंश-दर्पण. २—आनन्दवर्धन. (हिन्दीग्रन्थः) काव्यशास्त्रग्रन्थ.—१—काव्यालङ्कार-कारिका। काव्यशास्त्रीया निबन्धा.—१ संस्कृतकाव्यशास्त्रे तात्पर्य-स्वरूपम् २—रसस्य शाब्दकत्वम् ३—भोजस्य ध्वनिविचार ४—साहित्य-तत्त्वविमर्श.। अन्ये प्रमुखा निबन्धाः—१—मेघदूतमे शापावधि (हिन्दी) २—वन्दिनी विद्या ३—कालिदासभारती (अणुनिबन्धात्मिका) ४—कालिदासो मानवशिल्पी महाकवि।

कोशग्रन्थः—कालिदासशब्दानुक्रमकोश.

सीताचरिते रामस्य राज्यारोहणात् सीतायाः पातालप्रवेशं यावद् वर्णनमस्ति। अस्मिन् दश सर्गा. ६९४—पद्यानि च वर्तन्ते। सर्गनामानि एवं

सीताया विश्वबन्धुत्वभावना, तपस्या, कृषिविवर्धनं, योगेनान्ते तनुत्यागश्चेत्यादिकं काव्यस्यास्यासामान्यं वैशिष्ट्यमस्ति। गङ्गातटं प्राप्यैकाकिन्याः सीताया भावा द्रष्टव्याः—

> धिक् कोऽयं निजरुचिनामको जनानां
> विश्वस्मिन् मनसिशयोऽस्तु भेदहेतुः।
> येनेदं जगदखिलं समुद्रशैल-
> नद्याद्यैः शकलितमेकतां न याति।
>
> (सीता० ५।१०)

सीतोर्मिलादिचित्रणे साम्प्रतिकनारीजागरणस्य चित्रं समुद्भावितं विद्यते। उर्मिला सर्वाभिर्भगिनीभिः सह वनगमनायोद्यताऽस्ति, सा सीतां वदति—

> वयमप्यनिषिद्धनिर्गमा भवती यत्र विहातुमक्षमाः।
> गृहवद् वनमप्यसौ समं निमिकन्यासमितिः सुखं व्रजेत्॥
>
> (सीता० ४।५२)

काव्ये आद्यन्तं प्राचीनभारतीयसंस्कृतेर्नूतनाया राष्ट्रभक्तेश्च मधुरतरं सामञ्जस्यं प्राप्यते। काव्यस्य मुखबन्धे कविना व्यलेखि 'विश्वबन्धुत्वविधृता राष्ट्रियता हि काव्यमन्दिरेऽत्र देवता। 'न यशसे न धनाय शिवेतरक्षतिकृतेऽपि च नैव कृतिर्मम। इयमिमां भरतावनिसंस्कृतिं सुरगवीश्च निवेष्टुमुद्गता।'

महाकाव्यानुशीलनेन कथनमिदं चरितार्थं दृश्यते। सीता हिमगिरिगुरुशृङ्गतो पयोधिं यावद् भारतभूमिं स्वमृदुतल्पं स्वीकुरुते—

> हिमगुरुशृङ्गतः पयोधेर्गहनतमावटगह्वराणि यावत्।
> निखिलमपि निजार्यभूमिवक्षो निजमृदुतल्पममंस्त भूशयाना॥
>
> (सीता० ६।४२)

काव्येऽस्मिन् काव्यनायकस्य पदं सीताऽलङ्करोति। नारीप्रधानमेतत्काव्यं रामस्य धीरोदात्तरूपेण वर्णनं सदपि तत् सीताव्यापकत्वं नातिशेते। समग्रस्य काव्यस्य परिव्याप्तो रसस्तु राष्ट्रभक्तिपरिमलितो वीर एव विद्यते, किन्तु तस्य परिणतिरन्ततः शान्तरसे भवति सीताया भूसमाधिग्रहणेन मुक्तत्वात्। परिणामानुसारं शान्तरस एवाङ्गिरस इति वक्तुं शक्यते। पण्डितराजराजेश्वरशास्त्री द्रविडोऽस्मिन् शान्तरसमेवाङ्गित्वेन स्वीकरोति। (द्र० सीताचरिते पृ० १०) भूसमाधिकृते चोद्यतायाः सीतायाः चन्द्रकेतुं प्रति वत्सलभावप्रकटनावसरे विरक्तिस्नेहयोरद्भुतं संमिश्रणं दृश्यते। काव्यशास्त्री कविरत्र स्वयं सङ्केतं कुरुते—

# ५. बोधिसत्त्वचरितम्

कारयित्र्या भावयित्र्या च प्रतिभया मण्डित. डॉ० सत्यव्रत शास्त्री श्रीबोधिसत्त्वमहाकाव्यस्य प्रणेताऽस्ति । अस्य जन्म १९३० ई० वर्षे २९ सितम्बरतिथौ लाहौरनगरेऽभवत् । प्रारम्भिकी शिक्षाऽस्य पितुरभिनवपाणिने: श्रीचारुदेवशास्त्रिणो मार्गदर्शनेऽभवत् । उच्चशिक्षा पञ्जाबविश्वविद्यालयतो गृहीता । पी-एच० डी० शोधोपाधि. काशीहिन्दूविश्वविद्यालयात् प्राप्त । संस्कृतेन, हिन्द्या, आङ्ग्लभाषया वा कविरयं भाषणे, पाठने, लेखने च साधिकारं तिष्ठति । अयमाशुकविरप्यस्ति । नैकवारं विदेशयात्राऽपि शास्त्रिमहोदयेनाकारि । शोधप्रज्ञ. प्राध्यापक विद्वान् लेखक:, सफलश्च कविरयं सम्प्रति दिल्लीविश्वविद्यालयस्य संस्कृतविभाग आचार्याध्यक्षपदमलङ्करोति ।

डॉ० सत्यव्रतस्याधोलिखिता ग्रन्था सन्ति—(१) गुरुगोविन्दसिंहचरितम् (खण्डकाव्यम्) (२) बोधिसत्त्वचरितम् (महाकाव्यम्) (३) इन्दिराचरितम् (महाकाव्यम्) (४) दि रामायण ए लिङ्ग्विस्टिक स्टडी (आङ्ग्लभाषयोपनिबद्ध: शोधग्रन्थ ) (५) एसेज ऑन इण्डोलाजी, (६) वैदिक व्याकरण (आर्थर एन्थोनीमेकडानलेन विरचितस्य 'ए वैदिक ग्रामर फार स्टूडेंट्सेति ग्रन्थस्य हिन्द्यानुवाद.') (७) षड्ऋतुवर्णनम् (खण्डकाव्यम्) (८) बृहत्तरं भारतम् (शतककाव्यम्) (९) शमर्यदेश सुतरा विभाति (यात्राविवरणात्मकं खण्डकाव्यम्) (१०) शोधपत्रिकासु प्रकाशिता सप्तत्यधिका. शोधनिबन्धाश्च सन्ति ।

बोधिसत्त्व परिपूर्णबोधात् प्रागवस्थाया स्थितस्य बुद्धस्य रूपं सत्त्वंवाऽस्ति । महाकाव्येऽस्मिन् विविधै रूपैर्बोधिसत्त्वावदानकथा चतुर्दशसर्गैर्विभक्ता सन्ति । अस्मिन् चत्वार· सर्गा (द्वितीयत. पञ्चमं यावत्) बोधिसत्त्वे नृपतिरूपेण द्वौ सर्गौ (प्रथमस्त्रयोदशश्च) वणिक्रूपेण त्रय. सर्गा (षष्ठो द्वादशश्चतुर्दशश्च) क्रमश· भिक्षुकत्वेन, कृषकत्वेन, शिक्षकत्वेन च प्रस्तूयन्ते । सर्वेष्वेव रूपेषु बोधिसत्त्वस्य चरित्रं बौद्धधर्मस्य कतिपयेषामादर्शानां व्याख्यां कुरुते । जीवनस्योदात्तानि मूल्यानि सप्तकथासु (द्वितीयत: पञ्चमं सर्ग यावत् सप्तमे नवमे च सर्गे) बोधिसत्त्वस्य चरितविकासेन प्रतिष्ठितानि । अवशिष्टासु कथासु च बोधिसत्त्वेन प्रदत्तैरुपदेशै· प्रस्तुतीकृतानि ।

श्रीबोधिसत्त्वचरितस्य कथावस्तु—एकस्यैव चरितनायकस्याधारं गृहीत्वा न विन्यस्तम् । अत परम्परागतमहाकाव्यवस्तुविन्यासपद्धतिरत्र न

दृश्यते। अस्य नायका विभिन्नव्यवसायसंलग्ना जनाः सन्ति। अतो नाट्य-सन्धीनां सम्भावना समाप्तेवास्ति। साहित्यदर्पणकृता विश्वनाथेन 'एक-वशभवा भूपा. कुलजा बहवोऽपि वा (सा० द० ६।३१६) इत्युक्त्वा-अनेकेषां नायकत्वे सहमतिर्व्यक्ता। श्रीबोधिसत्त्वचरित एकस्मिन्नेव कुले जाता जनास्तु नायकत्वेन न प्रस्तुतीकृताः किन्त्वेतेऽभिन्नात्मनो रूपेण कल्पिता सन्ति। अयमात्मा तत्तज्जन्मनि समुपस्थितो बोधिसत्त्वस्यैवात्माऽस्ति। अनया कल्पनया विशृङ्खलघटनास्वपि एकरूपता समागताऽस्ति। पालिजातकेषूप-लब्धानां कतिपयेषां बोधिसत्त्वावदानानां रमणीयाः कथा. काव्योपनिबद्धाः कर्तुं कवेरीहा विद्यते। (द्र० काव्यभूमिकायां कवेर्विचारा.) अतो वस्तुविन्यासे नाट्यसन्धीनां स्थाने बौद्धानामष्टाङ्गिकमार्गा एव परिपुष्टा दृश्यन्ते। एतेऽष्टा-ङ्गिकमार्गा. विविधानां पात्राणां चरित्राङ्कनेनाभिव्यञ्जिता कुत्रचिच्च कण्ठतोऽप्युपात्ता सन्ति। प्रथमसर्गे 'सम्यक्दृष्टे' रेव परिणामोऽस्ति यत् व्यापारी बोधिसत्त्वो दु.खस्य कारणं ज्ञात्वा तस्मान्मुक्तो भवति। द्वितीये सर्गे काशीनरेशरूपेण बोधिसत्त्वः स्वाहिंसाया भावनया श्रेष्ठत्वमुपयाति। तृतीये चतुर्थे च सर्गेऽहिंसा-दया-सम्यक्सङ्कल्पाश्च दृश्यन्ते, यत्र बोधिसत्त्वोऽत्यन्तं बोधितोऽपि सन् कोशलनरेशस्य प्रतीकारं न करोति। अस्मिन्नेव प्रसङ्गे सम्यग्वागपि पुष्टिं व्रजेति यदा मिथ्याभाषिणं दुष्टमन्त्रिणं कोशलनरेशो दण्डयति। पञ्चमे सर्गे भ्रातरं प्रति सद्भावसम्पन्नाया भगिन्याः स्पष्टेन सत्यभाषणेन सर्वे मुक्ता भवन्ति। षष्ठे सर्गे सम्यक्कर्मणो व्यायामस्य पुष्टिः भिक्षोः कामवासनातो विरक्तये सदुपदेशस्य माध्यमेन भवति। सप्तमेऽष्टमे नवमे च सर्गे शिवेः कामपरता तस्याश्च नियन्त्रणेन तस्य साफल्यं सम्यक् कर्मण. सम्यक् स्मृतिरूपमार्गस्य च पुष्टिं करोति। दशम एकादशे च सर्गे पत्न्या सह कलहायमानं राजानं बोधिसत्त्वः सम्यक्वाचोपदिशति। द्वादशे सर्गे सम्यगाजीवेन युक्त कृषकः स्वपुत्रं मृतं दृष्ट्वाऽपि स्वकार्ये रतो भवति स्वकीयेन समग्रेण कुलेन सह सम्यक् स्मृत्याऽनासक्त्या च पुत्रनिधनेन किञ्चि-दपि दुःखी न भवति। स संसारस्य क्षणभङ्गुरतायां विश्वसिति। त्रयोदशे सर्गे पीलियसङ्घरूपिबोधिसत्त्वयो. पारस्परिकेण व्यवहारेण लोभाद्विरक्तिः। अत्र सत्यस्यौदार्यस्य परोपकारस्य च पुष्टिर्भवति। अन्तिमे च चतुर्दशसर्गे आचार्यशिष्ययोर्माध्यमेन नाम्नः कर्मणा न कश्चित्संबन्धो भवति, अत. सम्यक् कर्म करणीयमिति प्रतिपादितम्। एवं समग्रे कथावस्तुनि बौद्धधर्मस्या-ष्टाङ्गमार्गा, अनुस्यूता दृश्यन्ते।

काव्येऽष्टाङ्गिकमार्गाणां परिपुष्टिरुदात्त-मानवीयगुणाभिव्यञ्जन-दृष्ट्या समीचीनाऽस्ति। अपूर्वेयं महाकाव्यवस्तुविकासशैली, किन्तु काव्येऽस्मिन्

रसपरिपाकस्य परम्परागता काव्योचिता संभावना समाप्तिं गताऽस्ति। अस्याङ्गी रसो वीरोऽस्तीति वक्तुं शक्यते। सोऽपि धर्मरूपो दयारूपश्च दृश्यते। शृङ्गारशान्तादिरसा अङ्गभूताः सन्ति। क्वचित् क्वचित् पात्रेषु मनोवैज्ञानिकान्तर्द्वन्द्वस्य दर्शनं भवति। फलत उत्तमेऽपि पात्रे (बोधिसत्त्वात्मके शिविकुमारे) कथानुरोधात् परपत्नी (सेनपतेः पत्नीमुन्मदन्ती) प्रति केवलं नायकपक्षीया रतिर्वर्णिताऽस्ति।[1] अत शास्त्रीयदृष्ट्याऽत्र शृङ्गाराभासो भवति। 'शृङ्गाराभासः स तु यत्र विरक्तेऽपि जायते रक्तः। एकस्मिन्नपरोऽसौ ना भाष्येषु प्रयोक्तव्य।' (रुद्रटस्य काव्यालङ्कारे १४।३६) अनौचित्यप्रवर्तितोऽयं शृङ्गाराभासो मानवीयान्तर्द्वन्द्वाभिव्यक्तौ नासङ्गत. स्यात्, यतो हि राजा शिविकुमारः स्वसमीहितायाः प्रेमिकायाः सर्वात्मनाऽनासक्तो भूत्वैवान्ततो मनः प्रसादं लभते।

श्रीबोधिसत्त्वचरितमितिवृत्तप्रधानं धार्मिककाव्यमस्ति। अत. कथाना पात्राणाञ्च वैविध्यमस्ति। यत्र-तत्रैकनामधारी जन पृथक्-पृथक् भूमिकासु चित्रितं दृश्यते। सर्वेष्वेव पात्रेषु बौद्धधर्मस्य सिद्धान्ता अनुस्यूताः सन्ति। नायकाः प्रारम्भत एव बौद्धधर्मावलम्बिनः दृश्यन्तेऽथवा पश्चात् बौद्धधर्मस्य महत्त्वं ज्ञात्वा तं स्वीकुर्वन्ति। पञ्चमसर्गस्य मातृभक्तिकथा विहाय सर्वत्र प्रामुख्यं बोधिसत्त्वात्मकस्यैव पात्रस्यास्ति। काव्येऽस्मिन् चरित्राङ्कनस्य द्वे पद्धती दृश्येते। प्रथमा—पात्रगुणानां शब्दत· कविमुखेन प्रतिपादनं द्वितीया च—पात्राणा कार्यव्यापारे तद्वक्तव्ये वा तेषां स्वभावस्य निरूपणम्। अत्र द्वितीया पद्धतिरेव श्लाघ्या भवति।

बोधिसत्त्वस्य चरित्रमेव काव्यस्य प्रमुखं प्रतिपाद्यं विद्यते। बोधिसत्त्वस्य चरित्रं प्रायेण सामान्यचरित्रेण साकं स्थापयित्वा तदनन्तरं तदुत्थानमङ्कितमस्ति। अनया प्रक्रिययैकतोऽतिप्राकृतस्यापरत. साधारणस्य निम्नकोटिकस्य पात्रस्य मानसिकी स्थितिश्चित्रिताऽस्ति।

काव्येऽस्मिन् क्वचित्-क्वचित् वर्णिकवृत्तमपि हिन्दीमात्रिककाव्यवद् अन्त्यानुप्रासेन समन्वितमस्ति। भाषायां—कवेरसाधारणोऽधिकारोऽस्ति। अस्मिन् महाकाव्ये सर्गबद्धतायां छन्दःप्रयोगे मानवीयश्रेष्ठमूल्यानां स्थापनायामलङ्कारादिप्रयोगे च शास्त्रीयनियमाः सम्यग् अनुसृता·, किन्तु वस्तु-

---

१. सुकोमलाङ्गी मृगलोचनां ता साक्षात्सुरस्त्रीमिव चन्द्रकान्ताम्।
दृष्टाममुष्यां निशि पौर्णमास्यां लब्ध्वाऽङ्गमानन्दमित कदा स्याम्॥
(श्री बोधिसत्त्वे—८।६४)

विन्यासे पात्रचरितविकासे रसपरिपाके च कवेर्नं तथा संरम्भो दृश्यते। पालिजातकानां संस्कृतमहाकाव्यीकरणमत्र श्लाघ्यमस्ति। समग्रेऽपि काव्ये प्रेरणाप्रदा सूक्तयो विलसन्ति—

यथा—

हिंसैव वर्धते बह्वी हिंसकं प्रति हिंसया।
सुखमात्यन्तिकं लब्धुमहिंसैव गरीयसी॥
(श्रीबोधि० ३।८०)

आपातरम्या विषयाः स्फुरन्तः समन्ततोऽन्ते परितापयन्ति।
न बुद्धिमांस्तेष्वधिकं रमेत सुदुस्त्यजांस्तान् न च रोचयेत॥
स्वप्नोपमाः सन्ति घनान्धकाराः कामादयोऽनिष्टकरा विकाराः।
(श्रीबोधिस० ६।२७।२८)

बोधिसत्त्वात्मकपात्रेषु प्रायः सर्वत्र क्षणभङ्गुरतायाः सांसारिक-दुःखानां च निरूपणं कृत्वा मुक्तेः प्रेरणा प्रदत्ता अस्ति। बोधिसत्त्वः कृषकपरिवारं संबोधयन् कथयति—

ध्येयं समस्तजगतः क्षणभंगुरत्वं
दुःखास्पदत्वमरसत्वमसुस्थिरत्वम्।
प्रेयो विहाय परमार्थरताः प्रकामं
श्रेयस्करं कुरुत कर्म गुणाभिरामम्॥
(बोधिसत्त्व० १२।१३)

शब्दकोशे व्याकरणे च कवेर्योग्यता प्रतिपदं दृश्यते। अतो यमकानुप्रासाद्यलङ्काराणामायोजनाऽनायासमेव प्राप्यते—

यथा—सुहृदहं हृदहं कृतिवर्जितः (४।११०) अनया विनयाश्रयणे श्रमणे रुचिरा रुचिरा रचिता न चिरात् (६।५६) समुदितो मुदितो नृपतिर्गुणैः सुरहितो रहितो निखिलैर्नलैः। अविकलं विकलङ्कमिहोज्ज्वलं रसमयं समयं गमयन्नगात्॥ (६।५५)

———

## ६. शिवराज्योदयम्

श्रीशिवराज्योदयप्रणेतु डॉ० श्रीधरभास्करवर्णेकरस्य जन्म १९१९ ईसवीयवर्षे ३१ जुलाई तिथौ नागपुरस्य एकस्मिन् संस्कृतनिष्ठे ब्राह्मणकुलेऽभवत्'। प्राथमिककक्षात उच्चशिक्षां यावन्नागपुर एवाध्ययनं कृतवान्। नागपुरविश्वविद्यालयादेव एम० ए०—पी—एच० डी०-डी०लिट्—इत्याद्युपाधयो लब्धाः कविना वर्णेकरेण। तत्रैव प्राध्यापकोपाचार्याचार्यादिपदमलङ्कृर्वाणः सम्प्रति (१९८० ई० वर्षे) सेवानिवृत्त सन् नागपुरे संस्कृतसेवां कुर्वन् तिष्ठति। वर्णेकरमहानुभावेन संस्कृतस्य साप्ताहिकपत्रस्य 'संस्कृतभवितव्यस्य' महाराष्ट्रीमासिकस्य 'योगप्रकाशस्य' च सम्पादनमपि कृतवानस्ति। अर्वाचीन संस्कृतसाहित्येऽपि महती रुचिरस्य विद्यते। महाराष्ट्रीभाषया 'अर्वाचीनसंस्कृतसाहित्य' नामकं ग्रन्थरत्नमपि भवता लिखितम्। कवे. सर्वा रचना एवं विद्यन्ते —

१—मन्दोर्मिमाला (स्फुटकाव्यचतु शती) २—महाभारतकथाः (गद्यसाहित्यम्) ३—भारतरत्नशतकम् (खण्डकाव्यम्) ४—स्वातन्त्र्यवीरशतकम् ५—कालिदासरहस्यं (शतकम्) ६—रामकृष्णपरमहंसीयम् (शतकम्) ७—वात्सल्यरसायनम् (शतकम्) ८—श्रीशिवराज्योदयम् (महाकाव्यम्) ९—विवेकानन्दविजयम् (महानाटकम्) १०—अर्वाचीनसंस्कृतसाहित्यम् (मराठीशोधग्रन्थ) ११—परोक्षपाणिनीयम् (हिन्दीप्रबन्ध.) १२—शिवराज्याभिषेकम् १३—अभङ्गधर्मपदम् (धम्मपदस्य मराठीपद्यात्मकं विवरणम्) १४—विविधपत्रपत्रिकासु प्रायेण शतद्वयं शोधपत्रादिकम्।

कविरयं भारतीयाया संस्कृतेर्महानुद्गाताऽस्ति। अस्य रचनासु राष्ट्रभक्तेर्भावधारा श्रुतिस्मृतिसमर्थिताभिर्मान्यताभि समरसा सती निरन्तरं प्रवहति। कविः भारतीयदेवीदेवता-सज्जनादिषुअत्यन्तमास्थावानस्ति । शिवराजे तस्य महत्तमाऽस्थाऽस्ति। अतएव तमाश्रित्य विशालकाव्यं महाकाव्यं लिखित्वाऽपि—एकां नाट्यकृतिमपि रचितवान्। स्वकीयां महाकाव्यकृतिमपि शिवराजाय समर्पितवानस्ति—

**शिवराजेन वीरेण मनोवाक्कायकर्मभि ।**
**अर्चितायार्पये भक्त्या देवाय जगतात्मने ॥**

शिवराज्यं प्रति कविविचारोऽवलोकनीयः—

वीरता साधुतोपेता साधुता चातुरीयुता ।
चातुरी लोकमाङ्गल्या चरितेऽस्मिन् विराजते ॥
तन्मया परया भक्त्या कविताविषयीकृतम् ।
सम्प्रीतयेऽस्तु सर्वेषां सज्जनानां निरन्तरम् ॥
(शिवराज्योदयभूमिकायां पृ० ८)

श्रीशिवराज्योदयमहाकाव्यं छत्रपतिशिवराजस्य वीररसोज्ज्वलं परमोर्जस्वलं चरितमाश्रित्य प्रणीतमस्ति । अस्य महाकाव्यस्य कथावस्तु ६८ सर्गैर्विन्यस्तमस्ति । आकारदृष्ट्या वर्तमानमहाकाव्येषु श्रीमाधव-श्रीहरि-अणेकविरचितं तिलकयशोऽर्णवं विहाय सर्वेषु बृहदाकारं वरीवर्ति। सर्गनाम तत्कथावस्तु चैवमस्ति—

१—सह्यमहाराष्ट्रीयम् २—साधुवर्यद्वयम् तुकाराम रामदासयोर्वर्णनम् ३—वसन्तमाङ्गल्यम् ४—शिवजन्म ५—शिवशिक्षकम् ६—दम्पतीमतभेद· ७—राजधानीप्रवासः ८—पारतन्त्र्यजुगुप्सा ९—स्वातन्त्र्यप्रतिज्ञा १०—स्वातन्त्र्यदिनोदय· ११—विजययात्रा १२—शत्रुव्यथा १३—विपत्तिद्वयाघातः १४—पितृमोचनम् १५—स्वराज्यसुधारणा १६—यवनराजकौटिल्यं १७—विजपुरेशविमातु प्रकोपवेदनम् १८—अफझुल्लप्रतिज्ञा १९—अफझुल्लसेनाक्रमणम् २०—कान्होजिवीरस्य निश्चयः २१—सङ्ग्रामप्रोत्साहनम् २२—आपदाघाताः २३—रिपुदूतागमनम् २४—शिवदूतप्रयाणम् २५—अफझुल्लव्यामोह २६—व्यूहरचना २७—शिवप्रयाणम् २८—सभामण्डप २९—अफझुल्लवध ३०—मातृसन्तोष ३१—शिवयशोवर्धनम् ३२—रुस्तुमफाजलखानयो पराभव. ३३—जोहराक्रमणम् ३४—श्रृंगापति. ३५—कूटप्रयोग. ३६—महासाहसम् ३७—शत्रुवञ्चना ३८—बाजिहौतात्म्यम् ३९—जीवदानम् ४०—सूर्यरावमर्दनम् ४१—शास्ताखानविमर्दनम् ४२—सूरतदहनम् ४३—शहाजि निधनम् ४४—खवासखानमर्दनम् ४५—सिन्धुदुर्गनिर्माणम् ४६ जयसिंहाभियानम् ४७—धनसञ्चयः ४८—पुरन्दरयुद्धम् ४९—जयसिंहप्रबोधनम् ५० जयसिंहाभिप्राय ५१—राष्ट्रहितोपदेश. ५२—शिवप्रकोपः ५३—निर्बन्धपाश. ५४—बन्धविमोचनम् ५५—मातृपुत्रसमागम. ५६—पुनरुत्थानम् ५७—सिंहगढविजय. ५८—स्वराज्यविमोचनम् ५ —छत्रसालप्रबोधनम् ६०—पर्णालिविजयः ६१—प्रतापरावहौतात्म्यम् ६२—गङ्गाभट्ट सङ्कल्प ६३—भवानीप्रार्थना ६४—राज्याभिषेकारम्भ ६५—शान्तिप्रयोगः ६६—तमात् सर्गात् ६८—तमं सर्गं यावद् राज्याभिषेकारम्भः ।

महाकाव्येऽस्मिन् शिवराजस्य जीवनमैतिहासिकक्रमेण प्रस्तुतीकृतं तथापि महाकाव्योचिते वस्तुविन्यासे सफलः कविरस्य। शिवराजस्य जीवनस्य समग्रा कथाऽत्रानुव्याहृताऽतो महाकाव्यस्याकारोऽत्यन्तं विशाल सञ्जातोऽस्ति। वस्तुविन्यासे नाट्यसन्धीनां काव्यशास्त्रोचितो निर्वाहःकृतः। काव्य-वस्तुनो बीजं काव्यादौ शिवराजस्य मातु. समक्ष कृतायां प्रतिज्ञायां दृश्यते—

कि जोवतेन विभवेन सुखेन तेन कि भारभूतकरवालधनः कृपाणं।
कि पौरुषेण यदि न प्रभवामि पातुं गो-देव-वेद-वनिता-द्विज-साधु-सघान् ॥
(शिवराज्योदये—८।२९)

समग्रं महाकाव्यं शिवराजस्य घटनाचक्रेष्वेव केन्द्रीभूतं तथापि विशाल-काव्ये कथावस्तुनि पात्राणां बाहुल्यमपि विद्यते। किमपि कविकल्पितं पात्रं नास्ति। चरित्रनायकोऽत्र शिवराजो विद्यते। काव्ये प्रस्तुतीकृतानि पात्राणि चतुर्विधानि—

| नायकपक्षीयाणि— | | प्रतिनायकपक्षीयाणि | |
|---|---|---|---|
| (१) प्रमुखानि— | (२) गौणानि | (३) प्रमुखानि | (४) गौणानि |
| १. शिवराजः | १. जाधवरावः | १. विजापुरेशोयेदिल | १. मुस्तफाखानः |
| २. जिजादेवी | २, दादोजि. | २. दिल्लीपतिऔरंगजेबः | २· फतेहखानः |
| ३. शहाजिः | ३. समर्थरामदासः | ३. अफजलखान· | ३. चन्द्ररावः |
| ४. बाजिप्रभुः | ४. कान्होजिः | ४. शास्ताखानः | ४. कृष्णाजि. |
| ५. तान्हाजिः | ५ शिवराजधर्मपत्नी | ५. खवासखान. | ५. सूर्यराव |
| ६ प्रतापरावः | ६. पन्तोजिः | ६. जौहरखान | ६ इनाहतखान. |
| | ७ छत्रसाल | ७. जयसिंह. | ७. दिलेरखान. |
| | ८. गंगाभट्टः | | ८. फौलादखानः |
| | | | इत्यादयः। |

शिवराजः परमो राष्ट्रभक्तोऽस्ति तस्य हृदये राष्ट्ररक्षाया धर्मस्य चादम्योत्साहो विराजते—

न सम्मानकामो न वा वित्तलोभो न च स्वार्थमोहो न शक्त्युन्मदो वा।
मनस्यस्तु वो राष्ट्रसेवाव्रतानां सखाय. कदाचित् कुतश्चित् कथञ्चित् ॥

वीरगति प्राप्तं स्वसेनापति प्रतापरावं वीक्ष्य शिवराजो वदति—

सेना हि परमा शक्तिः सैव राष्ट्रस्य चेतना।
सत्सेनापतिनोताऽसौ विजयश्रीप्रदायिनी ॥

त्वादृशा वीर ! सेनान्या सखे ! हन्त विना कृतः ।
प्रतापराव ! जातोऽस्मि भग्नबाहुरिवाधुना ।।
(६१।३१,३२)

अहिंसासत्ययोर्महत्त्वं स्वीकुर्वाणा दुष्टसंहारमहिंसां मन्यमाना च शिवराजस्य माता जिजा तमुपदिशति—

मान्या स मे य प्रथमो हि धर्म. पर स सापेक्षतयैव सेव्य ।
देवद्रुहां पापकृतां खलाना जानीहि हिंसामपि तामहिंसाम् ।।
जानीहि भोगान् सुलभानपि त्व भोगा हि भोगा इव पन्नगानाम् ।
स्वधर्मकल्याणपरायणास्ते महौजसो जातु न भोगसक्ता. ।।
आपत्सु राम समरेषु भीम. दानेषु कर्णश्च नयेषु कृष्ण ।
भीष्म. प्रतिज्ञा परिपालनेषु विक्रान्तकार्येषु भवाञ्जनेयः ।।
(५।३८।४७।५३)

सर्वाण्यपि पात्राणि राष्ट्रभावाभिभूता सन्ति। वाजिप्रभु राष्ट्ररक्षणेन सह स्वस्वामिरक्षणमपि कर्तुमिच्छति। स शिवराजं वदति तज्जीवनरक्षायै—

त्वत्सान्निध्यातिलुब्धोऽपि प्रार्थये नतमस्तकः ।
इतो दूरं प्रयाहीति क्षणेऽस्मिन्नेव कुत्रचित् ।।
(३८।१६)

वीरगतिंगच्छतस्तस्य करुणाभिभूतो वीरोचितोत्साहोऽवलोकनीय —

एष आह्वयते मृत्युः परलोकस्य गामिनः ।
असमाप्य तु कर्तव्यं न त्यजेयं कलेवरम् ।।
स्वामिन कुशलावेदी शतघ्नीध्वनिरुच्चकैः ।
यावत्कर्णपथ नेयान्न त्यजेय कलेवरम् ।।
रुधिराक्लिन्नमेतन्मे कायमत्तुमिहागता. ।
गृध्रा गच्छत वृत्तान्तं ज्ञातुं मे स्वामिनो द्रुतम् ।
नहि शस्त्रव्रणैरेतैरल्पीयस्यपि मे व्यथा ।
ध्वनिप्रतीक्षया किन्तु सैवात्यन्तगरीयसी ।।
निश्वासा यात रे दूरं वायुवेगेन सत्वरम् ।
शिवराजशुभोदन्तं मामावहत बान्धवाः ।।
(३८।७२।७७।७८।८१-८२)

प्रतिपक्षीयपात्राणां स्वरूपमपि मनोहारि विद्यते। अफजलखान. स्वयमात्मप्रशंसां करोति—

क्रूरोत्तमोऽहं खलविक्रमोऽहं दुर्योधनः शत्रुविभीषणोऽस्म् ।
मुष्ट्यैव निर्दलितमस्तकं तं बलिं शिवाजिं तव कल्पयामि ॥

(१८।५२)

शरीरादिवर्णनमपि हृदयहारि वर्तते—

अयः किरीटी घनकञ्चुकी च धन्वी निषङ्गी त्सरुरम्यखड्गी ।
उत्तुङ्गमल्लो रणकर्ममल्लः सफुल्लगल्लो ददृशेऽफझुल्लः ॥
(१६।११)

काव्येऽस्मिन् राष्ट्रभक्तिपरिमलितवीरस्य सर्वत्रैव दर्शनं भवति कान्होजिः शिवराजं वदति—

'स्वातन्त्र्यलक्ष्म्याश्चरणोपहारं चिकीर्षसे चेन्नरशीर्षपद्मैः ।
वनेऽत्र सर्केततृणीकृतात्मा स्वपुत्रशीर्षाण्यपि कर्तितास्मि ॥
त्वत्काङ्क्षितं दुर्घटमप्यकस्मात् सपूरयिष्याम्यधुनैव राजन् ।
प्रविश्य दावाग्निमुपेत्य वाऽब्धिं निष्पेष्य वार्द्रिं प्रविदार्य वोत्राम् ॥

(२०।२६।३०)

भाषाया कवेरसाधरणोऽधिकारो विद्यते प्रसादगुणसंवलिता वैदर्भी सर्वत्र दृश्यते उपमानादिप्रयोगेऽपि कविरत्यन्तं चतुरो विद्यते शिवसैनिकानां चित्रणं द्रष्टव्यम्—

पराक्रमे महासिंहा हरिणास्तु पलायने ।
मूषका गूढसञ्चारे वीरास्ते शिवसैनिकाः ॥
वायसा रन्ध्रविच्छेदे कोकिला कलभाषणे ।
भ्रमरा सततोद्योगे कुशला शिवसैनिका ॥

(८।१२,१३)

समृद्धमिदं महाकाव्यं प्रकृतिचित्रणादिदृशाऽपि महत्त्वावहम् । वर्षा-वर्णने कवेरुत्प्रेक्षा कियती स्पृहणीयाऽस्ते—

तडिल्लता कशाघातैस्ताडितेव धराऽधुना ।
आक्रन्दतीव वर्षामूकन्दनैर्भृशमाकुला ॥ (२२।१५)

निदाघवर्णनम्—

रविमवेक्ष्य सुतप्ततरं भृशं मरुदियाय सतद्गुणता स्वयम् ।
बत बत क्षमया प्रथिता क्षमा भवदसौ सहसा ध्रुवमक्षमा ॥

(४।२८)

कवेरियं धारणा काव्ये प्रतिफलिता दृश्यते—

रणं विना जातु न भूतलेऽस्मिन् ।
रिपोः सकाशात्तृणमप्यवाप्यम् ॥ (५७।२८)

---

## ७. छत्रपतिचरितम्

छत्रपतिचरितमहाकाव्यस्य प्रणेता डा० उमाशङ्कारशर्मा त्रिपाठी अस्ति। श्रीत्रिपाठिनो जन्म १९२२ ई० वर्षे १ जनवरीतिथौ—उत्तरप्रदेशस्य देवरिया मण्डलस्थिते सिगहाग्रामेऽभवत्। अस्य पिता पण्डितो रामनरेशमणि-त्रिपाठी संस्कृतस्य महान् विद्वानासीद्, अतः संस्कृतसाहित्यस्य प्रारम्भिक-मध्ययनं पितुरेवाकरोत्। सस्कृतसाहित्ये साहित्याचार्यो भूत्वाऽपि—आङ्ग्ल साहित्ये—एम० ए० पी-एच० डी० प्रभृत्युपाधीन् प्राप्तवान्। सम्प्रति प्रायेणाष्टविंशत्या वर्षैः काशीविद्यापीठे स्नातकोत्तरकक्षासु—आङ्ग्लसाहित्य-मध्यापयन् तत्राङ्ग्लभाषाया एव प्राध्यापकपदमलङ्करोति।

छत्रपतिचरितं कवेरस्य श्रेष्ठा रचनाऽस्ति। अस्यामुत्तरप्रदेशशासनेन पञ्चसहस्रात्मकः पुरस्कारोऽपि प्रदत्तोऽस्ति। भारतीयायाः संस्कृते संपोषकोऽयं कविः। एतादृशस्योत्तमकाव्यस्य प्रणयने दक्षोऽपि कविवरस्त्रिपाठी कुत्रचिद-भिमानं न व्यनक्ति। विनम्रताया अनेकधा दर्शनं भवति। छत्रपतिमहाकाव्या-रम्भ एव वदति—

> शिव. पात्र वचो ब्राह्मी प्रस्तावो मातृभूत्सवः।
> सर्वमेतत् परं दैवात् सूत्रधारोऽहमीदृशः॥ (१।१६)

शिवराजं प्रति कवेर्महत्यास्थाऽस्ति। स कथयति—

> सरसोक्तिप्रबन्धेषु केन मामतिशेरते।
> शिवराजास्पदं किन्तु लङ्घ्यते केन मन्मन॥ (१९।८८)

कविवरस्य डॉ० त्रिपाठिन सस्कृताङ्ग्लहिन्दीभाषासु तत्साहित्येषु चाद्भुताधिकारो विद्यते। अधोलिखिताऽस्य रचना एवात्र प्रमाणम् :—

१—छत्रपतिचरितम् (महाकाव्यम्) २—उमरखय्यामभणिति. (उमरखय्यामस्य रुबाईनाम्न्याः काव्यविधाया संस्कृतभाषया मन्दाक्रान्ता-छन्दसा च रूपान्तरणम्) ३—सूक्तामृतम् (महात्मनो गान्धिन. पञ्चशत-सूक्तीनामनुष्टुप्छन्दसा रूपान्तरणम्) ४—अहं राष्ट्री (राष्ट्रपुरुषान् राष्ट्रियांश्च विषयानाश्रित्य प्रकीर्णा काव्यरचना) ५—भारतीगीतम् (आधुनिकैर्वृत्तै. प्रणीतानां संस्कृतगीताना सङ्कलनम्) ६—रासभारती (विनोदपूर्णमन्योक्ति-मयं संस्कृतकाव्यम्) ७—द महात्मा (महात्मनो गान्धिनो जीवनमाश्रित्या-

ङ्ग्लभाषया प्रणीतानि गीतानि) ८—उत्तरकाव्यप्रकाश) ९—अद्यतनम् (हिन्द्या अधुनातन-कविताः) १०—बालू के कण (हिन्दी निबन्धमाला) ११—अनद्यतन (हिन्दीकाव्यसुरभि.)

छत्रपतिचरिते शिवराजस्य जीवनं चित्रितमस्ति। अस्मिन् छत्रपतेः शिवराजस्य जीवनस्य द्वौ प्रसङ्गौ विशेषरूपेण चित्रितौ स्तः। पञ्चमसर्गात् नवमसर्गं यावद अभजलखानस्याभियानं तद्वधवर्णनं द्वादश सर्गात् पञ्चदश-सर्गं यावत्, क्षत्रपतेर्नगरागमनं तद्बन्दिगृहगमनं ततो बुद्धिचातुर्येण निःसृत्य स्वराज्यं प्रति पुनरागमनं च वर्णितमस्ति। काव्यं हृदयग्राहि कर्तुं यथास्थलं कथावस्तु कविकल्पनया संवर्धितमस्ति। काव्येऽस्मिन्—एकोनविंशतिः सर्गा-स्तेषाञ्च पद्यसङ्ख्या—त्रिनवत्यधिकद्वाविंशतिशतं (२२९३) अस्ति। नाट्यस-न्धिसमन्वितो महाकाव्योचितो वस्तुविन्यासोऽत्रकृतोऽस्ति। अस्य वस्तुविकासस्य केचिदसामान्या प्रसङ्गा विशेषरूपेण सहृदयहृदयसंवेद्याः सन्ति :—

यथा—१—प्रथमे सर्गे काव्यशास्त्रविषयका सङ्केता. महत्त्वावहा. सन्ति। एते प्रायेण काव्यरचनाप्रक्रिया—संबद्धा सन्ति। एतेषु कविवरस्य त्रिपाठिन काव्यशास्त्रानुशीलनं तस्यानुव्याहरणञ्च प्रतिबिम्बित मस्ति[१]।

२—द्वितीये सर्गे समग्रस्यापि राष्ट्रस्य देशभक्तिसमन्वितं वर्णनमस्ति। प्रत्येकं प्रान्तस्यात्तैतिहासिकं सांस्कृतिकं च महत्त्वमपि प्रतिपादितमस्ति[१]।

---

१. केचित्प्रसङ्गा.प्रस्तूयन्ते—

काव्य विषया —नैराश्यमासया भासा तमो मोहं प्रबोधनैः।
ये मिथो ध्वन्ति शौर्येण त एव विषया गिराम् ॥ (१।४)

प्रतिभा—यदपाङ्गतरङ्गान्तरवर्ति विश्वं निमज्जति।
साऽपि किं प्रतिभा' मादृशस्यापि जन्मिनः ॥ (१।५)

अभ्यासः—मरुकल्पेऽपि यस्निग्धं दृश्यतेऽत्रदृगुत्सव.।
तद्वागर्थविदम्भोजपदाराधनसत्क्रिया ॥ (१।१३)

तथा च द्रः १।२०, २१, २६-२९, ४९-५४, ४६, ७।७४, ७५, ८३, ११।६४ इत्यादि।

२. यथा काश्मीरवर्णनम्—

विस्मापयन् कोऽपि धियं सुमेधसां
छिन्नोत्तमोङ्गोऽपि सुखेन जीवतु।
स्वप्नेऽपि किं प्राणितुमार्यभूरियं
काश्मीरवर्ज्यं क्षमते मनस्विनी ॥ (क्षत्र० २।३३)

३—चतुर्थे सर्गे कविकल्पितपात्रं स्वातन्त्र्य-लक्ष्मीः स्वकीये ध्वन्यात्मके वक्तव्ये शिवराजस्य हृदि राष्ट्रस्वातन्त्र्यभावना द्रढयति ।

४—षष्ठे सर्गे नटनटीरूपेण प्रतिपक्षस्य गतिविधिं ज्ञातुं गतवद्भिः शिवराजस्य गुप्तचरैः रामायणादिकथा प्रस्तूयन्ते । विशिष्टभावभूमौ स्थितमत्र-ऋतुवर्णनमपि हृदयहारि वस्तुसंपृक्तञ्चास्ति ।

५—एकादशे सर्गे शिवराजेन गुरूपचाराय सिंहिनीदुग्धानयनस्य किंवदन्त्या काव्योचितं वर्णनं तत्र च कविकल्पितस्य (शिवराजपरीक्षकस्य) जटाधरस्य भूमिकाऽपि महत्त्वपूर्णाऽस्ति ।

६—त्रयोदशे हास-परिहासस्य योजनाऽपि शोभनाऽस्ति ।

उक्तानि स्थलानि कविप्रतिभाया उच्चतमानि निदर्शनानि सन्ति । एषु भारतीयसंस्कृतिं प्रति परमास्थाया राष्ट्रकल्याणस्य मूलमन्त्राणां परमानन्दोपलब्धेर्भारतस्य महिममण्डितातीतस्य तस्य च पारतन्त्र्यकारणस्य—उत्कटकोटिकं वर्णनमस्ति । काव्यरचनायां कविः कंचिन्नवं मार्गमवलम्बते व्यङ्ग्यभङ्ग्या तथ्यमिदं प्रकाशितमपि विद्यते –

> न शुक्तये मौक्तिकलब्धये परं धृतः क्रमस्तेन नतेन सादरम् ।
> रतोऽपि कामं पदपङ्क्तिबन्धने मनोरथार्थी नवमार्गमाश्रयत् ।।
>
> (२।१३)

सर्वेषां नाट्यसन्धीनां सम्यक् प्रयोगोऽत्र विहितः । अन्वितिरस्य काव्यस्यान्यतमा विशेषताऽस्ति । काव्यादौ कविना यः संकल्पः कृतः (१।३९) स एवान्ततः (१९।८३) फलीभूतो दृश्यते ।

छत्रपतिचरितस्य विजिगीषुर्धीरोदात्तश्च नायकः शिवराजोऽस्ति । अस्मिन् प्रतिनायकौ बीजापुरेशाऽवरङ्गजेबौ स्तः । समानसंख्याका उभयपक्षीयाः सेनापतयो दूताश्च सन्ति । पुरुषप्रधानमेतन्महाकाव्यम् । शिवराजस्य माता कवि-कल्पित-पात्रञ्च स्वातन्त्र्यलक्ष्मीः केवलं द्वे नारीपात्रे स्तः । शिवराजस्य पुत्रस्य वर्णनमस्ति किन्तु तस्य पत्न्यावर्णनं नास्ति । गुरुसमर्थरामदासं प्रति शिवराजस्य निष्ठां तन्निर्भयत्वञ्च प्रस्तुतीकर्तुं कविर्जटाधराख्यमेकं कल्पितपात्रमपि योजयति । पात्रमिदं शिवराजं सिंहिनीदुग्धप्राप्तिप्रयासाद् वारयति । स्वातन्त्र्यलक्ष्म्या जटाधरस्य च योजनया नायकस्य धीरंवीरचरितं चरमसंभावनां यावत् विकसितं दृश्यते । तात्कालिकं साम्प्रतिकं च समाजं चित्रयितुं यथास्थलं पुरवासि-ग्रामीण-कृषक-प्रभृतीनां पात्राणां योजनाऽपि काव्येऽस्मिन् कृताऽस्ति । अन्यानि पात्राणि अधोलिखितानि सन्ति—

| नायकपक्षीयाणि | प्रतिनायकपक्षीयाणि |
| --- | --- |
| १. स्वातन्त्र्यलक्ष्मी (रूपकात्मकं पात्रं) | १. अवरंगजेब. (प्रतिनायक.) |
| २. जीजाबाई ( शिवराजस्य माता ) | २. बीजापुरेशः (प्रतिनायकः) |
| ३ देशपाण्डे वाजीप्रभु. (सेनापतिः) | ३. अफजलखानः (सेनापतिः-सहप्रतिनायकश्च) |
| ४ समर्थगुरुरामदास· (शिवराजगुरुः) | ४ शायिस्ताखान· (सेनापतिः) |
| ५. जटाधर. (कल्पितपात्रम्) | ५ उदयभानुः ( सेनापति. ) |
| ६. रघुनाथपन्तः ( मन्त्री ) | ६ कृष्णाजिभास्करः (अफजलदूत ) |
| ७ नरसाल ( सेनापतिः ) | ७ जयसिंह. ( कूटनीतिज्ञः ) |
| ८. हिरोजि. ( भ्राता ) | ८ फौलादखान· सेनाधिकारी |
| ९. गोपीनाथपन्त ( दूतः ) | ९ मुअज्जमः (अवरंगजेबपुत्रः) |
| १०. विश्वेश्वर पण्डितः (पण्डित ) | |

महाकाव्यस्यास्य सर्वस्वीभूतं पात्रं शिवराजोऽस्ति स चोदात्तगुणमण्डितोऽस्ति। अस्य जीवनस्य केचन प्रसंगा द्रष्टव्या —

विजिगीषु सन्नपि शिवराजोऽत्यन्तं दयावानस्ति। तत्सैनिका बहुमूल्यवस्तुना भाण्डारेण साकं नववधू-समन्वितां शिविकामपि नीतवन्तः। शिविकां दृष्ट्वा स्वसेनापतिं भर्त्सयन् शिवो वदति—

अनार्यजुष्टं सहठं चमूपते ! कथ त्वयाऽऽचारविदाप्यनुष्ठितम्।
कुलाङ्गनाशोकजमश्रु शास्त्रिणां यशस्यवद्यं शरदिन्दुरोचिषि ॥ (३।१२२)

आनीतां तां वधूं पुत्री पितेव रक्षति—

प्रसीद वत्से ! पुरतो मयि स्थिते न देहलीशोऽपि तवाप्रिये प्रभु।
पितुर्गृहं प्राप्य सुता दृगुत्सवं कथं विषादैः परितप्यसेऽधुना ॥

(३।१२१)

छत्रपतेर्जीवनस्योद्घोषोऽस्ति—

न कामये कामयतेऽथवात्र क शमेन विस्मर्तुमरातिदुष्कृतम्।
प्रतिक्रियां किन्तु विधातु मीदृशीमपि क्षमेयं कथमार्यपद्धति ॥

(३।१२६)

आदर्शमानवमूल्यानां प्रतिष्ठापने तस्मिन् महती निष्ठाऽस्ति—

जिजीविषामो व्यसनक्षताअपि स्वय यमादर्शमणिं निरीक्षितुम्।
तत्रैव सचूर्णं मदोन्मदा इव सपत्नसामान्यवृका वयं न किम् ॥

(३।१२७)

अहर्निशं स्वातन्त्र्यसिद्धौ प्रयतमान एकदा रात्रौ तस्य हृदयगतभाव एव मूर्तिमान् भूत्वा स्वातन्त्र्यलक्ष्मीरूपेण तत्समक्षमुपस्थितः। सा स्वातन्त्र्यलक्ष्मीर्भारतीयानामकर्मण्यतया क्षुब्धा सती भारताद् बहिर्गन्तुमिच्छति।[१] छत्रपतिः तां तद्रक्षणायाश्वस्तां करोति—

मात ! कनीयानपि ते सुतोऽयं न हन्यतां यावदुपैति यागे।
प्रतीक्षितुं तावदिहैव देशे प्रसीद वात्सल्यभरे ममाम्ब ! ॥

(४।१७०)

शिवराजस्य गुप्तचरा नटरूपेण शत्रुसेनायां प्रविश्य मनोमुग्धकारिप्रदर्शनं कुर्वन्तः गोपनीयामपि सूचना ज्ञात्वा स्वामिने ददति। एकेन रेखाचित्रेण तेषां योग्यतावलोकनीया—

श्रितकलाः सकलाः कलगीतयो बहुविध विधिरक्षितलक्षणा।
जनमनोहरकौतुकसम्पदा क्षणधिया विदधुः क्षणसत्क्रियाम् ॥

(६।२)

राष्ट्रकल्याणैकनिष्ठ शिवराजोऽफजलखानं प्रति युद्धार्थं गच्छन् सहकर्मिण प्रेरयति—

इहाऽथवाऽमुत्र निषेवितायुषि मयि स्थिरं नन्दतु राष्ट्रपादप.।
सुरक्षितात्मोपचयः प्रतिक्षणं निकामवात्सल्यभृतो यथा शिशु ॥
कथावशिष्टे मयि तद्भवद्गणो मदेकवर्त्माऽवतु राष्ट्रमात्मना।
दिनेशभुक्तं भुवनं यथा शशी तदीयधाम्ना विनिविष्टदीधितिः ॥

(८।२५,६)

शिवराजस्य मातुर्भावनाऽपि श्लाघ्याऽस्ति—

मदेकपुत्रं नहि केवलं शिवं परं महाराष्ट्रधरानभोमणिम्।
सुमेधस. सन्नयथप्रभोज्ज्वलं तमोन्तरायोऽभिभवेन्नतद्ध्रुवम् ॥ (८।५०)

गुरोरौषधं सिंहीदुग्धमानेतुं गच्छन् जटाधरेण वारित सन् शिवराजः स्वदृढनिश्चयान्न विरमति जटाधरं च वदति—

---

१. या भैरवे वर्त्मनि साधुचारे मनोरथं दुर्ललितं बधानः।
न भारतानामधुनाऽपि काले सुषुप्तिवर्ज्यं परमस्ति पन्थाः ॥

(छत्र० ४।१८)

तामेव नित्याध्वरकामधेनु तिरस्कृतां भारतवर्षजातैः।
स्वातन्त्र्यलक्ष्मीमनुविद्धि धीमन् ! पतिष्णुमध्याविह मामपुण्याम् ॥

(४।२७)

न श्रावलैर्नापि यशोऽभिलिप्सया वशीकृतं मे हृदय यशोनिधे ।
जयक्षयद्वन्द्व निरस्तबन्धनो भजामि कर्तव्यपथं यथास्थिरम् ।।

(११।८६)

बिभेमि नान्तादपि धर्मनिश्चयो न चापि विघ्नं कलयेऽचलोपमम् ।
पथः पराद्यान्न मनोनिवृत्तये धृतव्रतानां विपदोऽप्यलङ्क्रिया ।।

(११।६१)

'अस्त्रीजन पुनरनेन विधीयते स्त्री' श्रीहर्षस्य कथनमिदं शिवराजस्य चरिते सार्थकं दृश्यते । एक. शत्रुपक्षीयः सैनिक. नारीवेशं परिधाय स्वपत्नी-समीपं स्वपिति यतोहि शिवराजसैनिकाः स्त्रीषु दयावन्तो विद्यन्ते । तथापि भीतं तं धैर्याय तत्पत्नी प्रयतति—

किं वेपसे गर्भगृहेऽपि लीनो दीनो यथा मत्परिधानवर्त्मा ।
शेषे कथं नाथ न मुक्तशङ्कं जानन्नपि स्त्रीषु शिवार्थपद्माम् ।।

(१५।८७)

क्षत्रपते. प्रशासनमुत्तमकोटिकमस्ति । स महानपि विनम्रत्वाल्लघु-र्वर्तते । शिवराजवैशिष्ट्यमिदमासीत्—

विभिन्नधर्मवर्त्मानो विभिन्नाजीववर्तिन ।
विभिन्नाचारवन्तोऽपि नोद्वेगाय परस्परम् ।। (१६।८३)

छत्रपतिचरितं रसभावनिरन्तरमेकं महाकाव्यमस्ति । अङ्करूपेण रौद्र-हास्य-करुण-शृङ्गाराद्भुत-भयानक-बीभत्सप्रभृतिरसाः सन्ति । समग्रे काव्ये भौतिकतायाः सङ्घर्षोऽस्ति । शमभावाभावस्य व्यङ्ग्यभङ्ग्या कविः सङ्केत-मपि कृतवानस्ति—

विचित्रे सर्गबन्धेऽस्मिन् शमत्वं परिचिन्वताम् ।
कृतिस्त्वविफला बुद्धिर्वेत्ति स्वात्मानमीश्वरम् ।। (१२।८८)

स्वातन्त्र्योत्तर संस्कृतकाव्येषु राष्ट्रभक्तिरसस्याभिनवः परिपाको दृश्यते, तेष्वङ्गुलिगणनीयेष्विदमेकमस्ति । काव्येऽस्मिन् ध्वन्यर्थस्य प्राधान्य-मस्ति । कवेर्ध्वनिसंबन्धिनो विचारा द्रष्टव्याः—

अलिगुणा. कुसुमोद्गमरीतयो हरिदलङ्कृतिपल्लवितं तरो. ।
परभृतेन समीक्ष्य सदर्थतां ध्वनिकृता निकृता गुणधर्मिणः ।।

(६।३०)

राष्ट्रियचेतना स्वातन्त्र्यबोधश्च सर्वत्र प्राप्यते। यथा—

क्व दासवृत्तेः परलोकपद्या श्रेयोऽथवा कुत्र फलोपलब्धिः।
तदेव पन्था यदसूनपोष्टान् स्वातन्त्र्ययागे पुरुषो जुहोति॥
(१८।३४)

एतद्वपुर्यौवनमेतदायुर्भोगा मनो धीर्निखिलं यदत्र।
कृत्स्नं तदेतद्यदि जन्मभूमेस्तस्यां हतायां वद रक्षितं किम्॥
(४।१६३)

यतस्व रक्षितुं स्वदेशजीवनं निरापदं
जयस्व रक्षितुं स्वदेशजीवनं निरापदम्।
सहस्व रक्षितुं स्वदेशजीवनं निरापदं
म्रियस्व रक्षितुं स्वदेशजीवनं निरापदम्॥ (६।५२)

स्वभावविज्ञानविदस्त्रिपाठिनो विषयेऽपि तदेवेदं कथनं सत्यं दृश्यत इति वक्तुं शक्यते—

सरस्वती सार्थवती तदुक्ता शिवस्वरूपं प्रतिभासयन्ती।
आदर्शतामाप महीसुराय स्वभावविज्ञानविदे यथार्थम्॥
(७।६५)

———

# तिलकयशोऽर्णवः

तिलकयशोऽर्णवकर्तुरणेत्युपनामधेयस्य श्रीमाधवस्य जन्म महाराष्ट्र-राज्यस्य पुण्यपत्तने एकस्मिन् विद्याविनयसंपन्ने ब्राह्मणपरिवारे १८८० ई० वर्षे २९ अगस्ततिथौ समभवत्। अस्य पितुर्नाम श्रीहरिः। कविः काव्यारम्भे स्ववंशं प्रशंसन् लिखति—

अनेवंशख्याते श्रुतिपठनविध्वस्तदुरितः
तथा धर्मश्रद्धाव्रतयमतपःशुद्धचरित।
अहं सञ्जातोऽस्मिन् विमलमतिशीले द्विजकुले
नतो वै तान् नित्यं मुनिवरनिभान् पूर्वजगुरून्॥
ऋग्वेदप्रमुखानलब्ध दश यो ग्रन्थान् गुरूणां मुखात्।
पुत्रान् वैदिककेशरी मतिमत शिष्यांश्च योऽध्यापयत्॥
सन्ध्यावन्दनपुण्यकर्मनिरतं तं चित्रकर्मण्यपि।
स्यात पूज्यपितामहं श्रुतिमुख बालाजिसंज्ञं नुमः॥ (१।३।५)

देवत्रयी यस्य तनौ प्रतिष्ठिता वेदत्रयी यस्य मुखे सुशोभिता।
तीर्थत्रयी येन यथायथ श्रिता तं 'श्रीहरिं' मज्जनकं नमाम्यहम्॥

माता मे द्विजदेवसेवनपरा सच्छ्रोत्रियस्यात्मजा
सर्वत्रैव गतस्पृहः कृषिरतो बालाजिपुत्र पिता।
ऋग्वेदं च पपाठ यः क्रमयुतं साङ्गं च सब्राह्मण
वन्दे शक्तिमहेशपूज्यपितरौ तौ रुक्मिणीश्रीहरी॥

वेदशास्त्राध्ययनाध्यापनसमृद्धे कुले जातत्वात् श्रीमाधवे संस्कृतभाषायां भारतीयायां संस्कृतौ च दृढमनुरागो वरीवर्ति। कुलानुरूपमेव 'तिलकयशोऽर्णव' सदृशस्य महनीयस्य रससिद्धस्य महाकाव्यस्य रचना कृत्वा न केवलं तिलकस्य यशोऽर्णवं मूर्तिमन्तमकरोदपितु स्वयशोऽर्णवस्यापि धारा प्रवाहितवान्। तिलकस्यैव प्रेरणया श्रीमाधवः स्वातन्त्र्यसंगरे प्रविष्ट आसीत्। दृढं प्रयत्नं कुर्वताऽपि स्वजीवनकाले तिलकेन स्वराज्ये जन्मसिद्धोऽधिकारो नावालोकि किन्तु तच्छिष्येण श्रीमाधवेन व्यलोकि। इदमेतस्य सौभाग्यम्। एवं प्रतीयते यत् श्रीमाधवः श्रीतिलकं ईश्वरादल्पं न मन्यते। स स्वशिक्षागुरोः प्राक् भारत-हृदयं तिलकं नमति—

धैर्येण भूधर इवाम्बुधिवद् गभीरो यस्तेजसार्क इव शीतकरः शशीव।
ज्ञानेन गीष्पतिरिवोत्तमकर्मयोगी तं भारतस्य हृदयं तिलकं नमामि॥

रक्तोष्णीषं शिरसि रुचिरं चन्दनाङ्कं च भाले
हस्ते यष्टिं तुहिनधवलामङ्गरक्षां शरीरे।
स्कन्धाजानूपरिविलसितं चोत्तरीयं दधानं
बालं भव्यं तिलककुलजं लोकमान्यं नमामि ॥ (१।९,१०)

मराठीतिलकचरितस्य पूर्वलेखकमपि प्रणमति—

यो लोकमान्यचरितं विततं पवित्रं खण्डत्रयं सरलभावमयं लिलेख।
चिन्तामणेः सुतमुदारमतिं नृसिंहं साहित्यराजविरुदं तमहं नमामि ॥
(१।२२)

स्वातन्त्र्यसंग्रामस्य सेनानीरूपेण, तिलकमहाराष्ट्रविद्यापीठस्य कुलपतिरूपेण विविधशासकीयकार्यनिर्वहणेन सह विहारराज्यस्य राज्यपालरूपेण लब्धप्रतिष्ठोऽयंमहानुभावः संस्कृतकविरूपेणापि प्रतिष्ठितोऽस्ति। भारतराष्ट्रस्य राष्ट्रपतिमहोदयेन १९६८ ई० वर्षे २६ जनवरी तिथौ 'पद्मविभूषणेन' विभूषित तस्मिन् दिन एवायं दिविषदा परिषदमलञ्चकार।

श्रीमाधवस्य स्वर्गवासानन्तरं खण्डत्रयेण तिलकयशोऽर्णवमहाकाव्यस्य प्रकाशन जातम्। यत्र-तत्र संशोधनं अन्तिमस्य सर्गत्रयस्य च निर्माणमपि सम्पादकमण्डलेन व्यधायि। सम्पादकश्चास्य श्री आर० एन० दाण्डेकरः (अध्यक्ष) सदस्याश्च (१) श्री ह्वी० पी० लिमये (२) श्री आर० एन० गद्रे (३) श्री एम० वी० सुमण (४) श्री गणेशशास्त्री लोढे (५) श्री डब्लू० टी० आप्टे।

श्रीतिलकयशोऽर्णवो भारतीयस्वतन्त्रतासंग्रामस्य महत सेनान्यस्तिलकस्य जीवने प्रणीतमस्ति। काव्येऽस्मिन् द्वादशसहस्रपद्यानि सन्ति पञ्चाशीत्या तरंगैश्च विभक्तमस्ति। स्वातन्त्र्योत्तरमहाकाव्येषु विशालतममिदं महाकाव्यमस्ति। खण्डत्रयेणास्य प्रकाशनमभवत्। प्रथमत पञ्चविंशतितमं यावत् प्रथमे खण्डे, षड्विंशतितमत एकचत्वारिंशत्तमं यावद् द्वितीये खण्डे द्वाचत्वारिंशत्तमत. पञ्चाशीतितमं तरंग यावत् तृतीये खण्डे च प्रकाशितमिदंकाव्यम्।

वस्तुविन्यासदृष्ट्या कविस्तिलकस्य स्वतन्त्रतासंग्रामस्य च क्रमबद्धं वर्णनमेव तनुते। तिलकजीवनस्य प्रत्यक्षत. परोक्षतः वा संबद्धाः सर्वा अपि घटना अत्र चित्रिता सन्ति। शास्त्रापेक्षितनाट्यसन्ध्यनुसारं वस्तुविन्यासोऽत्र न दृश्यते। नायके देशभक्तेर्भावनाया बीजं कालान्तरं प्राप्य 'स्वराज्ये जन्मसिद्धोऽस्माकमधिकार' इति प्राप्त्याशामये समुद्घोषे तदनुरूपे सत्प्रयासे च पर्यवस्यति। चरितनायकस्य सदुद्देश्यं देशस्वातन्त्र्यमासीत् किन्त्वस्य फलागम-

स्य प्रागेवास्येहलीला समाप्ता। अतः नाट्यसन्धीनां व्यवस्था नात्र व्यवस्थिता दृश्यते। कविमनसि काव्यशास्त्रीयनियमानुपालनस्य चिन्ता नास्ति। भारतीयस्वातन्त्र्यसंगरस्य तिलकनिधनं यावत् काव्यमयमितिहासलेखनं कवेर्द्वितीयं लक्ष्यमस्ति। तिलकोऽन्वर्थनामा लोकमान्य आसीत्। तं प्रत्यत्यन्तं श्रद्धानतेन कविना स्वकीयायाः नवनवोन्मेषशालिन्या प्रतिभाया. परिचयोऽदायि औचित्यमाप्रबन्धमत्र प्राप्यते। तिलकाश्रितेऽस्मिन् काव्ये तन्मृत्योरनन्तरं लब्धायाः फलरूपाया स्वतन्त्रताया वर्णनं संभावितमेव नासीत्। अतः कविना यत् कृतं तत्स्वाभाविकमेव। नाट्यसन्धीनामनिर्वाहो महदुद्देश्य-समन्वितेऽस्मिन् काव्ये नगण्य एवास्ति। प्राचीने कथावस्तुनि यत्किंचित् कवि-कल्पनया परिवर्तनेन शास्त्रीयमान्यतानां निर्वाहो भवति किन्तु काव्यमिदमेता-दृशमस्ति यत् कविरपि स्वयमत्र पात्रत्वमुपगतोऽस्ति। अभिनवसत्यकथा वस्तुनि काव्यनिर्माणं तत्र च शास्त्रीयमान्यतानां युगानुरूप परिवर्तनं कवेर्मौलिकतामेव पोषयति। साहित्यदर्पणकार सन्ध्यङ्गविषये पूर्वाग्रहमपि शिथिलयति (सन्ध्यङ्गानि यथालाभमत्र विधेयानीति' —सा० द० पृ० ५५१)

श्रीतिलकयशोऽर्णवस्य वस्तुविभाजनं सर्गनाम्ना न कृतमपितु तरंग-शब्द प्रयुक्तः। काव्यनाम्नि व्यवहृतस्यार्णवशब्दस्याङ्गत्वेन शब्दोऽयं सर्वा-त्मनोचित एव प्रतीयते। अधिकाशत तरङ्गेषु शतं पद्यानि सन्ति किन्तु केचन लघुकाया पञ्चविंशतिपद्यात्मकास्तरंगा. सन्ति, केचिच्च शतत्रयाधिक-पद्ययुताः सन्ति। वैषम्यमिद तद्गतविषयवस्त्वनुसारमस्ति। काव्येऽस्मिन् वाल्मीकिरामायणवत् एकस्यानुष्टुप्छन्दस. प्रयोगो-विशेषरूपेण दृश्यते। यथा वाल्मीकिः स्वकाव्यस्यैकं पात्रमप्यस्ति तथैव श्रीमाधवोऽपि तिलक-यशोऽर्णवस्य पात्रमप्यस्ति।

संस्कृतसाहित्ये राष्ट्रियायाश्चेतनाया. समुद्घोषे तिलकयशोऽर्णवो महत्तमं काव्यमस्ति। राष्ट्रियमैक्यं, भारतीया संस्कृति, भारतीयं जनजीवनं, भौगोलिकं परिवेशञ्चात्र कविर्बहुधा वर्णयति। जातिवादस्य भर्त्सनां कुर्वन् लिखति—

> शंसन्ति वर्णमथवा निजजातिमात्रं
> विप्र सदा शुचिरहत्वपरोऽन्त्यजोऽयम्।
> एव वदन्ति न कदाचिदपि स्मरन्ति
> सर्वे वयं भरतवर्षजना सगोत्रा (७।२९)
>
> विनाऽमृतं न तिष्ठन्ति सर्वेऽपि सुखिनोऽमरा.।
> न सन्ति सुखिनो भूम्या लोका स्वातन्त्र्यवञ्चिता॥

(५६।१४)

भारतीया यदि भारतभूमिं स्वमातरं स्वीकुर्वन्तु तर्हि मातृत्वस्नेहेन बन्धुत्वभावेन च जातिवर्गादिभेदः सर्वथा समाप्तिं गच्छेत्—

हिन्दुभूर्जननी मेऽस्ति सङ्कल्पो जायते यदा ।
सर्वेषां भारतीयानां भारतैक्यं सदा भवेत् ॥

नवयुवकान् संबोधयन् तिलको वक्ति—

न सौख्यं न च संमानं लभते परवाञ्जन· ।
अपमानतिरस्कारं स्वदेशपरदेशयो. ॥
न प्रतिष्ठितराष्ट्रेषु भारतं स्थानमाप्नुयात् ।
आङ्ग्लैर्यावत् समाक्रान्तं भारते जनजीवनम् ॥

कारागृहे दारुणं कष्टं सहित्वाऽपि तिलको लक्ष्यान्न विरमति—

जवारीबाजरीरोटीभोजनाय दिवानिशम् ।
चुकाचाकोतमेथीनां व्यञ्जनं क्षारसयुतम् ।
पलाण्डुकन्दसंयुक्ते तिलकः शाकव्यञ्जने ।
तद्गन्ध दुःसहं मत्वा तत्याजैव स सर्वथा ॥
रोटीरूक्षत्वनाशाय जलक्लिन्नां विधाय ताम् ।
चूर्णीकृतां स्वाङ्गुलीभिरखादत् तां कथञ्चन ॥

(२३।२८,३६,३७)

लोकमान्यस्य तिलकस्य दृढं विश्वास.—

जन्मसिद्धाधिकारस्य विजयोऽन्ते न संशयः ।
प्रगतिं भारतीयानां निरोद्धुं कोऽपि न क्षम ॥ (३४।४७)

तिलको युवकान् भिक्षां देहीतिभावं परित्यज्य त्यागपूर्णाय समुद्यमाय प्रेरयति—

'भिक्षां देहि पथत्याग: स्वावलम्बनसेवनम् ।
स्वराज्यध्येयपूर्त्यर्थं त्यागपूर्ण. समुद्यम. ॥ (३४।१३८)

श्रीतिलकस्य साहचर्यं उषित्वा तज्जीवनस्य सत्यघटनानां प्रामाणिकं तथापि काव्यात्मकं वर्णनं कविना कृतमस्ति। अवश्यमेव सर्वैरेव भारतीयै. गण्योऽयं तिलकोऽनुकरणीयः—

स्नेहं दयामाप्तजनान् सुखं च तत्याज यो वै जनरंजनार्थम् ।
आयुर्ध्यतीयाय च राष्ट्रकार्ये तं त्यागराजं तिलकं नमामि ॥

———

# ९. सुभाषचरितम्

सुभाषचरितकारस्य श्रीविश्वनाथकेशवच्छत्रे महानुभावस्य जन्म नासिकपञ्चवटीस्थाने १९०६ ई० वर्षे २७ सितम्बरतिथौ समभवत्। पितुर्नाम श्रीकेशवशास्त्री माता च श्रीमती यशोदाऽसीत्। श्रीविश्वनाथेन संस्कृताङ्ग्लगणितादिविषयाणा स्नातककक्षा यावदध्ययनं कृत्वा भारतीय-रेलविभागे लिपिकरूपेण सेवाऽकारि। मराठीसंस्कृतयो साहित्यसर्जने निरन्तरं लग्नत्वात् सम्प्रति संस्कृतमराठीकविषु कविरयं समाननीयं स्थानं बिभर्ति। सम्प्रति (१९८० ई० वर्षे) सिद्धेश्वरआली, जोगलेकरवाड़ा कल्याणम् मण्डलं-ठाणे-इत्यस्मिन् स्थाने सेवानिवृत्त. सन् सहित्यसेवारतस्तिष्ठति। अस्य कवेरधो लिखिता रचना. सन्ति—

संस्कृतकाव्यकृतय —१—सुभाषचरितम् (महाकाव्यम् २—एकनाथ-चरितम् (महाकाव्यम्) महाराष्ट्रीयसाधुवर्यस्यैकनाथस्य चरितं खण्डद्वयेन प्रस्तुतीकृतं १३६७ पद्यसमन्वितैः सप्तदशसर्गैः। ३—भारतीयस्वातन्त्र्योदय-काव्यम् (सप्तपर्वोपनिबद्ध.) ४—सातवलेकरचरितम् (महाकाव्यम्) सम्प्रति काव्यस्यास्य केवलं चत्वार. सर्गा प्रणेताः अपूर्णमप्रकाशितमिदमस्ति ५—संकीर्णा कविता. (यथासमयं विविधविषयेषु विरचिता अशीति कविता अशीत्यधिकषड्शतं च पद्यानि। ६—भारतीयरत्नमाला (अष्टाधिकशतं श्लोका: सन्ति) ७—वासुदेवबलवन्तचरितम् (काव्यम्)।

मराठीभाषोपनिबद्धानां केषाञ्चिद् ग्रन्थानां संस्कृतभाषया समश्लोकी-अनुवादोऽपि कविनाऽनेनाकारि—१—केकावलि. (मूललेखक: मयूरपन्त) समश्लोकी-अनुवाद १२० पद्यानि। २—मनोबोध· (मूललेखक: श्रीरामदास) समश्लोकी—अनुवाद. २०५ श्लोका। ३—अभङ्गावलि (मूललेखक: तुकाराम) प्रत्येकं श्लोकस्यैकेन श्लोकेनानुवाद ३० श्लोका:। ४—मूर्ख-लक्षणानि (मूललेखक श्रीरामदास) २५ श्लोका। ५—संगीतरुक्मिणी स्वयंवरम् (मराठीत सस्कृतेनानूदितं नाटकम्) ६—संगीतविद्याहरणम्।

बकुलीची फुलें-गङ्गापूजन-आमची ही—गृहलक्ष्मी-इत्यादीनि मराठी काव्यानि सन्ति। केषाचित् संस्कृतग्रन्थाना मराठीभाषानुवादोऽपि कृतोऽस्ति—

१—नन्दिनीवरप्रदान (रघुवंशद्वितीयसर्गस्य समश्लोक्यनुवादः) २—श्रीरामरक्षा (फटक्याची चाल) समश्लोकी ३—श्रीमद्भगवद्गीता (सयमकं समश्लोक्यनुवादः) ४—गान्धीसूक्तिमुक्तावली (रसग्रहणा सह) समश्लोकी ५—हितोपदेशस्य गद्यस्य गद्येन पद्यस्य च पद्येनानुवादः। ६—षोडशोपचारपूजा-समवृत्तसमश्लोकी ७—श्रीसत्यनारायणकथा (समवृत्तसमश्लोकी। स्वतन्त्रं नाट्यसाहित्यम् १—शेजारीण (पुरुषपात्ररहितम्) २—गुलाचे राज्य-मुलांसाठी ३—सुंठीवाचून खोकलागेला (प्रहसनम्) ४—एकादशीचाउपवास ५—नाट्यरूपगीता। अनुवादितनाट्यसाहित्यम् शेक्सपियरस्य Comedy of Errors नाटकस्य रूपान्तरणम्।

गद्यसाहित्यम्—१—गोन्धा २—गोष्ठीरूपगीता ३—कालिदासाच्या काव्यांतील सुरसगोष्ठी ४—स्वातन्त्र्यवीरसावरकर (छोटे चरित्र) पुरुषार्थातः प्रसिद्धम्।

सुभाषचरितस्य महाकाव्यस्य कथावस्तु दशसर्गैर्विभक्तमस्ति। अस्मिन् प्रखरतमस्य स्वतन्त्रतासंग्रामसेनान्यः सुभाषचन्द्रबोसस्य जीवनचरितं वर्णितमस्ति। ऐतिहासिकतथ्यानां पोषणार्थं केषांचित् मराठीभाषोपनिबद्धाना-माङ्ग्लभाषोपनिबद्धानां च ग्रन्थानां साहाय्यं गृहीतवानस्ति।

प्रत्येकं सर्गस्य कथावस्त्वेवमस्ति—१—(उदयः) सुभाषचन्द्रस्य पितुर्जानकीरामस्य मातुःश्रीमत्याः प्रभावत्याः तद्ग्रामस्य कोडालियेत्याख्यस्य कटके च तस्य जन्मनः शैशवस्य च वर्णनमस्ति। अत्रैव भारतीयाङ्ग्लबालकानां विद्यालये विवादस्य तत्र च सुभाषस्य निर्भयत्वं वर्णितमस्ति। २—(सद्गुरुमार्गणम्) स्वामिविवेकानन्दस्य शिकागोधर्मसम्मेलनेन प्रभावितोऽपि सुभाषचन्द्रः निश्चितमकरोद्यत् रणं विना स्वातन्त्र्यं न सभाव्यते। स इतस्ततो भ्रमन् कालिकातां गतः। ३—(तेजोदर्शनम्) मातृदुर्गोपासनया सुभाषस्य गृहागमनम्। आङ्ग्लप्राध्यापकस्य सुभाषप्रमुखैश्छात्रैर्विरोधः)।४—(अतुलत्यागः) ब्रिटेनं गत्वाध्ययनं आई० सी० एस०—इति परीक्षामुत्तीर्यापि श्रीमहात्मनो गान्धिनोऽसहयोगान्दोलने सर्वात्मना लग्नत्वात्। तद्बहिष्कारः। ५—(देशसेवारम्भः) असहयोगान्दोलनस्योग्ररूपसुभाषस्य स्विटजरलैण्डगमनं च वर्णितमस्ति। ६—(उत्कर्ष) मद्रासंसम्मेलने सुभाषस्य कांग्रेसस्य महासचिवरूपेण निर्वाचनम्; भयभीतैराङ्ग्लैर्वर्षं यावत् सुभाषस्य कारावासप्रेषणम्, सुभाषपितुर्मृत्युवर्णनं, षड्मासैः स्वराज्यप्राप्तेरुद्घोषः। ७—(अन्तर्ध्यानम्) रूपं परिवर्त्येतस्ततः देशस्वतन्त्रतायै प्रयासः ८—(नेतृत्वलाभः) जर्मनीदेशे सुभाषेण आहिन्दसेनायाः घटनम्, विमानयात्रायां सुभाषस्य मृत्युरितिप्रचारः किन्तु स

रूपं परिवर्त्य जापानं गत.। ९—(स्वातन्त्र्यसमरः) जापानत. सिंगापुरागमनं 'जयहिन्द' सेनया तत्स्वागतम्। तदनन्तरं रंगूने रणकेन्द्रनिर्माणम् ततोऽपि बैंकाकं प्रति प्रस्थानम्। १०—(आत्मसमर्पणम्) हिटलर—प्रभाववर्णन, हिरोशिमोपरि-अमेरिकयाऽणुप्रयोग तत्सर्वनाशश्च। सुभाषः जापाने हिन्दसेनां संबोध्य यदाग्रिमाया. सूचनायाः प्रतीक्षा कुर्वन्नासीत् तदा केनचिदधिकारिणोक्तं तं प्रति यद् विमाने स्थानमेकं रिक्तमस्ति। नेता सुभाषः हबीवेन सह प्रस्थित.। सहसा हिन्दुवीरैः श्रुतं यद् सुभाषस्य विमानदुर्घटनाया मृत्युरभवत्। हबीवे यो नेत्रा सुभाषेण सहागत आसीत् स दग्धहस्तः सन् समागत.। तेनोक्तं यत् दह्यमानस्य नेतुः सुभाषस्य रक्षण एव मम हस्तौ दग्धौ। सुभाषस्य मृत्युविषये सुनिश्चित. सङ्केतोऽत्र न प्राप्यते—

नेताजिमृत्युस्तु सुगूढ एवं भक्तैश्चिर विश्वसितो न भक्त्या।
कैश्चिद्धिमाद्रौ स मतस्तपस्वी कैश्चिद्विदेशे च वसन् सुगुप्तः॥
दशाधिकाब्देषु गतो गतेषु प्रायो निरस्तोऽद्य भवेद् भ्रमोऽसौ।
स्वातन्त्र्यलाभोत्तरमेष वीरः स्थातुं त्वशक्योऽप्रकट कुतोऽपि॥

(१०।६०,६१)

सुभाषचरितस्य कथावस्तु सुनियोजितरीत्या सुसज्जितमस्ति। नाट्यसन्धीनां प्रयोगोऽपि प्रायेण दृश्यते। काव्ये नायक फलप्राप्तौ निरन्तरं प्रयासरतोऽस्ति। शास्त्रीयदृष्ट्या निर्वहणसन्धौ नायकः फलं न प्राप्नोति किन्तु तस्य प्राणान् दत्त्वाऽपि स्वातन्त्र्योपलब्धये प्रयासस्य प्रतिज्ञा पूरिता दृश्यते। अस्य काव्यस्य नायक सुभाषो विद्यते। अन्यानि पात्राणि गौणीभूतानि वर्तन्ते। सुभाष परमदेशभक्त, नीतिमान्, त्यागी, धीमान्फलोदयकर्मा प्रभावकारी च नेता विद्यते। शास्त्रीयदिशा धीरोदात्तोऽयं नायकोऽस्ति। सुभाष. संस्कारसम्पन्ने परिवारे जात शैशवे माता तमुपदिशति—

प्रोवाच सा तं च कथाप्रसङ्गे त्वमप्यवश्यं भव हे सुभाष!
न्यायप्रदाने प्रभुरामचन्द्र पराक्रमे कृष्णसखश्च पार्थ.॥
स्वमातृभूदास्यविमोचने च साक्षाच्छिवश्छत्रपति शिवाजिः।
श्रीवासुदेवो भव राजनीत्या बालो ध्रुवः सुस्थिरनिश्चयश्च॥

(१।३०,३१)

सुभाषस्य दृष्ट्या मानवीयताया रक्षणं प्रथमं वस्तु। स देशस्य स्वातन्त्र्यं जातिधर्मयोः सहिष्णुतायै वाञ्छति स्म—

स्वातन्त्र्यमिच्छामि तु पूर्णमेव नारीनरव्यक्तिसमाजमूर्त्यै।
श्रीमद्दरिद्राखिलमङ्गलार्थं धर्मस्य जातेश्च सहिष्णुतार्थम्॥ (६।७)

———

# ६. श्रीनेहरुचरितम्

श्रीनेहरुचरितप्रणेतुः पण्डितब्रह्मानन्दशुक्लस्य जन्मोत्तरप्रदेशस्य मुजफ्फरपुरमण्डलान्तर्गत 'चरथावल' नामके स्थाने १८०४ ई० वर्षे वशिष्ठ-गोत्रीयशुक्लकुलेऽभवत्। पितामहः श्रीबद्रीदत्तशुक्लः पिता श्री भाईदयाल-शुक्लः माता च श्रीमती तुलसीदेवी-आसीत्। संस्कृतहिन्दीसाहित्ये कृतश्रमोऽयं कविः। एम० ए०-साहित्याचार्य-व्याकरणालङ्कार—काव्यरत्न-काव्यतीर्थ-प्रभृतिभिरुपाधिभिरयं विभूषित आसीत्। आजन्म संस्कृतसाहित्यस्याध्ययना-ध्यापनं कृतवान्। अन्ततः उत्तरप्रदेशस्य खुरजानगरे स्थितस्य श्रीराधाकृष्ण-संस्कृतमहाविद्यालयस्य साहित्यविभागाध्यक्षप्रधानाचार्ययोः पदमलङ्कुर्वन् सेवानिवृत्तो जातः। १८७० ई० वर्षेऽस्य निधनमभवत्। श्रीशुक्लः काव्य-रचनया सह सम्पादनेऽपि निपुण आसीत्। अस्य रचनाः—

१—गान्धिचरितम् (सं० खण्डकाव्यम्) २—'उद्बोधन' (गीताविचारा-नाश्रित्य प्रणीतं हिन्दीकाव्यम् ३—'मणिनिग्रह' (महाभारतस्य सौप्तिक-वधमधिकृत्य प्रणीतं हिन्दीकाव्यम्) ४—भारतमुपमा (भारतमहत्त्वमभिलक्ष्य रचितं संस्कृतकाव्यम्) ५—आश्वासनम् (सं०काव्यम्) ६—वस्त्रावतार (सं० काव्यम्)।

अनूदिताः सम्पादिताश्च ग्रन्थाः—

१—मृच्छकटिकम् २—उत्तररामचरितम् ३—सावित्र्युपाख्यानम् ४—हर्षचरितम्।

श्रीनेहरुचरितमहाकाव्ये चरमस्वतन्त्रतासंग्रामस्य महतः सेनान्यः स्वतन्त्रस्य भारतस्य प्रथमप्रधानमन्त्रिणः पण्डितजवाहरलालनेहरोर्जीवन-चरितमाश्रित्य विरचितमिदं महाकाव्यम्। अस्य कथावस्तु अष्टादशसर्ग-विभक्तं विद्यते। सप्ताधिकसप्तशतं पद्यानि सन्ति। लघुकायमिदं काव्यम्। प्रथमसर्गस्यादिमैरेकविंशत्या पद्यैर्मङ्गलाचरणम्, द्वितीये सर्गे काश्मीरशोभया सह नायकस्य पितुः श्रीमोतीलालस्य वर्णनम्, तृतीये सर्गे नायकस्य मातुः पुत्रराहित्यचिन्ता, वरप्राप्तिश्च वर्णिता चतुर्थे-नायकजन्म, पञ्चमे-नायक-संस्कारः षष्ठे-इंगलैण्डगमनमध्ययनञ्च वर्णितम् सप्तमे-अमेरिकायात्रा तद्वर्णनञ्च, अष्टमे-नायकं प्रति तत्पित्रा देशदशाया वर्णनम्। नवमे-नायकेन कृता हरिवन्दना, दशमतो द्वादश यावन्नायकस्य विवाहादिवर्णनम्, त्रयोदशे

नायकस्य महात्मगान्धिसान्निध्यं, कारागृहगमनं पित्रो. शोकश्च, चतुर्दशे-स्वतन्त्रतासंग्रामे 'आङ्ग्ला भारतं त्यजते' ति नायकस्य घोषणा, पञ्चदशे-भारतस्य विभाजनं तज्जन्य नरसंहार:, शरणार्थिनां समस्या, राष्ट्रोत्थानाय प्रयास: महात्मनो गान्धिनो निधनम्। षोडशे-नायकस्य राष्ट्रकल्याणकृते कृतानि कार्याणि वर्णितानि, सप्तदशे—नायकस्य योजनानां वर्णनम्, अष्टादशे—नायके मृते सति तत्पुत्र्या: करुणो विलाप. ।

अद्यापि नेहरो कार्यंद्रष्टारो विद्यन्ते स यैर्गुणै. श्रद्धाभाजनं महाकाव्य-नायकत्वं कर्तुमुपयुक्तश्चास्ति ते गुणा काव्येऽस्मिन् गौणीभूता: सन्ति। प्रथमतो द्वादशसर्गं यावद् वर्णनमधुनातनलोकनायकचित्रणदृष्ट्या न महत्त्वा-वहम् । भवतु नाम भारतीयसंस्कृतिसंस्कारदृष्ट्या तत्समीचीनम्। नेहरू—सन्दर्भे तज्जीवनस्य महत्त्वपूर्णं तत्त्वं स्वतन्त्रतासंग्रामे राष्ट्रनिर्माणे च तस्य सहयोगोऽस्त। ईश्वरभक्तिसंस्कारादिवर्णनेऽत्र पूर्वाग्रहो दृश्यते येन वस्तु गतिरहितमिव जातमस्ति। नाट्यसन्धीनां संभावनाऽपि दूरं गताऽस्ति। आधुनिकलोकनायकानाश्रित्य प्रणीतेषु महाकाव्येषु प्राय शास्त्रीय-नियमनिर्वाहेण साकमैतिहासिकतथ्यान्यपि सुरक्षितानि दृश्यन्ते। काव्येऽस्मिन् स्थूलाना सहजज्ञातानां घटनानामुल्लेखो विद्यते। नेहरो: समग्रस्य जीवनस्य चित्रणत्वाद् अन्ते तन्निधनस्य तत्पुत्र्या कृतस्य विलापस्य वर्णनेन दु खान्तमिदं काव्यम्। नेहरूचरिते शास्त्रीयानां नियमाना स्वीकारपरिहारावुभौ दृश्येते। कवि काव्यशास्त्रस्य विद्वानासीत् तथापि रचनाशिल्पे स परप्रत्ययनेयो नास्ति।

नेहरूचरितस्य प्रत्येकं पात्रं भारतीयसंस्कृतिदेवादीना भक्तमन्यधर्म-सहिष्णु राष्ट्रहितसाधने रतञ्चास्ति। एकस्यैव कुलस्य सदस्यानां प्रामुख्यमत्र विद्यते। यथा—जवाहरलाल: (नायक.) मोतीलाल (नायकपिता) श्रीमती स्वरूपरानी (माता) श्रीमती कमला (नायकपत्नी, किन्तु नायिका नास्ति) इन्दिरा (नायकपुत्री)। गौणपात्रेषु-मदनमोहन-मालवीय. महात्मागान्धी योगिराज: (कल्पितपात्रं) प्रभृतीनि पात्राणि सन्ति। काव्येऽस्मिन् यत्र तत्र पात्रस्य गुणाना सूची दृश्यते तया चरितविकासे नाधिकं योगदानं भवति किन्तु सूक्तिरूपेण तन्महत्त्वमवश्यमस्ति। नेहरूचरितस्य सर्वाणि पात्राणि सहृदयजनै· प्रत्यक्षतोऽपि प्रायेण ज्ञायन्ते। अत: पात्रेषु समधिकं धार्मिक-विश्वासादिनिरूपणं यथार्थतो दूरङ्गतमिव दृश्यते।

काव्यस्यास्य नायक. श्रीजवाहरलालोऽस्ति। अयं धीरोदात्तगुणै-

मण्डितोऽस्ति । अस्मिन् राष्ट्रभक्तिधार्मिकता-विश्वबन्धुत्वादीनि पदे-पदे दृश्यन्ते । विवाहप्रस्तावं श्रुत्वाऽयं वदति—

किन्तु स्फुटमतमिदन्तु ममास्ति मातः
गौराङ्गशासननिपीडितभारतस्य ॥

दासत्वदैन्यदलदुर्गतिभावनाया
अन्तं विधातुमहमस्मि कृतप्रतिज्ञः ॥

तस्मात् विवाहविधिनापि मदीयकार्ये
रोधो मनागपि भवेद्यदि तन्नयुक्तम् ॥

(नेहरू० १०।१८,२२)

राष्ट्रसेवायाः पुष्टिरस्य पित्राऽपि क्रियते—

राष्ट्रस्य सेवाव्रतमासिधारमेतद्धि चित्तेऽवहितेन धार्यम् ।
वत्साद्य संपूरय नोऽभिलाषं सेवा भविन्नी मम काऽपि सेवा ॥

(नेहरू० ८।३५)

जवाहरलालस्य गीतायाममितो विश्वासोऽस्ति । स कथयति—

श्रीकृष्णचन्द्रमुखनिर्गतदिव्यतत्त्व
गीतोक्तमेव मम जीवनसाधकं स्यात् ।
गीतासुधां परिनिपीय भवाम्यजस्र
स्संसारसागरसमुत्तरणाय सज्जः ॥ (नै० १४।४)

राष्ट्रहिताय स्वप्राणानपि समर्पयितुमीहते—

कदापि नाहं विचलामि सत्यात्पथः स चैवं करुणां करोतु ।
शरीरमेतन्मम देशसेवारतस्य कामं विलयं प्रयातु ॥

—(नै० ६।२२)

तस्योपदेशा. सर्वेषामनुकरणीया विद्यन्ते—

न वर्णभेदो न च जातिभेदो न धर्मभेदो न च संप्रदाय. ।
सर्वे समाना सुखशान्तिलाभे स्त्रियः पुमांसश्च समाधिकाराः ॥

भाषामुपादाय न वा विवादः केनापि कार्यो निजदेशमध्ये ।
सर्वे मिलित्वाऽखिलराष्ट्रसेवारता भविष्यन्ति विहाय भेदम् ॥

देशान्तरै. साकमपीह सीमाकृतो विवादो भविता न युक्तः।
क्षुत्क्षामतां दूरमितो विधाय लोका· समस्ताः सुखिनो भवेयु. ।।

तटस्थतानीतिमुपास्य राष्ट्रं समुन्नतेर्मार्गमुपैष्यतीति।
न सम्प्रदायात्मकता विधेया कार्यश्च सर्वैं सह मित्रभावः ।।

सहायताकार्यमलं विधाय सम्पत्स्यते विश्वजनीनसेवा।
महात्मदिष्टेन यथा चलित्वा राष्ट्रस्य कल्याणमुपासनीयम् ।।

(नेहरू० १५।३१,३३,३५,३६)

———

# १०. गान्धिचरितम्

गान्धिचरितमहाकाव्यस्य प्रणेता साधुशरणमिश्रोऽस्ति। हथुआराज्याधीश्वरश्रीकृष्णप्रतापशाहिनः प्रधानपण्डित आसीदस्य पिता श्रीजयराममिश्रः। स्वपितुर्वर्णनं कुर्वन् कविर्लिखति—

सर्वागमारण्यमृगाधिनाथो वादे विजिग्ये निखिलान् विपक्षान्।<br>
पुरोऽस्य केऽपि प्रतिपक्षवर्गाः स्थातुं तमांसीव रवेर्न शेकुः॥

(काव्यान्ते वंशपरिचये—२५)

कविः स्वसहोदरेषु पञ्चसु चतुर्थोऽस्ति सर्वे भ्रातरः सुयोग्याः—

श्री साधुपूर्वः शरणाभिधोऽहं तुर्यः सगर्भेषु विमुग्धबुद्धिः।<br>
प्रणीतवान् काव्यमिदं स्वभक्त्या मगेन्दुनाजानिरतेन तुष्टः॥

(पं० प० ३८)

अयं भूतपूर्वसंस्कृतसमितेः भूतपूर्वः सदस्यः। सम्प्रति (१९८० ई० वर्षे) श्रीजानकीसंस्कृतमहाविद्यालयस्य विहारराज्यस्य चम्पारण्यमण्डलान्तर्गतनरकटियागंजस्थस्य प्रधानाचार्यपदात् सेवानिवृत्तः सन् साहित्यसेवारतो निवसति।

गान्धिचरिते महात्मनो गान्धिनो जन्मतोऽन्तिमसंस्कारं यावत् वर्णनमस्ति। काव्यादौ बिरलावंशस्य प्रशस्तिरस्ति, नासौ काव्यस्य मूलकथया संबद्धोंऽशः। एवमन्ते स्ववंशस्य परिचयोऽपि कविना व्यलेखि। महाकाव्यस्य वस्तु एकोनविंशत्या सर्गैर्विभक्तमस्ति। काव्यवस्तुविन्यासे कविः शास्त्रीयनियमानां शतशोऽनुगामी नास्ति। तल्लक्ष्यं लोकनायकस्य गान्धिनः समग्रजीवनस्य चित्रणमस्ति। यतो हि गान्धिनः महत्त्वपूर्णास्पदप्राप्तौ तस्य भारतराष्ट्रस्वातन्त्र्ये सफलः प्रयास एव हेतुः अतो मुक्त्यान्दोलनस्य चर्चा समवायीभूता विद्यते। यदि गान्धिनं माध्यमं मत्वा मुक्त्यान्दोलनं तत्साफल्यं च काव्यविषयत्वेन स्वीक्रियेत तर्हि काव्यशास्त्रीयदिशा नाट्यसन्धीनां यथास्थलं निर्वाहोऽपि दृश्येत। काव्यफलं मुक्तिरस्ति। अध्ययनार्थं विदेशगमनात्प्राक् गान्धिनः कथनं काव्यबीजत्वेन प्रस्तुतमस्ति—

**चिरादिदं भारतवर्षमीदृशं नितान्तदुःखं परदासतां गतम् ।**
**अथास्य मुक्तिं यदि कोऽपि साधयेत् ततोऽस्य तेषां सहयोग ईप्सित. ॥**

(३।६)

काव्यान्ते-आङ्ग्लप्रशासकेषु गतेषु प्रधानमन्त्रिरूपेण श्रीजवाहरलाल-नेहरूः राष्ट्रपतिरूपेण च श्रीराजेन्द्रप्रसाद. प्रशासनं कुरुते । अशेऽस्मिन् निर्वहणसन्धिरस्ति (द्र० षोडशसप्तदशसर्गयोर्वर्णनम्) । अष्टादश-एकोन-विंशति-सर्गे च गान्धिनो निधनं तं प्रति जनताया. शोकस्य वर्णनमस्ति । इदं काव्यफलं न वक्तुं शक्यते । एतत् तु न कविसमोहितमस्ति । कस्यापि सद्यः मृतस्य सर्वविदितस्य नायकस्य जीवने काव्यरचनायां प्रवृत्तस्य कवेरिदं विवशत्वमेवास्ति यत् स तन्मृत्युवर्णनं करोति । प्रायेण भारतीयानि काव्यानि सुखान्तानि सन्ति । कविः गान्धिनो हत्याया वर्णनमेवं प्रस्तौति यत् वधात् पृथक् भूत्वा परमधाम्नि मुक्तौ वा तत् पर्यवस्यति । महात्मनो हन्ता नाथूराम· निमित्तकारणमिति कृत्वा प्रस्तुतोऽस्ति ।

आदिमहाकाव्यलक्षणकारो भामहः स्वकीये काव्यालङ्कारे नायकं निरूपयन् —

नायक प्रागुपन्यस्य वंशवीर्यश्रुतादिभि ।
न तस्यैव वध ब्रूयाद् अन्योत्कर्षाभिधित्सया ॥
यदि काव्यशरीरस्य न स व्याप्तितयेष्यते ।
न चाभ्युदयभाक्तस्य मुधादौ ग्रहणस्तवे । '

(काव्या० १।२२,२३)

एवं वदति वस्तुतोऽत्र प्रतिनायकेन केनचिन्न वध. कृतो नवा प्रतिनायकोत्कर्षाभिधित्सयैव नायकवधो वर्णितः । नाथूराम· काव्यस्य प्रतिनायको नास्ति। स्वातन्त्र्यसङ्गरस्यानेके नायकाः सन्ति गान्धी तेषा प्रातिनिध्यं करोति अत नायकः स एवास्ति । आङ्ग्लदेशीया जना अस्य विरोधिन सन्ति किन्तु कश्चिदेको नात्र प्रतिनायक । कदाचित्कञ्चित्प्रतिनायकं मन्येत तर्हि न केनचित् तत्सहयोगिना वधो व्यधायि । अतोऽन्योत्कर्षाभिधित्सया नायकवधो न सिद्ध्यति । अस्या दिशि कविरत्यन्तं सावधानो नास्ति । कविः गान्धिन परम-धामप्राप्तिं भारतीयराष्ट्रनायकयो रामकृष्णयो परम्परायाया गणयन् नायक-वधपरिहारं कल्पयति —

यथा पुरा दाशरथे· स्वधाम पुनरेष्यतः ।
निमित्तं लक्ष्मणो जातो लीलानिर्मितमायया ॥

यथा हि यादवेन्द्रस्य कृष्णस्यामिततेजसः ।
स्वलोकगमने हेतुर्व्याधश्चानुमतोऽभवत् ॥

तथा महात्मनो गान्धेः स्व लोकं गन्तुमिच्छतः ।
नाथूरामोऽभवत्तस्य निमित्तं गोडसास्पदम् ॥

(१८।३२-१३४)

नायकः मृत्युना न चिन्तितो भवति न चापकारिणं प्रति किमपि कर्तुमिच्छति । प्रख्यातकथावस्तुनो हत्याया अपरिहार्योऽयं प्रसङ्गः कविना गृहीतः तथापि काव्यशास्त्रमर्यादा रक्षिता । एतदर्थं श्लाघ्योऽयं कवि. ।

महात्मागान्धी शास्त्रीयदृष्ट्या धीरोदात्तो नायकोऽस्ति । काव्यादौ रेखाङ्कनेन गान्धिनो यद्रूपं प्रस्तुतीकृतं तदेव काव्ये पल्लवितमस्ति—

सत्यव्रतं सत्यममूद् यदीयं सर्वंत्वहिंसात्मकमेकरूपम् ।
यज्ज्ञानराशिः सवितेव लोकप्रकाशकोऽसौ जयतान्महात्मा ॥

(१।६-७)

अध्ययनार्थं विदेशगमनावसरे स्वमातु. समक्षं शपथं करोति—

त्वदीयमादेशनिमं समादरादयावलम्बे हृदये महाव्रतम् ।
शपेऽम्ब ! ते पादसरोजयोरहं कृता प्रतिज्ञेति च नात्र संशयः ।
कदापि नाद्यां पिशितं जुगुप्सितं सुरां स्पृशेयन्न करेण वानघे ।
न मे परस्त्रीमभिगन्तुमुत्सुकं भवेत्सुषुप्तावपि विद्धि मानसम् ॥

(गान्धि० ३।२८,३८)

वैदेशिकैर्मित्रैः प्रेरित सन् गान्धी तान् वदति—

न भक्षयेयं पिशितं कदाप्यहं न वा पिबेयं मदिरां नु कर्हिचित् ।
इयं जनन्याः पुरतः प्रतिश्रुतिः कृता हि तां लङ्घयितुं न शक्यते ॥

(गान्धि० ५।३७)

विदेशे गान्धी सुन्दर्या एकस्याः प्रणयप्रस्तावं न तिरस्करोति किन्तु पतिव्रताधर्ममहत्त्वं प्रतिपाद्य तस्या भावनां परिवर्तयति—

पतिव्रता नाम यथा कुलाङ्गना तथैकपत्नीव्रतवान् कृती नरः ।
तयोर्दृशि स्त्रीपुरुषौ सुलोचने ! स्वभर्तृपत्नीविषयान्नवा पृथक् ॥

(गान्धि० ५।५७)

## ११. लेनिनामृतम्

लेलिनामृतमहाकाव्यकर्तुः श्रीपद्मशास्त्रिणो जन्म १९२५ ई० वर्षे दिसम्बर मासस्य १७ तिथौ उत्तरप्रदेशराज्यस्य-अलमोड़ामण्डलान्तर्गत-सिंगालीनामके स्थानेऽभवत्। संस्कृतसाहित्ये कृतश्रमोऽयं साहित्याचार्य-काव्यतीर्थ-शिक्षाशास्त्रि-प्रभृतिभिरुपाधिभिर्मण्डित. सन् सम्प्रति राजस्थानविश्वविद्यालयस्य संस्कृतविभागे प्राध्यापकपदे कार्यरतोऽस्ति। १९७६ वर्षे रूस-प्रशासनाग्रहं स्वीकृत्य कविनाऽनेन रूसयात्राऽपि व्यधायि। नवोदितसंस्कृत-कविषु प्रमुखं स्थानं भजमानस्यास्य कवे रचना अधोलिखिताः सन्ति— (१) सिनेमाशतकम् (२) स्वराज्यम् (खण्डकाव्यम्) राजस्थानशासनेन पुरस्कृतम् (३) पद्यपञ्चतन्त्रम् (२५०० पद्यैः पञ्चतन्त्रस्य पद्यानुवादः) (४) बंगलाभ्युदयः (संस्कृतव्यायोग.) (५) महावीरचरितामृत (हिन्दीमहाकाव्यम्) (६) लोकतन्त्रविजयः (संस्कृतव्यायोग.) (७) सोवियतसंघ मे १५ दिन (हिन्दीभाषयोपनिबद्धं यात्राविवरणम् (८) दिव्यज्योतिः (महावीरविशेषाङ्कस्य संपादनम्) विविधपत्रिकासु शताधिकस्फुटरचनानां प्रकाशनम्।

लेनिनामृतं बोल्शोविक क्रान्तिजन्मदातु कामरेड वी० आई० लेनिनस्य (सन् १८७०–१९२४ ई०) जीवनमाश्रित्य पञ्चदशसर्गैरुपनिबद्धं संस्कृत महाकाव्यमस्ति। अस्मिन् साम्यवादस्य रूपरेखाया., लेनिनस्य सम्पूर्णजीवनस्य, रूसस्य भौगोलिकस्थितेरन्तिमे च सर्गे प्रारम्भतोऽन्तं यावत् रूसभारतयोर्मैत्र्याः शृङ्खलाबद्धं वर्णनमस्ति। संस्कृतभाषया प्रणीता साम्यवादविचारवाहिकेयमद्वितीया रचना। तं युगपुरुषं प्रति श्रद्धाञ्जलिभूतेयं रचना यस्य विचारमाश्रित्य बहुसङ्ख्यका देशाः प्रगतिं कुर्वाणाः सन्ति। काव्यस्य समर्पणवाक्ये कवेर्लक्ष्यं स्पष्टं दृश्यते—

> रूसे जारकुशासनस्य प्रमथनेनोन्मत्तभावान्विता।
> वीरा लेनिनदिष्टमार्गपथिका ये तत्यजु स्वानसून्॥
> तेषां क्रान्तिकृतां विमुक्तिमनसां पादार्चनाहेतवे।
> सत्काव्याञ्जलिरेष भावसुरभि प्रस्तूयते सादरम्॥

लेनिनामृते साम्यवाद आप्रबन्धं परिव्याप्तोऽस्ति। साम्यवादं प्रशंसन् कविर्लिखति—

अर्वाचीनं न, प्राचीनं साम्यवादस्य दर्शनम् ।
सहनावितिमन्त्रस्य निःश्वास इव लक्ष्यते ।
सम्राजवादविक्षिप्तभूतानां साम्यवादिनाम् ।
हृद्यं स्मृतिकरं स्वादुभेषजं लेनिनामृतम् ॥
(लेनि० १।८।१०)

विविधसिद्धान्तानां सूत्रात्मकं विवरणमपि ग्रन्थेऽस्मिन् प्राप्यते—

मार्क्सवादमते जीवो न प्रकृत्याः परो मतः ।
नाऽत्मा नाऽध्यात्मिकी शक्तिर्नास्ति मृत्योः परं जगत् ॥
निर्बाधं शासनं लोके श्रमिकाणां समासत ।
मार्क्सस्य चरमं लक्ष्यं साफल्यं भजतेतराम् ॥
राज्यं निरङ्कुशं सम्यङ् न मार्क्सो मनुते सुधीः ।
यत्र वै कलहायन्ते श्रमिकाः स्वामिभिः सह ॥
लेनिनो मार्क्सवादस्य ज्ञाता श्रेष्ठविचारकः ।
कृषकाणां प्रभुर्नेता श्रमवादस्य भूतले ॥
समष्टिवादपर्यायः कम्युनिज्म प्रकीर्तितः ।
स्वसामर्थ्यं श्रमेणात्र संसारः सुखमेधते ॥
शनैः शनैर्विषमता वर्गभेदो दुराग्रहः ।
समष्टिवादतत्त्वेन स्वयमेवावलुप्यते ॥
मार्क्सवादमते युद्धं न नृणां श्रेयसे क्वचित् ।
यतस्तेन प्रणश्यन्ति विकासाधारभित्तयः ॥
(लेनि० १।५६,६३,६५-६६,६८,७०-७१)

एते सिद्धान्ताः काव्योचितसौन्दर्यरक्षणेन सह प्रसङ्गत उपात्ताः। पात्रचित्रण-रसपरिपाक-वस्तु-व्यापारवर्णन-नाट्यसन्धि- संवाद-सूक्ति- युगानुरूप-राष्ट्रचेतनाप्रभृतीनां महाकाव्यतत्त्वानां सुभगः सन्निवेशो विद्यते। वैदर्भीरीति-मण्डिता प्रसादसुभगा भावानुकूला चास्य काव्यस्य भाषाऽस्ति । याथार्थ्यं स्वाभाविकत्वं चास्यान्यतमं वैशिष्ट्यमस्ति। कविः समाजक्रान्तिकारिणं लेनिनं संस्कृतमहाकाव्यस्य नायकं निर्माय काव्यजगति नूतनां क्रान्तिमकरोत्। लेलिनामृतस्य रचनाशिल्पं प्राचीनकविभिर्बहुधा प्रभावितमस्ति। प्राचीन-काव्यमन्दिरे नवीनदेवस्याभिनवा प्रतिष्ठाऽत्र कृताऽस्ति, या नूनं प्रेरणादायिनी स्वागतार्हाऽनुकरणीया चास्ति ।

काव्येऽस्मिन् लेनिनस्य लोकोपकारी स्वभावोऽभिव्यञ्जितोऽस्ति। भारतीयायाः संस्कृतेर्मूलभावनयाऽभिभूतः कविः रूसनिवासिनो लेनिनस्य चित्रणे प्रवृत्तोऽस्ति। कविकाव्यविषययोरद्भुतोऽयं संगमः सर्वेषां कृते तीर्थभूत इव विद्यते। केचिदंशा द्रष्टव्याः—

लेनिनसूर्ये गर्भे प्रविष्टे सति मारियायाः (लेनिनमातुः) मुखकमलश्रीर्विकसति किन्तु दारिद्र्यदुःखवशात् ततः पीतिमा न दूरं गतः—

> गर्भं गते लेनिनसूर्यरश्मौ प्रफुल्लितामून्मुखपङ्कजश्रीः।
> दारिद्र्यदुःखार्णवपानयोगात् मातुस्तदा पीतमुखं बभूव॥
>
> (लेनि० ३।३)

गर्भस्थितो लेनिनः कम्पायमानः सन् जारशासनमान्दोलयितुं सूचयतीव। उत्प्रेक्षातो वस्तुध्वनिना भाविनं वृत्तान्तमत्र कविः सङ्केतयति—

> गर्भस्थितेनास्य विवर्तनेन संसूचितं जारविवर्तनं च।
> जरायुजातोऽपि जराविमुक्तः स निर्जरत्वं समवाप सद्यः॥
>
> (लेनि० ३।१०)

मनुष्यः सन्नपि देवगुणयुक्त आसील्लेनिनः—

> देवो न वै देवगुणैरुपेतः स मारियागर्भगतो हि जीवः।
> दुःखार्णवादुद्धरणाय दीनान् अवातरत्किं धरणौ मनोज्ञः॥
>
> (लेनि० ३।१२)

अकिञ्चनत्वात् गर्भभरालसाऽपि मारिया श्रमरताऽऽसीत्। लेनिनजन्मदिवसे न कश्चिदुत्सवो दृष्टः—

> न जन्मकाले द्युसदो हि यस्य कीर्तिस्वनं दुन्दुभिभिर्वितेनुः।
> न मानवा जन्मदिने प्रहर्षात् महोत्सवं चक्रुरमुष्य गेहे॥
>
> न तद्गृहे डिण्डिमघोष आसीन् नासीज्जनेषूत्सुकता तदानीम्।
> सामान्यरूपेण श्रुतं जनैस्तु सुतः प्रजातः खलु मारियायाः॥
>
> (लेनि० ३।५६,५७)

अंशेऽस्मिन् काव्यात्मकसौन्दर्याभिरक्षणेन सह प्राचीनरूढिगतवर्णनं प्रति भर्त्सनमपि अभिव्यञ्जितमस्ति। काव्यनायकविषये कवेर्दृष्टिः तच्छन्देरेवावलोकनीया—

श्रेष्ठः स नासीज्जठरे जनन्या किं श्रेष्ठतां मात्र ययौ नृलोके ।
नरो न जात्या वयसा न लिङ्गैः सुकर्मणा श्रेष्ठपदं प्रयाति ॥
(लेनि० ३।६२)

लेनिनप्रभावात् सर्वत्र साम्यवादचेतना जागर्तितराम् । तस्य प्रेरकाणि व्याख्यानानि बहुधाऽत्र दृश्यन्ते—

यदा प्रभृति लोकेऽस्मिन् समाजार्थविभाजनम् ।
सम्यङ् न क्रियते तावत् सुकालो न भविष्यति ॥
धनिकानां समाजस्तु स्वसाहाय्यचिकीर्षया ।
दमनं श्रमिकाणां तु कुरुते स्वधिया ध्रुवम् ॥
(लेनि० ४।६७-६८)

नृपनिरङ्कुशशासनसंभवः श्रमिकवर्गभवो न पराभवः ।
अविरतं हि भविष्यति भूतले दलकृतो विजयो जनतामुदे ॥
प्रकृतिदत्तधनं हि धराधनं भवितुमर्हति नैकजनस्य तत् ।
जनसमाजविकासनियोजितं धनमिदं जगतां सुखदं मतम् ॥
(लेनि० ६।७३।७४)

लेनिनव्यक्तित्वस्य सारः कविशब्दैरेव द्रष्टव्यः—

राष्ट्ररक्षाकृते जीवनस्य क्षणं व्यर्थमेकं न निन्ये व्रती लेनिनः ।
रक्तदानेन वै सर्वदाऽसौ वशी राष्ट्रवृक्षं दृढाशान्वितोऽपोषयत् ॥
सुकविकाव्यमिवास्य यशः क्षितौ सुविदितं परिवीक्ष्य समन्ततः ।
जगति चार्थविदो नहि केवलं विधिविदोऽपि च विस्मयमागताः ॥

(लेनि० १२।७३,६।४३)

———

# १२. अद्‌भुतदूतम्

अद्‌भुतदूतमहाकाव्यस्य प्रणेता श्री जग्गूबकुलभूषणोऽस्ति। विंशशताब्द्याः संस्कृतकविषु कवेरस्य विशिष्टं स्थानमस्ति। संस्कृतसाहित्यस्य सर्वाभिरेव विधाभिरनेन रचनाऽकारि। दश नाटकानि, अनेकानि खण्डकाव्यानि, चम्पूकाव्यानि, उपन्यासादीनि च प्रकाशितानि सन्ति। विनम्रोऽयं कविः। काव्योपक्रमस्योक्त्याऽस्य विनम्रता भक्तिप्रवणता चानुमीयते—

द्वैपायनमुनिं वन्दे कविकल्पतरुं कविम्।
येन भारतमाख्यातं शान्तैकरसपुष्कलम्॥
कालिदासादिभिर्मान्यैः रसवत्सु कृतेष्वपि।
महाकाव्यस्य यत्नो मे काव्ये हास्ये पदं व्रजेत्॥
तथापि यदुनाथस्य सौलभ्यगुणवर्णितः।
यतेऽत्र श्रेयसे नृणां स्पृहा नैसर्गिकी किल॥

(अद्‌भुत० १।२-४)

अस्य कवेः काव्यास्वादं कुर्वतां विदुषां शोभनाः प्रतिक्रियाः सन्ति। श्री पी० सुब्बारामभट्टो लिखति—

प्रतिभाकौटिल्यं प्रतिनवविचित्रार्थरुचिरं
प्रगल्भैर्वाग्गुम्फैः सहृदयसमास्वाद्यरचनम्।
प्रहर्षं सूरीणां रचयति रसासिक्तमनसां
प्रकृष्टं नैपुण्यं प्रथयति च नाट्ये रचयितुः॥

अद्‌भुतदूतमहाकाव्यस्य कथावस्तु महाभारतस्योद्योगपर्वाश्रितमस्ति। श्रीकृष्णः पाण्डवानां दूतो भूत्वा दुर्योधनादिसभां प्रति गच्छति। अस्यैवांशस्य पल्लवनं पञ्चदशसर्गैः कृतमस्ति। यथास्थलं श्रीमद्भागवतादिषु वर्णितानां श्रीकृष्णलीलानां तदर्तिनाशप्रयासानां चोल्लेखः कृतोऽस्ति। अस्य काव्यस्य वस्तुविन्यासः शास्त्रीयविधिना सम्पन्नः स्वाभाविकः विविधवर्ण्यविषयसमृद्धश्चास्ति। वैदर्भीरीतियुक्ता प्रसादगुणसुभगा सालङ्कारा च भाषा रसपरिपाकेऽत्रात्यन्तं सहायिकाऽस्ति। पात्रचित्रणे औचित्यनिर्वाहो दृश्यते। आप्रबन्धं भक्तिरसस्याविरलः प्रवाहो यथास्थलमन्यैरङ्गभूतै रसैः संवलितोऽस्ति। सूक्ति-संवादच्छन्दोयोजनादिदृष्ट्या शोभनेन शिल्पेनोपनिबद्धमिदम्। पौराणिकं महाभारतीयं च वस्तु कविकल्पनया चारुतरं विधाय

प्रस्तुतीकृतमस्ति। वस्तुनि न किमपि मौलिकं परिवर्तनं न वा वर्तमानकाव्य-सुलभराष्ट्रभक्तिधारायाः कश्चिद्विशेष. प्रभावो दृश्यते। प्राचीनशिल्पोप-निबद्धं प्राक्तनकथाश्रितं चैतत् महाकाव्यमस्ति। अस्य केचित्प्रसङ्गा द्रष्टव्याः—

दौत्यकर्मलग्न· श्रीकृष्णो भोजनालयं गच्छति तत्र तस्यावलोकने वृद्धानां युवतीनां चावस्थाभेदोचितं कथनं क्रियन्मनोहारि विद्यते। युवतयो वदन्ति—

कवलपाणिरच ञ्चललोचनामुखमुदस्य च काऽपि नितम्बिनी।
विलिखितेव ददर्श गतत्रपामसृणनीलघनद्युतिमच्युतम्॥
(अद्भुत० ५।१८)

वृद्धा एवं वदन्ति—

ननु भवान् गजराट्परिरक्षणे द्रुपदजाद्भुतचेलकृविन्दकः।
शकटकेशिबकाघविमर्दन सुरभिगोपनपाणिधृताचलः॥
श्रवणतश्श्रुतमद्य निरर्गल समवलोक्य भवन्तमहं दृशा।
ननु भवामि च धन्यतमा क्षण पुरत एह्युपदर्शनतेमुखम्॥
(अद्भुत० ५।२४।२५)

श्रीकृष्णोऽस्य काव्यस्य धीरोदात्तो नायकोऽस्ति। अस्मिन् तस्य परमपुरुषत्वं देवत्वञ्चाभिव्यञ्जितमस्ति। काव्ये दृश्यमानस्य श्रीकृष्णचरितस्य रेखाङ्कनमेकं द्रष्टव्यम्—

अखिलहेयगुणै परिवर्जितो बहुयुगे हि गुणाकरतां गतः।
सगुणनिर्गुणताश्रुतियुग्ममप्ययमहो सफलीकुरुते प्रभु.॥
परमपूरुष एष दयानिधिर्नयनगोचरतामधिगत्य नः।
अमितभाग्यवशादिति मन्महे लसति सम्प्रति मानुषरूपभाक्॥
(अद्भुत० ५।४४-४५)

श्रीकृष्णस्वभावविषये काव्यप्रतिनायकस्य दुर्योधनस्य भिन्ना धारणा वरीवर्ति—

व्यासाद्यो वयोवृद्धास्तत्सौन्दर्यवशीकृता।
जानन्ति नैव तच्चेष्टा लोकगर्हितवञ्चना॥
गोरक्षणाय दण्डेन चारयन्गा महावने।
आतपासितगात्रोऽयं मेघश्याम इतीरित॥

राज्याधिकारहीनस्य गोरक्षापरस्य च।
तस्य पूजा कथं कार्या न तत्सम्प्रतिरत्र मे॥
(अद्भुत० ६।२१,२६,३१)

विदुरः श्रीकृष्णस्य परमो भक्तोऽस्ति। श्रीकृष्णस्य निन्दां स न सहते। दुर्योधनकृतां निन्दां श्रुत्वा स वक्ति—

आत्मदोषेण गृह्णाति सितानप्यन्यथा गुणान्।
पित्तदोषेण शंखस्यं शौक्ल्यं पीततयेव ना॥
(अद्भुत० ६।१३४)

कर्तव्यं प्रति दृढ़तोपकारिणं प्रति कृतज्ञता काव्यस्यास्य महनीयं वैशिष्ट्यमस्ति। कर्णः श्रीकृष्णं कथयति—

जानन्नपि जगन्नाथ ! धार्तराष्ट्रनृशंसताम्।
नैव त्यजामि तत्पक्षं येन रक्षा कृता मम॥
मत्कर्म तु जानामि फलं नरकमेव मे।
तथापि स्वामितोषार्थं दुष्कर्मं निरतोऽस्म्यहम्॥
(अद्भुत० १५।३३,३८)

सामान्यजनजीवनस्य चित्रणमप्यतिशयमावर्जकमस्ति। भोजन-व्यवस्थालग्नानां भृत्यानां वर्णनं किंयच्छोभनमस्ति—

कति चनेन्धनबन्धुरकन्धराः कतिपये जलकुम्भभरा नताः।
कति च भाजनदन्तुरिताल्तिका ज्वलनफूत्कृतिसंकुचिताधराः॥

काव्यस्यात्मतत्त्वभूतानां ध्वनिरसबिम्बादीनां सन्निवेशोऽपि श्लाघ्योऽस्ति। यथाऽलङ्कारतो वस्तुध्वनिः—

दुःशासनस्य पौलस्त्याच्छ्लाघ्यः खलु पराक्रमः।
ना चकर्ष स यत्केशे परदारान् रजस्वलान्॥
(अद्भुत० १३।२२)

चाक्षुषबिम्बः—

इतीरितं चक्रधरेण कृष्णा निशम्य मन्दस्मितफुल्लमल्ला।
चेलाञ्चलेऽश्रुजलं प्रमृज्य बद्धाञ्जलिर्मन्वमुवाच कृष्णाम्॥
(अद्भुत २।५२)

अद्भुतभक्तिरसयोरद्भुतः सङ्गोऽत्र दृश्यते। भगवत्कृपया अन्धः सन्नपि धृतराष्ट्रः पश्यति—

धन्यतमो भगवन्न मदन्यो दृष्टमिदं तव रूपमहो यत् ।
चक्षुरपि प्रथमं भवतेदं दत्तमभूत् सफलीकृतमद्य ॥

(अद्भुत १४।१३)

अस्मिन्नद्भुते रूपे धृतराष्ट्रो दुर्योधनस्य पराभवमपि पश्यति (१४।३६) किन्तु प्रतिपक्षी वीरो दुर्योधनः स्वनिश्चयान्न विरमति। स कर्णं संबोधयन् वदति—

नाहमिहाद्य बिभीषित एवं केनचिदाशु बिभेमि धरेशः ।
ईक्षितमद्भुतमीदृशमुर्व्यां मायिजनस्य मया बहुपूर्वम् ॥

(अद्भुत० १४।४३)

———

## १३. कर्णार्जुनीयम्

कर्णार्जुनीयमहाकाव्यस्य प्रणेता स्वर्गीयः पण्डितविन्ध्येश्वरीप्रसादशास्त्री विहारराज्यस्य चम्पारणमण्डलान्तर्गत 'सरारा' ग्रामस्य गौतमगोत्रीये मिश्रकुले जात आसीत्। वाराणस्यामध्ययनाध्यापनाभ्यां स्वकालमतिवाहयत्। परम्परागतसंस्कृतपाण्डित्यस्य धनिनाऽनेन त्रयोदशग्रन्थानां प्रणयनं कृतम्। कर्णार्जुनीयाद्भिन्नमस्यापरं संस्कृत-महाकाव्यं महर्षिज्ञानानन्दचरितमस्ति। संस्कृतहिन्दीभाषामाध्यमेन रचनाकृत्सु कविषु ख्यातनामा अयं कविरस्ति।

द्वाविंशसर्गैरुपनिबद्धेऽस्मिन् कर्णार्जुनीये महाकाव्ये कर्णार्जुनयोर्युद्धादिवर्णनमस्ति। महाभारतपद्मपुराणयोः वर्णितं कथावस्तु पल्लवितमत्र। कविकल्पनया नूतनं परिवर्तनमत्र न प्राप्यते। साम्प्रतिकयुगजीवनस्य चित्रणमपि विरलमेवात्र दृश्यते। इन्द्रपुत्रार्जुनस्य सूर्यपुत्रकर्णस्य च जन्मन औचित्यं प्रतिपादयता स्वकाव्योपजीव्यस्य संकेतः कविना स्वयमकारि—

लोके यद्ववविहान्तर निगदित सर्वत्र सूर्येन्द्रयोः।
तद्वत्तत्सुतयोश्च समवमिति स्वाभाविकं विद्यते॥

यद्वगीतं चरितं यथार्थमसकृत् कर्णार्जुनीयं हि तद्।
व्यासेन प्रभुणा प्रवत्तसरणिर्वक्ष्येऽनुरूपं मते.॥

(कर्णार्जु० १।७८)

वस्तुविन्यासे कविः व्यासस्य पौराणिकी शैलीमनुहरति। सर्गान्ते प्रायः समाप्यमानसर्गस्य सारं वैशिष्ट्यं वा प्रतिपादयति। अस्य काव्यस्याङ्गी रसो वीरोऽस्ति। प्रौढसाहित्यिकसंस्कृतभाषयोपनिबद्धमेतत्काव्यम्। प्रसादगुणयुक्ता वैदर्भी रीतिरत्र प्रायेण दृश्यते। अनेके संवादात्मकाः प्रसङ्गाः प्रभावकारिणः सन्ति। संवादेषु क्वचित् क्वचिद् वाग्व्यवहारेऽशिष्टशब्दोच्चारणत्वात् पात्रोचितो गरिमाऽरक्षित इव-दृश्यते। अर्जुनसहायकस्य भीमस्य कर्णसहायकस्य दुर्योधनस्य संवादांशोऽवलोकनीयः—

भीम —

बलवानपि जम्बुकात्मजः किमु सिंहस्य पुरः प्रसर्पति।
निहिताऽपि सुवर्णपिंजरे किमु काकः क्रतुहव्यभुग् भवेत्॥

अपि पश्यत मन्दधीरयं ह्यधमः सूतसुतो भवन्नपि ।
परिवाञ्छति सव्यसाचिना सह योद्धुं नितरामपत्रपः ।।

(कर्णार्जु० ५।१३०,१३२)

सुयोधनः—

ननु भीम ! सुसान्निपातकज्वरसंश्लिष्ट इव प्रतीयते ।।
नृपतिः किल कर्ण एषको नृपसिंहासनमास्थितो वरम् ।
इति यस्य न विद्यते मवेऽभिमतं तस्य हि मूर्ध्नि मे पदम् ।
तमहं समरार्थमाह्वये द्रुतमायातु स वीर संमुखम् ।
यदि नेति निजानने तदा मसिमालिप्य पलायतामितः ।।

(कर्णार्जु० ५।१३२,३४,३७)

हिन्दीमहाकाव्ये वैदेहीवनवासे संस्कृतमहाकाव्ये सीताचरिते च सीता स्वतः वनगमनं प्रस्तवीति प्राचीनकथाश्रितयोरनयोः काव्ययोः सीतानिर्वासन-वर्णनमनुचितं मत्वा पूर्ववत् न प्रस्तुतीकृतम् । कर्णार्जुनीयकृता द्रौपद्या अश्रूणि नवीनेनापि स्रोतसा पुनः परिवर्धितानि । नारीजागरणस्यास्मिन् युगे काव्यकारस्य युगबोधशून्यतेव प्रतीयते। रसप्रवणस्य कवेर्वर्णनमिदं शोभनं सदपि युगेऽस्मिन्ननुपयोगि दृश्यते—

कृष्णा तस्य क्रूरचेष्टां विलोक्य श्वश्वा गेहं बिभ्यती धावमाना ।
मध्ये मार्गं तेन सद्यो गृहीता चौवके सा हन्त ! रोरुध्यमाना ।।
तस्याः शीर्षांचलं स्रस्तमासीत् स्निग्धा रम्या कुन्तलाश्चातिदीर्घाः ।
भूमौ ध्वस्तास्तान् समाकृष्य भूमौ लुण्टात्मासौ निर्दयं तामुवाच ।।
रे रे मूर्खे ! क्वचित्तः संप्रयासि दुःशीला त्वं पुंश्चली पञ्चपत्नी ।
मद्धस्ताभ्यां त्रस्तसद्दिग्गजाभ्यां स्मर्तव्योऽसौ मोचयेत्त्वां पुमान् यः ।।
श्यामश्लक्ष्णार्द्रितो वृष्टियोगात्सत्कुल्याभ्यां स्यन्दमाना नदीव ।
दृक्कञ्जाभ्यामश्रु संवाहयन्ती केशाकर्षं द्रौपदी तेन निन्ये ।।

(कर्णार्जु० १०।६-६५)

एवं वर्णनं कुर्वाणा विंशशताब्द्या. कवयो यदि युगप्रवृत्तिं न परि-चिन्वन्ति तर्हि संस्कृतसाहित्यस्य नियन्त्रणं दोषावहमेव। प्राचीनशिल्पदिशा प्रशस्तमिदं महाकाव्यम् ।

/६०

## महर्षिज्ञानानन्दचरितम्

ज्ञानानन्दचरितस्यापि रचयिता श्रीविन्ध्येश्वरीप्रसादशास्त्री अस्ति। अस्य वस्तु त्रयोविंशसर्गैर्विभक्तमस्ति। आधुनिकं महात्मानं श्रीमहर्षिज्ञानानन्दमाश्रित्य प्रणीतत्वात् स्वभावत आकर्षकं प्रेरणाप्रदं चेदं महाकाव्यमस्ति। अस्य ग्रन्थस्य स्वतन्त्रपुस्तकाकाररूपेण प्रकाशनमद्यावधि न जातम्। अधिकांशतो वाराणसीतः प्रकाशमानायां सूर्योदयपत्रिकायामेतद् धारावाहिकरूपेण प्रकाशितमस्ति।

---

# १४. किरातार्जुनीयम्

किरातार्जुनीयमहाकाव्यप्रणेतुः डॉ० जगन्नाथपाठकस्य जन्म १९३४ ई० वर्षे विहारराज्यस्थितरोहतासमण्डलान्तर्गतसहसारामस्थाने (कोठाटोलीतिनाम्ना प्रसिद्धे) अभवत्। कविरयं काशीहिन्दूविश्वविद्यालये स्वर्गीयश्रीमहादेवशास्त्रिसन्निधौ संस्कृतसाहित्यस्योच्चतममध्ययनं कृतवान्। सम्प्रति कतिपयैर्वर्षैः प्रयागस्थे गङ्गानाथझाशोधसंस्थाने प्राध्यापकपदमलङ्करोति। संस्कृतकविरूपेण टीकाकाररूपेण च डॉ० पाठको लब्धप्रतिष्ठोऽस्ति। छात्रावस्थायां भारविमहाकवेः किरातार्जुनीयमहाकाव्याध्ययनावसरे तदेव वस्तु गृहीत्वा महाकाव्यप्रणयनस्य समीहा समुद्भूता तत्फलमेवैतन्महाकाव्यं विद्यते। आंशिकरूपेण काव्यमिदं छात्रावस्थायामेव लिखितं किन्तु पूर्तिरस्य दशकेऽस्मिन् (१९६१-७०) सञ्जाता। सम्प्रति लघुकाव्यप्रणयनेऽस्य रुचिर्विद्यते। अस्य संस्कृतरचना अधोलिखिताः सन्ति—१—सौन्दर्यगायनम् (काव्यसंग्रहः) २—यशोधरा (खण्डकाव्यम्) ३—पतङ्गदीपम् (खण्डकाव्यम्) ४—करुणराघवम् (नाटकम्) ५—कापिशायिनी (परसियनसाहित्यप्रभावितेयं सहस्राधिकपद्यसमन्विता रचनाऽस्ति। अस्याः पद्यानि व्यस्तानि समस्तानि वा सहृदयाह्लादकानि सन्ति) ६—यवनीयाज्ञा (पण्डितराजं जगन्नाथमाश्रित्य प्रतीतमिदं काव्यम्)। हिन्दी भाषातः संस्कृतेन प्रस्तुतीकृतानि पद्यानुवादात्मकानि काव्यानि—१—कामायनी (स्व०जयशङ्करप्रसादप्रणीतस्य कामायनीमहाकाव्यस्यानुवाद) २—अश्रु (प्रसादस्यैव 'आँसू'—काव्यस्यानुवादः। हिन्दी भाष्येण प्रस्तुतीकृता ग्रन्थाः—१—ध्वन्यालोकस्य (लोचनसहितस्य) हिन्दी व्याख्या २—गाथासप्तशतीकाव्यस्य हिन्दी व्याख्या, ३—हर्षचरितस्य हिन्दीव्याख्या।

किरातार्जुनीयस्य कथावस्तु तदेवास्ति यत् महाकविभारवेः प्रसिद्धतमस्य महाकाव्यस्य किरातार्जुनीयस्य, लब्धप्रतिष्ठकाव्यस्य वस्तुनो ग्रहणे तस्य युगानुरूपे पल्लवनेऽत्यन्तं सफलोऽयं कविः। भारविना य. कश्चिद् विशिष्टकलावाद स्वकाव्यरचनया प्रारब्धः, तस्य चरमो विकासो माघश्रीहर्षादौ दृश्यते। कविना पाठकेन तद्विषयमवलम्ब्यैव काव्यं व्यलेखि किन्तु तदभिव्यक्तौ वाल्मीकिकालिदासयोः सुगमं भाषाशिल्पमेव स्वीकृतम्। भारविकाव्येनास्य तुलनात्मकमध्ययनमवश्यमेव सहृदयाह्लादकं भविष्यति। नवीनस्यास्य प्रसादगुणसंवलितस्य वैदर्भीरीतिरञ्जितस्य रससिक्तस्य महाकाव्यस्य किरातार्जुनीयस्य केचिदंशा द्रष्टव्या—

पाण्डवोऽथ मृतमेवमवेत्य स्वेषु भिन्नहृदयं सवराहम् ।
आजगाम विशिखं विजिघृक्षुः शातमन्यवसुत. श्रुतनामा ॥

उच्चिकीर्षति मुनौ शरमस्मादाशु कज्जलगिरेरिव खण्डात् ।
घोरमूर्तिरथ कोऽपि किरातः कोपनोऽथ समवाप दिवापत् ॥

तामभूदनवलोकितपूर्वां वीक्ष्य तन्मनसि वन्यजयश्रीम् ।
विस्मयाङ्कुरसहोत्थविचारो यद् विधेरिह किमद्य विधित्सा ॥

आगतः स किमु दर्शितदेह कोऽप्ययं यमचरो यमलोकात् ।
आज्ञया हृदि यतोऽस्य च भर्तुर्जाग्रती मृतवराहजिनीषा ॥

कोप एव किमु सम्प्रति साक्षात् नृत्यमस्य वदने विदधाति ।
मानसे जनयतीव भयं मे भीरसृण्य वदनस्य सकोपा ॥

(पाठकरचितकिरातार्जुनीये—१४।१-५)

अन्यमपि चित्रमेकमवलोकनीयम्—

कठिनं हृदयं मृदुत्वमेति द्रुतिरायाति च निर्भरं सुवर्णे ।
प्रथम स्पृहयत्यतीव शैत्यं परितापं तु समीहते द्वितीयम् ॥

अथ लोचनवारि पादमात्रं पतितस्याधिपद विभोर्बभूव ।
पयसोऽप्यधिक सुरापगाया नयनोदस्य महत्त्वमामनन्ति ॥

(पाठकरचितकिरातार्जुनीये १८।६-७)

# १५. श्रीकृष्णचरितामृतम्

श्रीकृष्णचरितामृतमहाकाव्यस्य रचयिता नेपालदेशनिवासी श्रीकृष्ण-शर्मा घिमिरेऽस्ति। कविरयं भारत एव प्रायेण निवसति। नेपालराष्ट्रेऽस्य निवासस्थानम्—१७।३५६ टंगाल गहिरीधारा, काठमाण्डू—इत्यस्ति। कविरयं बहुसङ्ख्यकानां भारतीयविदुषामादरपात्रमस्ति। संस्कृतसाहित्यस्य विविधकाव्यविधासु रचना अनेन कृता.—

१—श्रीकृष्णचरितामृतम् (भागद्वयेन) २—नाचिकेतसम् (कठोपनिषद-माश्रित्य प्रणीतं दार्शनिकं महाकाव्यम्) ३—वृत्रवधम् (अन्वर्थमहाकाव्यम्) ४—ययातिचरितम् (अन्वर्थमहाकाव्यम्) ५—सम्पातिसन्देश (अन्वर्थकाव्यं) ६—पूर्णाहुति (युधिष्ठिरस्य राजसूययज्ञमाश्रित्य प्रणीतं काव्यम्) ७—महा-मोह· (आधुनिकपाश्चात्यचार्वाकचिक्योपबृंहितप्राच्यसंस्कृतिपरिष्कृतं रूपकम्) ८—श्रीरामविलाप. (सीतावियोगे रामस्य कृतं विलापमाश्रित्य प्रणीतं काव्यम्) ९—मनोयानम् (वैज्ञानिकदार्शनिकविश्लेषणात्मकं काव्यम्) १०—सत्स्तुतिकुसुमाञ्जलिः (स्तुतिसङ्ग्रह) ११—श्रीकृष्णपद्यसङ्ग्रह. १२—श्रीकृष्णगद्यसङ्ग्रह.। सर्वेषां ग्रन्थाना हिन्दभाषानुवादोऽपि कविनैव कृत। सम्प्रति केवलं श्रीकृष्णचरितं प्रकाशितमस्ति। अन्येषां पाण्डुलिपयः कविसमीपमेव सन्ति।

श्रीकृष्णचरितामृतं श्रीमद्भागवताश्रितं विशालकायं महाकाव्यमस्ति। अस्य प्रथमभागस्य वस्तु ५८ सर्गैर्विभक्तमस्ति ३६०० पद्यानि च सन्ति। द्वितीयो भागः सम्प्रति प्रकाशितो नास्ति। निगमकल्पतरुफलायमानमिदं महाकाव्यं श्रीमद्भागवतस्य सारसर्वस्वमस्ति। शोभनया कविकल्पनया पौरा. णिकीयं कथा महाकाव्योचितशिल्पेन प्रस्तुतीकृताऽस्ति। अस्य नायको दिव्य-पात्रं श्रीकृष्णो धीरोदात्तगुणैर्मण्डितोऽस्ति। पात्रचित्रणे कविना पात्राणां देव-दनुजस्वभाव. परिरक्षितोऽस्ति।

साधूना परित्राणाय दुष्कृतानाञ्च विनाशाय सततं यतमानस्य श्रीकृष्णस्य रूपं शतधा समुद्भावितमस्ति। अस्य महाकाव्यस्याङ्गी रसो भक्तिरस्ति। अन्ये रसा भक्तेरङ्गभूता. सन्ति। प्रसादगुणयुक्तवैदर्भीरीतिः प्राचुर्येण दृश्यते। वस्तुसंपृक्तैर्विविधनागरिकै. प्राकृतिकैरलौकिकैश्च तत्त्वै काव्यमिदं समृद्ध-मस्ति। यत्र-तत्र दार्शनिकाना पौराणिकानां काव्यशास्त्रीयाणामैतिहासिकानाञ्च

तथ्यानां निरूपणमप्यानुषङ्गिकरूपेण कृतमस्ति। यथास्थलं सूक्तयः, संवादाः स्तुतयश्च विनियोजिताः सन्ति। कवेर्लक्ष्यं श्रीकृष्णचरितस्य सुभगोऽभिनवो विन्यासः तं प्रति परमश्रद्धाभिव्यक्तिश्चास्ति। कविः स्वयमेव प्रतिपादयति यत् श्रीमद्भागवतादेव वस्तु गृहीतं नान्यतः—

सदत्र श्रीकृष्णचरित्रवर्णनं यद् दृश्यते भागवते मनोरमम्।
मया समाश्रित्य तदेव केवलं विवर्ण्यते नान्यत उत्तमं ह्यपि॥
(श्रीकृष्ण० ४।३१)

श्रीमद्भावगवतवदेव गोपीगीते भक्तिरसाभिव्यक्तिरवलोकनीया—

जयति गोकुलं जन्मतोऽत्र ते यदभवद्विभो! श्रीनिकेतनम्।
प्रमुदिताः स्वतो विश्वदेहिनः कुरु कृपां पदे प्रापयस्व नः॥
(श्रीकृष्ण० १२।७४)

भक्तिरसप्रामुख्यं व्यङ्ग्यभङ्ग्या संकेतितमत्र—

जयति नाथ! ते भक्तिरुत्तमा भवविनाशिनी भक्तहृद्गमा।
सुखविधायिनी तापहारिणी सुमतिदायिनी शान्तिकारिणी॥
(श्रीकृष्ण० २।३४३)

विनम्रताप्रदर्शने निषेधमुखेन यानि काव्यतत्त्वानि कविना प्रतिपादितानि तानि विधिवत् काव्ये विनियोजितानि सन्ति—

का वा कथाऽत्र मम नाथ! सरस्वतीयं नैतादृशी रसवती दधती सुधां न।
शब्दार्थभारभरिता न तथा सुरीति र्प्रीतिश्च कर्तुमसमेह सुलक्षणा न॥
(श्रीकृष्ण० १।३३१)

---

# १६. परशुरामदिग्विजयमहाकाव्यम्

देहलीनिवासी विद्यासागर-महामहोपाध्यायादि—पदवीविभूषितः पण्डितचच्छज्जूरामशास्त्री परशुरामदिग्विजयस्य प्रणेताऽस्ति। निरुक्तभाष्य-संस्कृतसाहित्यबद्यपद्धेतिहासप्रभृतयोऽस्य कवेः पञ्चदश ग्रन्था. प्रकाशिताः सन्ति। अस्य महाकाव्यस्य प्रत्येकसर्गस्यान्ते—'त्रयोदशप्रबन्धानां भ्राता चैतस्य काव्यस्ये'—ति विलिख्य स्वरचितानामन्येषां त्रयोदशप्रबन्धानामत्र सङ्केतो विहित। काव्यान्ते कृतिपरिचयोऽपि लिखितोऽस्ति—

> महामहोपाध्यायेनचच्छज्जूरामेण शास्त्रिणा।
> पंचविंशे द्वि सहस्रे विक्रमादित्यवत्सरे॥
> पुराणवृत्तं सक्षिप्य परिवर्त्य च किंचन।
> चरितं परशुरामस्य लिखित कृतिनां कृते॥
>
> (परशुरा० १२।१०५-६)

भगवतो दशावतारेषु, परशुरामः षष्ठावतारोऽस्ति[1]। परशुरामस्य चर्चा रामायणपुराणादिग्रन्थेषु बहुधा प्राप्यते। कृतिरियं रामचरितमानसेन (हिन्दी महाकाव्येन) ब्रह्मवैवर्तन ब्रह्माण्डेन च पुराणेन प्रभाविता दृश्यते। अस्मिन् काव्ये भगवत परशुरामस्य कथा द्वादश सर्गैरुपनिबद्धाऽस्ति। अस्य रचना-फलक लघुकायं महाकाव्योचितं चास्ति, किन्तु अभिव्यक्तौ पौराणिकशिल्पस्य दर्शनं भवति। अस्य भाषाऽत्यन्तसरला स्वाभाविकी चास्ति। संपूर्णं काव्य-मनुष्टुपा वृत्तेन प्रणीतमस्ति। अलङ्कारा विरलविरला एव दृश्यन्ते। अस्य नायको धीरोदात्तनायकगुणमण्डितः परशुरामोऽस्ति। परशुरामस्य प्रतापाति-शयवर्णने वीररसस्य प्रखराऽभिव्यञ्जना दृश्यते, अयमेवास्याङ्गी रस.। भक्तिरौद्रशान्तकरुणादिरसा अङ्गभूता. सन्ति। कवेर्लक्ष्यं परशुरामस्य विकीर्णायाः कथायाः क्रमबद्धरूपेण संयोजनमस्ति। कविः स्वश्रद्धा-भावमनेकधाऽभिव्यनक्ति—'विजयं परशुरामस्य श्रद्धया पठति तु यः। सर्वान् कामानवाप्येह दीर्घमायुः स विन्दति।' (परशुराम ७।१०३) भारतीयजनमानसस्य शाश्वतिकआध्यात्मिको विश्वासोऽत्र प्रकटितोऽस्ति। अस्य कथावस्त्वेवं विन्यस्तम्—१-४ जमदग्निपरशुरामोत्पत्तिः क्षत्रियसंहारप्रतिज्ञा,

१. मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः।
रामो रामश्च रामश्च बुद्ध. कल्कीति ते दश॥

५—पितुराज्ञया ब्रह्मलोकं गत्वा तत्र पाशुपतास्त्रस्य परशोश्च प्राप्ति ६—पुष्करतीर्थे परशुरामस्य मंत्रसिद्धिः कार्तवीर्येण तद्युद्धञ्च ७-८—परशुरामस्य प्रतिप्रक्षिभियु'द्धं विजयश्च ९—गणपतिदन्तभङ्गः परशुरामेण, १०—कृत-धनुर्भङ्गेन रामेण तत्समागम, ११ जमदग्नेर्नर्मदाश्रमात्कुरुक्षेत्रगमनं परशु-रामेण सहस्त्रक्षत्रियाणां वधः १२—परशुरामेणकृतोऽश्वमेधयज्ञः, समुद्र-निग्रहो भीष्मोपरिविजयप्राप्तिश्च। काव्यस्यास्य केचित्प्रसङ्गाः प्रस्तूयन्ते। करुणतः उद्दीप्तस्य वीररसस्य स्थलमिदम्—

चुक्रोश रामरामेति यावद् दु:खेन कर्षिता।
आजगाम क्षणाद् रामो हृदयेन विदूयता॥
रामस्य पुरतः साध्वी भर्तृ'व्यसनविक्लवा।
त्रिसप्तकृत्वो भो मातः! त्वया वक्षो यदाहतम्।
तावत्संख्यान् संख्येऽहं क्षत्रान् हन्तास्म्यसंशयम्॥
कार्तवीर्यं हनिष्यामि प्रथमं दुर्मदोद्धतम्।
पितरं तर्पयिष्यामि प्रतिज्ञा क्रियते मया॥

(परशु० (४।४-७)

कार्तवीर्यो युद्धोद्यतोऽस्ति। तस्य पत्नी विश्वसिति यत् परशुरामो विष्णोरवतारोऽस्ति तत्पतिवधं च विधास्यति तथापि स्वनिश्चये दृढ आसीत्स। अतः प्राणान् त्यक्तवान्। कार्तवीर्यः स्वीकरोति —

विष्णोर्भगवतो ह्यंशः पशु'रामो न संशय।
निष्फलाऽस्य प्रतिज्ञाऽपि न भविष्यति कर्हिचित्॥

एवं काव्यमिदं स्वाभाविकं सरलतमं पुराणशिल्पसमन्वितञ्चास्ति।

———

# १७. वामनावतरणम्

वामनावतरणमहाकाव्यरचयितुः डॉ० राजेन्द्रमिश्रस्य जन्म २००० विक्रमसंवत्सरे पौषकृष्णपञ्चम्यां तिथौ उत्तरप्रदेशस्य जौनपुरमण्डलान्तर्गत-द्रोणीपुरग्रामे विद्याविनयसंपन्ने कुलेऽभवत्। प्रयागविश्वविद्यालयस्य संस्कृत-विभागेऽध्ययनं कुर्वताऽनेन-एम० ए०-डी० फिल० इत्यादय उपाधयो लब्धाः। सम्प्रति प्रयागविश्वविद्यालय एव संस्कृतप्राध्यापकपदमलङ्कुर्वाणस्तिष्ठति। नवोदितेषु संस्कृतहिन्दीकविषु कविरयमादरपात्रतां गतो विद्यते। शासनेन पुरस्कृतोऽप्ययं कविरस्ति। अस्य रचनाः—संस्कृतभाषयोपनिबद्धा.—

१—नाट्यपञ्चगव्यम् (पुरस्कृतैकाकिसङ्ग्रहः)) २—अकिञ्चन-काञ्चनम् (एकाङ्किरूपकम्) ३—आर्यान्योक्तिशतकम्

अप्रकाशिताः कृतय—१—वामनावतरणम् (महाकाव्यम्) २—चौर-शतकम् (अस्मिन् विल्हणशिल्पेन कविना स्वजीवनवृत्तमुपनिबद्धम्) ३—प्रमद्वरा (नाटिका) ४—वाग्वधूटी (संस्कृतगीतसंग्रहः) ५—नवाष्टमालिका (लघुकाव्यम्) ६—भारतदण्डकम् (लघुकाव्यम्)।

वामनावतरणं महाकाव्यं भगवतो वामनस्यावतरण तेन कृतं बलि-निग्रहमधिकृत्य प्रणीतमस्ति। अस्य वस्तु षोडशसर्गैविन्यस्तमस्ति—१—मङ्गला-चरणं कविवंशवर्णनं काव्यारम्भश्च २—बलिप्रतापवर्णनमदितेर्मनस्ता-पश्च ३—पुत्रप्राप्तयेऽदितेस्तपो वरप्राप्तिश्च ४—वामनावतरणम् ५—बाल-चरितं शिक्षासंस्कारादिवर्णनम् ६—मात्रा वामनं प्रति सुरविपत्तिज्ञापनम् ७—वामनकृत सङ्कल्पो मातृनियोगानुसरणञ्च ८—बलिबन्धनाय वामनस्य प्रस्थानम् ९—ऋतुवर्णनं पथिगीतम् १०—बलियज्ञवर्णनं प्रतिहारावेदनं च ११—बलिकृतं वामनाभ्यर्चनं दानाय प्रतिश्रुतिश्च १२—वामनकृता बलि-प्रशंसा सार्द्धत्रिपादभूमियाचनं च १३—शुक्र-बलिसंवादो बलिनिश्चयः शुक्राभिशापश्च १४—वामनकृतं लोकयात्राक्रमणं देवकृता वामनस्तुतिः १५—बलिबन्धनं वामनकृतबलिप्रबोधश्च १६—बलिकृता वामनस्तुति वामनप्रसाद. वरदानं देवसाम्राज्यवर्णनञ्च।

महाकाव्यस्य वस्तु श्रीमद्भागवताद्विशेषतो गृहीतमस्ति। वस्तुविन्या-सेऽन्यान्यपुराणाना प्रभावोऽपि दृश्यते। शान्तोऽस्याङ्गी रस., यद्यपि बलेर्दान-वीरतया वीरो रसः प्रधानं स्थानं भजमान इव दृश्यते किन्तु बलिस्तु नास्ति काव्यनायकः। नायको वामनो देवोपकाराय बलेर्गर्वभंजनं करोति। स स्वयं

नि स्पृहोऽस्ति । अतः शान्त एवाङ्गी रसोऽत्र स्वीकार्यः । शृंगार-वीर-हास्यादि-रसा अङ्गभूताः सन्ति । प्रायेण महाकाव्येऽस्मिन् प्राचीनशिल्पानुपालनं दृश्यते । यथा—सर्गबद्धता छन्दोविषयका नियमाः, ग्रामनगरवस्त्वादिवर्णनं च । अस्मिन् नूतनशिल्पमपि दृश्यते । ऋतुवर्णन-पथिगीतादिषु साम्प्रतिकगीतानि व्यवहृतानि सन्ति । आधुनिकराष्ट्रियचेतनाया धाराद्यन्तं प्रवहन्ती विद्यते । वस्तुतोऽन्तिमे सर्गे वर्णितं देवसाम्राज्यं साम्प्रतिकस्य लोकतन्त्रस्यादर्शीभूतं वर्तते । युगानुरूपस्य शोभनस्य प्रशासनस्य कल्पनया महाकाव्यकृता राष्ट्रस्य कल्याणायोचितं मार्गदर्शनमकारि । बलिसाम्राज्यमधिनायकवादस्य प्रतीकमस्ति । उभयविधस्य प्रशासनस्य वर्णनेन कविना अधिनायकवादिनः शासनस्य लोकतन्त्रशासनस्य च भेद स्फुटीकृतोऽस्ति । महाकाव्यनायकस्य वामनस्य चरितमेकस्य मर्यादापुरुषस्य चरितमस्ति यत्र लोकरक्षणाय सर्वविधत्यागोत्साहो दृश्यते । शोभनकाव्यसर्जने क्षमस्यापि कवेर्विनम्रताऽवलोकनीया—

न च कवनपटीयान्नापि शब्दार्थदक्षो न गुणरसविधिज्ञः शारदादेशवासी ।
तदपि मृदुचिकीर्षुः काव्यमूतं कथंचित् कमिव वदति लोको मामितीदं न जाने ॥
सरसपदनिबन्धे वाङ्नृपेणापि यस्मिन् निरतिशयसुशक्तिर्वामनीवृत्तिसक्ता ।
अहह ! जडजडोऽयं वारधीश्चाल्पकल्पो जिगमिषति सधैर्यं साधु तत्रैव सोत्कः ॥

———

## १८. सुदर्शनोदयम्

सुदर्शनोदयमहाकाव्यप्रणेतुर्जैनमुनिश्रीज्ञानसागरस्य जन्म राजस्थान-राज्यस्य जयपुरमण्डलान्तर्गतरणोली ग्रामे १९४८ विक्रमसंवत्सरेऽभवत्। संस्कृतसाहित्यस्य जैनदर्शनस्य चाध्ययनं वाराणसीस्थे स्याद्वादमहाविद्यालये कृतवान्। अविवाहितः सन् २००४ वि० संवत्सरे ब्रह्मचर्यव्रतम्, २०१४ वि० संवत्सरे कुल्लकशिक्षां आचार्यशिवसागराद् दीक्षां च गृहीतवान्। जैनमुनि-संस्कृतकविरूपेण लब्धप्रतिष्ठेनानेन सस्कृतहिन्दीभाषामाध्यमेन रचना अकारिषत। संस्कृतरचना अधोलिखिता सन्ति—

१–जयोदयम् (महाकाव्यम्) २—सुदर्शनोदयम् (महाकाव्यम्) ३—वीरोदयं (महाकाव्यम्) ४—दयोदयचम्पू· ५—भद्रोदयम् (खण्डकाव्यम्)।

सुदर्शनोदये महाकाव्ये ब्रह्मचर्यशीलव्रतयोः प्रसिद्धिं प्राप्तस्य सुदर्शन-श्रेष्ठिनश्चरित्रं वर्णितमस्ति। अस्य कथावस्तु नवसर्गैर्विभक्तमस्ति। काव्यमिदं जिनोपदिष्टमोक्षलक्ष्म्याः संपोषकमस्ति। धीरोदात्तगुणमण्डितः सुदर्शनो नाय-कोऽस्ति। कुतूहलपूर्णविन्यासेन सुसज्जितमस्य कथावस्तु। प्रसादगुणो वैदर्भी-रीतिश्च सर्वत्र दृश्यते। मनोमोहकैरनुप्रासश्लेषोपमोत्प्रेक्षाप्रभृतिभिरलङ्कारैः संस्कृतस्य प्रसिद्धैश्छन्दोभिस्सह भावानुरोधेन श्यामकल्याण—कव्वाली—प्रभाती—सारङ्ग—प्रभृतिभिराधुनिकैर्गीतैर्लयतालसमन्वितमिदं महाकाव्यम्। महाकाव्यपरम्परानुसारं प्रकृतिनगर-संभोगश्रृङ्गारादिवर्णनं सन्तुलितं वस्तु-संपृक्तं चारुतरं चाऽस्ति। काव्येऽस्मिन् जैनाचारदर्शनादीनां समावेशः पदे-पदे दृश्यते। सांसारिकविषयलोलुपजनैरपि सदुपदेशो दीयते। अस्मिन् महाकाव्य-सुलभं सर्वाङ्गीणं सौन्दर्यदर्शनं भवति तथापि जैनधर्मोचितवैराग्यमोक्षयोः प्राप्तिरस्य प्रमुखं प्रतिपाद्यं तत्त्वमस्ति।

सुदर्शनमधिकृत्य प्राक्तनैरपि कविभिः काव्यानि रचितानि सन्ति। तेषु हरिषेणस्य कथाकोशः, नयनन्देः 'सुदंसणचरिउ' (अपभ्रंशभाषाग्रन्थः) सकलकीर्तेः सुदर्शनचरितम् (संस्कृतकाव्यम्) नेमिदत्तस्य चाराधनाकथाकोशो विशेषत उल्लेखनीयोऽस्ति। सुदर्शनकथाविन्यासे पूर्वरचनातः काचित्पृथक् सरणिरवलम्बिताऽस्ति। हरिषेणेन सुदर्शनस्य चित्रणं कामदेवरूपेण नाकारि नैवान्त कृतकेवलीरूपेण (द्र० १५७, ५८) किन्तु नयनन्दिसकलकीर्तिभ्यां स स्पष्टतया चतुर्विंशतितम कामदेवः, तीर्थङ्करसमये जायमानेषु—अन्त कृत-केवलिषु पञ्चमश्च वर्णितः। सुदर्शनोदयकाव्यकृता ज्ञानसागरेणान्तिमकामदेव

रूपेण तस्योल्लेखः कृतो न तु-स्पष्टतयान्त.कृतकेवलिरूपेण, तथापि कविना-नेन ज्ञानोत्पत्त्यनन्तरं निरञ्जनपदप्राप्तिवर्णनं कृत्वा सुदर्शनस्यान्त.कृत-केवलित्वं सूचितम्। सुदर्शनमाश्रित्य प्रणीताभिः कृतिभिः सह कृतायां तुलनायां काव्येऽस्मिन्नद्भुतः समन्वयः दृश्यते। कविकल्पनया सुसज्जितं संवर्द्धितं च सुदर्शनस्य निर्दोषं चरितं सफलतयाऽत्राकलितमस्ति।

उच्चकाव्यप्रतिभया प्रस्तुतमिदं महाकाव्यम्। सर्वत्र सालङ्कारसरस-वाक्यानां योजना दृश्यते। कविना स्वकाव्यशिल्पस्य प्रवृत्तेश्चानेकत्र ध्वन्यात्मकः सङ्केतोऽकारि। संकेतोऽयं काव्येऽस्मिन् चरितार्थं इव दृश्यते। भावविद् भूत्वाऽपि कविर्यत्र-तत्रानुप्रासस्य व्यामोहात् कठिनानां च्युतिसंस्कृति-युक्तानां च शब्दानां प्रयोगमपि कुरुते।

यथा—

विचारसारे भुवनेऽपि साऽलङ्कारामुदारां कवितां मुदालम्।
निष्पेवमाणे मयि यस्तु पण्डः स केवलं स्यात्परिफुल्लगण्डः॥

(सुदर्शनोदये—१।७)

अन्त्यानुप्रासाग्रहात् 'पण्ड' शब्दप्रयोगः कृतः। अत्रैव काव्येऽलङ्कार-महत्त्वमपि प्रतिपादितमस्ति। गर्भिणीसौन्दर्यचित्रणे श्लेषगर्भितया मालोपमया सह व्यङ्ग्यभङ्ग्या स्वकाव्यवैशिष्ट्यं प्रत्यपादि—

लतेव मृद्वी मृदुपल्लवा वा कादम्बिनी पीनपयोधरा वा।
सा मेखलाम्पुन्नतिमन्नितम्बा तटी स्मरोत्तानगिरेरियं वा॥
काव्येव वाणी सरसा सुवृत्ता मुद्रेव शाटीव गुणैकसक्ता।
विधोः कला वा तिथिसत्कृतीद्धाऽलंकारपूर्णा कवितेव सिद्धा॥

(सुदर्श० २।५,६)

शब्दयमकानां बाहुल्यं तु दृश्यत एव यत्र तत्र वाक्ययमकस्यायोजनाऽपि दृश्यते—

मनोरमाधिपत्येन ख्याताय तरुणायते।
मनोरमाधिपत्येन ख्याताय तरुणायते॥ (सुदर्श० ६।२१)

काव्यस्यैकं विशिष्टं चित्रं भाषाशिल्पचातुर्यञ्चावलोकनीयम्—राज्ञी वीतरागं सुदर्शनं वशीकर्तुमिच्छति। तस्या दासी प्रतिदिनं पुत्तलिकानयन-व्याजेनैकस्मिन् दिने चातुर्येण सुदर्शनमानीतवती। अस्मिन् प्रसङ्गे एकदा मृत्पुत्तलिका त्रुटिता तदा दास्याः प्रतिक्रियाया भाषायाः स्वाभाविकता कियती मनोहारिणी—

अरे राम रे ! ऽहं हता निर्निमित्तं हता चापि राज्ञी हतावत् कुचित्रम् ।
निषेयं मया किं विधेयं करोतूत सा साम्प्रतं चाखवे यद्वदोतु ।।
(सुदर्शं० ७।५)

सुदर्शनचरितस्य वैशिष्ट्यमिदमस्ति यत् स सांसारिकविषयभोगेषूपस्थितेष्वपि सदा तेभ्यः पराङ्मुखो भवति (द्र० ७।२१-२८, १८।८४)। यथास्थलं संयमस्य (८।४०) त्यागस्य (८।४१) इच्छानिरोधस्य (८,४२,४३) सूक्तीनां सदुपदेशानां च सन्निवेशो विहितोऽस्ति । यथा—

भिक्षैव वृत्तिं करमेव पात्रं नोद्दिष्टमन्नं कुलमात्रगात्रम् ।
यत्रैव तिष्ठेत्स निजस्य देश नैराश्यमाशामनसं मुदे सः ।।
(सुदर्शं० ६।२)

— — —

## १६. वीरोदयमहाकाव्यम्

वीरोदयमहाकाव्यस्यापि रचयिता जैनमुनि. ज्ञानसागरोऽस्ति। अस्य परिचय: सुदर्शनचरितविवेचनावसरे प्रदत्तमस्ति। महाकाव्यरचनाया अन्तिमोऽयं प्रयासोऽस्ति। अस्मिन् कविकलायाश्चरमो विकास. परिलक्ष्यते। भगवतो महावीरस्य प्रायेण समग्रचरितमस्मिन् काव्ये वर्णितमस्ति। अस्य वस्तु द्वाविंशतया सर्गैर्विभक्तमस्ति । अस्मिन् काव्ये भगवतो महावीरस्य दयालुत्वं धार्मिकत्वञ्च विशेषरूपेण चित्रितमस्ति। शास्त्रीयदृष्ट्या धीरोदात्तोऽयं नायक:। काव्येऽस्मिन् शान्तरसोऽङ्गी विद्यते, अन्ये च रसा अङ्गभूता: सन्ति। प्राचीनमहाकाव्य-रचनाशिल्पमत्र पदे-पदे दृश्यते। वर्तमानकविभिः प्रायेणोपेक्षितानां गोमूत्रिकाबन्ध-चित्रबन्ध-मानबन्ध-पद्म-बन्ध-तालवृन्तप्रभृतीनां वृत्तानां प्रयोगो विहितोऽस्ति। एतेषां चित्रकाव्यानां योजना प्रायेण द्वाविंशे सर्गे कृताऽस्ति । मर्मिकस्थलेषु प्राचीनानां प्रसिद्धवर्णिकवृत्तानामेव प्रयोग. कृतोऽस्ति। वर्णिकवृत्तेषु प्रायेणान्त्यानुप्रासयोजनया काव्यस्य लयात्मकता संवर्द्धिताऽस्ति। यथा—

> श्रिये जिन सोऽस्तु मदीयसेवा समस्तसंश्रोतृजनस्य सेवा।
> द्राक्षेव मृद्वी रसने हृदोऽपि प्रसादिनो नोऽस्तु मनाक् श्रमोऽपि ॥
> वीर त्वयानन्दभुवामवीरो मीरो गुणानां जगताममीर।
> एकोऽपि सं पत्तितमामनेकलोकाननेकान्तमतेन नेक ॥
>
> (वीरोदय — १।१,२)

काव्येऽस्मिन्-उर्दू-फारसी प्रभृतिभाषाणां मेवा, 'मीर' 'अमीर', 'नेक' आदि शब्दानां प्रयोगोऽपि प्राप्यते। भावानुकूलभाषाप्रयोगे दक्षोऽयं कविः। नूपुरादिझंकृतिवर्णने भाषास्वरूपमवलोकनीयम्—

> कलकूतामितिझंकृतिनूपुर ववणितकिंकिणिकंकृतकङ्कणम्।
> मृगदृशां मुखपद्मदिदृक्षया रथमित. कृतवान् किल मन्थरम् ॥
>
> (वीरोद० ५।२६)

काव्यं प्राय: सालंकारमस्ति। प्रायेण सर्वेऽप्यलङ्कारा व्यवहृता: सन्ति। नागरिकप्राकृतिकवर्णने काव्यं समृद्धमस्ति । प्रथमत. षष्ठसर्गं यावत् यत्र तत्रालङ्कारभारालसा भाषा दृश्यते।

काव्येऽस्मिन् जैनेतिहासपुरातत्त्वादीनां यथास्थलं निरूपणमस्ति। जैनधर्मेण समग्रं काव्यमभिभूतमस्ति। काव्यात्मकचारुतया सह धर्मग्रन्थरूपेणापि काव्यस्यास्यादरो भविष्यति नात्र सन्देहः। सर्वज्ञताऽनेकान्तवादप्रभृति-सिद्धान्ता योजनाबद्धरूपेणात्रानुस्यूता सन्ति। यथा—स्यादवादः—

अनेकशक्त्यात्मकवस्तुतत्त्वं तदेकया संवदतोऽन्यसत्त्वम्।
समर्थयत्स्यात्पदमत्र भाति स्याद्वादनामैवमिहोक्तिजातिः॥
(वीरो० १९।८)

चरितनायकस्य महावीरस्य चित्रणमत्यन्तं प्रेरणाप्रदमस्ति। पित्रा कृतं विवाहप्रस्तावं श्रुत्वा स वदति—

'दारुणेत्युदिते लोके किमिष्टेऽहं सदारताम्' (वीरो० ७।२३)

करत्रमेकतस्तात! परत्र निखिलं जगत्।
प्रेमपात्रं किमित्यत्र कर्त्तव्यं ब्रूहि धीमता॥
(वीरो० ७।२७)

(अत्र 'करत्र' शब्दः कलत्रवाचकः, अनुप्रासमोहात् कविना 'ल' स्थाने 'र'—इति प्रयुक्तमस्ति। जगतो विषमस्थित्या द्रवितः सन् महावीरो वदति—

स्वीयां पिपासां शमयेत् परासृजा क्षुधां परप्राणिविपत्तिभिः प्रजा।
स्वचक्षुषा स्वार्थपरायणा स्थितिं निभालयामो जगतीदृशीमिति॥
(वीरो० ८।२)

म ग्रन्थिकन्था विवरात्तमारुतैर्निशामतीयाद्विचलद्रतोऽव्रते।
नि स्वोऽपि विश्वोत्तमनामधामत कुटीरकोणे कुचिताङ्गको वद॥
(वीरो० ९।२४)

अलङ्कारप्रयोगे सिद्धहस्तस्य कवेरत्यन्तमावर्जकानि वर्णनानि सन्ति। कन्दुकेन क्रीडन्त्या युवत्या वर्णनमवलोकनीयम्—

कन्दुः कुचाकारधरो युवत्या सन्ताड्यते वेत्यनुयोगधारि।
पादौ प्रसादाय पतत्यपीति कर्णोत्पलं यन् नयनानुकारि॥
(वीरो० ९।३०)

## २०. यशोधरामहाकाव्यम्

यशोधरा महाकाव्यस्य प्रणेता पण्डित ओगेटिपरीक्षित् शर्माऽस्ति। १९३० ई० वर्षेऽगस्तमासस्य १० तिथावस्य जन्माभवत्। सम्प्रति पुणस्थिते भाषासञ्चालनालये भाषाधिकारिपदमलङ्करोति। तेलगुसंस्कृतभाषाकवि-रूपेणाधुना लब्धप्रतिष्ठोऽयम्। अस्य रचना एवं सन्ति—

१—यशोधरा (संस्कृतमहाकाव्यम्) २—परीक्षिन्नाटकचक्रम् (पञ्च-संस्कृतैकांकिनां संग्रहः) ३—प्रतापनारायणम् (संस्कृतमहाकाव्यम्) ४—श्रीविश्वनाथकविता (तेलगुभाषया प्रणीता) ५—मैनफ्लावर्स (आंग्लभाषायाम्) ६—ललितगीतालहरी—गीतिकाव्यम्।

महात्मनो गौतमबुद्धस्याभिनिष्क्रमणकथामाश्रित्याद्यावधि महाकाव्य-रचनाफलकेनावर्णितं यशोधराचरितं महाकाव्यात्मकरूपेण रचयित्वा संस्कृत-साहित्यस्य श्रीवृद्धिः कविनाऽकारि। विंशत्या सर्गैर्वस्तु विभक्तमस्ति। अस्मिन्न-न्यान्यवर्ण्यविषयाणां समावेशेन सह यशोधरा गौतमविवाहतो गौतमबुद्धस्य प्रत्यागमनं यावद् वृत्तमुपनिबद्धमस्ति। महाकाव्योचित-पात्रचित्रण-रसपरिपाक-संवादादीनां समायोजनं कृतमस्ति। काव्यस्य प्रमुखपात्रं यशोधराऽस्ति। इयं धीरोदात्तगुणमण्डिताऽस्ति। करुणरसोऽत्राङ्गी विद्यते। यद्यपि गौतमस्य निर्वेदभावाभिव्यक्तौ शान्तो रसोऽपि दृश्यते किन्तु चरितनायकयशोधरायाः आश्रयीभूतः करुणरसोऽत्यन्तं व्यक्ततरं विद्यते। अन्यरसा अङ्गभूताः सन्ति। करुणविषये कवेर्धारणेयं विद्यते—

> तन्मधुमयगीतं प्रथितं नूनं, यद् गाढं कथयति विषादमवद्य।
> करुणरसमीरितं मधुरं गीतं स्वान्तं कुरुते विमलं सततम्।
>
> (स्फुटपद्यम्)

अपरञ्च—

> किमेतदाश्चर्यमहो धरित्र्यां स्त्रीणां मनोवृत्तिरगम्य एव।
> पयोधरक्षीणभृताः सुजीवाः क्षणेन नेत्राञ्चलसाश्रुपाताः॥
>
> (यशोधरा १०।११)

काव्येऽस्मिन् यशोधराया वियोगव्यथाचित्रणे गौतमस्य जीवितत्वाद् विप्रलम्भशृङ्गारस्य शङ्का न कार्या। यतो हि यशोधरा न विश्वसिति

यत्प्रियः पुनरागमिष्यति। इदमप्यत्रावधेयं यत् यशोधराविरहवर्णने कामुकतापूर्णाया रतेराकुलता नास्ति। अत्र तस्याः शोक एवाभिव्यक्तीभूतोऽस्ति। अतः 'शोकस्थायितयाभिन्नो विप्रलम्भादयं रसः' इति नियमादत्र करुण एव सिद्ध्यति।

यथा—

> हे द्वारभूमे! वद मां प्रियां ते कथं प्रभुः गौतमचक्रवर्ती।
> गतः स्वयं येन यथा निशीथे सुप्ता सदा प्राप्तवती न किंचित्॥

करुणस्य परिपाकेऽपूर्वा सफलताऽत्र दृश्यते। नारीजागरणस्यास्मिन् युगे यशोधराया वीररमणीरूपमपि समुद्भावनीयमासीत् यस्या दिशि कविः सचेष्टो नास्ति। भारतीयाया संस्कृतेरुच्चादर्शानां प्रतिष्ठाऽत्र कृताऽस्ति किन्तु वर्तमानराष्ट्रियचेतनाया अभावो दृश्यते या साम्प्रतिकानां महाकाव्यानां सर्वस्वीभूता विद्यते। प्राचीनशिल्पदृष्ट्या शोभनमेतत्काव्यम्। प्रसादगुणवैदर्भीरीतिरञ्जिताऽस्य भाषाऽस्ति। आवर्जकपदविन्यासे रसपरिपाके च यशोधराकथनं रचनाकारसंबन्धेऽपि सार्थकं प्रतीयते—

> मधुरं सरसं रसात्मनां पदलालित्यमहो विनिर्मलम्।
> तव वागमृत निपीय तद् भुवि को नाम न रज्यते पुनः॥
>
> (यशोधरा० १३।३२)

—:—

## २१. उर्मिलीयं महाकाव्यम्

उर्मिलीयमहाकाव्यप्रणेता श्रीनारायणशुक्लोऽस्ति । स्वजन्मतिथि-स्थानकाव्यनिर्मितिकालसङ्केतः कविनैवं कृत. ।

> शरत्नन्दैकमिते सुसंवत्चैत्रे सिते द्वादशिके तिथौ श्रीः ।
> श्रिताब्जिकुक्षेः कमलेशशुक्लात् नारायणोऽभूच्छुभितो द्विजाग्र्यात् ॥
> प्रान्तोत्तरे देवरियाजिलायाः खोण्डाभिधे संवसथे निवासी ।
> सोऽहं व्यधां काव्यमिदं नगाक्षिशून्याक्षिके विक्रमराज्यवर्षे ॥

सम्प्रति कविरयं देवरियामण्डलस्य हाटानामके स्थाने नारायणसंस्कृत-महाविद्यालयस्य प्रधानाचार्यपदमलङ्करोति ।

उर्मिलीयं महाकाव्यं रामानुजस्य लक्ष्मणस्य पत्न्या उर्मिलाया. समग्रं जीवनमाश्रित्य प्रणीतमस्ति । अस्य वस्तु सप्तदश सर्गैर्विभक्तमस्ति । स्वर्गीय-मैथिलीशरणगुप्तस्य हिन्दीकाव्यस्य 'साकेतस्य' श्रीभवानीदत्तशर्मण· सौमित्रि-सुन्दरीचरितस्य संस्कृतमहाकाव्यस्य च वस्तु इदमेवास्ति । किन्तु कविनाऽनेन सौमित्रिसुन्दरीचरितं न व्यलोकि-इति प्रतीयते । यत्र तत्र साकेतस्य प्रभावो दृश्यते । उर्मिलीयकृता वाल्मीकिरामायणस्य बहुधाश्रयो गृहीत· रामायणस्य तत्तत्प्रसङ्गेषु यत्रोर्मिलाया उपस्थितिः संभाव्यते ते प्रसङ्गा कविकल्पनया परिवर्ध्य प्रस्तुतीकृताः ।

काव्यारम्भो जनकपुरीवर्णनेन भवति । तदनन्तरं सीताजन्म, राम-लक्ष्मणाभ्यां विश्वामित्रयज्ञरक्षा, धनुर्भङ्गः, उर्मिलादिविवाह, अयोध्यागमनं ततः रामादिवनगमनं, रावणवधानन्तरं पुनरयोध्यागमनं, लवकुशचन्द्रकेतु-जन्मवर्णनं, अश्वमेधयज्ञरक्षणं, चन्द्रकेतुविवाहः, तत्कारुराज्यविजयः. चन्द्र-केतोर्भ्रात्राऽङ्गदेनाऽङ्गदियानगर्याः शासनं प्रभृतिवर्णनमत्र पल्लवितमस्ति ।

काव्येऽस्मिन् मूलकथायां न किमपि मौलिकं परिवर्तनमस्ति केवलं वस्तुनः परिवर्द्धनं दृश्यते । सुललितपदविन्यासेऽभिव्यञ्जकशब्दयोजने च काव्यमिदं न महत्त्वावहमस्ति । कठिनशब्दप्रयोगा न दृश्यन्ते तथापि स्वाभा-विकाभिव्यक्तिविरहात्पाठक. सायासो भवति । काव्येऽस्मिन् साकेतवत् सौमित्रिसुन्दरीचरितवद्वोर्मिलाया विरहव्यथा न चित्रिता नैव सा विंशशताब्दि-

सुलभवीरमणीवदेव प्रस्तुतीकृता । काव्येऽस्मिन् भारतीयसंस्कृतेरुच्चादर्शानां प्रतिष्ठा मुहुर्मुहुर्दृश्यते। उर्मिलाया. पतिगृहगमनकाले तस्या माता तामुपदिशन्ती वदति–

परोक्तितैक्ष्ण्यं मृदुतां सहस्व वचः स्वकीयं मधुरं प्रयुङ्क्ष्व ।
क्षततरूरोहति शस्त्रसंघैर्वचो हतं नो पुनरेति सन्धिम् ।।
(उर्मिलीये ६।५)

संवादांशानां तीव्ररसाभिव्यञ्जनायाश्चाभावेऽपि यत्र तत्र शोभनानि वर्णनानि प्राप्यन्ते । सामान्यजनजीवनचित्रणमवलोकनीयम्—

कृषौ रता. कर्षकरा समृत्या लुनन्ति शष्पाणि मृदं कृषन्ति ।
चयन्ति घासान् मृदुगायनास्ते गदन्ति हास्यानि मिथ सुखानि ।।

वर्षायां धेनूनां चित्रणम्—

मेघाच्छन्ने नभसि पवनारूढतोय प्रवाति,
चुम्बत्याशां रविरपि भयात्क्षीणकान्तिं प्रतीचीम् ।
गावो वत्सां विकृतवदना वेपमाना स्ववासं
क्लिन्नाः पान्था झटिति शरण याचमाना. प्रयान्ति ।।

———

## २२. रक्ताक्तहिमालयम्

रक्ताक्तहिमालयस्य प्रणेता पण्डितपरमेश्वरदत्तः त्रिपाठी—अस्ति। अस्य जन्म—उत्तरप्रदेशस्य बलियामण्डलस्थित उजियारभरौलीनामके स्थाने १९५० वि० संवत्सरे श्रावणशुक्लचतुर्थ्यां तिथावभवत्। हिन्दीसंस्कृताङ्ग्ल-भाषाविदयं कविः। हिन्दीपत्रसम्पादनमपि बहुवर्षैरनेनाकारि। शारदापीठस्य ब्रह्मीभूतेन शङ्कराचार्येण स्वामिना राजराजेश्वरेण 'सनातनधर्ममार्तण्डः' काशीस्थेन सनातनधर्ममण्डलेन च 'साहित्यालङ्कार' इत्युपाधिरस्मै प्रदत्तः। रक्ताक्तहिमालयमस्य संस्कृतमहाकाव्यमस्ति। हिन्दीभाषया प्रणीता ग्रन्थाः—१—दुर्गासप्तशतीहिन्दीपद्यानुवादः २—मदनसतसई ३ तुलसीदास-दोहावली टीका।

रक्ताक्तहिमालयमद्यावधि न प्रकाशितमस्ति। आंशिकरूपेणास्य प्रकाशनं वाराणसीतः प्रकाश्यमाने साप्ताहिकसंस्कृतपत्रे 'गाण्डीवे' जातमस्ति। कविर्निरन्तरं युगपरिस्थितिचित्रणे निष्ठावानस्ति। 'रक्ताक्त-हिमालयम्' चीनतो भारतोपरि कृतमाक्रमणमधिकृत्य प्रणीतमस्ति। अस्य वस्तु-एकविंशत्या शिखरैर्विभक्तमस्ति। प्रतिशिखरं कथावस्तुविभाजनमे-वमस्ति—१—मङ्गलाचरणं हिमालयस्य भौगोलिक परिवेशः चीनभारतयो-र्वर्णनं च २—चीनभारतयो राजनीतिकपरिस्थितिचित्रणं भारतविभाजनं भारतस्य गणराज्योद्घोषणा च ३—मानवसाम्राज्यलिप्सा 'चाउएनलाई' त्याख्यस्य चीननेतुराश्वासनं मिथ्यामानचित्रप्रस्तुतीकरणं च ४—कोरियायुद्ध-वर्णनं अमेरिकया कोरियाया साहाय्यं चीनपलायनं च ५—त्रिविष्टप (तिब्बत)—चीनयुद्धवर्णनम्, चीनसेनाया अत्याचारो लामानाथस्य पलायनम् ६—माव (मावोत्सेतुंग) च्याव—(चाउएनलाई)—संवादः, मावेन भारतो-परि आक्रमणस्य निश्चयः ७—भारत प्रति चीनस्य कृतघ्नता, स्वार्थनिन्दा च ८—जवाहरलालेन च्यावस्य मैत्रीस्थापनं, तस्करवृत्त्या चीनेन भारतसीमो-ल्लङ्घनं, वैज्ञानिकयुद्धवर्णनं, भारतीयजनसंक्षोभः, च्यावस्य भारतागमनम् ९—राजेन्द्रच्यावसंवादः १०—चीने नेहरोः स्वागतम्, भारताक्रमणयोजना, छलेन चीनेन भारतभूमेरपहरणम् ११—मैकमोहनरेखाया हेमन्तस्य च वर्णनं १२—च्यावं प्रति नेहरोः कटुपत्रं भारते च्यावस्य पुनरागमनं पुनश्छलेन भारतभूमिग्रहण चीनेन प्रस्तुतस्य मिथ्यामानचित्रस्य विरोधः, नेहरूव्यामोह-

समाप्तिः भारतेन दृढसीमारक्षाव्यवस्था १३—वसन्तवर्णनम् १४—प्रहरीपतिना वनशोभावलोकनं, बौद्धभिक्षुण्या आगमनं तथा सेनापतिस्वागतम् १५—कामाकान्तसंवादः सेनापतिगमनं सेनायां विलासितायाः प्रवेशः १६—नायकेन नायिकाप्रतीक्षा नखशिखवर्णनम्, अभिसारिकावर्णनम् शिविरे स्त्रीप्रवेशे रात्रौ कोलाहलम् १७—चीनेन भारतोपरि आक्रमणं भारतीयैः प्रतिरोधः, भारतीयसेनाजागृतिः निशायुद्धवर्णनं रणनदीवर्णनं रणचण्डिकाप्रादुर्भावः, रक्ताक्तहिमालयः, वीराणां स्वागतम् १८—जनजागृतिः १९—रणोद्योगः, सन्धिप्रयासः कोलम्बो संमेलनं समेलनवैफल्यं नेहरोः प्रतिज्ञा २०—युद्धप्रगतिः छागला सीमोल्लङ्घनं मावस्य शिरोवेदना २१—भारतीयानां दृढता मावस्यासमर्थता, भारतीयैर्जगदम्बाऽराधना एकदेव्या आविर्भावः, मावेन युद्धविरामघोषणा, काव्यान्ते कविपरिचयश्च ।

रक्ताक्तहिमालयं नव्यशैल्या प्रशस्तमेकं राष्ट्रियं महाकाव्यमस्ति । चीनभारतयो संघर्षस्य प्रामाणिकं किन्तु कविकल्पनासंवलितं वर्णनमस्मिन् कृतमस्ति । महाकाव्याचितसौन्दर्यमण्डितमिदमेकं घटनाप्रधानं महाकाव्यमस्ति । पाश्चात्यकाव्यशास्त्रेण कस्याश्चिद्विशिष्टाया घटनाया वर्णनं महाकाव्येऽपेक्षितं मन्यन्ते । वस्तुविषयदृष्ट्या पाश्चात्यकाव्यशास्त्रनिकषभाजनं दृश्यते किन्तु सैनिकानां प्रतापातिशययुद्धादिवर्णनसङ्कुलतायामपि सम्भोगविप्रलम्भप्रकृत्यादिवर्णनं भारतीयमहाकाव्यलक्षणानुसारि दृश्यते । सेनापरिसरचित्रणं-संभोगादिवर्णनं चीनस्याक्रमणात्प्राक् भारतीयसैनिकानां विलासितानिरूपणार्थं कृतमस्ति । अस्मिन् वर्णने कविनाऽत्यन्तं मनोहारिण्याः कल्पनायाः आश्रयो गृहीतोऽस्ति । काव्यवस्तुविन्यासो घटनानुरोधेन क्रमबद्धः स्वाभाविकश्चास्ति । विविधैर्वस्तुसंपृक्तैर्वर्णनैर्युगजीवनं, भारतीया संस्कृतिः प्रकृतिश्च शतधाऽभिव्यञ्जितास्ति । भारतचीनयोः तदानीन्तनीनां राष्ट्रियनीतीनां मार्मिकं प्रतिक्रियापूर्णं कलात्मकञ्च मूल्याङ्कनं कृतमस्ति ।

राष्ट्रभक्तिभावधाराऽप्रबन्धं प्रवाहिताऽस्ति । महाकाव्यकारस्य कस्यचिद्विशिष्टस्य नायकस्य रसादिपरिपोषणस्य चाग्रहो नास्ति । तस्य लक्ष्यं सुषुप्ते जनमानसे व्यापकं राष्ट्रियचेतनाजागरणं विश्वशान्तिप्रयासश्चास्ति । काव्येऽस्मिन् पूर्वपरम्परावन्न कश्चिद्विशिष्टो नायकोऽस्ति । यथाकथञ्चित् जवाहरलालनेहरूः प्रमुखपात्रमस्तीति वक्तुं शक्यते । जीवनस्य विविधपक्षाणां चित्रणं बहुविधस्वाभाविककल्पनाभिः कृत्वा वस्तु महाकाव्योचितं सर्वाङ्गीणं च कृतमस्ति । अस्य विशिष्टानि पात्राणि जवाहरलालनेहरू—डॉ०राजेन्द्रप्रसाद-मावोत्सेतुंग—चाउएनलाइ—प्रभृतीनि सन्ति । एतेषां नायकप्रतिनायकादिरूपप्रस्तुतीकरणं कवेरभीष्टं न दृश्यते । पात्रचित्रणे कविना सर्वजनविदि-

तानामेतेषां राष्ट्रनायकानां स्वभावस्य यथार्थवादि किन्तु काव्योचितं वर्णनं प्रस्तुतमस्ति। काव्यस्याङ्गी रसो राष्ट्रभक्तिपरिमलितो वीरोऽस्ति, अन्ये च रसा अङ्गभूताः सन्ति। राजनीतिसुलभच्छलकपटान्तर्द्वन्द्वादिविश्लेषणमपि दृश्यते। विविधालौकिकतत्त्वानां समावेशोऽपि विद्यते। रणचण्डिकायाः एकदेव्याश्चाविर्भावस्य भावप्रवणकल्पना कविकलायाश्चरमं निदर्शनं विद्यते। यथास्थलं देवभक्ते. स्रोतस्विनी प्रवाहिता दृश्यते। रणचण्डीप्रभृतीनामद्भुतं वर्णनमस्ति।

पाण्डित्यप्रदर्शने चित्रकाव्योचितालङ्कारप्रयोगे च कवि पराङ्मुखो दृश्यते। स्वाभाविकरूपेणालङ्काराः प्रयुक्ता सन्ति। प्रसादगुणो वैदर्भी चास्य रीतिरस्ति। भाषाऽत्यन्तं सरलाऽस्ति। वैदेशिकानि नामानि संस्कृतप्रकृत्यनुरूपाणि कृत्वा प्रस्तुतीकृतानि। यथा—मावोत्सेतुंग—माव (चीनस्य राष्ट्रपतिः) चाउएनलाइ—चावः (चीनस्य प्रधानमन्त्री) भूटान—भूतायनं (१।१४) तिब्बत—त्रिविष्टप (१।१६) यूरेसिया—पीतसिन्धु. (१।२८) आसाम—असमः (१।४१) पेकिंग—पिकांगम् (२२५)—इत्यादीनि। एवं शताधिकशब्दानां शोभनं संस्कृतीकरणं कृतमस्ति। हिन्दीलोकोक्तयोऽपि संस्कृतीकृताः सन्ति। यथा—लोहचर्वणम् (लोहे का चना) मुखे रामः क्षुरिकापार्श्वे (मुख मे राम बगल मे छूरी) इत्यादि।

काव्येऽस्मिन् मात्रिकवर्णिकयो. द्वयोरपि वृत्तयोः प्रयोग. कृतोऽस्ति। हिन्दीभाषायाः प्रसिद्धाना दोहा-चौपाई—गीतादीनामपि यथास्थलं प्रयोगः प्राप्यते। सर्वत्र भावानुकूलानि भाषावृत्तादीनि व्यवहृतानि। अत. समग्रे काव्ये तीव्रभावाभिव्यञ्जनं दृश्यते। यत्र-तत्र भाषा त्रुटिपूर्णाप्यस्ति। अत्रापि कारणं विद्यते। अस्य परमरमणीयस्य राष्ट्रियमहत्त्वसमन्वितस्य काव्यस्याद्यापि प्रकाशनव्यवस्था न जाता अतः मुद्रणयोग्यपाण्डुलिपिरपि कविना न व्यधायि। अस्य काव्यस्य प्रथमतो लिखिता पाण्डुलिपिः कविकृपया मया लब्धा सङ्ख्यांकनमपि मयैव कृतम्। केचित्प्रसङ्गा अस्यावलोकनीयाः—चौपाईवृत्तेन युद्धवर्णनम्—

चावस्य च संप्राप्यादेशं, धृत्वा चीना. सौगतवेषम्।
हिन्दी चीनी भ्राता भ्राता, इद वदन्तः सहसाऽऽयाताः॥
यदाश्चागताश्चीना निकटं, कृतवन्तस्ते शब्द विकटम्।
मारय! मारय! ताडय! ताडय! कण्ठं कर्तय ह्लादरं वारय॥

आजग्मुश्चीना मतिहीनाः, कले छले वंचने प्रवीणाः।
कः कं पृच्छति तस्मिन् काले, सर्वे [गच्छन्त्यायुधजाले ॥
मुण्डो भिन्नो रुण्डो भिन्नश्चरणौ भिन्नौ कण्ठश्छिन्नः ॥
(रक्तात्त० १७।३६-३६)

राष्ट्रियचेतनासद्भावानां प्रेरकसूक्तयः पदे-पदे विद्यन्ते—

समर्पितं राष्ट्रहिताय येन समस्तवित्तं निजजीवनस्य।
भूत्वा विमुक्तं खलु सर्वदोषैः सदा हि स्वर्गे सुखमेधते सः ॥
(रक्तात्त० १७।७४)

अस्य काव्यस्य राष्ट्रियचेतनाया पर्यवसानं विश्वबन्धुत्वे भवति।

आवश्यकमतो ह्यत्र विश्वस्यैकैव शासनम्
एकैव च मनुष्याणां धर्मोऽपि ह्युपयुज्यते ॥
(रक्तात्त० २१।६३)

———

# २३. विश्वमानवीयम्

विश्वमानवीयमहाकाव्यस्य प्रणेता श्रीविद्याधरशास्त्री अस्ति। अस्य जन्म १९०१ ई० वर्षेऽगस्तमासस्य अष्टम्या तारिकाया राजस्थानराज्यस्य बीकानेरनगरेऽभवत्। अद्यावधि कविनानेन पञ्चविंशति ग्रन्था. विरचिता: सन्ति। विश्वमानवीयाद् भिन्नमेकं 'हरनामामृतमहाकाव्यं १९५४ ई० वर्षे प्रकाशितमभवत्। काव्य-नाटक-स्तोत्र-सूत्रात्मकग्रन्थप्रभृतीनां रचना: कृता सन्ति। अस्य साहित्यसूत्राण्यपि सन्ति। यथा—व्यञ्जनाझङ्कृतिर्ध्वनि:' 'स्वस्वसंस्काराभिव्यक्तिर्व्यञ्जना'—इत्यादि। कवि: काव्यरचनाया साम्प्रतिकविषयान् प्रति समाकृष्टः प्राचीनान् प्रति श्रद्धानत इव दृश्यते। हरनामामृते कविर्विचारमिमं प्रकटयति—

प्रतिक्षणं यत्र मतिर्नवीना प्रतिक्षणं चार्थगतिर्नवीना।
कथ न काव्यं नवमेतदस्मिन् युगे-युगे नव्यविमर्शशीले ॥

अस्य रचना: प्रायेणाधुनिकविषयसंबद्धा एव सन्ति—दुर्बलबले संस्कृतनाटके तिब्बतपुनरुद्धारस्य चर्चाऽस्ति, कलिदैन्यं, पूर्णानन्दे च नाटकेऽपि युगचित्रणमेवास्ति। विद्याधरनीतिरत्ने नीतिविषयकाणि पद्यानि सन्ति। हिमाद्रिमाहात्म्ये काव्ये चीनेन भारतोपरि—आक्रमणस्य चर्चाऽस्ति। सम्प्रति कविरयं बीकानेरे हिन्दीविश्वभारतीपत्रिकाया संपादनं कुर्वन्संस्कृतसाहित्यसेवनेरतोऽस्ति।

'विश्वमानवीयं' मानवस्य चन्द्रयात्रामाश्रित्य प्रणीतमष्टसर्गात्मकं लघुकायं महाकाव्यमस्ति। १९६९ ई० वर्षे जुलाईमासस्य १६ तिथौ—अमेरिकाया: 'कैपकनेडी'—नामकस्थानात्प्रस्थितमेकादशापोलोयानं १९६९ ई० वर्षे २१ जुलाई तिथौ चन्द्रमसि—अवतीर्णम्। अनुसन्धानस्येतिहासेऽभूतपूर्वोऽयमवसर आसीत्। वृत्तमिदं समग्रं विश्वं सुखदाश्चर्ये न्यमज्जयत्। चन्द्रमसं गत्वा वैज्ञानिकाभ्यामार्मस्ट्रांगेल्ड्रिनाभ्या यदा चन्द्रभूमिपरीक्षणं प्रारब्धं तदा वृत्तमिदं श्रुत्वा श्रीविद्याधरशास्त्रिणा स्वहृद्गतभावा. काव्यात्मकानुव्याहरणेन प्रस्तुतीकृता:। अस्य काव्यस्य रचनया मानवस्य महाशक्तिं प्रमाणयितुमुद्यत इव कवि: प्रतीयते। तन्मतमस्ति—

स्वयंभूर्विदधे सर्वं भवे नित्यं स्वयं भुवम्।
मूलस्याहमेतस्यां तस्मात् स्यामिति साध्यताम् ॥

## २४. झाँसीश्वरीचरितम्

झाँसीश्वरीचरितप्रणेतुः श्रीसुबोधचन्द्रपन्तस्य जन्म १८३२ ई० वर्षे जुलाईमासस्य २४ तिथौ प्रयागेऽभवत्। प्रारम्भत उच्चशिक्षा यावत् प्रयाग एवाध्ययनं कृतवान्। सम्प्रति प्रयागस्थे गङ्गानाथझाशोधसस्थाने कार्यरतः अस्ति। सस्कृतेन सह हिन्द्या भाषयाऽपि कविरयं काव्यरचनायां निपुणोऽस्ति। हिन्दीसंस्कृतयोः काव्यानां पद्यानुवादेऽपि नितरां दक्षोऽयं कविः। अस्य रचनाः १—झाँसीश्वरीचरितं (महाकाव्यम्) २—प्रियप्रवास (हरिऔधोपनामधेयस्य स्व० अयोध्यासिंहोपाध्यायस्य हिन्दीमहाकाव्यस्य पद्यानुवादः) ३—उद्धव-शतकं (प्रसिद्धहिन्दी शतककाव्यस्यानुवाद)। संस्कृतस्य नैषधीयचरित-कुमार-संभव-मेघदूत-गङ्गालहरी-भामिनीविलास-भर्तृहरिशतकादिकाव्याना हिन्दी-पद्यानुवादः। हिन्दीभाष्येण सह संपादिताः कृतयः—१—चन्द्रालोकः २—अभिज्ञानशाकुन्तलम् ३—दशकुमारचरितम् ४—नैषधीयचरितं (प्रथमसर्गमात्रम्)। तिथिपत्रनिर्माणेऽपि कविरयमत्यन्तं दक्षोऽस्ति।

झाँसीश्वरीचरितप्रणयने कविः 'श्रीवृन्दावनलालवर्मणः झाँसीराज्ञीमा-श्रित्य प्रणीतेन हिन्दीभाषोपन्यासेन प्रभावितो दृश्यते। काव्येऽस्मिन् झाँसीराज्ञ्याः लक्ष्मीबाई इत्याख्यायाः समग्रं जीवनं वर्णितमस्ति। भारतीयासु वीराङ्गनासु झाँसीश्वर्याः प्रमुखं स्थानमस्ति। युद्धवीराङ्गनयानया प्रतिपक्षिणो विपद्ग्रस्ता-स्त्रस्ताः सञ्जाताः। अन्ततो वीरगतिं प्राप्ताया अस्या नाम स्वर्णाक्षरैर्भार-तीयेतिहग्रन्थेषु लिखितमस्ति। अस्याश्चरितं कविना १४७७ पद्यैर्द्वाविंशत्या सर्गैश्च प्रस्तुतीकृतमस्ति। अस्य काव्यस्य प्रमुखपात्रं (नायकः) लक्ष्मीबाई-अस्ति। इयं धीरोदात्तगुणैर्मण्डिताऽस्ति। अस्याङ्गी रसो वीरो विद्यते, अन्ये रसा अङ्गभूताः सन्ति। राष्ट्रियचेतना काव्यस्य मूलाधारोऽस्ति। प्रसादो गुणो वैदर्भी च रीतिराद्यन्तं दृश्यते। विविधवर्ण्यविषयाणां वस्तु-संपृक्त समावेशो दृश्यते। भावानुरोधेन भाषालङ्कारच्छन्दसा प्रयोगो विहित। स्वाभाविकं यथार्थं च वर्णनं सदपि काव्यप्रतिभामण्डितमस्ति। सूक्तिसंवादयो-जना अपि काव्यचारुत्वं प्रथयन्ति।

काव्यारम्भो दुर्गास्तुत्या भवति। लक्ष्मीबाईसामान्या नारी नास्ति सा समस्तशक्तीना पुञ्जभूताऽस्ति—

ज्योतींषि संभूय समानितानि केन्द्रे महाशक्तियुतान्यभूवन्।
देशो यथाऽयं जडतारतोऽस्मात् दीपाधृतस्नेह इव प्रशाम्यन्॥

तन्येव लक्ष्मीरिति जन्म लेभे लक्ष्म्याश्च चण्ड्याश्च विमिश्रितं यो।
युद्धे मुनिप्राणवसूड्डुपाख्य ईशाब्द एते प्रसिता बभूव ॥
(झाँसीश्व० १।२५,२६)

भरतदेशशिशुं महिषार्दिनि ! त्वरितमङ्कगतं कुरुचण्डिके !
तडिदिवैत्य सशूलहतीश्वरे यमगृहानहिताहितांत नय ॥
(झांसी० २।५४)

लक्ष्मीबाई यदा स्वविवाहनिश्चयं बुन्देलखण्ड एवाश्रृणोत् तदा प्रसन्नाऽभवत् यतो हि सा वीराणां भूमि:—

नृपः स किं मां परिणेतुकामः क्षमोऽस्ति योद्धुं रिपुभिः सिताङ्गैः।
सदैव संमान्यमिमाग्रहं मे रणेषु खेलायितुमस्ति योग्यः ॥
(झांसी ६।२८)

नारीणां कर्तव्यं गृहकार्यमात्रं नास्ति राष्ट्ररक्षणमपि तासां पावनो धर्मोऽस्तीति झाँसीश्वर्या मतमस्ति। श्वशुरालयस्थिता नारीः समुपदिशन्ती वदति—

यथा विधानं सदनस्य लिप्सितं भवत्तथैतद् भरतावनेरपि।
नरा यथैव प्रविशन्ति निर्भयं रणाङ्गणान्त प्रविशाय तत्क्षणे ॥
(झांसी० ८।२१)

लक्ष्मीबाई पितुः पत्युश्च देहावसाने गहनं शोकं व्यनक्ति, किन्तु स्वप्रतिज्ञामाजीवनं निर्वहति। तत्प्रतिज्ञेयम्—

खड्गं भृङ्गं पूर्णं ज्वालारङ्गेण संविधास्यामि।
भरतच्छितिशिखि चूर्णं शत्रुभ्यो दर्शयिष्यामि ॥
(झांसी० १८।४५)

देशस्वातन्त्र्यसङ्गरे दत्तचित्ता सा स्वप्नेऽपि तथैव चिन्तयति। बहुधा सा स्वप्ने पश्यति यदाङ्ग्लाः भारतं त्यक्तवन्त, भारतीया जनता प्रसन्ना विद्यते। एकविंशतितमे सर्गे शत्रुघातान्मूर्च्छिता सा स्वप्नमिव पश्यन्ती सर्वेषां स्मरणं करोति सन्देशं च ददाति। अत्र कविकला चरमशिखरे प्राप्ता विद्यते। सर्गेऽस्मिन् करुणवीररसयोर्विलक्षण: समन्वयो दृश्यते। सुतवत्सला सा वदति—

पश्याधुनाप्यत्र ममात्मजो यो बद्धोऽस्ति पृष्ठोपरि यस्तथैव।
क्लेशो भवेन्नास्य स्वमुत्तमाङ्गमानामये मे यमलब्धमानम् ॥
(झांसी० २१।३)

मरणासन्ना सत्यपि सा नानाजि वदति यद् युद्धावसरेऽसिधारातः व्रणग्रस्तेषु मम राष्ट्रस्य वृक्षेषु श्याममृल्लेपनं विधेयम्—

श्यामां मृदं तत्र निधाय बन्धो ! तत्पूरयिष्यस्यखिलं बिलं त्वम् ।
नो चेदरीणां व्रणसंहतिस्सा स्यादेवतेऽपीत्यमनेन किं ते ॥

समग्रं काव्यं सरलं सरसं राष्ट्रियचेतनासमन्वितं चास्ति । भावानुकूल-भाषालङ्कारादिप्रयोगे निपुणोऽयं कविः । स्थलमेकं द्रष्टव्यम्—

मान्द्यं गतं झणझणायितमाशुभ्रांस्यां ।
तत्कङ्कणोत्थमथ किङ्किणिका-प्रसूतम् ॥
आघातजातमपि कन्दुकजातमाप ।
तद्धि स्मृति खणखणायितमाप शस्त्रम् ॥

# २५. गोस्वामितुलसीदासचरितम्

गोस्वामितुलसीदासचरितमहाकाव्यस्य प्रणेता श्रीहरिप्रसादो द्विवेदी—अस्ति। अस्य जन्म उत्तरप्रदेशस्यालीगढ़मण्डलस्थिते वणनाम्नि स्थानेऽभवत्। कासगंजे फर्रूखाबादे च संस्कृताध्ययनं कृतवान्। अध्ययनानन्तरमध्यापने संलग्न आसीत्, किन्तु सम्प्रति कालगंजे आयुर्वेदचिकित्सकरूपेण समयमति-वाहयन् सुरभारतीसेवायां रतोऽस्ति।

महाकाव्यमिदं हिन्द्या प्रसिद्धतमकवेः गोस्वामिनस्तुलसीदासस्य जीवनमाश्रित्य प्रणीतमस्ति। अस्य महाकाव्यस्य नायको भगवतो रामस्य चरणचञ्चरीक, महात्मा महाकवि, त्यागी, बुद्धिमान् सफलकर्मा धीरोदात्तो गोस्वामी तुलसीदासोऽस्ति। कविना तुलसीदासस्य जन्मस्थानकुलादिगवेष-पूर्णं वर्णनं कृतमस्ति। तुलसीदासस्य सर्वे पारिवारिकसदस्या गुरुजनाश्च रामस्यानन्यभक्ताः सन्ति। तुलसीदासविषये जनप्रचलितकथानां काव्यानुरूपं स्वविशिष्टधारणासंवलितञ्च कविना परिवर्तनं परिवर्धनं वा कृतमस्ति। यथा—तुलसीदासो पित्रो सुखविरहात् स्वदु.खशमनार्थं पितामहीनिर्देशेन (४।८,१०) रामनाम रटति। अत· स 'रामबोला' इति नाम्ना ख्यात। जात —

> पितामहीतः किल रामनामेत्याकर्ण्य रामं तुलसो रराट।
> अभूदतोऽमुष्य हि 'रामबोला' नाम प्रसिद्धं नृवराहतीर्थे॥
> (गो० तु० च० ४।१)

किन्तु जनश्रुतिरस्ति यज्जन्मग्रहणसमये एव 'राम' इति गदितवानतो 'रामबोला' इति नामासीत्। अत्र कवेश्चातुर्यमेवास्ति यत् तेन प्रसिद्धिरियं स्वाभाविकरूपेण प्रस्तुतीकृताऽस्ति।

रामभक्तस्य तुलसीदासस्य महाकवित्वहेतुतत्प्रतिभालोकशास्त्राद्यवेक्षणं तद्गुरुश्रीनृसिंहस्योदात्तमार्गदर्शनं चासीत्। श्रीनृसिंहेन तुलसीदास एवं कृत —

> शब्दागमे काव्यमये सवर्णा रामायणे भारतसत्कथासु।
> पुराणवेदागमधर्मतत्त्वे गुरुप्रसादादभवत् सुबोधः॥
> (गो० तु० च० ४।४५)

तुलसीदासस्य विवाहोऽनुपमरूपशीलया रत्नावल्याऽभवत्। सा चैव मासीत्—

वदननिन्दितशारदचन्द्रमा मृदुलगौरसुपुष्टवपुष्मती ।
सदनकृत्यविधौ कुशला धृतौ २ सुमती सुमती रतिरूपयुक् ॥
(गो० तु० च० ४।६३)

तुलसीदासः स्वपत्नीप्रेरणयैव महान् रामभक्तः कविश्चाभवत्। रात्रौ तुलसीदासं स्वपितृगृहे वीक्ष्य सा वदति—

समतारि ! मयीश ! जाह्नवी भवता प्रेममयोडुपेन मे ।
प्रतरन्ति जना भवार्णवं भगवत्प्रेमतरिं समाश्रिताः ॥

एतच्छ्रुत्वैव तुलसीदासो विरक्तोऽभवत्—

विरक्तस्तुलसीदासः सर्ववर्ज निकेतनात् ।
निर्ययौ सुप्रसन्नात्मा शुकः पिञ्जरतो यथा ॥

तुलसीदासस्य भ्रातृरूपेणात्र नन्दस्य (हिन्दीकवेः) उल्लेखो मिलति। 'तुलसी मस्तक तब नवै धनुषबाण लो हाँथ' एषा जनश्रुतिरत्र परिवर्तिता। काव्येऽस्मिन् तुलसीदासभ्राता नन्दः कृष्णं प्रति निवेदनं करोति—

'अवर्णा सुषमा तेऽद्य सर्वशोभातिशायिनः ।
भ्राता तदा नमेद् यहि धनुर्बाणधरो भवेः ॥

परिणामतः—

माधवो रामभक्तस्य भेदबुद्ध्यपनुत्तये ।
नन्दप्रार्थनया सद्यः रामरूपी बभूव ह ॥

काव्यस्याङ्गी रसो भक्तिरस्ति। करुणोऽत्र द्वितीयं स्थानं भजते। तीव्रं रसाभिव्यञ्जनं दृश्यते। भाषा सालङ्कारा परिष्कृता चास्ति। कथा कवने कविकल्पनाया बहुधोपयोगः कृतोऽस्ति। एतदेकं शोभनं महाकाव्यमस्ति। तुलसीदासजीवनविषयेऽपि स्थले स्थले नवमतस्थापनं दृश्यते। वशेषतो द्रष्टव्यम्—१।२-८,१।२७।

———

## २६. श्रीस्वामिविवेकानन्दचरितम्

श्री स्वामिविवेकानन्दचरितमहाकाव्यस्य प्रणेता वाराणसीस्थस्य वसन्त-महाविद्यालयस्य सेवाया निवृतः प्राध्यापको भण्डारकरोपनामधेयश्रीत्र्यम्बक-शर्माऽस्ति। सम्प्रति अयं वाराणस्यामेत्र निवसन् सुरसरस्वतीसेवालग्नोऽस्ति।

श्रीस्वामिविवेकानन्दचरितं महाकाव्यं स्वामिविवेकानन्दचरितमाश्रित्य प्रणीतमस्ति। अस्य कथावस्तु-अष्टादश सर्गैविभक्तमस्ति १११२ पद्यानि च सन्ति। प्रत्येकं सर्गस्य—श्री—स्वा—मि—वि—वे—का—नं—द—च—रि—त—ना—म—क—म—हा—का—व्यम्—इत्यादिभिरष्टादश शब्दैः क्रमश प्रारम्भो भवति। प्रत्येकं सर्गस्य वस्त्वेवमस्ति—

१—सङ्कल्पविकल्पः २—श्रीरामकृष्णपरमहंससमागमः ३—दीक्षाप्राप्ति. ४—पूर्णतालाभः ५—लक्ष्यनिश्चयः ६—श्री गुरुप्रस्थानम् ७—हिमालयदर्शनम् ८—भारतभ्रमणम् ९—शिकागोगमनम् १०—अमेरिकाधर्मसभा तत्र च स्वामिनो व्याख्यानम् ११—१२—इङ्गलैडामेरिकाभ्रमणम् १३—यूरोप-भ्रमणम् १४—भारतागमनम् १५—रामकृष्णाश्रमस्थापना १६—उपदेशः १७—पुनर्भ्रमणम् १८—निर्वाणम्।

कथावस्तुनोऽत्यन्तं मार्मिकं कलात्मकं च पल्लवनं कृतमस्ति। सर्गान्ते 'शान्ति' शब्द प्रयोगादिदं शान्त्यङ्कं काव्यं वक्तुं शक्यते। अस्य शान्त्यङ्कत्वं विवेकानन्दोपदेशादिदृष्ट्याऽन्वर्थमप्यस्ति। काव्यशिल्पे कविर्बृहत्त्रयीकवीननुहरति। काव्येऽस्मिन् बहुधा शास्त्रीयं पाण्डित्यं मुखरितमस्ति। विविधदर्शनानां निरूपणमपि प्राप्यते यत् चरितनायकस्य विवेकानन्दस्य चरिताकलनदृष्ट्या समीचीनमेवास्ति। प्रायेण पद्येषु प्रत्येकं पादस्य प्रथमं द्वितीयं तृतीयं वाऽक्षरमेवं विन्यस्तमस्ति यत् तेषा पृथक् रूपेणोर्ध्वतोऽधः प्रति क्रमशः पठनेन किञ्चिद्वाक्यं पद्यं वा भवति। दशमे सर्गे प्रायः सर्वाणि वर्णिकवृत्तानि कण्ठत उपात्तीकृत्य प्रयुक्तानि सन्ति। भाषाऽपि प्रौढा परिष्कृता चाऽस्ति। अलङ्कार—सूक्ति—संवाद—वस्तुव्यापारवर्णनादीनां सर्वत्र सुभग. सन्निवेशो विद्यते महाकाव्यमिदं-स्वकीयविलक्षणतयाधुनिककाव्यशिल्पतो भिन्नां सरणिं भजते

विवेकानन्दोऽस्य नायकोऽस्ति। कविः काव्यादौ तमेव नमस्कृत्य काव्येऽस्मिन् तद्वक्ष्यमाणस्वरूपस्य रेखाङ्कनमेवं कुरुते—

श्रीरामकृष्णयुगमुज्ज्वलमेकसंस्थं
जातं जनेष्वजनि विश्वजनीनमुच्चैः ।
वन्दे तमन्धतमसावृतजीववृन्दे
प्रज्वालितो जगति येन विवेकदीपः ॥
द्वैतप्रहारशतजर्जरिते जने यः ।
सन्देशमौपनिषदं विशदीविधातुम् ।
दृष्टोऽद्भुतस्वचरितश्चिरशान्तिदूतो ।
ध्येयोऽनिशं विजयते स यतिर्विवेकः ॥

(स्वा० वि० १।१-२)

विवेकानन्दमाध्यमेन राष्ट्रियमहत्त्वस्य शतश उद्भावना अत्र प्राप्यन्ते—

जातिः कथं नश्यति पश्यतां नः संपर्कतोहीनजनेन सार्द्धम् ।
स्वर्णं तु सर्वत्र सुवर्णमेव वयं किमुच्चा अपरे च नीचाः ॥

(स्वा० वि० १।१४)

विवेकानन्दस्य राष्ट्रवासिजनानां कृते सन्देशः—

स्नेहस्त्वदीयहृदये नरजातिमात्रे वेद्धितले सुहृदये निजजन्मभूमौ ।
आयाहि गन्तुमनिशं पुरतो न पश्चाद् यत्नं विधातुमिह सत्तमलक्ष्यसिद्ध्यै ॥
एतादृशस्त्रिभुवने किमु कोऽस्ति देशो ।
नाशिक्षि येन भरतावनितश्चरित्रम् ॥
नापीह कोऽपि जगति प्रथितोऽस्ति धर्मो ।
येनात्मनो न परतत्त्वमितो गृहीतः ॥

(स्वा० वि० १६।२०,१७)

तथा च द्रष्ट० १६।३,४,११,१८, २६ इत्यादि)

## २७. श्रीनारायणविजयः

श्रीनारायणविजयमहाकाव्यप्रणेता आचार्यं श्री के० बालराम प्पणिक्करोऽस्ति। संस्कृतसेवारतः सन्नयमन्ततः त्रिवेन्द्रवस्थसंस्कृतमहाविद्यालये प्राचार्यपदमलञ्चकार। ६८ वर्षवयसोऽस्य १८७८ ई० वर्षस्य २३ जुलाई तिथौ प्रातर्निधनमभवत्। वर्तमानसंस्कृतिकविषु विशिष्टं स्थानं भजतेऽयं कविः। श्रीनारायणविजयमहाकाव्योपरि राष्ट्रपतिपुरस्कारोऽप्यस्मै प्राप्तोऽस्ति।

श्रीनारायणविजयमहाकाव्यं धर्मसंस्थापनायोत्पन्नं भगवन्तं श्री नारायणगुरुमाश्रित्य प्रणीतमस्ति। अस्मिन् पञ्चदशशतं पद्यानि सन्ति। एकविंशत्या सर्गैरस्य कथावस्तु विभक्तमस्ति। प्रथमे सर्गे विशिष्टे चोपोद्घाते मङ्गलाचरणपुरस्सरमनुबन्धचतुष्टस्य विन्यासः कृतोऽस्ति। काव्यस्य रूपरेखां प्रयोजनं च काव्यारम्भेऽनेकैः पद्यैः कवि प्रतिपादयति—

> तपः स्वाध्यायनिरतैः सद्भिर्वेदा समीक्षिता.।
> तेषां वचो दृढं न स्यात् प्रमाणं धर्मबोधकम् ॥
> मीमांसककुलोत्तंसश्रीशंकरमतानुग.।
> वेदानां विशदीकर्ता नारायणगुरुर्भृशम् ॥
> अतस्तद्वचनं साधु मानयद्भि पदे-पदे।
> धर्मावबोधः सपाद्य सर्वै श्रेयोऽभिलाषिभि.॥
>
> (श्रीनारा० १।५,७-८)

अस्य कथासारोऽयम्—अनन्तपुरवर्णनं, नायकमातुः पुत्राभिलाषः, देवतीर्थानां वर्णनम् श्रीनारायणस्य जन्म, विद्याभ्यासो विवाहः प्रव्रज्या, मातुलोपदेशः, तीर्थयात्रा, सुब्रह्मण्योपासनारम्भ, सुब्रह्मण्यप्रसाद, घृतमालातीरे विश्वनाथस्य प्रतिष्ठा, द्विजेन्द्रसंवाद, क्रैस्तवाचार्यसंवादो धर्मप्रचारः, चूर्णिकातीरप्राप्तिः, अद्वैताश्रमस्य संस्कृत पाठशालायाश्च स्थापना, आत्मोपदेश· पण्डितपरिषदः सहोदरसङ्घस्य च स्थापना, महाकविरवीन्द्रदर्शनम्, सत्याग्रहसमर, गान्धिदेवदर्शनम्, एकमतसिद्धान्तव्याख्यानम्, श्रीनारायणधर्मसंघस्थापनं तन्महासमाधिश्च। प्रतिसर्गमित एव विषया समुपवर्णिता·। प्राय सर्वत्र नारायणगुरुः पूज्यपात्ररूपेण प्रतिष्ठितोऽस्ति। समग्रस्यापि भारतराष्ट्रस्य प्रतिबिम्बनं काव्येऽस्मिन् प्राप्यते। सरलस्वाभाविकशिल्पेन प्राचीन-

काव्यशास्त्रीयविधिना काव्यवस्तु विन्यस्तमस्ति। स्वर्गीयः श्री नारायण आधुनिकेषु साधुपुरुषेष्वन्यतमोऽस्ति। सोऽत्र धीरोदात्तनायकरूपेण प्रस्तुतोऽस्ति। अतः सज्जनाश्रयमेतन्महाकाव्यमस्ति। श्रीनारायणः सांसारिकेषु प्रपञ्चेषु विरक्त आसीत्। मातुलं प्रति विवाह-प्रस्तावं तिरस्कुर्वन् स वदति—

कामस्य माता कमनीयरूपा मायामहामोहमयी तमिस्रा।
क्रोधाधिकैरन्यसुतैरुपेता तस्यान्तिके तिष्ठति कष्टवृत्ता॥
द्वेषोऽत्र मे नास्ति कदापि कश्चिद् द्वेष्यो न कस्यापि ततोऽहमस्मि।
सर्वस्य बन्धोरत एव सर्वे बन्धोश्च मे नास्ति रिपूपरोधः॥

(श्रीनारा० ४।२०,२५)

काव्येऽस्मिन् सकलभुवनस्य योगक्षेमप्रदाता श्रीनारायणो जनैर्विष्णोरवतारो मन्यते (८।४०)। देशस्य श्रेष्ठपाण्डितेन श्री नारायणस्य जातिवादमधिकृत्य शास्त्रार्थो भवति तस्मिन् श्रीनारायणे जातिवादं खण्डयन् कथयति—

मात्सर्यदोषप्रथितान्तरङ्गैर्नरैः परोत्कर्षसुखासहैस्तैः।
हा! कल्पितोऽयं खलु जातिभेदो नाराध्यतां क्वापि विवेकवद्भिः॥

(श्रीनारा० १०।४३)

स जनतैकमत्यं राष्ट्ररक्षणे हेतुं मन्यते—

प्रजैकमत्यसन्धानं प्रधानं राष्ट्ररक्षणम्।
तत्त्वमेदमजानन्तो नार्हा राष्ट्राय रक्षणे॥

(श्रीनारा० ११।७६)

श्रीनारायणस्यैकमतसिद्धान्तस्थापने तच्चरिताकलने च महनीयमिदं महाकाव्यमस्ति—

———

## २८. श्रीमालवीयचरितम्

श्रीमालवीयमहाकाव्यप्रणेता स्वर्गीय. पण्डितरामकुवेरमालवीयोऽस्ति। अस्य जन्म उत्तरप्रदेशस्य प्रयागमण्डलान्तर्गतकड़ानामके स्थाने १८०६ ई० वर्षे जनवरीमासस्य ८ तारिकायामभवत्। काशीहिन्दूविश्वविद्यालयेऽध्ययनाध्यापनं कुर्वन् तत्रत्यं साहित्यशास्त्रस्याध्यक्षपदमलञ्चकार। १९६३ ई० वर्षतः ११६७ ई० वर्षं यावद् वाराणसेयसंस्कृतविश्वविद्यालयस्य (सम्प्रति सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेतिनामकस्य) साहित्यविभागाध्यक्षपदमलङ्कुर्वन्नासीत्। वाराणसेयेन सनातनधर्ममहामण्डलेनास्मै 'साहित्यालङ्कार.' इत्युपाधि. प्रदत्त आसीत्। श्रीमालवीयचरिताद् अन्या अपि कृतयोऽस्य सन्ति—१— तीर्थयात्रा प्रहसनम् २— चैतन्यचन्द्रोदय' ३—ध्वन्यालोकस्य हृदयाञ्जना सस्कृतटीका। ४— विक्रमाङ्कदेवचरितस्य संस्कृतटीका अनेके निवन्धा स्फुटश्लोकाश्च सन्ति १९७४ ई० वर्षेऽस्य स्वर्गवासोऽभवत्।

श्रीमालवीयकाव्यं महामनसो मदनमोहनमालवीयस्य जीवनमाश्रित्य प्रणीतमस्ति। अस्य कथावस्तु पञ्चदशसर्गैर्विभक्तमस्ति। १९६५-६६,७२ ई० वर्षेषु काशीहिन्दूविश्वविद्यालयत. प्रकाश्यमानाया प्रज्ञापत्रिकाया अङ्केषु काव्यस्यास्य क्रमशः प्रकाशनं जातमस्ति। कथावस्त्वेवं विद्यते— मालवीयकुलवर्णनं प्रयागवर्णनं मालवीयस्य जन्म—शैशवाध्ययनाध्यापनादिवर्णनं, तस्य काशिराजं प्रति हिन्दूविश्वविद्यालयनिर्माणप्रस्ताव, रामेश्वरसिंहराजधानी मिथिलां प्रति प्रस्थानम्, तत आगत्य काशिराजेन परामर्श:, हिन्दूविश्वविद्यालयस्थापना, आदित श्रीकालूराम श्रीमालिनं यावत् कुलपतीनां वर्णनम्।

इदमेकं सज्जनाश्रयं काव्यमस्ति। कवि श्रीमालवीयं प्रति नितरा श्रद्धानतोऽस्ति तस्याकृतिं कार्यव्यापारं क्षणमपि न विस्मरति। सर्गत्रयेण मालवीयस्वरूपस्यैव सादृश्यसंभावनयोजनासंवलितं वर्णनमस्ति। व्यष्टिरूपेणास्य काव्यस्य पद्यानि कस्यापि महाकाव्यस्य तुलनायामशोभनानि न सन्ति किन्तु महाकाव्योचितवस्तुविन्यास. सम्यगत्र न दृश्यते। कथावस्तुपल्लवने सन्तुलनं नास्ति। यथा नवमसर्गादेकादश यावत्केवलं मालवीयशरीरसौन्दर्यमेव वर्णितमस्ति। अत्र कथाप्रवाहः शिथिलोऽस्ति। अस्यान्यत्य वैशिष्ट्यमिदमस्ति यदेतावद्व्यापकमावर्जकं च पुरुषसौन्दर्यवर्णनमधुनातनमहा-

काव्येषु कुत्रापि न प्राप्यते। सर्वत्र सालङ्कारमिदं काव्यम्। प्रसादगुणेन वैदर्भीरीत्या प्रसाधिता परिष्कृता चास्य भाषाऽस्ति। अङ्गी रसो धर्मवीरोऽस्ति। मालवीयं प्रति भक्तिभावोऽपि प्रायेण कविना व्यक्तीकृतोऽस्ति। चरितनायको मालवीय. निरन्तरं महदुद्देश्यं प्रति एधमानो दृश्यते। नायकस्योद्देश्यं राष्ट्रकल्याणमस्ति तथापि विशेषरूपेणैकस्यादर्शविश्वविद्यालयस्य स्थापनमस्ति। काव्येऽस्मिन् मालवीयस्य स्वतन्त्रता संग्रामसेनानीरूपेणास्य वर्णनं किञ्चिदपि नास्ति। कथानुरोधेन वर्ण्यविषयाणां समावेशोऽस्ति। प्रयागकाशीप्रभृतिस्थानानां चारुतरं वर्णनमस्ति। काव्येऽस्मिन् समकालिकानां वाराणसेयसंस्कृतकवीनामुल्लेखोऽपि विहितोऽस्ति। विशेषत उत्प्रेक्षालङ्कारे कवि: सिद्धहस्तोऽस्ति। मालवीयसौन्दर्यं वर्णनमवलोकनीयम्—

उष्णीषवर्णनं—

गौराङ्गपाशबद्धाया मातृभूमेर्जयप्रदम्।
स्वातन्त्र्ययुद्धसेनाया वैजयन्तीश्रितामिव ॥ (माल० ६।२३)

चन्दनविन्दु:—

विश्वविद्यालयस्य प्राग्विशाले निजमस्तके।
रूपरेखां विनिर्णीतामौत्कट्यादुद्धृतामिव ॥
कामक्रोधेन्धनज्योति. स्नेहाभावेप्यचंचलम्।
दीप त्रिभुवनाज्ञानध्वान्तस्य विनिवर्द्धनम्।
(माल० १०।३,२८)

श्मश्रुवर्णनम्—

कामक्रोधादिसम्पर्कात् वाणीं संशोध्य तत्क्षणम्।
समाख्यातुं सभामध्ये समार्जनकुशा किमु ॥
पाश्चात्योपप्लवत्रस्ता शरण्य तन्मुखाश्रिता।
शुक्लवेणीयुतेयं किं वृद्धा प्राचीनसंस्कृति. ॥
(माल० ११।५,१४)

नासिका—

नेत्रद्वयी प्रियसखी परिपाल्यमाना।
भ्रू वल्लरी परिनियन्त्रितसाधुभावा ॥
नासाच्छलेन वदनेऽस्य विराजमाना।
किं कान्तिपट्टमहिषी मुखमण्डलस्य ॥
(माल० ११।३२)

उत्तरीयं—

मालवीयोत्तरीयस्योभयप्रान्तच्छलेन किम् ।
विवेको विनयश्चैवोभयपार्श्वे सदा स्थिरौ ॥
भुजद्वयमपर्याप्तं भिक्षाग्रहणकर्मणे ।
इति विचार्य किञ्चान्यद् भुजद्वयमिदं कृतम् ।

(माल० ११।३६,४०)

कविर्मालवीयस्य स्वकीयायाश्च जन्मभूमेर्मनोहारि वर्णनं करोति। गङ्गायमुनासङ्गमवर्णनं रघुवंशस्य त्रयोदशसर्गे सदपि महत्त्वावहमेतत्—

श्रीकृष्णकृष्णतनुमिश्रितराधिकाङ्गगौरप्रभा सुरधुनी यमुनातरङ्गैः ।
वक्षः स्थले मधुरिपोरतसीसुमाभे मुक्तावलीव धवला सुविभाति यत्र ॥
उल्लास्यमानमलिकेशरबिन्दुशुभ्रकस्तूरिकातिलकभूषणमायताक्ष्या. ।
काश्मीरदेशललनामुखपुण्डरीक नीलावगुण्ठनपटान्तमिवेक्ष्यमाणम ।

(माल० १।४५,५०)

वाराणसीवर्णनम्—

गङ्गातरङ्गानिलसङ्गपूता वाराणसीपुण्यमृतामुपास्या ।
मुक्तिश्रियो मञ्जुलवैजयन्ती सौभाग्यसिद्धिर्नु वसुन्धरायाः ॥

(माल० ४।३८)

———

## २९. स्वराज्यविजयमहाकाव्यम्

स्वराज्यविजयमहाकाव्यप्रणेता 'विद्यामार्तण्ड.' स्वर्गीय' श्रीद्विजेन्द्रनाथ शास्त्री १८९२ ई० वर्षे उत्तरप्रदेशस्य मुजफ्फरपुरमण्डलान्तर्गतपारासौली नामके स्थाने निवसन्तं वशिष्ठगोत्रीयं ब्राह्मणकुलं स्वजनुषाऽलञ्चकार। वृन्दावनस्थगुरुकुलविश्वविद्यालये संस्कृतस्योच्चाध्ययनं समाप्य वैदिकसंस्कृतप्रसारमुद्दिश्य बम्बईनगरे न्यवसत्। तत्र वर्षदशकं समाप्य पुनः गुरुकुलमागत्य तत्रत्यं कुलपतिपदमलङ्कृतवान्। संस्कृतसाहित्यविमर्शोऽस्य प्रसिद्धो ग्रन्थोऽस्ति। अस्मिन् सुललितसंस्कृतगिरा संस्कृतसाहित्यस्येतिहासो लिखितोऽस्ति। स्वराज्यविजयमहाकाव्यमस्यान्तिमा रचनाऽस्ति। कवेरस्य स्वर्गवासः १९६३ ई० वर्षे ३१ मई तिथावभवत्।

स्वराज्यविजये भारतीयमुक्त्यान्दोलनस्य वर्णनमस्ति। नात्र कश्चिदेको नायको यमाश्रित्य कथा विकसिता स्यात्। अतो घटना प्रधानमेतत्काव्यमिति वक्तुं शक्यते। प्रत्येकं सर्गस्य वस्तु केनचिद्विशेषवर्णनेन संबद्धमस्ति। एकविंशति सर्गा अस्मिन् सन्ति। विकीर्णमिवास्य वस्तु। यथा—(१) प्रास्ताविकं (२) भारतवर्णनं (३) भारताधोगतिवर्णनं (४) वैदेशिकाक्रमणस्य सिंहावलोकनम् (सिकन्दरत आङ्ग्लशासनं यावत्) (५) स्वतन्त्रतान्दोलनम् (६) वंगभूमेरुत्क्रान्तिः (७) राष्ट्रियान्दोलनस्य पृष्ठभूमि (८) क्रान्तिः (९) झाँसीराज्यविलीनीकरणोद्योगध्वंसः (१०) झाँसीराज्ञीस्वर्गारोहणम् (११) काश्मीरवर्णनम् (१२) राष्ट्रियाणामनेकेषां पुरुषाणा वर्णनम् (१३) भारते आङ्ग्लसामाज्यवर्णनम् (१४) असहयोगान्दोलनम् (१५) साइमनायोगवर्णनम् (१६) सुभाषचन्द्रादिवर्णनम् (१७) क्रान्तिवह्न्युद्दीपनं (१८) क्रान्तिरङ्गः (१९) दिल्लीवर्णनम् (२०) उपसंहार.। कवि. स्वकाव्यं स्वयमपूर्वं विविधकाव्यगुणमण्डितं प्रतिपादयति—

मन्ये लसन्ति भूयांसि काव्यरत्नानि भूतले।
मदीयकाव्यगुम्फस्य काप्यपूर्वा पदावलिः॥
सगुणै. सदलङ्कारैर्भव्यभावविभूषितैः।
सरलै. सरसैश्चापि पदैः सम्यगलङ्कृतम्॥
रसोज्ज्वलाभावगुणाढि्यभर्ा सालङ्कृती रीतिमतिप्रगल्भा।
सा काप्युदारा कृतिनामुदेति मन्येऽपि पुण्येन हि काव्यधारा॥

(स्वराज्यवि० १११५,३०,४८ )

काव्यस्य प्रत्येकं सर्गस्यादौ सर्वत्र नमस्कारात्मकं मङ्गलाचरणं विहितमस्ति। शास्त्रीयवस्तुविन्यासे संवादे विशिष्टपात्रचित्रणे च कवेराग्रहो नास्ति। पात्रबाहुल्यात् चरित्रचित्रणमस्पष्टं विद्यते। तथापि यत्र-तत्र शोभनया पद्ययोजनया भावानुकूलभाषया च काव्यं प्रभावोत्पादकमस्ति। भाषां स्वाभाविकीं कर्तुं कविः यत्र-तत्राङ्ग्लादि-भाषाशब्दान् प्रयुंक्ते। यथा—

'डू आर डाईति महाव्रत स्यादस्माकमेकं हि दृढव्रतानाम्।'
(स्वराज्यवि० १८।५६)

यत्र-तत्र वर्ण्यविषयानुरूपच्छन्दोयोजनाया अभावो दृश्यते। क्रान्तिवह्निरुद्दीपनवर्णने कोमलभावाभिव्यक्तौ व्यवहरणीयं द्रुतविलम्बितवृत्तं प्रयुक्तम्—

क्वचिदियः सततं छुरिकालता असिलता च तथा नवगोलिकाः।
अनलकाण्डमिद च कुतश्चन वदनजातमिदं परितोऽभवत्॥
(स्वराज्यवि० १६।२६)

तीव्ररसाभिव्यञ्जनाभावेऽपि राष्ट्रियचेतना प्रायः समग्रे काव्ये दृश्यते। झाँसीश्वरीनिधने प्रतिक्रियाभिव्यक्तिरवलोकनीया—

मृताऽपि मातस्त्वमृतैव जाता विश्वेतिवृत्ते त्वदखण्डकीर्तिः।
ज्योतिर्मयी प्रस्फुर दिन्दुभासामासिष्यते देवि! शशिप्रभासा॥
(स्वराज्यवि० १०।४०)

---

## ३० भूभामिनीविभ्रमम्

भूभामिनीविभ्रमकाव्यस्य प्रणेता कविशिरोमणिव्याकरणाचार्यः श्रीरामसेवकमालवीयोऽस्ति। सम्प्रति कविरयं फैजाबादस्थे राजकरण-वेंटिकेण्टर कालेजे संस्कृतप्रवक्ताऽस्ति।

भूभामिनीविभ्रमकाव्ये भौगोलिकवर्णनं कृतमस्ति। भारतवसुन्धरायाः अविकलं वर्णनं तु कृतमेव भारतेतरेषामपि राष्ट्राणामस्ति वर्णनम्। समस्तं वर्णनं सरसं सालङ्कारं चास्ति। कविना प्रत्यपादयत् संस्कृतसाहित्ये भूगोलस्योपेक्षा कृताऽस्ति किन्तु वाल्मीकि-व्यास-कालिदास-राजशेखर-क्षत्रपतिचरितकार डा० उमाशङ्करत्रिपाठिप्रभृतीनां रचनावलोकनेनेयं धारणा निर्मूला प्रतीयते। वस्तुतः काव्यमन्ततः काव्यमेव भवति भूगोलादिवर्णनं काव्यवस्तुसंपृक्तमेव शोभते यथा प्रथितयशोभिरुक्तैः कविभिः कृतमपि विद्यते। भूभामिनीविभ्रमे कस्यचिदपि कथावस्तुनः पात्रस्य वा माध्यमं नोरीकृतमतोऽङ्गिनो रसस्य चरित्रचित्रणस्य च संभावना समाप्तप्रायाऽस्ति। प्रबन्धकाव्यशिल्पे वस्तुपात्र-रसानामत्यन्तं महत्त्वं भवति तदेवात्राप्रधानीकृतमस्ति।

काव्येऽस्मिन् वसुन्धरायाः प्राकृतिकं नागरिकं च सौन्दर्यं बहुधा चित्रित-मस्ति। उदात्तभावानां सृष्ट्योदात्तभौगोलिकवर्णनेन च संस्कृतसाहित्य-स्याभिवृद्धिः कवेः प्रयोजनमस्ति। एतत्महदुद्देश्यवशादिदं महाकाव्यं वक्तुं शक्यते किन्तु विशिष्टपात्रादिविरहात् सर्गबन्धस्याप्यस्य महाकाव्यत्वं सन्देहा-स्पदमस्ति। अस्यरचनावसरे कविमनसि नवशिल्पप्रवर्तनस्य भावनाऽसीत्—

> नेतुं नवीने पथि नव्यलोकं वृत्तेषु भूवृत्तमिदं प्रणीतम्।
> कपोलकण्डूं कविकुञ्जराणां विनोतुमेषः प्रथमः प्रयासः॥
>
> (भूभामिनी० १।१)

निर्विवादरूपेण संस्कृतसाहित्यस्यानुपमा कृतिरस्ति। अस्य वैशिष्ट्य-मिदमस्ति यत् पुराणादिषु यदतिरञ्जनामयं वर्तमानस्थितिभिन्नं वर्णनं प्राप्यते तत्स्थाने यथार्थं स्वाभाविकं चित्रणमत्र प्रथितं विद्यते। कविना तत्तत्स्थलाना-मैतिहासिकतथ्यानां साम्प्रतिकसामाजिकपरिस्थितीनां चापि वर्णनं कृतमस्ति। कवि काव्यारम्भे मङ्गलाचरणं सृष्टिवर्णनं मार्यदेवासुराणां च वर्णनं कृत्वा भूभागानां वर्णने प्रवृत्तो भवति। उत्तरप्रदेशं विहाय प्रायः कविनाऽनवलोकित-मेव वर्णनं कृतमस्ति तथापि रुचिकरं स्वाभाविकं चास्ति। कविः कदाचिदत्र

कस्यचिद् भ्रमणशीलपात्रस्य कल्पनामकरिष्यत् तदा महाकाव्यत्वमपि निर्विवादमभविष्यत्। तथापि मातृभूविषयकोऽनुरागो विश्वबन्धुत्वभावश्चानेकधाऽभिव्यञ्जितोऽस्ति। एवं तु न वक्तुं शक्यते यत् काव्याध्ययनेन विश्वभ्रमणस्य सुखं मिलति किन्त्वेका रेखाऽवश्यं मनसि स्थिरीभवति। यथा—काश्मीरवर्णनम्—

द्राक्षास्वादी मृगमदहरः केशरामोदचौरः।
नानापुष्पकुसुमफलभृन् मांसलो गन्धवाहः।
मन्दं मन्दं सरति शिशिरः सर्वदोपत्यकासु।
नृत्यत्कुञ्जेषु मधुपकुलैर्नर्तयल्लोकवल्लीः॥

(नूभामिनी० ४।४)

रूसादिवर्णने भौगालिकसीम्न उल्लेखोऽपि दृश्यते (१७।१।३)। समाजप्रतिबिम्बनदृष्ट्या साकेतस्य भिक्षुकाणां धूर्तानां च वर्णनमवलोकनीयम्—

कूले हि सय्याः कलिकालशूले संस्तीर्णकाष्ठासनपादमूले।
एकां कृशाङ्गीं क्षुधया तदर्थे गां ब्रह्मबन्धूर्जरतीं बबन्ध॥
पान्थं समासाद्य तु घाटवाराः पण्डाः क्वचिच्छद्मविरक्तवेषाः।
छलन्ति लुण्ठन्ति च तीर्थकारान् शवं यथैकं परिवार्य गृध्राः॥

(७।४२,४४)

---

# ३१. तर्जनी

अस्य काव्यस्य प्रणेता सम्प्रति ख्यातनामा कविः श्रीदुर्गादत्तशास्त्री अस्ति । अस्मिन् कन्यादानदक्षिणा (दहेज)प्रथा-परिवारबाहुल्यमद्यपान—भ्रष्टाचारास्पृश्यतादिराष्ट्रव्यापिनीनां समस्यानां वर्णनं कृतमस्ति । एताः समस्याः राष्ट्रस्य प्रगत्यै बाधिकाः सन्ति । एतासां विकृतीनां प्रतिबिम्बनं कृत्वाएताभ्यो मुक्तिप्राप्तये कवि. प्रेरणां ददाति । अस्याध्यनं राष्ट्रस्य समाजस्य च हिताय भविष्यति । अस्मिन् काव्ये कस्यापि विशिष्टपात्रस्य चरितं नाधारीकृतमस्ति तथापि काव्यमाद्यन्तं रुचिकरं विद्यते । इदं महाकाव्यस्य मूलभूतलक्षणैरपि न युक्तमस्ति किन्तु राष्ट्रियसामाजिकचेतनाऽऽकलनेऽस्य समधिकं महत्त्वमस्ति । अन्यभाषायाः प्रचलिता. शब्दा अपि मूलरूपेणात्र गृहीताः सन्ति । काव्यारम्भ एवं भवति—

> काचित्पत्रं लिखति रमणी युद्धभूमौ प्रयातं
> स्वं भर्तारं सुविपुलबलं भीमतुल्यं वधानम् ।
> एतत्पत्रं लिखितमधुना वक्षसः शोणितेन
> भर्तः ! दृष्ट्वा यदिह लिखितं पूर्णतां तन्नयस्व ॥
>
> (तर्जनी – १।१)

अस्य काव्यस्य प्रयोजनं कविना स्फुटीकृतम्—

> धर्माश्रित्य क्वचिदपि कलिर्भारते नैव भूया-
> दन्योन्यं वै जहतु कटुतां संप्रदायाश्च सर्वे ।
> एको वृक्षो बहुविधशिफाभावनेयं स्थिरास्यात्
> कृत्वा सर्वं मदभिलषितं तर्जनी स्यात् कृतार्थः ॥

अस्य वस्तुविभाजनमेकादशसर्गै. कृतमस्ति । पात्रादिचित्रणाभावे महाकाव्यत्वमस्य निर्विवादं नास्ति ।

— — —

## ३२. गान्धिविजयं महाकाव्यम्

गान्धिविजयमहाकाव्यप्रणेता स्वर्गीय. पण्डितश्रीलोकनाथशास्त्री अस्ति। जवलपुरस्य गायत्रीसंस्कृतविद्यापीठे बहुकालं यावत् प्रधानाचार्यपद-मलङ्कृतवान्। गान्धिविजयमहाकाव्यमपूर्णमस्ति। अस्य केचन सर्गाः जवल-पुरतः प्रकाशितायां ऋतम्भरापत्रिकायां प्रकाशिता. सन्ति। अस्य कथ.वस्तु महात्मनो गान्धिनो जीवनं भारतीयस्वातन्त्र्यान्दोलनं चाश्रित्य विन्यस्तमस्ति। काव्येऽस्मिन् राष्ट्रप्रेम्णोऽविच्छिन्नः प्रवाहो दृश्यते। भाषायां कलात्मकता पाण्डित्यप्रदर्शनभावना च दृश्यते। यथा –

> दुर्गा दुर्ग्रहदुर्गतिहृं रवधूहाराम्बराधारिणी।
> कालीदासकलापकालनकरी गौरी च गौरप्रदा॥
> तारा तारकतारिका निजनिर्जर्जातस्य जन्मोदयं।
> षष्ठी जागरवासरे गुणगणैर्जागर्ति युक्ताक्षरैः॥

(गान्धिवि० १।७)

— — —

## ३३. गान्धिसौगन्धिकम्

गान्धिसौगन्धिकमहाकाव्यरचयिता श्रीसुधाकरशुक्लोऽस्ति। मध्यप्रदेश-शासनेन सम्मानितोऽयं कविर्मध्यप्रदेशीयसंस्कृतकविषु विशिष्टं स्थानमर्हति। मध्यप्रदेशशासनस्योच्चतरमाध्यमिकशिक्षासेवायां प्रवक्तृ-प्राचार्यादिपदमलं-कुर्वन् सम्प्रति सेवानिवृत्तः सन् मध्यप्रदेशस्य दतियानगरे कविकुलायेतिनामके भवने साहित्यसेवारतस्तिष्ठति। अनेन १—गान्धिसौगन्धिकं (विंशसर्गात्मकं संस्कृतमहाकाव्यम्) २—भारतीस्वयंवरम् (द्वादशसर्गात्मकं संस्कृतमहाकाव्यम्) ३—केलिशतकम् (संस्कृतकाव्यम्) ४—देवदूतम् (संस्कृतखण्डकाव्यम्) ५—दुर्गादेवनं (स्तोत्रम्) ६—इन्दुमती (संस्कृतनाटिका) ७—आर्यासुधाकरम् (विविधपद्यसंग्रहः)।

गान्धिसौगन्धिकं महात्मनो गान्धिनो जीवनमाश्रित्य विरचितमस्ति। विंशत्या सर्गैरस्य कथावस्तु विभक्तमस्ति। भाषा सर्वत्र सालङ्कारा बोधगम्या चास्ति। काव्येऽस्मिन् महात्मनो गान्धिनः सिद्धान्ताः पदे-पदेऽभिव्यञ्जिताः सन्ति। प्रथमे पद्य एव वस्तुसङ्केतो विद्यते—

> प्रयोगे प्रथिता येनाहिंसा संसारसारताम्।
> सा गान्धी सुगुणग्रामो गन्धरामो निषेव्यते॥
>
> (गान्धि० १।१)

गान्धिजन्मन उद्देश्यम्—

> वन्दिनो वन्दिनी वन्दी चक्रीयश्चक्रलक्षणम्।
> भारतं मोचयामास पञ्जरादस्थिपञ्जरः॥
>
> (गान्धि० १।४)

सरलाप्यस्य सालङ्कारा भाषाऽस्ति—

> चिरं चकम्पे चलचम्पकद्युतिः।
> सशाङ्करोद्धं रुदिति न सुव्रताः॥
>
> (गान्धि० १।५)

---

## ३४. भारतीस्वयंवरम्

भारतीस्वयंवरमहाकाव्यस्य प्रणेताऽपि गान्धिसौगन्धिकमहाकाव्यस्य रचयिता श्रीदेवदत्तः शुक्लोऽस्ति। भारतीस्वयंवरे भारतराष्ट्रस्य महापुरुषाणां स्थानानां साहित्यसंस्कृतिप्रभृतीनां वर्णनं द्वादशसर्गैः कृतमस्ति। काव्येऽस्मिन् राष्ट्रभक्तिराद्यन्त दृश्यते। श्लेषबहुलमिदं काव्यमस्ति। यथा—

अस्यामिर्मूर्तिभिर्मूर्यो भारतामप्यभारताम्।
भारतीभारतीणां यो भर्ता माध्यः स भाग्यभाक्॥

(भारती० १।१)

भारतीस्वरूपवर्णने कविर्व्यङ्ग्यभङ्ग्या स्वकाव्यवैशिष्ट्यमपि प्रतिपादयति—

श्लेषप्रियार्थरमणीयरसार्द्रवर्णा ।
कर्णानुगामृतझरायतलोचना च ॥
गम्याप्यगम्यगुणवत्यनुसर्गरम्या ।
काम्या न कस्य कवितावदलङ्कृताऽसौ ॥

(भारती० २।५)

कविः स्वपरिचयमपि ददाति—

साधः सुधाकरस्येव सुधास्याच्च्योतयत्यसौ।
प्राणीकरोति कल्याणी वाणी या वीणया जगत्॥
कान्यकुब्जकुले जातः कालिन्दीकूलकेलिभाक्।
अलकातिलकः काव्यं साधयामि सुधाकरः॥

(भारती० १।१४,१५)

———

# ३५. रामचरितम्

रामचरितमहाकाव्यस्य प्रणेत्रा श्रीमता पद्मनारायणत्रिपाठिमहोदयेन स्वकीयः परिचयः स्वकाव्यान्ते व्यलेखि स एवं विद्यते—

तिवारीजीति विख्यातविद्वद्वृन्दशिरोमणि. ।
देवनारायणस्यान्तेवासी श्रीरामप्रीतये ॥
दवनागर्भसम्भूतः सहृदेवसुतः सुधी. ।
पद्मनारायणो रामचरितं संव्यधाच्छिवम् ॥
पुत्रीकृतो रमाकान्तो मध्यमानुजभूर्मम ।
सम्पादनं व्यधावस्याधिकारञ्च समं समैत् ॥

महाकाव्येऽस्मिन् द्वाविंशसर्गा सन्ति। श्रीरामजन्मोपक्रमतो रावणं हत्वा लङ्कातोऽयोध्यां समागतस्य रामस्य राज्याभिषेकं यावत् कथावस्तु पल्लवितमस्ति। महाकाव्यविषये स्वामिश्रीमहेश्वरानन्दसरस्वती लिखति—'भगवान् राघवेन्द्रोऽत्र समवतारितः तदीया गुणगणा अस्मिन् व्यावर्णिताः ल ..., एतस्मिन् कविताप्रौढिषूपढौकितम्। क्वचित् प्राक्तनी शैली परिशीलिता क्वचिन्नव्यो भव्यश्च मार्गं उद्घाटितः कुत्रचिदुपदेशप्रवणता प्रकटीकृता कस्मिंश्चित् पाणिनीयप्रियता प्रदर्शिता। काव्येऽस्मिन् रोचकतया, कौशलेन, पाण्डित्येन समासेन व्यासेन ध्वनिसंपदा, अलंकृतिझङ्कारेण, छन्दःसम्पत्त्या रीतिवृत्तिप्राचुर्येण तत्तत्स्थानेषु सुघटितेन काव्यरामणीयकं संवर्धमानम्...।' कथनमिदं सार्थकं प्रतीयते। काव्येऽस्मिन् रामस्य यद् रूपं समुद्भावितमस्ति कविशब्देरेव तद् द्रष्टव्यम्—

यच्चाणुतो निखिलविश्वबृहत्प्रमाण—
व्याप्तो यथा पयसि सर्पिरसौ कृपालुः।
ब्रह्मेति तस्य रुचिरं नररूपमाप्य
याता चिरं वसुमती स्वयथार्थनाम ॥

———

# उपसंहारः

दशकेऽस्मिन् [१९६१ तः १९७० ई० वर्षं यावत्] अन्यभाषाकवयः प्रायेण महाकाव्यप्रणयने विरतोत्साहाः सञ्जाताः किन्तु संस्कृतकवयोऽस्यां दिशि सोत्साहं प्रयतमाना दृश्यन्ते। निबन्धेऽस्मिन् पञ्चाशत् महाकाव्यानि समीक्षितानि सन्ति। अस्मदनवलोकितान्यपि कानिचिद् भविष्यन्ति-इति विश्वसिमि। केचन कवयः समपेक्षितादर्थाभावात् त्रस्ताः सन्तोऽपि स्वकीयया कठिनसाहित्यसाधनया सधैर्यमुत्तमानि महाकाव्यानि प्रणीतवन्तः सन्ति।

एतेषां महाकाव्यानां विषयवस्तुनि वैविध्यं दृश्यते रामायण-महाभारत-श्रीमद्भागवतादितो वस्तुग्रहणेन सह भारतराष्ट्रस्य स्वातन्त्र्यसङ्गरसेनानीनां तिलकगान्धिसुभाषादीनां स्वामिविवेकानन्दतुलसीदासप्रभृतिमहात्मनां लेनिनादीनां च सामाजिकक्रान्तिकर्तॄणां जीवनमाधारीकृत्य महाकाव्यानि प्रणीतानि सन्ति। हिन्दीभाषायाः कामायनीप्रियप्रवासरामचरितमानसादीनाम् आङ्ग्लभाषायाः सवित्रीकाव्यस्य मलयालम् भाषायाश्च केशवीयकाव्यस्य समश्लोकी संस्कृतानुवादोऽपि संस्कृतकविभिः कृतोऽस्ति। एताः कृतयोऽपि मूलसंस्कृतरचनावदाह्लादक्षमाः सन्ति।

एतेषु महाकाव्येषु प्रायेण रूढिगतोद्देश्याभावो दृश्यते। एतेषु शासन-समाज-धर्मादिक्षेत्रेषु दृश्यमानानामन्यायानां विरोधोऽपि मुखरो विद्यते। प्राक्तनी शारीरिकीं चेतनामतिक्रम्य सम्प्रति मानसिकी सामाजिकी राजनीतिकी राष्ट्रिया वा चेतना प्रामुख्यं भजते। एतेषां महाकाव्यानां व्यावहारिकं प्रयोजनं राष्ट्रिये जीवने सामरस्यं, महापुरुषाणां प्रेरकव्यक्तित्वाकलनं, प्राचीनानां कथांशानां युगानुरूपं संशोधनं संवर्धनं वा, पूर्वकविभिरस्पृष्टविषयाणां समावेश, शास्त्रीयरूढपरम्पराणा समाजस्य चानुपयोगिनीनां प्रथानां परित्यागो, राष्ट्रैक्यस्य राष्ट्रचेतनायाश्च परिपोषणाय तदनुकूलभावानामुद्भावनं चेत्यादिकं विद्यते। एतेषु महाकाव्येषु राष्ट्रवादिभिः स्वरैः सह सहृदयहृदयसंवेद्यकान्तासम्मितोपदेशोऽपि यथापूर्वं विद्यते। अस्य दशकस्य महाकाव्यकाराः प्राक्तनकाव्यशिल्पस्य सुरक्षायां संवर्धने चोभयथा प्रवृत्ता दृश्यन्ते।

दशकेऽस्मिन् महाकाव्यवस्तुषु बहुविधं परिवर्तनं दृश्यते। ज्ञानविज्ञानस्यास्मिन् नवीन आलोके वस्तुनो जीर्णपरम्परा तिरोहितेव दृश्यते अधिकांशतः

कथाद्रव्यं तथा न स्वीकृतं यथा प्राचीनमहाकाव्येष्वावश्यकमिव प्रतीयते। एतादृशान्यपि महाकाव्यानि सन्ति येषु कथावस्तुनो मांसलता नास्ति तत्र विचाराणां चिन्तनाना मनोवैज्ञानिकचित्रणानाञ्च प्राधान्यमस्ति। तर्जनी-भूभामिनीविभ्रमलेनिनामृतादिमहाकाव्येषु स्थितिरियं विशेषतो दृश्यते। एतेषु महाकाव्येषु समाजोपयोगिनामंशाना चयनमत्यन्तं विवेकेन कृतमस्ति। प्राचीनं वस्तु नवपरिवेशे प्रस्तुतीकृतं दृश्यते। राष्ट्राध्यक्षतः सामान्यजनस्य भूमिकां यावत् प्राचीनान्यपि पात्राणि प्रस्तुतानि दृश्यन्ते यथा—गणपति-सम्भवमहाकाव्ये तन्नायको गणपतिः साक्षात्कारप्रवृत्तस्य युवकस्य द्वारपालस्य राष्ट्ररक्षकसैनिकस्य लिपिकस्य राष्ट्रपतेश्च भूमिकायां प्रस्तुतीकृतो विद्यते तथापि तद्देवत्वं सुरक्षितमस्ति। सीताचरित-गङ्गासागरीयप्रभृतिकाव्येषु साम्प्रतिकस्य नारीजागरणस्याभिव्यञ्जना दृश्यते। नार्यो नायकत्वमपि कुर्वाणाः सन्ति। देवपात्रेषु मानवत्वं मानवपात्रेषु देवत्वं च प्रतिष्ठितं विद्यते। सीताचरितादिषु प्राचीनवस्तुन आक्षेपग्रस्तानामंशानां परिवर्तनस्य प्रयासोऽपि दृश्यते।

दशकेऽस्मिन् चातुर्वर्ण्याश्रितस्य समाजस्य मध्यकालिकी कल्पनामपहाय मानवमात्रस्याखण्डसमाजस्य सङ्कल्पना दृश्यते। समत्वसमन्वितराष्ट्रसेवा ।नकल्य भ न। च सर्वत्र समुद्भाविता दृश्यते। व्यष्टिरूपेण धर्मानुपालनं ..न्तोऽपि जना राष्ट्रिय ऐक्ये सन्नद्धाः सन्ति—

> वर्ण-धर्म-वचोवृत्तिभेदवत्यपि यद्धृता ।
> शैलावासिन्धुदेशेऽस्मिन्नेकभावा हि देहिनः ॥
> विभिन्नधर्मवर्त्मानो विभिन्नाजीववर्तिनः ।
> विभिन्नाचारवन्तोऽपि नोद्वेगाय परस्परम् ॥
>
> —क्षत्रपतिचरिते १।३९,६।३८)

पात्रेषु समाजकल्याणाय महत्तमस्त्यागो दृश्यते। परिवारो राष्ट्र-कल्याणाय स्वकीय प्रियमपि सदस्यं समर्पयन् चित्रितोऽस्ति। यथा क्षत्रपति राष्ट्राय समर्पयन्ती तन्माता जिजा वदति—

> मदेकपुत्रं नहि केवलं शिव
> परं महाराष्ट्रधरा नभोमणिम् ।
> सुमेधसः सन्नयथ प्रभोज्ज्वलं
> तमोऽन्तरायोऽभिभवेन्न तद्रुचम् ॥
>
> (क्षत्रपति च० ८।२०)

विश्वबन्धुत्वभावा अपि बहुधा दृश्यन्ते—

> धिक् कोऽयं निजरुचि नामको जनानां
> विश्वस्मिन् मनसि शयोऽस्ति भेदहेतुः ।
> येनेदं जगदखिलं समुद्रशैल—
> नद्याद्यैः शकलितमेकता न याति ॥
>
> (सीताचरिते ५।१०

एतेषु महाकाव्येषु धर्मदर्शनयोरुपस्थापनं सहिष्णुतयाऽनुप्राणितं विद्यते विविधधर्मप्रतिपादितानामुदात्तकर्मणां सत्प्रेरणपूर्णा समुद्भावना कृताऽस्ति। सर्वेऽपि धर्मा राष्ट्रधर्मे परिणताः सन्ति। सर्वेष्वेव लोकमङ्गलभावना सहानुभूतिश्चानुस्यूताऽस्ति। एतेषु साम्प्रतिकराजनीतेरपि प्रभावो दृश्यते। राष्ट्रस्वातन्त्र्यसङ्गरः, तज्जन्यं स्वातन्त्र्यं, विश्वशान्तिप्रयास. चीनपाकयोराक्रमणं राष्ट्रस्यान्तरिकी स्थितिश्चेत्यादयो विषया अनेकधाऽभिव्यञ्जिताः सन्ति। गणतन्त्रशासने जनताया अधिकारमहत्त्वयो शोभना प्रतिष्ठा दृश्यते। राष्ट्रनायकगुणेषु बलिदानत्याग-राष्ट्रानुराग-समत्वादिभावा अनिवार्यतया स्वीकृताः सन्ति। समाजोन्मुखराजनीतिरेवात्र प्रामुख्यं भजमाना दृश्यते।

एतेषु प्रबलराष्ट्रियभावाना परिव्याप्ताऽस्ति। स्वातन्त्र्योत्तरसंस्कृतसाहित्ये सर्वत्र राष्ट्रियभावना दृश्यते किन्तु दशकेऽस्मिन् चीनपाकाक्रमणेन नूतनचेतनया सह राष्ट्रियभावना शिखरायमाणा विराजते। न केवलमाधुनिकविषयसंवलितेष्वपितु प्राचीनकथाश्रितेषु गणपतिसंभवसीताचरितादिष्वपि भावनेयं चरमोत्कर्षं गता विद्यते।

यथार्थं स्वाभाविकं च वर्णनमेतेषां महाकाव्यानामन्यतमं वैशिष्ट्यमस्ति। एतेषु दृश्यादिवर्णनमपहाय विषयस्य वक्तव्यस्य वा प्राधान्यमस्ति। प्राचीनसंस्कृतसाहित्ये प्रायेणोपलब्धाना प्रशस्तिपूर्णानामतिशयोक्तिसमन्वितानामतिरञ्जनामयाना वर्णनामभावो दृश्यते। एतेषु सर्वतो यथार्थस्य प्रतिष्ठा दृश्यते। वैभवस्यातिशयोक्तिपूर्णो विलासोऽत्र न प्राप्यते। संस्कृतस्यैते महाकाव्यकारा स्वरचनया समाजं समुद्बोधयितुमिच्छन्ति। अत एते जीवनस्यादर्शोन्मुखं यथार्थं स्वाभाविकरूपेण चित्रितवन्तः।

एतेषु महाकाव्येषु प्राचीनमहाकाव्यशिल्पानां भामहादिमहाकाव्यलक्षणानाञ्च स्वीकारः परिहारश्चोभावेव दृश्येते। पूर्वशिल्पे यथावसरं संशोधनमपि प्राप्यते—

वस्तुविन्यासदृष्ट्या प्राचीनसाहित्ये शिवराजे चाश्रितानि महाकाव्यानि

विहाय प्रायेण नाट्यसन्धिसमन्वितानि सुखान्तानि च न दृश्यन्ते। वर्तमान-चरिताश्रितानि महाकाव्यानि चरितनायकनिधनवर्णनपर्यवसायीनि विद्यन्तेऽतो दुःखान्तान्येव तानि सन्तीति वक्तुं शक्यते। वस्तुविन्यासे जनता-राष्ट्रनायक-प्रशासकानां कर्तव्यान्यभिव्यञ्जितानि किन्तु पूर्वकाव्यशास्त्रानुमोदितसन्धि-सन्ध्यङ्गसमायोजनमुद्दिश्याधुनिककथावस्तुनि परिवर्तनं न दृश्यते। महाकाव्यकाराः सर्गबन्धादिदृष्ट्या प्राचीनां परम्परामनुसरन्तोऽपि वैचारिकीं प्रतिष्ठां वस्तुविकासं च स्वधिया कृतवन्तः सन्ति शास्त्रीयविधिना नाट्यसन्धिनिर्वाहेण युगचेतनानुरूपवस्तुपल्लवने च दशकेऽस्मिन् गणपति-संभवं, क्षत्रपतिचरितं, शिवराज्योदयं, रुक्मिणीहरणं, सीताचरितं चैतानि पञ्चमहाकाव्यानि विशिष्टानि सन्ति। एतेषु प्राचीनानादर्शान् प्रति श्रद्धायाः साम्प्रतिकयुगचेतनां प्रति आकर्षणस्य च मधुरतमः सङ्गमो वरीवर्ति।

'सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वित' इत्यादि काव्यशास्त्रोक्त-सिद्धान्तानुगमने कवीनामाग्रहो नास्ति। एतेषु नार्यो राष्ट्रनेतारो धर्मनेतार-श्चापि प्रमुखपात्ररूपेण चित्रिताः सन्ति। 'शृंगारवीरशान्तान्तानामेकोऽङ्गी रस इष्यते' इति मतेऽपि योजनाबद्ध आग्रहो नास्ति। आपातत एव शृङ्गारादि-रसस्य दर्शनं भवति। शृंगारवीर-शान्तेतरा अपि रसा अङ्गित्वमाप्ताः सन्ति। कश्चिदपि रसोऽङ्गी स्यात् किन्तु स राष्ट्रभक्त्याऽवश्यमनुप्राणितो विद्यते। रसराजरूपेणैतेषु राष्ट्रभक्तिसमेधितो वीर एव जयति। विलासपूर्णोद्दाम-शृङ्गारस्य वर्णनं न दृश्यते। रुक्मिणीहरणसदृशे रससिद्धे महाकाव्ये विप्रलम्भ-शृङ्गारोऽङ्गी अस्ति तथापि स देवविषयया रत्या (कामुकतारहितया दृढ-भक्त्या) धर्मवीरेण च सवलितोऽस्ति। बोधिसत्त्वचरिते मानवोचितदौर्बल्य-चित्रणेऽनौचित्यप्रवर्तितो नायकाश्रितशृङ्गाराभासोऽवलोक्यते परिणाम-रमणीयत्वादत्र शृङ्गाराभासो नानुचित इति वक्तुं शक्यते। अङ्गरूपेण प्रायः समेऽपि रसाः विराजन्ते।

एतेषु-अखण्डदण्डायमानाः शब्दाः ग्रन्थग्रन्थयो दुरूहाश्च प्रयोगा न दृश्यन्ते। प्रसादगुणसम्पन्ना सरला सुस्पष्टा चैतेषां भाषाऽस्ति। यत्र-तत्राङ्ग्ला-दिभाषाया लब्धप्रचाराः शब्दा अपि प्रयुक्ता दृश्यन्ते। संस्कृतव्याकरणे कोशे चाधिकारिणो विदुषः प्रभुदत्तशास्त्रिणो गणपतिसंभवेऽपि प्रवृत्तिरियं विलसति। यथा—'या कोपलोपप्रिया,' ग्रामोफोनरवा च वृद्धवनिता गीता विगीतेव या' 'टैङ्कान् वक्रमुखान् शशाङ्कसदृशान्' इत्यादि। तेन संस्कृतमहाकवीनां भाषा-गतमौदार्यं सिध्यति। आधुनिकविषयसंवलितेषु तिलकयशोऽर्णवादिषु प्रवृत्ति-रियं विशेषतया दृश्यते। एतेषां भाषा शब्दाडम्बरभारानता नास्ति। अत्र प्राचीनानामुपमानानामर्थान्तरन्यासानां नवीनीकरणमभिनवानां च समावेशः प्राप्यते।

# अर्वाचीनमहाकाव्यतत्त्वविमर्शः

लक्ष्यग्रन्थानन्तरमेव लक्षणग्रन्था निर्मीयन्ते। लक्षणकारः प्रायेण स्वसमक्षं समुपस्थित काव्यादर्श शास्त्रीयया भाषया प्रस्तौति। यानि काव्यानि दृष्ट्वा काव्यशास्त्री लक्षणं निर्धारयति तानि तु मौलिकीभिरुद्भावनाभिः परिपूर्णानि भवन्ति, किन्तु यानि निर्धारितं काव्यनिकषमनुसृत्य लिख्यन्ते तानि रूढिग्रस्तानि भवन्ति। अतो यो महाकाव्यकारो रहस्यमिदं वेत्ति स लक्षणग्रन्थेषु सङ्केतितानामादर्शानां परिखासु नेत्रे निमील्य न व्रजति। प्रथमतस्तु लक्षणानुरोधमपहाय विरचितानि काव्यानि गतानुगतिकैरालोचकैः शङ्कादृशा दृश्यन्ते, किन्तु यदा एतानि काव्यानि कालनिकषे सुवर्णायमानानि भ्राजन्ते तदा परिवर्तनमिदं सम्मान्यमनुकरणीयं च भवति। यदा-कदा अपूर्वतानाम्ना येऽसंस्कृता उदात्तकलाविरहिताः प्रयोगाः क्रियन्ते ते सहृदयहृदयसंवेद्या न भवन्ति व्रजन्ति च ते हास्यास्पदम्।

एकतो नवप्रज्ञामण्डितैः कविभिर्यत्र महाकाव्यसंरचनायामविश्रान्तः प्रयासोऽकारि, तत्रैवापरतो युगानुरूपं प्रणीतानि महाकाव्यानि ध्यात्वा काव्यशास्त्रिभिर्लक्षणानि अकारिषत। महाकाव्यस्य विविधाभिः परिभाषाभिः सिध्यतीदं यत् काव्यस्यान्यप्रकारतो महाकाव्यस्य परिभाषाऽधिकं परिवर्तमाना सीत्। यतो हि मानवजीवनेन महाकाव्यं घनिष्ठतया सम्बद्धं भवति जनजीवनपद्धतिश्च युगप्रभावात् परिवर्तमाना भवति।

प्रथमत. काव्यशास्त्राचार्यस्य भामहस्य काव्यालङ्कारे महाकाव्यलक्षणस्य सुस्पष्टं निर्धारणं प्राप्यते। भामह स्वीचकार यत् स सत्कवीनां मतानि दृष्ट्वा स्वकीयया च धिया महाकाव्यादिलक्षणमकुरुत (काव्याल० ६।६४)। भामहस्येदं कथनमनुसृत्य वाल्मीकीयरामायणस्याध्ययनं क्रियते चेत्तदा तत्र महाकाव्यलक्षणस्य प्राय. सर्वाण्यपि सूत्राणि समुपलभ्यन्ते।[1] कवेः कल्पना राज्ये महाकाव्यभवनस्य निर्माणात्प्राक् तन्मानचित्रं विद्यमानं भवति यदाश्रयेण स विधिवत् तत्सर्जने सफलो भवति। अतोऽन्येष्वपि महाकाव्येषु सूत्राणि-एतानि यथायथं प्राप्यन्ते।

---

१. द्र० सागरिका १३।२ अङ्के प्रकाशितं लेखकस्यास्य शोधपत्रं 'रामायणे कण्ठतोऽपि कृतं महाकाव्यलक्षणम्।'

भामहकृतं महाकाव्यलक्षणमित्थम्—

"सर्गबन्धो महाकाव्यं महतां च महच्च यत् ।
अग्राम्यशब्दमर्थ्यञ्च सालङ्कारं सदाश्रयम् ॥
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैश्च यत् ।
पञ्चभि. सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत् ॥
चतुर्वर्गाभिधानेऽपि भूयसार्थोपदेशकृत् ।
युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक् ॥"
(काव्यालं० १।१६-२१)

संक्षिप्तमिदं महाकाव्यलक्षणं तथापि प्रायेणात्र महाकाव्यसम्बन्धीनि सर्वाण्यपि तत्त्वानि परिगणितानि सन्ति । लक्षणेऽस्मिन् परवर्तिकाव्यलक्षणवत् रूढिबद्धता नास्ति । महाकाव्यानुरूपमेवाभिव्यापकमिदं लक्षणम् ।

अत्र भामहः 'सर्गबन्धो' 'महच्चेति बन्धाकारयो, 'महतां', 'सदाश्रयं' चेति-नायकस्य, अग्राम्यशब्दमर्थ्यं' सालङ्कारं', नातिव्याख्येयं', चेति-अभिव्यञ्जनाया, 'मन्त्रदूतप्रायाणाजिनायकाभ्युदये, 'ऋद्धिमत्', 'चतुर्वर्गाभिधानेऽपि भूयस्तथोपदेश-कृदिति' च वर्ण्यविषयस्य, रचनाविधानस्य, 'युक्तं लोकस्वभावेने-'ति-औचित्यस्य, 'रसैश्च सकलै पृथगि' ति चास्वाद्यताया निरूपणमुद्दिश्य प्रतिपादितवान् ।

आकारस्य विषये भामहेन न कश्चित् परिधिर्निर्धारित. केवलं 'महदि'-त्येवाभाणि । परवर्तिभि काव्यलक्ष्मविधायिभिरस्य न्यूनाधिक्तया परिधिर्निर्धारितः—'अष्टसर्गान्नतु न्यूनं त्रिंशत् सर्गाच्च नाधिकमि'तिईशानसंहितायाम्, 'नातिस्वल्पा नातिदीर्घा सर्गा अष्टाधिका इहेति साहित्यदर्पणे च विश्वनाथेन ।

महाकाव्यस्यातिसङ्क्षिप्ततायां विस्तरत्वे चोभयत्र दोषः स्वीकृतो भवेत्, यतो हि समभिव्यापकत्वात् महाकाव्यं सङ्क्षेपेण प्रस्तोतुं न शक्यते, विशालं चापि तन्न स्यादन्यथाऽतिसमयसाध्यत्वात् सहृदयस्य धैर्यं क्वचिदेव स्थास्यति ।

उत्तरवर्तिनामाचार्याणां महाकाव्याकारसीमाभीष्टैवासीत् तर्हि सर्गसीम्न स्थाने छन्द. संख्याया सीमा निर्धारणीयाऽसीत् । यथा—गते दशके (१९६१ तः १९७० ई० यावत्) प्रणीतं 'गंगासागरीयं' दशसर्गात्मकमपि पञ्चशतपद्यात्मकं किन्तु तस्मिन् समय एव विरचितस्य 'श्रीतिलकयशोऽर्णवस्य' केचन सर्गाश्चतु शतपद्यात्मका सन्ति । एतादृशी स्थितिर्नकेवलं साम्प्रतिकेषु महाकाव्येषु-अपितु बृहत्त्रयीमहाकाव्येष्वपि दृश्यते—'नैषधीयचरितस्य' प्रत्येकं

सर्गः किरातार्जुनीयस्य' प्रत्येकं सर्गात् प्रायेण द्विगुणितं विद्यते। अस्यामवस्थायां 'गंगासागरीयं' 'श्रीतिलकयशोर्णवस्य' तुलनायां सपादसर्गीयं तिष्ठति, द्वाविंश सर्गात्मकं च नैषधीयचरितं' चतुश्चत्वारिंशत्सर्गात्मकं सिद्ध्यति। वस्तुतः सर्गसंख्याया. पद्यसंख्याया वा परिसीमनं लक्षणे न युक्तम्। महाकाव्यप्रतिपाद्य-विषयानुरोधेन कविधिया प्रस्तुतीकृतं सानुपातिकं नियमनमेवात्र स्वीकार्य-स्यात्।

महाकाव्यस्य नायको महान्, अभ्युदयवान् सज्जनश्च स्यादिति भामहो-ऽकथयत्।[1] एतावत्कथनेन नायकविषयकं समग्रमपि वैशिष्ट्यं भामहेन समाकलितम्। 'तत्रैको नायकः सुर, सद्वंश क्षत्रियो वाऽपि धीरोदात्तगुणान्वित'। एकवंशभवा भूपा' कुलजा बहवोऽपि वे'ति।(साहित्यदर्पणे ६।३१६) विश्वनाथेन, 'तत्र त्रिवर्गसक्तं समिद्धशक्तित्रयं च सर्वगुणम्। रक्तसमस्तप्रकृतिं विजिगीषुं नायकं न्यसेदि' ति च (काव्यालङ्कारे १८।८) रुद्रटेनाभाणि। 'रघुवंशकिरातादिमहा-काव्यनायकस्वरूपप्रतिपादनदिशा विश्वनाथादीनां नायकस्वरूपविवेचनं समीचीनं प्रतीयते किन्तु- अधुनातनेषु-महाकाव्येषु प्रस्तुतीकृतानां नायकानां परीक्षणं क्रियते चेत् तदा नायकस्वरूपेऽस्मिन्नव्याप्तिता दृश्यते। स्वातन्त्र्या-नन्तरं प्रणीतानां 'श्रीस्वामिविवेकानन्दचरित-गान्धिचरित-श्रीतिलकयशोऽर्णव-सुभाषचरितप्रभृतिमहाकाव्यानां नायका विश्वनाथदिशा न देवा नैव क्षत्रिया न चैकवंशभवा भूपा.। सीताचरितगंगासागरीयमहाकाव्ययोर्नायिक. सीता, गंगा च रुद्रटानुसारं विजिगीषुर्नास्ति, तथापि भामहस्य महत्सन्निकष एते नायकाः स्वकीयं वैशुद्ध्यं प्रमाणयन्ति।

आदिकविना वाल्मीकिना नायकस्वरूपं विस्तरेण प्रस्तुतीकृतम्। वाल्मीकिः तपः स्वध्यायनिरतं वाग्विदांवरं त्रिलोकज्ञं नारदं स्वकाव्यनायकम-पृच्छत् (वा० रा० बा० १।१)। किन्तु वाग्विदा नारदात्प्राक् स्वकाव्यार्हं नायक-रूपं सकौतुकं स्वयमेव प्रास्तावीत्। तत्प्रस्तावमनुसृत्य नारदेन तत्समीहितो नायक प्रत्यपादि, महाकाव्यतत्त्वदृशा कविना प्रस्तावितस्य नायकसामान्य-स्वरूपस्य महत्त्वमस्ति। अतोऽत्र तदेवाविकलं प्रस्तूयते—

'कोन्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रत.॥
चारित्र्येण च को युक्त सर्वभूतेषु को हितः।
विद्वान् कः क समर्थश्च कस्यैकप्रियदर्शन.॥

१. 'चतुरोदात्तनायकमि' त्युक्त्वा दण्डिनाऽपि भामहाभिमतं पुष्टीकृतम्। (काव्या० द० १।१५)।

आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे॥
एतदिच्छाम्यहं श्रोतु परं कौतूहलं हि मे।
महर्षे! त्वं समर्थोऽसि ज्ञातुमेवंविधं तु माम्॥

(वा० रा० बा० १।२-५)।

प्रस्तावेऽस्मिन् प्रधानतया त्रीणि तत्त्वानि समपेक्षितानि—

१—साम्प्रतं लोके विख्यातः, २—उदात्तगुणमण्डितः, ३—नरश्च।

वाल्मीकिः साम्प्रतं लोके विख्यातं कञ्चिन्महापुरुषमतोऽवारीत् यतो नायकविषये विदितवृत्त सामाजिकोऽनायासमेव कवनीयं वस्तु हृदयंगमङ्करोति कविरपि स्वकाव्यनायकस्य युगानुरूपं लोकनायकत्वं केवलं निराधारां कल्पनामाश्रित्य न कवयति। वाल्मीकिः स्वयमप्येवमकरोत्। वाल्मीकेरयमादर्शं आधुनिकेषु 'तिलकयशोऽर्णव' - प्रभृतिमहाकाव्येष्वपि दरीदृश्यते। आधुनिकेषु महाकाव्येषु प्रायः सर्वेऽपि लोकनेतारो महाकाव्यनायकत्वेन प्रस्तुतीकृताः सन्ति। ते चात्र वाल्मीकेर्निकषं काञ्चनायमाना दीप्यन्ते।

पात्रचित्रणविषये साम्प्रतिकेनालोचकेन वङ्किमचन्द्रचट्टोपाध्यायेन महत्त्वपूर्णमेकं तथ्यं समुद्घाटितम्।[1] तदनुसारं देवचरित्रस्यापि प्रणयनं प्रायेण मानवोचितं भवेत्। देशपात्राणां मानवोचितं वर्णनं मानवीयमनोवृत्तीनां समुद्बोधनाय समधिकं सक्षमं भवति। अतस्तत्सरलतयाऽऽस्वादतां व्रजति तत्पात्रानुकृतिरपि मानवव्यवहारोपयोगिनी भवति।[2] वस्तुतः पात्राणां प्रतीति स्वाभाविकी-एव स्यात्, सा-असम्भवा कल्पनामात्रं वा न स्यात्। एवं देवपात्राणामधिकांशतो मानवीयकरणं महाकाव्यस्य महत्त्वपूर्ण तत्त्वमस्ति।

प्रकृतिविभागं कुर्वताऽऽनन्दवर्धनेन मम्मटेन च दिव्याऽदिव्या दिव्या अदिव्याश्चेति त्रिधा प्रकृतय इति व्यलेखि। दिव्यप्रकृतिभिरेव पातालगमन-समुद्रलङ्घनादिवर्णनं कार्यमिति तयोरभिमतम्।[3] एतत्तूचितमेव, पञ्चप्रकृतीनां (पात्राणाम्) अलौकिकानि कार्याणि सहृदयानां श्रद्धाविषयास्तु भवितुमर्हन्ति

---

१. द्र० प्रकृत और अतिप्रकृत, वङ्किमग्रन्थावली पृ० ५६-५७।

२. परब्रह्मपरमेश्वररूपेण रामस्योद्गाता हिन्दीकविगोस्वामी तुलसीदासः तथ्यमिदं गभीरतयाऽन्वभवत्, आदिकवेर्वाल्मीकेर्नरं नारायणत्वेन प्रस्तुतीकुर्वन् सः—'सुनहु प्रिया व्रत रुचिर सुशीला, हम कछु करब ललित नरलीला'। (रामचरितमा० अरण्य०) एवं समाधानं दत्त्वा मानवोचिते वर्णने प्रवृत्तोऽभवत्।

३. (क) द्र० ध्वन्या० ३।१० वृत्तिः (ख) द्र० का० प्र० ७।६२ वृत्ति.।

किन्तु मानवजनासुलभत्वान्न तानि-अनुकरणीयानि भवन्ति। फलतो दिव्य-प्रकृतीनां सामान्यानि मानवोचितान्यपि कार्याणि प्रति सामाजिकेऽयं विश्वासः स्थिरीभवति यद्देवपात्रस्य समग्रं चरितं केवलं श्रद्धया पठितव्यमेवास्ति न तदनु-करणीयम्। एवं सति महाकाव्यकारस्य महदुद्देश्यं न पूर्तिं व्रजति।

प्रसङ्गेऽस्मिन् "युक्तं लोकस्वभावेनेति" भामहस्य कथनं व्यापक-मुचितञ्चासीत्। विषयेऽस्मिन्-आनन्दवर्धनसदृशेनाचार्येण व्यवस्थाऽदायि, अतः स्वयं तेनान्यैश्च कतिपयैरालोचकैर्योगभोगयोर्देवत्वमनुजत्वयोः सङ्गम-आदर्शीभूतस्यापि कालिदासीयस्य "कुमारसम्भवस्य" सम्भोगशृंगारवर्णन-मनुचितं प्रत्यपादि। भामहसमर्थितस्य लोकस्वभावस्य महनीयाद्ग्रहस्यात् सुदूरं गत्वा पार्वतीपरमेश्वरौ महाकाव्येऽपि सर्वात्मना देवाविति भक्तिभरितो व्यामोहः। वस्तुतो यावद्देवपात्रं मानवीयं निर्माय न प्रस्तूयते तावन्न तत् महाकाव्योपयोगि। अस्यां दिशि-आधुनिकमहाकाव्येषु गणपतिसम्भवकारस्य स्व० प्रभुदत्तशास्त्रिण. प्रयासो नूनमेव श्लाघ्य.। मानवपात्रे देवत्वप्रतिष्ठा देवपात्रे च मनुजत्वप्रतिष्ठा एव कवेर्बुद्धिचातुर्यं पात्रचित्रणस्यौचित्यं चास्ते।

अभिव्यञ्जनाविषये वाल्मीकि· स्वादर्शं कण्ठत एवमभाषिष्ट-उदार-वृत्तार्थपदैर्मनोरमैः—तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम्-वा० रा० बाल० २।४२, ४३) भामहेनात्र चतुर्णां तत्त्वानां स्पष्टतयोल्लेखो व्यधायि—(१) शब्दः, (२) अर्थः, (३) अलङ्कारः, (४) अनतिव्याख्येयता च। "अग्राम्यशब्दमर्थं च सालङ्कारमिति कथनेन सह"—"नातिव्याख्येयमिति" विशेषणं नियुज्य भामहेन महनीयमेकं तथ्यं स्फुटीकृतम्। शब्दार्थौ हि रस-निष्पत्तिसाधनीभूतौ, साधने त्रुटिश्चेत् साध्यं कथं निर्दुष्टं स्यात्। एतदर्थं ग्राम्यत्वदोषरहितं समलङ्कृतं चापि महाकाव्यं नातिव्याख्येयं भवेदिति सर्वात्मना समुचितम्। "काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्। उत्सवः सुधियामेव हन्त! दुर्मेधसो हताः" (काव्यालङ्कारे २।२०) इत्येवमुक्त्वा भामह. पुनरपि तथ्यस्यास्य दृढं पुष्टिमकरोत्। आनन्दवर्धनोऽपि "प्रसन्नगम्भीरपदाः काव्यबन्धा. सुखावहाः। ये च येषु प्रकारोऽयमेव योज्यः सुमेधसा। (ध्वन्यालोके ३।३६) एवमवादीत्। रुद्रटायापि कठिनं काव्यं न रोचते।[1] इदमेव काव्यस्य

१. ननु काव्येन क्रियते सरसानामवगमश्चतुर्वर्गे।
लघु मृदु च नीरसेभ्यस्ते हि त्रस्यन्ति शास्त्रेभ्य.॥
तस्मात् तत्कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्।
उद्वेजनमेतेषां शास्त्रवदेवान्यथा हि स्यात्॥
(काव्या लं० सू० १२।१,२)

सार्थक्यं यत् कवयिता स्वलोकशास्त्राद्यवेक्षणजन्यं ज्ञानं सुगमतया सरसतया च प्रस्तौतु। प्रथमस्तु कठिनं काव्यं विदुषां कृत एवोपयोगि पुनः क्लिष्टता रसानुभूतेर्बाधिका भवति। आवर्जकतायै सक्षमोऽपि कविः परिमितमात्रायामेवालङ्कृतीनां योजनं कुर्यात् "अलङ्कृतीनां शक्तावप्यानुरूपेण योजनम्। प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम्।। (ध्वन्यालोके ३।१४)।

महाकाव्यं लोकस्वभावेन युक्तं स्यादिति भामहस्याभिमतम्। लोक स्वभावो न केवलं लौकिकाचारव्यवहारावबोधकोऽपि तु तन्महनीयं तत्त्वं पुरस्करोति यदानन्दवर्धनेन-औचित्य-नाम्ना प्रसिद्धिङ्गतम्। लोकस्वभावस्य पालन औचित्यं तदुल्लंघनेऽनौचित्यम्। यद् यादृशं यादृशमुचितं वा भवेत् तद्भिन्न-वर्णनेऽनौचित्यमापतति, तदेव रसभङ्गस्य प्रमुखो हेतु —

अनौचित्यादृते नान्यत् रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा।।
(ध्वन्या० ३।१० कारिकायाः परिकरश्लोक)

भामहस्य लोकस्वभाव एवानन्दवर्धनस्यौचित्यमस्ति।[१]

रसैः शृंगार-करुण-हास-रौद्र-भयानकैः। वीरादिभी रसैर्युक्तं काव्यमिति (वा० रा० बा० ४।९) गदता वाल्मीकिना श्रव्ये रसस्य महत्त्वं कण्ठतः स्वीकृतमासीत्। ततो रसैश्च सकलैः पृथगिति निगदन् भामह. (यं वादवादिनो विद्वांसोऽलङ्कारवादिनं वदन्ति) आचार्यपरम्परायां प्रथमत श्रव्यकाव्ये प्राणभूतस्य रसस्य महत्त्वं प्रतिपादितवान्। भामहस्येयं स्थापना तदा सञ्जाता यदा रसस्य प्रतिष्ठा विशेषतो रूपकेष्वासीत् श्रव्यकाव्यस्य प्राणतत्त्वस्य विवेचनं प्रचलदेवासीत्। भामहेन रसस्याङ्गाङ्गिभावस्य काचिच्चर्चा न कृता। रसैश्च सकलै पृथगित्यत्र "पृथक्" शब्दस्य प्रयोगात् काव्येऽकाण्ड-काण्डप्रथनाकाण्डच्छेदन-प्रभृतिरसदोषा निवारिताः। सन्दर्भेऽस्मिन्—आनन्दवर्धनेन नूतन-मेकं तथ्यं समुपस्थापितम्—

"प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने।
एको रसोऽङ्गी कर्तव्यस्तेषामुत्कर्षमिच्छता"
(ध्वन्या० ३।२१)

अनेनानन्दवर्धनेन कस्यचिदप्येकस्य रसस्याङ्गित्वमूरीकृतम्। महाकाव्ये कस्याप्येकस्य रसस्याङ्गित्वं तूचितमेव किन्तु "शृङ्गारवीरशान्तानामेकोऽङ्गी

१. द्र० ध्वन्या० ३।१४ कारिकाया वृत्तिः।

रस इष्यते" (सा० द० ६।३१७) इति गदता विश्वनाथेन "शृङ्गारवीर-शान्तेष्वेव त्रिषु रसेषु महाकाव्यस्याङ्गी रसः सङ्कुचितः। निर्विवादमेतत् तथ्यं यदादिकाव्यं वाल्मीकीयरामायणं दृष्ट्वा-एव महाकाव्यस्य सङ्कल्पना प्राप्ता, तदपि विश्वनाथोक्तदिशा महाकाव्यं न भविष्यति। यतोहि रामायणास्याङ्गी रसः करुणो विद्यते। अत्राचार्यप्रवर आनन्दवर्धन. प्रमाणम्—

'प्रबन्धे चाङ्गी रस एक एवोपनिबद्ध्यमानोऽर्थविशेषलाभं छायातिशयं च पुष्णाति, कस्मिन्निवेति चेद् यथा रामायणं यथा वा महाभारते। रामायणे हि करुणो रसः स्वयमादिकविना सूत्रितः 'शोक. श्लोकत्वमागत' इत्येवं वादिना निर्व्यूढश्च स एव सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता'।'

(ध्वन्या० ४।५ वृत्ति.)

विश्वनाथस्य रसत्रय्यां करुणस्योल्लेखो नास्ति। गोस्वामितुलसीदास-प्रणीते हिन्दीभाषामहाकाव्ये रामचरितमानसे भक्तिरसोऽङ्गीति मन्यते सुधीभि.। शृङ्गार-वीर-शान्तेतरत्वादङ्गिरसदृशा रामचरितमानसमपि कथं महाकाव्यं स्यात्? अङ्गिरसनियमनेन विश्वनाथकृतमहाकाव्यलक्षणेऽव्याप्तिता प्रतीयते। एतत् तत्समयं यावत् प्रसिद्धानां केषाञ्चन महाकाव्यानामङ्गि-रससंसूचनायैवालम् प्रसङ्गेऽस्मिन्निदमपि ध्यातव्यमस्ति यत्—"करुणावावपि रसे जायते यत्पर सुखम्, सचेतसामनुभव प्रमाणं तत्र केवलमिति (सा० द० ३।४) तेनैव प्रतिपादितत्वात् करुणं प्रति न तस्यौदासीन्यमिति सिध्यति, यद्यपि तत्सूच्यां करुणे न्यस्तेऽपि न कश्चिल्लाभो भविता। यतो हि राष्ट्रभक्तिरसादेर-भिनवा प्रतिष्ठा युग-प्रभावाद्यथा सम्प्रति विद्यते तथैवान्यस्यापि कस्यचिदपि भवितुमर्हति। अत आनन्दवर्धनानुसारं वर्ण्यविषयानुरोधेन कश्चिदेकोऽङ्गी रसो भवेदेतदेव लक्षणं प्रस्तोतव्यम्।

मुक्तकेषु रसः सकलप्रयोजनमौलिभूतो भवतु नाम, किन्तु महाकाव्यं नून-मेव केनचित् महदुद्देश्येन लिख्यतेऽतस्तत् केवलमङ्गुलिगणनीयानां सहृदयानां-मनोरञ्जनाय न भवति। तत्र मानवमात्रस्य कल्याणं निहितं भवति। तस्मिन् शृङ्गारादिरसस्याभिव्यक्तिः कान्तोचितमाकर्षणमुद्दिश्य भवेन्नाम किन्तु सा प्रयोजनमौलितां न व्रजति।

भामहेन काव्यवस्तुनश्चतुर्धा विभागः कृतः—

'वृत्तदेवादिचरितशंसि चोत्पाद्यवस्तु च।
कलाशास्त्राश्रयञ्चेति चतुर्धा भिद्यते पुन.॥'

(काव्याल० १।१७)

अनुत्पाद्यमुत्पाद्यं च द्विविधं काव्यवस्तु निरूप्यानन्दवर्धनोऽनुत्पाद्ये वस्तुन्यपि रसादीनां व्यञ्जकत्वमुद्दिश्य कविकल्पनया संस्करणं समपेक्षत—

विभावभावानुभावसञ्चार्यौचित्यचारुणः ।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ॥
इतिवृत्तवशायातां त्यक्त्वाऽननुगुणां स्थितिम् ।
उत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयः ॥

(ध्वन्या० ३।१०।११)

महाकाव्यरचनाविधाने भामहेन पञ्चसन्धीनां (मुखप्रतिमुख-गर्भ-विमर्शोपसंहृतीना) समन्वस्योल्लेखो व्यधायि। प्राय. सर्वेऽप्याचार्या नाट्यसन्धि-समन्वयस्य चर्चामकुर्वन्। प्रथमतस्तु पञ्चसन्धीना कल्पना रूपकदृशा कृतासीत् पुनः महाकाव्ययोजनायामपि आसामुपयोगित्वं स्वीकृतम्। नाट्यसन्धिक्रमेण वस्तुविन्यासे क्रमबद्धता भवति। अत आसामावश्यकता प्रतिपादिता। विषयेऽस्मिन्नानन्दवर्धनस्य स्थापना नूनमेव स्वागतार्हा—"सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया। न तु केवलया शास्त्रस्थितिसम्पादनेच्छया।" (ध्वन्या० ३।१२) "सन्ध्यङ्गानि यथालाभमत्र विधेयानीति" विश्वनाथोऽवदत्। (सा० द० पृ० ५५१ चौ०)

सन्धिसन्ध्यङ्गाना सम्यक् संघटनार्थमेव आनन्दवर्धनेनेतिवृत्तस्याननुगुणां स्थितिं त्यक्त्वा रसोचितकथोन्नयः स्वीक्रियते। लब्धप्रचारेऽपि-अनवलोकिते वस्तुनि रसाभिव्यक्तये—आक्षेपग्रस्तस्थलानां परिमार्जनाय वा परिवर्तनं परिवर्धनं वा कवि.कर्तुं शक्नोति यथा रामायणस्य प्रख्याते वस्तुनि सनातनकविविरचिते 'सीताचरिते" दृश्यते, किन्तु प्रत्यक्षतः सहृदयजनदृष्टं कञ्चित् सत्पुरुषमाश्रित्य महाकाव्यं कुर्वाण कविः सन्धिसन्ध्यङ्गघटनाय सत्येतिवृत्ते तद्विपरीते कल्पनाश्रितमात्रे परिवर्तने कथं प्रवृत्तः स्यात्। यथा "तिलकयशोऽर्णवे" आफलोदयकर्मणि कृतप्रयासोऽपि तन्नायको लोकमान्यस्तिलकः स्वातन्त्र्यफलमलब्ध्वैव दिवङ्गतः। यथा वा "गान्धिचरिते" आफलोदयकर्माऽपि तन्नायकः महात्मा गान्धी गोडशेनाथूरामेण हत [1] सन् स्वर्गमगात्। "सुभाषचरिते"ऽपि तन्नायको दुर्घटनायां मृतो वर्णितः। श्रीनेहरूचरितेऽपि तन्नायकस्य जवाहरलालस्य मृत्युरेव वर्णितः। एतेषु महाकाव्येषु नायकाभ्युदयमात्रस्याप्रबन्धं चर्चा न दृश्यते कारागृहेऽपि स्थिता एते वर्णिताः। एतेषु महाकाव्येषु न केवल सन्ध्यङ्गानामपितु सन्धीनामपि सम्यक् निर्वाहो न दृश्यते तथापि-एतेषां महाकाव्यत्वे नास्ति शङ्का।[2] वस्तुतः सन्धीना संघटनं सर्वात्मना शोभनम्,

१. २. नायकवधौचित्यविषये 'संस्कृत महाकाव्यो का समालोचनात्मक अध्ययन' (१८६१ से ७० ई०) इति विषये जबलपुर विश्वविद्यालयतः प्रस्तुतो लेखकस्यास्य शोधप्रबन्धो द्रष्टव्यः ४३६ तः ४४० पृ० यावत्, महाकाव्यत्वसिद्धये समग्रः शोधप्रबन्धोऽवलोकनीयः।

यदि प्रख्यात-कथावस्तुन आत्मनो रक्षा भवेत्। सन्धिसंघटनाय प्रत्यक्षदृष्टे वस्तुनि परिवर्तनमनौचित्यकरमिति प्रतीयते, तत्रेतिहासरक्षणमपि अवश्यं वर्तते। आनन्दनिष्यन्दिष्वपि-अन्यान्यमहदुद्देश्य-समन्वितेषु महाकाव्येषु आस्वादं गृह्णन्नितिहास-पराङ्मुखः क्वचिदेव सहृदयो मिलेन्नाम। उत्पाद्यकथा-वस्तुनि सन्धिसन्ध्यङ्गघटनमनिवार्यं स्यान्नाम। सम्भवत उत्पाद्यवस्तुसमन्वित-मेकमपि महाकाव्यं नास्ति। आधुनिकेषु प्राचीनसाहित्यमाश्रित्य प्रणीतेषु गणपतिसम्भव-रुक्मिणीहरण--सीताचरित-गङ्गासागरीयादिषु-इदानीन्तनवस्तु-सम्पृक्तेषु च शिवराज्योदयक्षत्रपतिचरितादिषु शोभनं सन्धिसंघटनं पूर्ववदेव दृश्यते। व्यवस्थेयं महाकाव्ये वर्ण्यविषयानुरोधेन तु स्वागतार्हा किन्तु महा-काव्यतत्त्वदृशाऽनिवार्यतां न व्रजति।

महाकाव्यकथावस्तुनि वर्णनीयविषयेषु भामहेन मन्त्रणा-दूतसम्प्रेषणा-दीनां स्पष्टतयोल्लेखोऽकारि। "ऋद्धिमदि" ति कथनेन बहुविधानां नागर-प्राकृतिकानां वर्णनानां समाहारः प्रस्तुतीकृतः। दण्डिविश्वनाथप्रभृतिभिर्विषयेऽ-स्मिन् विस्तरेण सूची व्यधायि—"नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनैः, उद्यानसलिल-क्रीडामधुपानरतोत्सवैः। विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः, मन्त्रदूतप्रयाणाजिनायका-भ्युदयैरपि" (काव्यादर्श—१।१६, १७ तथा च साहित्यद० ६।३२२, २३)। प्रकृत-वर्णनादिकं भारतीयजनमानसेऽहर्निशं विराजमानया निसर्गश्रिया [illegible]ताया भारतवसुन्धराया अशकलिताकलनायोपगित्वाद् विभावरूपेण रस-निष्पत्तये च वर्णनीयमभवत्। वाल्मीकिकालिदासादिषु तत् स्वाभाविकं काव्य-वस्तुसम्पृक्तं च विद्यते। शनैः-शनैः प्रकृतिवर्णनं रूढिबद्धं निष्प्राणं च सञ्जातम्। भारतीयकवेः प्रकृतिसान्निध्यं स्वाभाविकमस्ति न तदारोपितमात्रम्। यतोहि-अस्य राष्ट्रस्य सभ्यतायाः संस्कृतेर्ज्ञानविज्ञानयोर्वा विकासोऽरण्यानां निभृत-सात्त्विकाश्रमेषु अभवत्। काव्यशास्त्रिणां समग्रां सूची मनसि निधाय यत्र वर्णनं विद्यते तत्र प्रकृतिवर्णनादिकमस्वाभाविकं कथावस्तुनोऽसम्पृक्तं दृश्यते। अतो महाकाव्यलक्षणे सूचीस्थाने भामहस्य—ऋद्धिमच्छब्दः समीचीनो व्यापकश्चास्ति। दण्डी तु न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति" यद्युपात्तेषु सम्पत्तिराराधयति तद्विदः।" (काव्यादर्शे १।२०) इत्यप्युक्त्वा स्वसूचीबद्धानां वर्णनानामनिवार्यतां शिथिलयति। विश्वनाथोऽपि "यथायोगमेव" वर्णनं वाञ्छति (सा० द० ६२४)।

महाकाव्यतत्त्वेषु पुरुषार्थचतुष्टयस्य चर्चाऽपि बहुधा प्राप्यते। कामार्थ-गुणसंयुक्तं धर्मार्थगुणविस्तरमिति" (वा० रा० बाल० ३।८) वाल्मीकिर्निगदितवान् किन्तु भामहः—"चतुर्वर्गाभिधानेऽपि भूयसार्थोपदेशकृदि" ति—उक्त्वा महाकाव्ये रुपुषार्थेषु अर्थस्य प्राधान्यं स्वीकुरुते। दण्डी "चतुर्वर्गफलायत्तमि" ति (काव्या

दर्शे १।१५) वदति। "चत्वारस्तस्य वर्गास्युस्तेष्वेकं च फलं भवेदि" ति (सा० द० ६।३१८) उक्त्वा विश्वनाथः कस्याप्येकस्य प्राधान्यं स्वीकरोति। एतेनात्र सिद्ध्यति यत् महाकाव्ये चतुर्णामपि पुरुषार्थानामेकस्य वा प्राधान्यमवश्यं स्यात्।

भामहेन प्रायो महाकाव्यस्य मूलभूतानि तत्त्वानि प्रतिपादितानि आसन्। तथापि युगानुरूपं परवर्तिभिः काव्यशास्त्रिभिर्मङ्गलाचरणादिबाह्य-व्यवस्थासम्बद्धा नियमा विनियोजिता। 'आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखमि' ति दण्डिप्रभृतिभिरुक्तम्। आशीर्वादनमस्क्रियाभ्या सह वस्तुनिर्देशोऽपि कथं मङ्गले हेतुरिति विषये किञ्चिद् वक्तव्यम्। वस्तुनिर्देशं कुर्वाणः कवि.—महाकाव्यारम्भे तत्प्रारूपं भवननिर्माणात्प्राक्'मानचित्रमिव प्रस्तौति। तदनु-सृत्यादितः समाप्तिं यावत् स्वकाव्यवस्तुनो यथायथं व्यवस्थितं पल्लवनं करोति। महाकाव्यस्य क्रमबद्धता, वस्तुनिर्देशस्य निर्विघ्नतारहस्यम्। वाल्मी-कीयरामायणस्यादिमः सर्गो वस्तुनिर्देश एव। नमस्क्रियया सहापि वस्तुनिर्देशो भवितुमर्हति। यथा कालिदासस्य रघुवंशारम्भे (सोऽहमाजन्म० १।५-८) श्रीहर्षस्य नैषधीयचरितादौ च दृश्यते। महाकाव्यत्वसिद्धये मङ्गलाचरणा भावेऽपि प्रकृतिवर्णनपरं प्रथमं पद्यमपि वस्तुनिर्देशात्मकं मङ्गलमिति कथनं न युज्यते। यतो हि मङ्गलाचरणरहिता किन्त्वन्यप्रमुखवैशिष्ट्यसमन्विता काचित् कृतिर्महाकाव्य-पदात् च्युता न भवति। नमस्क्रियाशीर्वादयोरभिस्वीकृतिर्धर्म-प्राणदेशस्य भारतस्य श्रद्धाभरितस्य विश्वासस्य सत्परिणामः। फलितमेतद् यन्मङ्गलाचरणमुचितं त्वस्ति किन्तु न तदनिवार्यं तत्त्वम्।

एवञ्च खलनिन्दा, एकस्मिन् सर्ग एकस्यैवच्छन्दसः प्रयोगोऽन्ते च तत्परि-वर्तनम्, अग्रिमाया. कथायाः सर्गान्ते सूचना, महाकाव्यानाम्, सर्गनाम चेत्या-दिकं किमपि महत्त्वपूर्णं तत्त्वं नास्ति यद्विना महाकाव्यत्वं प्रभावितं भवतु।

महाकाव्ये संवादयोजनाविषये भामहादिभिर्न स्पष्टतया व्यलेखि। आधुनिकभारतीयाचार्येषु स्वर्गीयो रामचन्द्रशुक्लो महाकाव्यस्य चत्वारि तत्त्वानि प्रामुख्येन स्वीकृतवान्—।[1]—(१) इतिवृत्तम्, (२) वस्तुव्यापार-वर्णनम् (३) भावव्यञ्जना, (४) संवादश्च। एतेषु प्रथमतस्तृतीयं यावत् बहुचर्चितानि तत्त्वानि किन्तु 'संवादः' महाकाव्यस्य महनीयमेकं तत्त्वमासीत् यत् प्रशस्तमहाकाव्येषु सर्वत्र समुपलभ्यमानमपि-अनुल्लिखितमासीत्। यदि नाट्यसन्धिभिर्वस्तुविन्यासे व्यवस्थाऽऽयाति तर्हि नाटकीये. संवादैर्विषयवस्तुनः प्रभावः परिवर्धते। वस्तुतः बीजबिन्दुप्रभृतीना। सुभगः सन्निवेशः संवादेष्वेव

---

१. द्र० तुलसीदास पृ० ३६६ स० १९५३ ई०।

भवति। संवादैः पात्रचित्रणं हृदयस्पर्शि प्रेरकञ्च भवति यत् महाकाव्यसंरचनाया एकं विशिष्टं प्रयोजनमस्ति। संवादाभावे काव्यास्वादावसरे सहृदयस्य समक्षं कवेरपि सत्ता समुपस्थितेव तिष्ठति। अतो वर्णनीयस्य पात्रस्य व्यक्तित्वमनावृतरूपेण सहृदयसमक्षं नायाति। संवादाशानामेव महत्त्वमेतद् यदद्य वयं कथयाम —'गीताया स्वयं भगवताऽभाणि,' 'रामायणे च स्वयं रामेणाभाणि' व्यासोऽथवा वाल्मीकिर्वदति—इति सहृदयशिरोमणयो न वदन्ति तत्र वदन्तु नाम कवेर्नाम कदाचित् काव्यशास्त्रदत्तदृष्टयः समालोचकाः।

कविः समग्रां रचनामेवं प्रस्तौतु यत् कविस्थाने वर्णनीयस्यैव पात्रस्य व्यक्तित्वमनावृतरूपेण स्फुटं भवतु सत्पात्रस्य व्यक्तित्वं चैवं प्रतीयेत यत् तज्जीवनपद्धतेरनुकरणं मानवमात्रस्य कल्याणाय भवतु। संवादाशैरेतद् विशेषतः साध्यमस्ति। रामप्रमुखानां महाकाव्यनायकानां संवादवाक्यानि प्रायेण समुचितकार्य-निर्धारणावसरे सहृदयानां जिह्वाग्रे नरीनृत्यमानानि दृश्यन्ते। अतः संवादः महाकाव्यस्यानिवार्यं तत्त्वमिति सिध्यति।

महाकाव्यसंरचनाया शास्त्रीयनियमानुपालनं गतानुगतिकतामात्रं नास्ति। तद्गतनियमनिर्वाहादेवाद्य महाकाव्यस्य स्वरूपं सुरक्षितं दरीदृश्यते। सुखदमेतदाश्चर्यं यत् स्वातन्त्र्यानन्तरं शताधिकानि महाकाव्यानि प्रणीतानि विलसन्ति।[1] एतासु रचनासु परम्परां प्रति श्रद्धाया आधुनिकतां प्रति आकर्षणस्य च मधुरतरः सङ्गमो दृश्यते।

काले-काले परिवर्तमानं स्वरूपं दृष्ट्वा तस्य सर्वाङ्गशुद्धा लक्षणप्रस्तुतिः कठिना तथापि पूर्वाचार्याणां मतानि—अनुसृत्य—आधुनिकानि च महाकाव्यानि दृष्ट्वा मुख्यानां तथ्यानां सङ्कलनमेवं कर्तुं शक्यते—

'सर्गैर्वृत्तैश्च बद्धं सहृदयहृदयाह्लादिशब्दार्थरम्यं।
संवादैश्चोच्चशिल्पैः सततरसमयं ग्रन्थिमुक्तं समृद्धम् ॥
पात्रं स्याद् यस्य मुख्यं परमगुणयुतं लोकविख्यातवृत्तं॥
भव्यं लोकस्वभावं महदपि महतां तन्महाकाव्यमास्ते ॥'

---

१. महाकाव्याना परिचयार्थं सर्वगन्धायाश्चतुर्थपञ्चममञ्जर्योः 'स्वातन्त्र्योत्तरीया महाकाव्यसमृद्धिरिति' नाम्ना सन्दर्भोऽवलोकनीयः।

---

## १९६१ ई० वर्षतः १९७० यावत् प्रणीतानि महाकाव्यानि तेषां कवयश्च

| काव्यनाम | प्रणेता | प्राप्तिसङ्केतः |
|---|---|---|
| १. अद्भुतम् | जग्गूवकुलभूषणः | २७२१ इवक्रोसरीड मल्लेश्वरम् वंगलौर-३ । |
| २. ऊर्मिलीयवृत्तम् | श्रीनारायण शुक्लः | गर्ग प्रकाशनम् खोड़ा वारा-दीक्षित देवरिया (उ० प्र०) |
| ३. उषोहरणम् | स्वामी अनन्तानन्दः | वाराणसी (उ० प्र०) |
| ४. एकनाथचरितम् (अप्रकाशितम्) | विश्वनाथ केशवच्छत्ते | जोगलेकरवाड़ा सिद्धेश्वर आली कल्याणजि० ठाणे । |
| ५. किरातार्जुनीयम् (अप्रकाशितम्) | जगन्नाथ पाठकः | गङ्गानाथझाशोधसंस्थानम् इलाहाबाद (उ० प्र०) |
| ६. कर्णार्जुनीयम् | स० विन्ध्येश्वरी प्र० शास्त्री | स्वयंभाति पुस्तकालय ४३।१७ सदानन्द बाजार वाराणसी (उ० प्र०) |
| ७. कृष्णचरितामृतम् | श्रीकृष्ण प्रसाद शर्मा घिमिरे । | १७।३५६ ढंगाल गहिरी धारा काठमाण्डू (निपाल) |
| ८. क्षत्रपतिचरितम् | उमाशङ्करशर्मा त्रिपाठी | ६८ अध्यापकनिवास काशी विद्यापीठ वाराणसी (उ० प्र०) |
| ९. गङ्गासागरीयम् | स्व० विष्णुदत्त शुक्लः | अभिनव साहित्य प्रकाशन सागर (म० प्र०) |
| १०. गणपतिसंभवम् | स्व० प्रभुदत्तशास्त्री | २।१७८६ स्टेट बैंक-कालोनी चांदनी चौक दिल्ली—६ |

| काव्यनाम | प्रणेता | प्राप्तिस्रोत |
|---|---|---|
| ११. गान्धिचरितम् | साधुशरण मिश्रः | राधावल्लभ मिश्र जानकी संस्कृत विद्यालय नरकटिया गंज चम्पारन् (विहार) |
| १२. गान्धिविजयम् | स्व० लोक नाथशास्त्री | ऋतम्भरा, बी–५ सरस्वती विहार जबलपुर (म० प्र०) |
| १३. गान्धिसौगन्धिकम् (अप्रकाशितम्) | सुधाकर शुक्लः | कविकुलाय, दतिया (म० प्र०) |
| १४. गान्धिगौरवम् | स्व० शिवगोविन्द त्रिपाठी | शिवसागर त्रिपाठी ए०६५, जनताकालोनी जयपुर (राजस्थान) |
| १५. गोस्वामितुलसीदास-चरितम् | हरिहर प्रसाद द्विवेदी | वेद व्रत शर्मा भारतीय साहित्य संघ एटा (उ० प्र०) |
| १६. झाँसीश्वरीचरितम् | सुबोध चन्द्र पन्तः | गंगा नाथ झा शोध संस्थान इलाहाबाद (उ० प्र०) |
| १७. तिलकयशोऽर्णवः | स्व० माधव श्री हरि अणे | कार्यवाहः तिलक महाराष्ट्र विद्यापीठ पुणे ( महा०) |
| १८. तर्जनी | दुर्गादत्त शास्त्री | शशी तथा शेषभूषण ग्रा० पो० नटेली त० देहरा गोपीपुर जिला कांगड़ा (हिमाचल प्रदेश) |
| १९. नाचिकेतसम् | कृष्ण प्रसाद शर्मा घिमिरे | १७।३५६ टंगाल गहिरी धारा काठमाण्डू (नेपाल) |
| २०. नानककाव्यम् | | भारती, जयपुर (राजस्थान) |
| २१ नारायणविजयम् | स्व० बालरामप्पणिक्कर | संस्कृत कालेज त्रिवेन्द्रम् |
| २२. नेहरूचरितम् | स्व० ब्रह्मानन्द शुक्लः | शारदा सदन ३८ राधाकृष्ण खुरजा (उ० प्र०) |

| काव्यनाम | प्रणेता | प्राप्तिसङ्केत |
|---|---|---|
| २३. नेहरू यशः सौरभम् | बलभद्र प्रसाद शास्त्री | गोस्वामी प्रकाशन सकाहा हरदोई (उ० प्र०) |
| २४. पद्मिनीपरिणयम् | श्रीनिवासाचार्यः | संविद, भारतीय विद्या-भवन बम्बई |
| २५. परशुरामदिग्विजयम् | छज्जूराम शास्त्री | साहित्य भण्डार मेरठ (उ० प्र०) |
| २६. प्रतापरामायणम् | ओगेटि परीक्षित् शर्मा | भाषाधिकारी, भाषा सचालनालय, न्यू सेण्डल-बिल्डिंग पुणे (महारा०) |
| २७. बोधिसत्त्वचरितम् | सत्यव्रत शास्त्री | मेहरचन्द लक्ष्मण दास स्ट्रीट नं० १।१ अंसारी रोड दरियागज, दिल्ली ११००१६ |
| २८. भारतीयस्वयंवरम् (अप्रकाशितम्) | सुधाकर शुक्लः | कवि कुलाय, दतिया (म० प्र०) |
| २९. भारतीयस्वातन्त्र्योदयम् | विश्वनाथ केशव छत्ते | जोगलेकर वाड़ा, सिद्धेश्वर आली कल्याण जि० ठाणे |
| ३०. भूभामिनीविभ्रमम् | रामसेवक मालवीयः | राम सेवक मालवीय ग्राम मऊयदुवंशपुर पो० गोपालपुर फैजाबाद (उ० प्र०) |
| ३१. भारतविजयम् (अप्रकाशितम्) | स्व० प्रभुदत्त शास्त्री | २।१७८६ स्टेट बैंक कालोनी चाँदनी चौक दिल्ली — ६ |
| ३२. महर्षिज्ञानानन्दचरितम् | स्व० विन्ध्येश्वरी प्रसाद शास्त्री | सूर्योदयः जगत्गंज वाराणसी (उ० प्र०) |
| ३३. मालवीयकाव्यम् | स्व० रामकुवेर मालवीयः | डॉ० सुधाकर मालवीय ५ लका, वाराणसी—५ |

| | काव्यनाम | प्रणेता | प्राप्तिसङ्केत |
|---|---|---|---|
| ३४. | ययातिचरितम् (अप्रकाशितम्) | कृष्ण प्रसाद शर्मा घिमिरे | १७।३५६ टंगाल गहिरी-धारा काठमाण्डू (नेपाल) |
| ३५. | यशोधरा | ओगेटि परीक्षित् शर्मा | भाषाधिकारी न्यूसेण्ट्रल-बिल्डिंग पुणे (महाराष्ट्र) |
| ३६. | योगिभक्तचरितम् | स्व० कालीपद तर्काचार्यः | श्री नरेन्द्र मठ रवि राम मोहन राय रोड, गढापार कलकत्ता—६ |
| ३७. | रक्ताक्तहिमालयम् (अप्रकाशितम्) | परमेश्वरदत्त त्रिपाठी | उजियार भरौली, कोरण्टा डीह बलिया (उ० प्र०) |
| ३८. | राधापरिणयम् | स्व० बद्रीनाथ झा | संस्कृत कालेज मुजफ्फपुर (बिहार) |
| ३९. | रुक्मिणीहरणम् | स्व० काशीनाथ द्विवेदी | बी० १।२२ अस्सी, वाराणसी (उ० प्र०) |
| ४०. | लेनिनामृतम् | पद्म शास्त्री | विश्वेश्वरानन्द शोध संस्थान साधु आश्रम होशियारपुर (पंजाब) |
| ४१. | वृत्रवधम् | कृष्ण प्रसाद शर्मा घिमिरे | १७।३५६ टंगाल गहिरी धारा काठमाण्डू (नेपाल) |
| ४२. | वामनावतरणम् (अ प्रका०) | राजेन्द्र मिश्रः | संस्कृत विभाग इलाहाबाद विश्वविद्यालय इलाहाबाद (उ० प्र०) |
| ४३. | विश्वमानवीयम् | विद्याधर शास्त्री | हिन्दी विश्व भारती बीकानेर (राजस्थान) |
| ४४. | वीरोदयम् | जैनमुनि ज्ञानसागरः | गनेशी लाल, रतन लाल कटारिया कपड़ा बाजार ब्यावर (राजस्थान) |
| ४५. | शिवराज्योदयम् | श्रीधर भास्कर वर्णेकरः | शारदा ४२१ सदाशिवपेठ पुणे—३० (महाराष्ट्र) |

| | काव्यनाम | प्रणेता | प्राप्तिसङ्केत |
|---|---|---|---|
| ४६. | सातवलेकरचरितम् (अपूर्णम् प्रकाशितं च) | विश्वनाथ केशवच्छत्रे | जोगलेकरवाड़ा, सिद्धेश्वर आली कल्याण जिला (महाराष्ट्र) |
| ४७. | सावित्रीचरितम् | आत्मानन्द शास्त्री | बम्बई—७ |
| ४८. | सीताचरितम् | रेवाप्रसाद द्विवेदी | मनीषा प्रकाशन डी० ३५।३१० जंगमवाडी वाराणसी (उ० प्र०) |
| ४९. | सुभाषचरितम् | विश्वनाथ केशव छत्रे | जोगलेकर वाड़ी सिद्धेश्वर आली कल्याण (महाराष्ट्र) |
| ५०. | स्वराज्यविजयम् | स्व० द्विजेन्द्र नाथ शास्त्री | भारती प्रतिष्ठान २४, आनन्द पुरी मेरठ (उ० प्र०) |
| ५१. | स्वामिविवेकानन्दचरितम् | त्र्यम्बक शर्मा भण्डाकर | चौखम्बा संस्कृत सिरीज आफिस चौक वाराणसी (उ० प्र०) |
| ५२ | रामचरितम् | श्रीपद्मनारायण त्रिपाठी | श्री रमाकान्त त्रिपाठी प्रवक्ता, संस्कृत विभाग के० जी० कालेज मुरादाबाद (उ० प्र०) |

## संस्कृतपद्यानुवादेन प्रस्तुतीकृतानि महाकाव्यानि

| | | | |
|---|---|---|---|
| १. | कामायनी | मूलकवि. स्व० जय शङ्कर प्रसाद (हिन्दी) अनुवादकः भगवद्दत्त शास्त्री | जनवाणी मुद्रक एवं प्रकाशक ३६ वाराणसी घोष स्ट्रीट कलकत्ता—७ |
| २. | कामायनी (अप्रकाशितम्) | मूलकविः स्व० जय शङ्कर प्रसादः (हिन्दी) अनुवादकः जगन्नाथ पाठक. | गंगानाथ झा शोध सस्थान, इलाहाबाद (उ० प्र०) |
| ३. | केशवीयम् | मूलकवि. केशवपिल्लः (मलयालम् कविः) अनुवादकः के० पी० नारायण पिषारोटी | के० वी० एन० पिसारोटी नारायणीयम् त्रिचुर—४ केरल |

| काव्यनाम | प्रणेता | प्राप्तिसङ्केत |
|---|---|---|
| ४. रामचरितमानसम् | मूलकविः स्व० गो० तुलसीदासः (हिन्दी) अनुवादकः जनार्दन गंगाधर शास्त्री रराटे | सूर्योदयः जगत्गंज वाराणसी ( उ० प्र० ) |
| ५. प्रियप्रवासः (अप्रका०) | मूलकविः स्व० अयोध्या सिंहोपाध्यायः अनुवादकः सुबोध चन्द्र पन्तः | गंगानाथ झा शोध-संस्थानम् इलाहाबाद (उ० प्र०) |

---

# सागरिका

सप्तदशवर्षे तृतीयोऽङ्कः




प्रकाशक

सागरिका-समितिः, सागर विश्वविद्यालयः

सागरम् (म० प्र०)

# सागरिका

सप्तदशवर्षे तृतीयोऽङ्कः

२०३५

सम्पादकः

डॉ० रामजी उपाध्यायः

सागरविश्वविद्यालये

संस्कृतविभागस्य प्राध्यापकाध्यक्षः

प्रकाशकः

सागरिका-समितिः, सागर विश्वविद्यालयः

सागरम् (म० प्र०)

प्रकाशिका

सागरिका-समितिः

सागर-विश्वविद्यालयः

सागरम् (म० प्र०)

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ४-०० रूप्यकाणि |
| वार्षिकम् | १२-०० रूप्यकाणि |
| आजीवन ग्राहकस्य | २००-०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र [जून-सितम्बर-दिसम्बर-मार्च] मासेषु |

सूच्यम्— आजीवन ग्राहकेभ्यः सागरिकायाः प्राचीना अपि सर्वेऽङ्काः सवस्त्र पुटबन्धाः निश्शुल्कमुपह्रियेरन् ।

मुद्रक

एकेडमी प्रेस

दारागंज, इलाहाबाद

# विषय-सूची


कूर्माचलेषु संस्कृत-साहित्य-संवर्धनम्

—अनन्त वल्लभ भट्ट … १

मेघदूतस्य काव्य-लक्षणम्

—डॉ० राधावल्लभ त्रिपाठी … २३

संस्कृताध्ययनस्यानुसन्धानस्य च दिशा व्यवस्थायाश्च

—विश्वनाथ मिश्र: … ३४

प्रकाश्यमाना: संस्कृत पत्रिका:

—य० कृष्ण शर्मा … ४१

'असुर'-शब्द विमर्श:

—शिव सागर त्रिपाठी … ५७

विंशशताब्दिकं संस्कृत-नाटकम्

—रेवा प्रसादो द्विवेद: … ६३

राजस्थानस्यैतिहासिक महाकाव्यानि

—रामलखन पाण्डेय: … ६६

भारवे बिम्ब-विन्यास:

—डॉ० अयोध्या प्रसाद द्विवेदी … ८०

कालिदासस्यावास भूमि:

—डॉ० रामजी उपाध्याय … ९५

महाकाव्य-परम्परायां सुजनचरितम्

—रामलखन पाण्डेय: … ९८

संस्कृत वृत्तम्

—डॉ० राधावल्लभ त्रिपाठी … ११०

ग्रन्थ समीक्षणम् … ११४

# कूर्माचलेषु संस्कृत-साहित्य-संवर्धनम्

(काशीहिन्दू विश्वविद्यालये भट्टस्य वसन्तवल्लभस्य पी० एच० डी०
उपाधये प्रस्तुतस्य निबन्धस्य सार )

पिथौरागढं अल्मोडा नैनीतालं चेति उत्तरप्रदेशस्य जनपदत्रयमभिव्याप्य स्थितं प्राकृतिकसौन्दर्यलसितं पर्वतीयं क्षेत्रं कूर्माचलं कथ्यते । संस्कृतसाहित्यसंवर्धनेऽस्य क्षेत्रस्य योगदानं प्रतिपाद्यते ।

**केदारपाण्डेयः**

सुप्रसिद्धच्छन्दोग्रन्थस्य वृत्तरत्नाकरस्य रचयिता केदारपाण्डेय. कूर्माचलस्य सीमाल्टा-ग्राम-वास्तव्य: कश्यपगोत्रोद्भवो ब्राह्मण आसीत् । कूर्माचलनरेशस्य ज्ञानचन्द्रस्य समकालीनोऽयं विप्रवरस्त्रयोदशख्रीष्टाब्दशतके बभूव । राजा ज्ञानचन्द्रोऽमुं धनादिभिर्बहु सम्मानयति स्म । पद्मापतिपाण्डेयनामधेयोऽस्य पिता शैवसिद्धान्तवेत्ता वेदज्ञश्चासीत् ।[1] सुप्रसिद्धोऽयं "वृत्तरत्नाकर इति" केदारपाण्डेयस्यैकमात्रं कृतिरस्ति ।

**वृत्तरत्नाकर.**

"उक्ता वसन्ततिलका तभजा जगौ ग" इत्यादिरूपेण छन्दसा लक्षणमुदाहरणञ्च युगपत्समुपस्थापयन् विख्यातोऽयं छन्दोग्रन्थ परिमाणे लघुता भजमानोऽपि वस्तुतो वृत्तरत्नाकर एव । लघुकायस्यास्य षट्स्वध्यायेषु १३६ संख्याकश्लोका प्रायेण सर्वेषा छन्दसामुपच्छन्दनविधानं सोदाहरणं प्रस्तुवन्ति ।

---

१ (क) पद्मापतिर्यत्सुतस्तु केदारश्छन्दशास्त्रवित् ।
यंभ्यद्रीशगुरुर्ज्ञानिचन्द्र. स्वदेशवर्धनात् ॥
तद्विप्रसमाजाच्च सीमाल्टीयं पदं पुरम् ।
विप्रेभ्वग्रचं दमार्धञ्चान्यत्प्रागवदक्षयं ददौ ॥

—रघुवंशस्य जगच्चन्द्रिकाख्या टीका ।

(ख) वशेऽभूत्कश्यपस्य प्रकटगुणगण शैवसिद्धान्तवेत्ता
विप्रः पद्येकनामा विमलतरमतिर्वेदतत्त्वार्थबोधे ।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्त
श्छन्दस्तेनाभिराम प्रविरचितमिदं वृत्तरत्नाकराख्यम् ॥

—वृत्तरत्नाकर. ।

### रुद्रचन्द्रः

रुद्रचन्द्र. कूर्माचलमहाराजस्य कल्याणचन्द्रस्यात्मज आसीत्। अकाल एव कालकवलिते पितरि रुद्रचन्द्रोऽल्पीयसि एव वयसि १५६९ ख्रीष्टाब्दे राजसिहासनमारुरोह। सुव्यवस्थितेन शासनेन निरन्तरमारञ्जयन् जनगण-मनासि प्रजावत्सलोऽयं प्रौढप्रतिभाशाली शासक. स्वकीयेन कवित्वेन-विविधान्यविधिभिश्च सुरभारती कूर्माचले प्रतिष्ठापयामास। अस्य संस्थान-पण्डिताः काश्मीरान् वाराणसेयाँश्चापि पण्डितान् स्वीयपाण्डित्येनातिरिच्यन्ते स्म। कूर्माचलं व्यवस्थाप्य तत्र भारतीयां संस्कृतिं समुल्लासयितुं संस्कृतं संवर्धयितुं चासौ बहु चकार। नवविंशतिवर्षाणि यावच्छासनं विधाय १५९७ ख्रीष्टवर्षेऽयं दिवङ्गत।[1] अस्य तिस्र. कृतय. सन्ति—

१. उषारागोदया नाटिका

२ श्यैनिकशास्त्रम्

३ त्रैवर्णिकधर्मनिर्णय

तत्र त्रैवर्णिकधर्मनिर्णय सुतरा नाम्ना संस्कृतलोके विहरन् कायेन पुनर्लुप्त। ब्राह्मणक्षत्रियवैश्यानामाचारशास्त्रत्वेनासौ प्रणीतः स्यादित्यस्य नाम्ना प्रतीयते।

#### उषारागोदया

सूत्रधारो नाटिकामेना श्रीकृष्णस्य बाणासुरविजयमुपलक्ष्याभिनेतुं निश्चिनोति, समनन्तरञ्च उद्धव प्रविशति। स बाणासुर पराजित्य उषा-मानेतु गतवन्तं श्रीकृष्णमभिलक्ष्य चिन्तयति, भाविनमुषानिरुद्धविवाहं च निर्विघ्न पूरयितुं विचारयति। ग्रैष्मेण तापेन विरहाग्निना चातितरा सन्तप्तोऽनिरुद्धो विदूषकेण सह रक्ताशोकमण्डपं सेवमानो दृश्यते। तदा महाराज्ञी हिन्दोलोत्सव सनाथयितुं दूत्या तमाह्वयति। तत्र गत्वा खिन्नेन मनसा महादेव्या सह दोलाया दोलायमानोऽयं मेघमण्डित-माकाशं व्याजीकृत्य हिन्दोलोत्सवं समापयितुमादिशति, तेन रुष्टा महादेवी च प्रसादयति। अथ उषानिरुद्धयो प्रणयं वारयन्ती महादेवी रुक्मवती बहुधा बहुवारं चानिरुद्धस्य चित्तमाकृष्य तस्य हृदिस्थं उषाविषयकमनुरागं शिथिली-कर्तुं प्रयतमाना साफल्यं नाधिगच्छति। अत्रान्तरे सख्या सह उषा वायुयाना-दवतीर्य प्रमदोद्यानं सेवमानानिरुद्धचित्रितचित्रफलकेन स्वकीयं मनो विनोदयति, कामोद्वेगवशान्मूर्च्छति च। तस्या. सखी चित्रलेखा ता शीतोप-

---

१. विश्वेश्वरस्य आर्यासप्तशत्या रसचन्द्रिकायामलंकारकौस्तुभे च रुद्रचन्द्रस्य वर्णन वर्तते।

चारेण स्वस्थीकर्तुं चेष्टते। दैवादश्वशालातो निर्गतानामश्वानामुपद्रवेण सा चेतयते, सख्या सह तमालकुञ्जे निलीयते च। तदैव विदूषकेण सह तत्र समागतोऽनिरुद्धस्तं चित्रफलकं विलोकयन् सकामो जायते। तदवलोक्य उषा तमालकुञ्जाद्बहिरागच्छति। तयोर्मिलनं जायते। कृष्णेच्छया उद्धवानुरोधेन च दत्तमुनि स्वकीयमन्त्रप्रभावादकालेऽपि वसन्तर्तुमुत्पादयति। महादेव्या. सम्मत्या तयोर्विवाह सम्पद्यते। नारद समागत्यामुं विवाहं साधु सम्पादयति।

उषानिरुद्धयोरनुरागरञ्जिता शृङ्गार - रसमुत्तोलयन्तीयं नाटिका पौराणिकमाख्यानमधिकृत्य प्रणयनमुपगतापि नाटकीयसंविधानैर्घटनाक्रमैश्चाद्यन्त वैलक्षण्यमावहति।[1] प्रणयव्यापारे पदे पदेऽवरोध, दासीविदूषकयोर्वाग्युद्धम्, वसन्तोत्सवादिकम्, प्रणयमीर्ष्यन्त्यापि महादेव्या निर्वहणे तदर्थं सहमति-प्रदानमित्यादिघटना नाटिकाया सौन्दर्यं वर्धयन्ति। हर्षस्य रत्नावल्या प्रभा-वितेयं नाटिकेति निर्विवादम्। कृतिरियं रुद्रचन्द्रस्यैवेति वाराणस्याः सरस्वती-भवने पूर्णतयोपलब्धाया अस्या हस्तलिखिताया नाटिकाया पुष्पिका प्रमाणयति।[1]

**श्यैनिकशास्त्रम्**

श्येनसम्बन्धिनी शिक्षामावहन्नाखेटविषयकोऽयं ग्रन्थ सप्तसु परिच्छे-देषु विभक्त।[2] तत्र कर्मानुषञ्जनाख्ये प्रथमे परिच्छेदे वेदपुराणादीना प्रमाणपुरः-सरं मृगयाया महत्त्वं प्रतिपादितम्। व्यसनहेयतानामके द्वितीयपरिच्छेदेऽष्टा-दशव्यसनेषु प्राथमिकानि सप्तदशव्यसनानि समासेनोपस्थाप्यान्तिमं मृगया-वर्णनं विस्तारितम्, मृगयाया दुर्व्यसनत्व च खण्डितम्। मृगयाविवेचनमिति तृतीये मुख्यतया आखेटस्याष्टौ भेदा विवेचिता.। श्येनविवेचनाख्ये चतुर्थे श्येनस्याखेटविधानम्, श्येनपक्षिणा जातिवर्णस्वभावादिविवेचनं च प्राप्यते। चिकित्साधिकारनामके पञ्चमे श्येनाना भोजनादिकं तेषा चिकित्साविधिश्चेति निरूपितम्। "श्येनपातेतिकर्त्तव्यता" इति षष्ठे श्येनपक्षिणा विविधा. क्रीडा विविच्य तेषां मृगयाया उपादेयत्वं प्रस्तुतम्। "मृगयानन्तरेतिकर्त्तव्यता" इति चरमे मृगयानन्तरं विधीयमानानि विश्रामस्नानभोजनादिकर्माणि विवेचितानि। सम्पूर्णे ग्रन्थे ३७४ संख्याकश्लोका सन्ति। तत्र मङ्गलात्मक प्रथमश्लोको यथा—

त्रैलोक्यश्रेयसे विष्णोर्यन्मित्रं साम्परायिकम्।
सापत्नमिन्द्रस्य च तद् वन्दे गारुत्मतं मह ॥ इति।

---

१. नाटिकेय जबलपुरशोधसंस्थानाद् डा० बाबूलाल शुक्लेन सम्पादिता प्रकाशिता च।

२. इति श्रीकूर्मगिरिवरेश्वर-श्रीमत्प्रतापवारिततमोभास्कर-श्रीमद्रुद्रचन्द्रदेवविरचितोषा-रागोदया नाम नाटिका परिपूर्णतामगात् ॥ श्रीः ॥ शुभमस्तु ॥

३ श्रीहरप्रसादशास्त्रिणा सम्पादकत्वेऽयं ग्रन्थ सर्वप्रथमं "एशियाटिक-सोसाइटी, बंगाल" इति संस्थया १९१० ई० वर्षे प्रकाशितः।

## त्रिलोचनजोशी

त्रिलोचनजोशी अल्मोडा-नगर्य्यांश्चीनाखान-नामके स्थाने १७३९ ख्रीष्टाब्दे जनिं लेभे। अस्य पिता लक्ष्मीपतिजोशी वेदवेदान्तादौ निष्णातः पण्डित आसीत्। लक्ष्मीपतेर्द्वितीया भार्या ललितामञ्जरी त्रिलोचनं प्रासूत। मुख्यतो भक्त कविरयं ज्योतिषधर्मशास्त्रादिविषयाणामपि पण्डितो बभूव। गुरुत्वेनासौ स्वकीयं पितरं स्मरति।[1] अस्य कृतीना विषये पद्यद्वयं श्रूयते।[2] तदनुसारेणैतेन पञ्च ग्रन्था विरचिता । ते सन्ति—

(१) भक्तिप्रबन्धकाव्यम्।

(२) बदरीशलीला।

(३) साहित्यसार ।

(४) सिद्धान्तसंग्राहकनिर्णय ।

(५) छायाप्रमाणं विदिशानिदानं वा।

किन्त्वेतेषु भक्तिप्रबन्धकाव्यमेवोपलभ्यते सम्प्रति। अन्ये कालकवलिता वा कुत्रचिल्लुप्ता वा। नामभ्यस्तेषां प्रतिपाद्यं शक्यतेऽनुमातुम्। सिद्धान्त-संग्राहकनिर्णयो धर्मशास्त्रविषयको ग्रन्थ । छायाप्रमाणे विदिशनिदाने वा ज्योतिषस्य यान्त्रिकं प्रकरण प्रपञ्चितम्।

### भक्तिप्रबन्धकाव्यम्

भक्तिप्रबन्धकाव्यस्य धर्मार्थकाममोक्षाख्येषु चतुर्षु तरङ्गेषु ५७१ श्लोका सन्ति।[3] श्रीकृष्णभक्तिभावनाभरितं काव्यमिदं भक्तिसाहित्यसागरस्या-मूल्यं रत्नमिव चकास्ति। भक्तस्य हृदयमत्र भगवल्लीलार्णवे मग्न दृश्यते। श्रीकृष्णस्य विविधान् गुणान् गायन् कविर्विस्मरति स्वात्मानम्। एकत्र कृष्ण प्रति स्वकीयभक्त्या. कारणमन्वेष्टा स कथयति—

> न मे विद्यावृत्तं हरिजनसमाजस्थितिरपि
> श्रुतीनामभ्यास सुरयजनदानादिकमपि ।

---

१. भक्तिप्रबन्धकाव्यम्, पृष्ठम् २१ तथा १०६।

२. भक्तिप्रबन्धं बदरीशलीला साहित्यसारं त्रितयं विरच्य।
स धर्मशास्त्रेऽरचयत्सुधीमान् सिद्धान्तसंग्राहकनिर्णयं च॥
यन्त्रेऽपि घट्यादिनिदानहेतु छायाप्रमाणं विदिशानिदानम्।
ध्रुवेण रात्रौ रविणा दिवापि प्रयुज्यमानं धृतनिम्नलेखम्॥

३ भक्तिप्रबन्धस्य प्रकाशनं नैनीतालतः श्रीकृष्णजोशीद्वारा १८१२ ख्रीष्टाब्दप्राये सञ्जातमासीत्।

न सन्तोष. सत्यं न गुरुकुलसेवा च नियता
न जाने को हेतुर्यदिह यदुदेवे रतिरभूत् ॥ २७१

## शिवकवि

शिवकवि कूर्माचलस्य राज्ञः कल्याणचन्द्रस्य (१७२९-१७४७ ई०) राजपुरोहित आसीत्। कविरयं अलमोडाजनपदस्य बाडाखोडा-ग्रामे निवसति स्म। विश्वरूपनामधेयोऽस्य पिता राज्ञो बाजबहादुरचन्द्रस्य सस्थानपण्डित आसीत्। शिवकवे द्वे कृती –कल्याणचन्द्रोदयम्, कूर्माचल-काव्यं चेति। तत्र द्वितीया नाम्नैव श्रूयते।

कल्याणचन्द्रोदयं पुनर्वाराणसेयस्य गोपालचन्द्रपाण्डेयस्य पुस्तकालये राजते। इदं हि सप्तसर्गीयमैतिहासिकं काव्यम्। कूर्माचलस्य क्रमानुबद्ध-मितिहासं ज्ञातुं काव्यमिद महदुपादेयम्। अत्र राज्ञः कल्याणचन्द्रस्य शासने घटिताना विविधैतिहासिकघटनानां यथार्थं चित्रमुपस्थापितम्। १६५० तः १७५० ई० वर्षप्राय यावद् मुगल-रुहेल-गोरखाणामाक्रमणैराक्रान्तं कूर्माचल पदे पदे विपरिवर्तते। तत्सर्वमत्र वर्णितम्।

## लक्ष्मीपतिपाण्डेय

लक्ष्मीपतिपाडेय· अलमोडाजनपदस्य पाटियाग्रामवास्तव्यो भरद्वाज-गोत्रोद्भवो ब्राह्मण। अस्य स्थितिकालः सप्तदशशताब्द्या उत्तरार्धमष्टा-दशशताब्द्या प्रथमचरणं चाभिव्याप्य तिष्ठति। विप्रोऽयं काश्या विद्यामवा-प्तवान् तत्काव्यीयघटनाभिरनुमीयते। कल्याणचन्द्रोदये शिवकविरेन राज्ञ उद्योतचन्द्रस्य धर्माध्यक्षत्वेनोल्लिखति। दिल्लीराजसभया सविशेषं सम्बन्धितोऽयमित्यस्य रचनया निश्चीयते। कविरसौ विविधभाषाणां सङ्क्रमयिता विभिन्नसंस्कृतीना समन्वयिता चास्ति। अस्य कवित्वं गद्ये पद्ये च समानं विलसति। विविधविषयाणा विद्वान्नयमितिहासे स्वकीया रुचिं भृशं न्यबध्नात्। एतेन त्रयो ग्रन्था रचिता। ते सन्ति—

१. फर्रुखशेयरचरितम्

२ अब्दुल्लाचरितम्

३. यागेश्वरमाहात्म्यम्

तत्र यागेश्वरमाहात्म्यमद्य यावदमुद्रितम्। अस्यैकमात्रं प्रतिः "इण्डिया आफिस लन्दन" इत्यत्र सुरक्षितास्ति। दारुकवनस्थल्या यागेश्वर-महादेवस्य माहात्म्यमत्र वर्णितं स्यादिति प्रतीयते। द्वादशज्योतिर्लिङ्गेषु तत्रत्य-यागेश्वर-महादेवोऽपि गण्यते।

फरु^खशेयरचरितम्

काव्यमिदमैतिहासिकं १८३७ संख्याकश्लोकैरुपनिबद्धम् ।[१] औरङ्गजेबस्य मरणादारभ्य रफीउद्दजीतस्य राज्याभिषेकं यावत्संजाता विविधैतिहासिक्यो घटना अत्र याथातथ्यं चित्रिताः। तत्र केन्द्रे फरु^खशेयर एवेति ग्रन्थस्य नाम समुचितम्। सर्गपरम्परामनादृत्य सम्पूर्णमपि प्रबन्धकाव्यमिदं शीर्षकेषु विभक्तम्। "नृपतिनीतिज्ञगर्भवृत्तम्" इत्याख्यपूर्वपीठिकाया राज्ञा नीतिशास्त्रं प्रपञ्चितम्। ततोऽस्य त्रयो भागा दृश्यन्ते। प्रथमभागस्यैकादशशीर्षकेषु राज्याधिकारप्राप्तये आब्दुल्लेन सह फरु^खशेयरस्यानुबन्धनपरं नीतिनिर्धारणं तत्कार्यान्वियनं च स्त । द्वितीयभागस्य सप्तशीर्षकेषु फरु^खशेयरस्य मुगलसाम्राज्याधिकरणम् शासनम्, हिन्दूधर्माचरणम्, तत्प्रयुक्तमुगलानामौदासीन्यं चेति वर्णितम्। तृतीयभागस्य द्वादशशीर्षकेषु प्रधानतया फरु^खशेयरस्य चरमं शासनं चर्चितम्।

अब्दुल्लाचरितम्

अब्दुल्लाचरितं गद्यपद्यमिश्रितमैतिहासिकं काव्यम्।[२] फरु^खशेयरचरितस्य पूरकत्वेनैव चम्पूकाव्यस्यास्य प्रणयनमभूत्। सम्पूर्णोऽयं ग्रन्थः १८०४ अनुच्छेदेषु विभक्तः। फरु^खशेयरचरित इवात्रापि अनुष्टुब्भिन्नवृत्तप्रयोगो न जातु विलोक्यते। प्रारम्भिके ५०० श्लोकैरत्र भारतीयशिक्षानुसारं राज्ञामाचारशिक्षा प्रस्तुता।[३] अथानुजसहायतया आब्दुल्लो मुहम्मदसाहं कारागारादुन्मोच्य राजपदे चकार, किन्तु मुहम्मदशाह आब्दुल्लस्य प्रभावातिशयं शंकमानस्तस्य भ्रातरं हुसैनं हतवान्। तस्मादतितरां क्रुद्धमना आब्दुल्ल इब्राहिमं सम्राजमुद्घोष्य मुहम्मदशाहमाक्रामितवान् पराजितश्चाभूत्।

---

१. अस्य प्रकाशनं "प्राच्यवाणी, कलकत्ता" इत्यत. श्रीयतीन्द्रविमलचौधरीमहोदयस्य सम्पादकत्वे १९५९ ई० वर्षे संजातम्।

२. काव्यमिदं "प्राच्यवाणी, कलकत्ता" इत्यतः १९४७ ई० वर्षे प्रकाशितम्।

३. उदाहरणार्थम्—

भार्यातः पुत्रतश्चैव भूसुरादपि भृत्यतः ।
भरतः शत्रुतश्चैव जलतो वह्नितस्तथा ॥
पाचकाद् वैद्यतश्चैव सिंहतः सर्पतस्तथा ।
वृश्चिकाद् द्विपतश्चापि चौरतः सार्वभौमतः ॥
स्वदेहरक्षणं कार्यं सर्वभावेन भूमिपैः ।
वयोऽभिजनधाम्वेषश्रुताध्ययनकर्मणाम् ॥
आचरेत्सदृशी वृत्तिमजिह्मामशठां तथा ।

—अ० च०, ३९३-९६ पृ० १४ ।

फर्रुखशेयरचरितम्, अब्दुल्लाचरित चेत्युभयत्रापि उर्दू, अरबी, फारसीत्यादिभाषाणा शताधिका शब्दा बहुत्र प्रयुक्ताः। यथा—आलम खत-खबर-वजीर-गोस्त-महबूब-अल्लाह्-औरत-उम्र-दुश्मन-हैवान-कम्बख्त-यकीन-गुनाह्-वरदास्त-कबूल-माहताबे—त्यादय । काव्यद्वये भाषासारल्यं पौराणिकं प्रतिभाति। काव्यत्वदृष्ट्या गौणतामावहृदपि काव्यद्वयमिदमैतिहासिकदृष्ट्या महत्त्वशिखरमध्यारुह्य विराजते। मुगलशासनस्यान्तिमः कालोऽत्र तथा याथार्थ्येन विविच्य चित्रित यथेतिहासग्रन्थेष्वप्यन्यत्र नावलोक्यते।

## सुकृतिदत्तपन्तः

मूलत कूर्माचलस्थपिथौरागढमण्डलान्तर्गतस्य उप्राडा-ग्रामस्य निवासी सुकृतिदत्तपन्तो राज्याश्रयमवाप्य नयपाले स्थायित्वेन न्यवसत्। अस्य जन्मकाल. १८८० वैक्रमाब्ददेशीयो वर्तते। तदनुसारेणास्य स्थिति राजेन्द्रविक्रमशाहस्य शासनकाले स्वीक्रियते। कार्तवीर्योदये महाकाव्येऽसौ प्रतिसर्गान्तं स्वपरिचयं लिलेख। तदनुसारममुष्य पिता भवदत्तनामा विद्वान् माता च भार्गवी देवी आस्ताम्। सुकृतिदत्तपन्तस्य द्वे कृती प्राप्येते। ते स्त.—

१ कार्तवीर्योदयम्

२ दक्षिणकालीस्तोत्रम्

एते द्वे अपि नयपालस्य राष्ट्रियेऽभिलेखागारे सुरक्षिते स्त । तत्र दक्षिणकालीस्तोत्रं शक्त्यास्तान्त्रिकोपासनामधिकृत्य कृतं स्तोत्र-काव्यमस्ति।

### कार्तवीर्योदयम्

कार्तवीर्योदयं ऊनविंशशताब्द्या महत्त्वपूर्णं महाकाव्यम्।[१] षोडशसर्गात्मकमिदं नैषधीयचरितं किरातार्जुनीयं च सुदूरमन्वेति। अस्य केचन श्लोका अत्र विलोक्यन्ताम्—

> मन्दमन्दचलिताग्निमित्रका चित्रतोषककुमारसंभवा।
> सर्वतोऽप्यलघुवंशराजिता कालिदासकवितेव सा पुरी ॥ १ ३६
>
> आख्यातकृत्तद्धितप्रत्ययार्थामुपात्तपूर्वप्रकृतिः प्रयत्नात्।
> कथं सदृश्या बहुधास्तुरम्या शब्दस्मृतिर्विस्मृतिमेतु तत्र ॥ १.२७
>
> जनता न नता न भूपते रहिता नो रहिता न सम्पदा।
> न हिता सहिता न च श्रिया न रमा नाचरमा रमातरम् ॥ २ ३

१. ग्रन्थोऽयं सम्प्रति सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य "सारस्वती-सुषमा" इति पत्रिकाया प्रकाशनार्थं स्वीकृत ।

### भवानन्द.

अल्मोडाजनपदस्य चीनाखान-ग्रामवास्तव्योऽष्टादशखीष्टशताब्दिका विद्वान् भवानन्द "बदरीशस्तोत्रम्" प्रणीतवान्। स्तोत्रस्य प्रारम्भिक पद्यद्वयमत्र प्रस्तूयते—

बदरीश दरी न ते श्रिता वसु नाप्त वसुधातलेऽटता।
पठता न मयागमोऽर्जित. शठतायै मम जन्म केवलम्॥
रटता तव नाम बाह्लतो घटतानर्थपरम्परा हृवा।
नटता जगतीषु दर्शिता हठता सा विषयेषु नोज्झिता॥

### विश्वेश्वरपाण्डेय.

विश्वेश्वरपाण्डेयः अल्मोडाजनपदस्य पाटियाग्रामवासिनो लक्ष्मीधर-पाण्डेयस्यात्मज। अस्य स्थितिकालोऽष्टादशखीष्टाब्दशतकस्य पूर्वार्धो निश्चीयते। गुरुत्वेनायमनेकत्र स्वकीयं पितरं सम्मुल्लिखति। सस्कृतवाङ्मयस्य सर्वासु विद्यास्वप्रतिहता गतिरस्येति तद्वचनाभि. प्रकटितम्। विशेषतोऽयं न्यायशास्त्रस्य प्रौढः पण्डित., वैयाकरणेष्वग्रगण्यः, अलङ्कारशास्त्रस्य मर्मज्ञ., अत्युच्चकोटिकः कविश्चासीत्। काश्या: पण्डितसमाजे साम्प्रतमपि विदुषोऽस्य नाम तर्कवागीशभट्टाचार्यप्रभृतीनां नामभि. सह सादरं स्मर्यते। आचार्य-स्यास्य कृतयो पञ्चविंशतिसंख्याकाः सन्ति। क्रमेण तासामत्र संक्षिप्तः परिचय प्रस्तूयते—

**(१) सिद्धान्तसुधानिधि**

सिद्धान्तसुधानिधिराचार्यविश्वेश्वरस्य व्याकरणविषयकं प्रौढं पाण्डित्यं चूडान्त निर्दिशति।[१] अष्टाध्यायेषु विभक्तोऽयं ग्रन्थ पाणिनेरष्टाध्यायी विशद व्याख्याति। यद्यपि व्याख्यानमिदं महाभाष्यानुसारि वर्तते, तथापि यथावसरं बहुत्र पतञ्जलेः कात्यायनस्य च मतान्यत्र समालोचितानि। तथा "अत्रेदमवधेयम्, वस्तुतस्तु" इत्यादिपदैः स्वकीयः सिद्धान्तोऽपि समुपस्थापित.।

**(२) तर्ककुतूहलम्**

ग्रन्थोऽयं न्यायशास्त्रस्य।[२] अद्वैतवेदान्तिनां सिद्धान्ता अत्र सयुक्तिकं प्रत्यालोचिताः। वेदान्तो नामोपनिषत्प्रमाणमिति सर्वेऽपि वेदान्तसिद्धान्ताः श्रुतिमूलाः प्रतिपाद्यन्ते। तर्ककुतूहले पुनर्वेदान्तस्येदं श्रुतिमूलत्वं सर्वथा खण्डितम्। वेदान्तिभिर्येषां श्रुतिवाक्यानामद्वैतपरोऽर्थं प्रतिपादित. तेषा

---

१. ग्रन्थोऽय प्रारम्भिकाध्यायत्रयात्मकश्चौखम्बासंस्कृतसीरिजेन प्रकाशित पूर्णतयो-पलब्धश्च श्रीदयानन्दभार्गवेण सम्प्रति सम्पाद्यमानो वर्तते।

१ ग्रन्थोऽयं नित्यानन्दस्मारकसमितिद्वारा १९७१ ईसवीयवर्षे प्रकाशितः।

सर्वेषामपि श्रुतिवाक्यानामत्र न्यायसम्मतो द्वैतपरोऽर्थः प्रदर्शितः । अद्वैतपरत्वं च तेषां नैपुण्येन खण्डितम् । अथ न केवलमद्वैतपरत्वेन स्वीकृतानि श्रुतिवाक्यान्यत्र द्वैतपराणि प्रतिपादितानि, अपितु अद्वैतसमर्थकानि ब्रह्मसूत्र-गीता-स्मृति-पुराणेतिहासादीनां वाक्यान्यपि सम्यगालोचितानि । अद्वैतं तत्त्वं न शक्यते साधयितुं वेदान्तसिद्धान्तविरुद्धेन प्रत्यक्षप्रमाणेनेति विविच्य तदन्यप्रमाणैरपि तदसिद्धमेवेति प्रतिपादितम् ।

**(३) दीधितिप्रवेश**

दीधितिप्रवेशो न्यायशास्त्रीया रचना ।[1] गङ्गेशोपाध्यायस्य "तत्त्वचिन्तामणि" इति ग्रन्थस्यानुमानविभागमधिकृत्य रघुनाथशिरोमणिकृता पाण्डित्यपूर्णा "दीधिति" नाम्नी टीका वर्तते । तामेव दीधितिं सारल्येन बोधयितुं ग्रन्थोऽयं रचितः ।

**(४) अलङ्कारकौस्तुभः**

अलङ्कारशास्त्रस्य ग्रन्थोऽयम् ।[2] अत्र ६६ कारिका सन्ति । प्रथमं सप्तकारिकासु अलंकारान्नामतो गणयित्वा पुनस्तेषां विस्तृतं विवेचनं प्रस्तुतम् । अथात्र न केवलमलङ्काराणामपितु ध्वनि-रीति-रसादीनामपि विवेचनं निष्पन्नम् । अलङ्कारप्रकाराणा वृद्धिं निरोद्धुं द्वात्रिंशदलंकारान् खण्डयित्वात्र तेषां मम्मटाभिमतेषु ६१ अलंकारेषु गतार्थत्वं प्रतिपादितम् ।

**(५-६) अलङ्कारमुक्तावली तथा अलङ्कारप्रदीपः**

अलंकारमुक्तावली पूर्वोक्तस्यालङ्कारकौस्तुभस्य सुगमां व्याख्यां प्रस्तौति ।[3] उदाहरणानि प्रायेणात्र स्वीयानि सन्ति । अलङ्कारप्रदीपे कुवलयानन्द इव केवलमर्थालङ्काराणा निरूपणमस्ति ।[4] अत्र प्रायेण ११९ अलङ्कारा विवेचिता ।

**(७) रसचन्द्रिका**

लघुकायेऽस्मिन् काव्यशास्त्रीयग्रन्थे नेतृचर्चया सह रसस्य पाण्डित्यपूर्ण विवेचनं प्रस्तुतम् ।[5] नेतृप्रकरणे नायिकानायकयोर्भेदोपभेदप्रदर्शनपूर्वकं तेषां सहायकाना गुणधर्मादीना च वर्णनं सम्पन्नम् । पूर्वाचार्याणा नेतृलक्षणानि ग्रन्थेऽस्मिन् परिष्कृतानि तदनुकूलं चोदाहृतानि ।

---

१ वाराणस्या सरस्वतीभवनेऽस्यामुद्रिता प्रतिरस्ति ।

२. अस्य प्रकाशनं "निर्णयसागरप्रेस, बम्बई" इत्यत १८९८ ई० वर्षेऽभूत् ।

३ चौखम्बा-संस्कृत-सीरिजेन प्रकाशितेयमलङ्कारमुक्तावली ।

४ चौखम्बा-संस्कृत-सीरिजेन प्रकाशित ।

५. चौखम्बा-संस्कृत-सीरिजेन प्रकाशिता ।

## (८-९) समञ्जसा कवीन्द्रकर्णाभरणञ्च

रसमञ्जरी मैथिलस्य भानुदत्तस्य कृतिः। तामधिकृत्य विश्वेश्वरेण "समञ्जसा" नाम्नी टीका लिखिता।[१] रसमञ्जर्यां विविधान्याष्टीका· समञ्जसा दूरमतिशेते। कवीन्द्रकर्णाभरणं पुन प्रहेलिकाना विविधचित्राणा च ज्ञानार्थं महतीमुपादेयतां बिभर्ति।[२] अस्य विदग्धा शैली वर्तते।

## (१०) मन्दारमञ्जरी

मन्दारमञ्जरी संस्कृतवाङ्मयस्य विलक्षणं रसपेशलं च गद्यकाव्यम्।[६] बाणभट्टस्य कादम्बरी अपि नेकजन्मव्यापिनी प्रणयगाथा प्रस्तौति। मुख्यतयात्र मन्दारमञ्जर्या सह पुष्पपुरनरेशस्य चित्रभानोस्तथा मदयन्तिकया सह राक्षसस्य मानसकेतो. प्रेमव्यापारो विषयीकृत। मन्दारमञ्जरीयं पदे पदे रसधारया रसिकान् रसयन्ती सुकरतयैव गूढविषयप्रतिपादनवैपुल्येन विदग्धानां बुद्धिमपि प्रायेण समावर्जयति। काव्यमिदं भागद्वये विभक्तम्। तत्र पूर्वार्धं विश्वेश्वरस्यैव कृतिरिति निर्विवादम्। उत्तरार्धं पुनस्तस्य कस्यचिदज्ञातनामधेयस्य शिष्यस्य कृतिः प्रतीयते। तत्रान्तिमानि पृष्ठान्यनुपलब्धानि सन्ति।

## (११-१२) भावप्रदीपस्तथा आर्यासप्तशती

भावप्रदीपोऽस्ति नैषधीयचरितस्यातिविपुला पाण्डित्यमण्डिता च टीका।[४] पूर्णरूपेणासौ नोपलभ्यते। आर्यासप्तशती पुनर्विश्वेश्वरस्य शृङ्गार-रसनिर्भरा प्रकृष्टा कृतिः प्राप्यते।[५] अकारादारभ्य क्षकारपर्यन्तमाद्यक्षरक्रमेणात्र ७६४ आर्या विलसन्ति। ताश्च मुक्तकतयोपनिबद्धा अपि समष्टितया प्रवहमाना. सुशोभन्ते। विविधदेववन्दनम्, प्राचा साहित्यकाराणा प्रशस्तिम्, सदसत्काव्यविवेचनं च प्रतिपाद्यात्र विषय. प्रस्तुत·।

## (१३-१४) काव्यतिलकं काव्यरत्नञ्च

अनयोर्द्वयोर्मुक्तककाव्ययोः शृङ्गारित-पद्यानां संकलनमस्ति। काव्यतिलके १०१, काव्यरत्ने च १०३ संख्याकानि पद्यानि सन्ति।

---

१ अद्य यावदप्रकाशितेयं सम्प्रति जनार्दनशास्त्रीपाण्डेयेन सम्पाद्यमाना वर्तते।

२. काव्यमाला-सीरिजस्याष्टमे गुच्छके प्रकाशितम्।

३. अस्या. पूर्वभागस्ताराचन्दपन्तस्य कुसुमाख्यया टीकया सह काश्या पर्वतीयप्रकाशन मण्डलेन प्रकाशित.।

४. टीकाग्रन्थोऽयं खण्डित. काश्या सरस्वतीभवने सुरक्षितः।

५ ग्रन्थकारस्य व्याख्या सहेयं चौखम्बा-संस्कृत-सीरिजेन १९२५ ई० वर्षे प्रकाशिता।

६. अप्रकाशितं काव्यद्वयमिदं जनार्दनशास्त्रिपाण्डेयस्य पुस्तकसंग्रहे सुरक्षित॰।

### (१५-१६) रोमावलीशतकं वक्षोजशतकञ्च

विश्वेश्वरस्यैतत्काव्यद्वयं स्वकीयेन वैलक्षण्येन रसपेशलत्वेन च शतककाव्येषु महत्त्वपूर्णं पदमर्हति ।[1] रोमावलीशतके मुक्तकतयोपनिबद्धैः पद्यैर्नायिकाया रोमावली वर्णिता। वर्णनं शिष्टं मर्यादितं चास्ति । उत्प्रेक्षासम्भारोऽस्य काव्यस्य सहृदयाना मनांसि भृशमावर्जयति। वक्षोजशतकं स्फुटपद्यै स्तनद्वयं मधुरतरं वर्णयति। तत्र कवे कल्पनाकौशलं दर्शनीयमस्ति। उपमानानि चात्र प्रायेण नूतनानि प्रयुक्तानि ।

### (१७-१८) होलिकाशतकं लक्ष्मीविलासश्च

हास्यरसभरितं होलिकाशतकं होलिकोत्सवप्रयुक्त-प्रमोदप्रसङ्गान् प्रपञ्चयति। लक्ष्मीविलासस्य शताधिकेषु पद्येषु लक्ष्म्याः स्वभावादिकं तदाराधनञ्चेति प्रतिपादितम् ।

### (१९) षड्ऋतुवर्णनम् (२०) अभिरामराघवः

षड्ऋतुवर्णने कालिदासस्य ऋतुसंहार इव षण्णां ऋतूनां मनोहारि चित्रणमस्ति। अभिरामराघव. पुर्नविश्वेश्वरस्य नाट्यग्रन्थ.। यद्यपि ग्रन्थोऽयमधुना नोपलभ्यते तथाप्यलंकारकौस्तुभेऽलंकारमुक्तावल्यां च "यथा ममाभिरामराघवे" इति निर्दिश्यानेकत्र तत्तदलङ्कारोदाहरणानि प्रस्तुतानि येनास्य स्वतन्त्रग्रन्थत्वं सिद्ध्यति ।

### (२१) रुक्मिणीपरिणयः

अभिरामराघवस्येव रुक्मिणीपरिणयस्यापि श्लोका अलङ्कारकौस्तुभेऽलंकारमुक्तावल्या चोदाहृता.। तस्मादियमपि विश्वेश्वरस्यापरा कृतिरिति निश्चीयते । काव्यमिदं केरलराजकुमारस्य रामवर्मवंचिनो रुक्मिणीपरिणयाद्भिन्नं वर्तते ।

### (२२) शृङ्गारमञ्जरी

शृङ्गारमञ्जरी विश्वेश्वरस्य नाट्यकृतिः।[2] कर्पूरमञ्जरी इवेयमपि सट्टकं वर्तते। अत्र राज्ञो राजशेखरस्य अवन्तिनरेशकन्याया शृङ्गारमञ्जर्याश्च प्रणयगाथा मधुरं गायति कविः। सट्टकेऽस्मिन् प्रयुक्ता प्राकृतभाषा संस्कृतेनाधिकं प्रभावितेति प्राकृतस्य ह्रासातिशयत्वात्स्वाभाविकमेव । यद्यपि

---

१ रोमावलीशतकं काव्यमालाया अष्टमे गुच्छके प्रकाशितम् ।

२. प्रकाशितेयं नाटिका पुण्यपत्तन-विश्वविद्यालय-पत्रिकायाम् ।

विश्वेश्वरस्य कृतिरियं राजशेखरस्य कर्पूरमञ्जरीं बहुधोपजीवति, तथापि कवेः प्राञ्जलतरा प्रतिभा इमां सुदूर मौलिकीं विदधाति। प्राकृतसाहित्यसंवर्धने विश्वेश्वरस्येयं कृतिर्महद्योगदानेन विभाति।

(२३) नवमालिका नाटिका

अस्या नाटिकायाश्चतुर्ष्वङ्केष्ववन्ति- नरेशस्यानङ्गराजदुहितुर्नवमालिकायाश्च प्रणयगाथा निरूपिता।[१] ज्येष्ठाया मानवशाच्छैथिल्यमुपगतमपि प्रणयबन्धनमत्र दिव्यरत्नप्रभावात्पुन. प्रगाढतामुपयाति, महादेवी चान्ते "आर्यपुत्र, परिणीयतामेषा, किं बिलम्बेन" इत्यभिधाय लक्ष्यं संसाधयति।

(२४) अशौचकालीनदशश्लोकीविवृतेष्टीका

(२५) अभिधार्थचिन्तामणि

अशौचकर्मविषयकदशश्लोकीविवृत्तिमधिकृत्य विश्वेश्वरेण टीका रचिता।[२] धर्मशास्त्रविषया कृतिरियम्। अभिधार्थचिन्तामणि पुनस्तन्त्रविषयक-"तारासहस्रनाम" इति ग्रन्थस्य व्याख्या।[३]

## तारानिधिपन्तः

वृत्तसार इति छन्दोग्रन्थस्य प्रणेता तारानिधिपन्त प्रख्याततान्त्रिकस्य प्रेमनिधिपन्तस्यात्मज.। तारानिधिपन्तस्य स्थितिकालोऽष्टादशख्रीष्टशतकस्योत्तरार्धमेकोनविंश शतकस्य प्रथमचरणं चेति वर्तते। अस्य पिता नयपालनरेशस्य मलयवर्मणो राज्याश्रयमवाप्य काश्या वसति स्म। तस्मात्तारानिधिपन्तस्यापि काश्या नयपालेन च सम्बन्धोऽनुमीयते। वृत्तसार इति कवेरेकमात्रं कृतिरस्ति।[४]

## हरिदत्तसूरिः

राघवनैषधीयमिति काव्यस्य कर्त्ता हरिदत्तसूरि· अल्मोडाजनपदस्य कलौनग्रामवास्तव्यो गर्गगोत्रोद्भवो ब्राह्मण.। जयशंकरनामधेयोऽस्य पिता विविधविद्यापारङ्गतो विद्वान् बभूव।[५] कविरसौ प्रायेण पितुरेव विविधः विद्यामवाप्नोत्। अयं साहित्यादिविषये सह ज्योतिषस्य महान् पण्डिता

---

१. नाटिकेयं "मालवमयूरम्" इति पत्रिकाया क्रमशः प्रकाशिता।

२. अस्या एका हस्तलिखिता प्रतिः काश्या सरस्वतीभवने वर्तते।

३. अप्रकाशितस्यास्यैका हस्तलिखिता पूर्णा प्रतिः जम्मूनगरस्य रघुनाथमन्दिरपुस्तकालयस्य सूचीपत्रे (सख्या ४६७२) प्रकाशिता।

४. ग्रन्थोऽस्य "नेपाल-राष्ट्रिय-संग्रहालय', काठमाण्डू" इत्यत्र सुरक्षितोऽस्ति।

५ राघवनैषधीयम् २, २१-२२।

आसीत्। अस्यैकमात्रं कृती राघवनैषधीयं द्विसर्गात्मकं काव्यमस्ति।[1] तत्र रामचन्द्रस्य नलस्य च श्लिष्टं वर्णनं निष्पादितम्। वर्णनमिदं श्लिष्टत्वात्प्रायेण नीरसता वहति। उदाहरणार्थं द्व्यर्थकं पद्यमिदमालोक्यताम्—

शम्बूकहिंसयापि ब्राह्मणवरदायको राजा।
पार्थिव्या गर्भरुचा जह्लादेसशयेच्छता ॥ १.१२० ॥

द्वितीयसर्गे द्वयोश्चरितनायकयोरङ्गनाभि सह विहारं वर्णयन् कविरेकार्थकत्वमाश्रित्य काव्ये सरसतामापादयितुं प्रयतमान सफलतामविन्दत। उदाहरणार्थम्—

अये मतिमता वरे प्रणयभङ्गमेतर्हि मो
कुरुष्व वशगं पतिं विरहदाहदग्धा यदि।
कृतान्तनगरातिथिर्भवसि चातुरी कास्ति ते
जगाविव रुलच्छलाद्विहगराट् पिको माधवे ॥ २४ ॥

## गुमानी-कविः

कविवरो गुमानी १८४७ संवत्सरे नैनीतालस्य काशीपुरनाम्नि स्थानेऽजायत। असौ भरद्वाजगोत्रीय पन्ताख्यो ब्राह्मण आसीत्। अस्य पिता देवनिधि-पन्त, माता देवमञ्जरी चास्ताम्। कवेर्बाल्यं पिथौरागढ मण्डलस्य उपरडा-ग्रामे व्यतीतम्। अस्य प्रारम्भिकं शिक्षणं स्वपितृव्यस्य राधाकृष्णवैद्यराजस्य निर्देशने समभूत्। प्रौढशिक्षागुरुश्चास्य कलौनवास्तव्य पूर्वोक्तो हरिदत्तनामा विद्वान्नासीत्। गुमानी कविर्देशस्य विविधेषु भागेषु परिभ्रमन् स्वकीयं व्यावहारिकं ज्ञानं संवर्धयामास। अस्य द्वे भार्ये द्वौ पुत्रावेका कन्या चासन्। रामभक्तोऽयं स्वजीवनस्याधिकं भागं साधनाया व्यतीतवान्। साहित्यादिविषयस्य विद्वान्नयमायुर्वेदशास्त्रस्य मर्मज्ञः, निपुणश्चित्रकारश्च बभूव। स संस्कृत-हिन्दी-कौर्माचली-व्रज-अवधी-उर्दू-फारसीभाषाविदासीत्। कविरयं अलवर-टिहरी-काशीपुर-पटियाला-नहाणादिराज्याना शासकैर्बहुधा सम्मानितोऽभवत् शास्त्रार्थे तस्मै विशिष्टा रुचिरासीत्। स एकत्र प्रतिपक्षं समर्थयन्तं मध्यस्थ भर्त्सयन्नाह—

चन्दनकर्दमकलहे भेको मध्यस्थतापन्न।
ब्रूते पङ्कनिमग्न. कर्दमसाम्यं न चन्दनं लभते ॥

कविवरो गुमानी कमपि विशालकायं ग्रन्थं न प्रणीतवान्। अस्य कस्याञ्चिदपि रचनाया शतद्वयादधिकानि पद्यानि न प्राप्यन्ते। तथापि विदुषा-

१. काव्यमिदं खण्डितं रामकुबेरमालवीयस्य हिन्दीटीकोपेतं "चौखम्बा-संस्कृत-सीरिज, वाराणसी" इत्यत १९६९ ई० वर्षे प्रकाशितम्।

मियं मान्यता वर्तते यत्कविनामुना लक्षादप्यधिकसंख्याकानि पद्यानि रचितानि भवेयुरिति। कवे: संस्कृतसम्बन्धीनि प्रमुखानि काव्यान्यत्र वर्णिताः।[1]

(१) हितोपदेशशतकम्

हितोपदेशशतकं क्षेमेन्द्रस्य चारुचर्यया प्रभावितं नीतिकाव्यमस्ति।[2] अत्र १०० आर्याः सन्ति। तत्र प्रत्येकं पद्यं एकैकेनोपदेशेन सह दृष्टान्तत्वेनैकैकं पौराणिकमाख्यानमपि प्रस्तौति। प्रत्येकं पद्यस्य पादत्रये प्रख्यातकथा समुल्लिखिता, चतुर्थे पादे च तज्जन्य उपदेशो निबद्धः। कानिचित् पद्यान्यत्र प्रस्तूयन्ते—

जमदग्निना नियुक्तः सद्यो निजघान मातरं रामः।
निर्दोषः पुनरासीद् गुरूक्तमविचारितं कार्यम्॥ २१
यां यां दिशं गतोऽभूद् हिरण्यकशिपुर्यदृच्छया विचरन्।
तां तां सुराः प्रणेमुर्दुष्टजनं दूरतः प्रणमेत्॥ ४७
हरिरम्बुमथनोत्थां सुधां सुरेभ्यः सुरां सुरारिभ्यः।
व्यतरत्सम यथार्हं योग्यं योग्याय दातव्यम्॥ ५६
मृगयारतः प्रसेनो विघटितसेनोऽटवीं भटन्नेकः।
केसरिणा विनिजघ्ने नैकाकी सञ्चरेद् विपिनम्॥ ८३

(२) समस्यापूर्तिः

समस्यापूर्तिरित्यत्र कविना विलक्षणानि चारूणि च पद्यानि रचितानि।[3] तत्र चतुर्थपादगताः समस्याः संस्कृत-हिन्दी-नयपालीत्यादि भाषागताः सन्ति, प्रारम्भिकपादत्रयगताः पूर्तयश्च संस्कृतभाषायामुपनिबद्धा विलसन्ति। उदाहरणार्थम्—

नादात्कन्यां बाणो दायी कृष्णध्वस्तो युद्धस्थायी।
पश्चादासीत्कन्यादायी झख मारी फिर खिचडी खाई॥
पूर्वमसुप्यत येन खट्वा हाटकमय्या
तेन नलेन प्रापित वने तृणशय्या।
वक्ति गुमानी देवशक्तिरिह नूनमजय्या
जिस विधि राखै राम तिस विधि रहना भय्या॥

---

१ गुमानिकवे: कृतीनां संकलनं देवीदत्तपाण्डेयेन १८९७ ई० वर्षे अल्मोडातः प्रकाशितम्।

२. काव्यमिदं काव्यमालाया द्वितीये गुच्छके प्रकाशितम्।

३. जार्ज-ग्रियर्सनो भावानुवादेन सहैकसप्ततिः समस्यापूर्तयः प्रस्तुताः। तदर्थं "इण्डियन एण्टेक्वेरी, बम्बई, वाल्यूम-३८" इति द्रष्टव्यम्।

(३) ज्ञानभैषज्यमञ्जरी

अत्राशीतिपद्येषु विवेकार्थानां कृते तत्त्वज्ञानं भिषग्वराणां कृते रोगनाशकमौषधं चेति वर्णितम ।[१] पद्यानां पूर्वार्धे तत्त्वज्ञान निर्दिश्योत्तरार्धे दृष्टान्तत्वेनौषधं विवेचितम् । पद्यद्वयमालोक्यताम्—

को विश्वसिति मत यन्निहन्ति यवनस्य नास्तिकत्वम् ।
कः प्रत्येति यदाखोर्हन्ति प्रदरं पुराषमिति ॥ ५५ ॥
नाश्चर्यमत्र किञ्चिद् द्रढयति बोधं महात्मवाक् सरसा ।
चित्रं कुलालमृत्सा स्थिरयति गर्भं युतक्षीरा ॥ ५६ ॥

(४) भक्तविज्ञप्तिसार·

भक्तविज्ञप्तिसारे शतसंख्याकेषु पद्येषु कविः स्वकीयमिष्टदेवं श्रीरामं प्रति स्वात्मानं न्यवेदयत् । उदाहरणार्थम्—

देहं विदेहतनयाधिपते मदीयं
सा संश्रयिष्यति यदा तु जरा वराकी ।
हा हन्त हन्त मम जर्जरितेन्द्रियस्य
त्वत्तो पर शरणदो भविता तदा क ॥ १८ ॥

(५) रामनामविज्ञप्तिसार·
(६) भक्तिविज्ञप्तिसारः
(७) रामाष्टकम्
(८) रामनामपञ्चाशिका

रामनामविज्ञप्तिसारे त्रिशत्पद्यैः कवी रामं कृपां याचते । भक्तिविज्ञप्तिसारस्य १२६ संख्याकेषु श्लिष्टेषु पद्येषु भगवतो रामस्य भक्तिर्विवेचिता । रामाष्टके गीतगोविन्दवल्ललितपदा गेया स्तुतिर्वर्तते । रामनामपञ्चाशिकाया श्रीरामस्य रकारादिक्रमेण नामसंग्रहः कृतः । यथा—

रामो रावणमर्दनो रघुवरो रुद्रप्रियो राघवो
राजेन्द्रो रणकर्कशो रविकुलोत्तंसो रमानायकः ।
रत्नालंकरणो रहस्यचतुरो रुच्याकृती रूपवान्
रोचिष्णू रुचिराम्बरो रुचिकरो रज्यत्पदो राज्यद ॥ १

(९) जगन्नाथाष्टकम्
(१०) गङ्गार्याशतकम्

जगन्नाथाष्टके जगन्नाथस्य भावपूर्णा ललिता गीतिर्वर्तते । गङ्गार्याशतके गङ्गायाः स्तुतिर्विहिता । तदुक्तमन्ते—

---

१. इयं रचना "सुप्रभातम्" इति पत्रिकाया विभिन्नाङ्केषु स्वतन्त्रतया प्रकाशिता ।

इति देवदीर्घिकाया. सुदीर्घसंतापशमनशीलाया ·।
स्तवमार्याशतघटितं व्यधात् गुमानी मुदे विदुषाम् ॥ १०१ ॥

गङ्गा स्तुवन् स कथयति—

करतलगतं कृपावति कैवल्यं त्वत्पय. समाश्रयताम् ।
ज्ञानादेव विमुक्ति वदतामुक्ति मुधा मन्ये ॥ ३५ ॥

किन्त्वत्रापि स रामं न विस्मरति—

रघुराजमात्मनोऽहं जनक जानामि जानकीं जननीम् ।
तदभिन्नैकतनु त्वां मातापितरौ सम जाने ॥ ५६ ॥

## (११) पञ्चपञ्चाशिका

"पञ्चपञ्चाशिका" इत्यस्यापरं नाम "तत्त्वविद्योतिनी" वर्तते। अस्याः पञ्चपञ्चाशत्पद्येषु उपनिषदां सारभूतानि तत्त्वानि सरलसरलाया भाषाया प्रतिपादितानि । तत्र प्रत्येकं तथ्य स्पष्टयितुं लौकिकव्यवहारा दृष्टान्तत्वेनोपनिबद्धा । वेदान्तप्रतिपादितानि जीवब्रह्मात्मादितत्त्वान्यत्र महत्त्वं भजन्ते । अन्ते कविनोक्तम्—

समाधिविधिमन्तरा त्वरितमात्मबोधैषिणां
नितान्तमुपकारिणी कृतधियां मनोहारिणी ।
महोपनिषदर्थसजनिततत्त्वविद्योतिनी
गुमानिरचिता चिरं जयति पञ्च पञ्चाशिका ॥ ५६

## (१२) दुर्जनदूषणम्

दुर्जनदूषणस्यैकचत्वारिंशत्पद्यैर्दुर्जनानां भर्त्सना कृता । तत्र प्रारम्भिकं पद्यद्वयं वर्तते—

अयि सुजनेतर वक्तुं किमपि भवन्तं वचोऽधुना तथ्यम् ।
मानमुत्सहते मे विजित्य कोपं तदाकलय ॥ १ ॥
हर्तुं वयो जनन्या कर्तुं भवन्या सुदूर भारम् ।
क्लेशयितुमार्यलोकान् दुर्जन ते केवलं जन्म ॥ २ ॥

## (१३) देवतास्तोत्राणि

अत्र विंशतिपद्यैः (दण्डकच्छन्दोभिः) गणेश-राम-शिव-सूर्य-सरस्वतीत्यादीना देवतानां स्तुतिर्विहिता । तत्र प्रायेण सर्वेषु पद्येषु संयुक्तव्यञ्जनाना दीर्घस्वराणां चाभाव एव दृश्यते । यथा गङ्गा स्तुवन् स कथयति—

जय हरमुकुटतुहिनकरसहचरि, जय हरिपदनखजनितजले,
जय जलनिधिसति विमलवसनवति, जय भगवति करधृतकमले ।

जय शतमखपुरविहरणकृतमुखि, जय शतमुखि शशधरधवले,
जय जनजननि वृजिनभरविजयिनि, जय सुरधुनि कृतसुकृतफले ।।

एतदतिरिक्तान्यपि गुमानिकवे. सन्त्यनेकानि पुस्तकानि, येषु कानिचित् खण्डितानि प्राप्यन्ते कानिचित् पुनः केवलं नाम्ना श्रूयन्ते । यथा—

(क) भक्तिसम्बन्धीनि—[१]

१. राममहिम्नस्तोत्रम्
२. कृष्णाष्टकम्
३. कालिकाष्टकम्

(ख) धर्मशास्त्रसम्बन्धीनि—[२]

१. निर्णयसारः
२. तिथिनिर्णयः
३. कालनिर्णय
४ अशौचनिर्णय

(ग) राज्ञा जीवनचरितानि—[३]

१ पटियालानरेशस्य कर्णसिंहस्य जीवनचरितं सप्तसर्गात्मकम् ।
२ नहाणनरेशस्य फतेहशाहस्य जीवनचरितं सर्गत्रयात्मकम् ।
३ अलवरनेशस्य वर्नेसिंहस्य सुनीतिविषये पञ्च सर्गा ।

स्फुटपद्यान्यपि बहूनि कविरयं रचयामास । तत्र मुख्यत इमे विषया अधिकृता —[४]

१ मनोविनोद
२ साम्प्रदायिका.
३ आङ्ग्लराज्यभर्त्सना
४. सज्जनदुर्जनचरितम्
५ आशीर्वादः
६. तमाखुपत्रम्

### तारादत्तपन्तः

तारादत्तपन्त इति विद्वान् पिथौरागढजनपदस्य बरसायत-ग्रामवास्तव्यो ब्राह्मण आसीत् । अस्य पिता श्रीदुर्गादत्तनामा विद्वान् माता च भागीरथी देवी आस्ताम् । एष किल गृह एव स्वकीयं प्रारम्भिकं शिक्षणं सम्पाद्योच्चतरशिक्षाणजिज्ञासया काशीमुपेयिवान् । अथ श्रीनित्यानन्दपन्तप्रभृतिभ्यो गुरुभ्यः

---

१. एतान्यनुपलब्धानि सन्ति ।
२. एतानि वाराणसेयस्य जनार्दनशास्त्रि पाण्डेयस्य ग्रन्थागारे खण्डितप्रायाणि प्राप्यन्ते ।
३. अनुपलब्धानि सन्ति ।
४ देवीदत्तपाण्डेयेन कृते गुमानिकाव्यसंकलने एतद्विषयकस्फुटपद्यानि दृश्यन्ते ।

साहित्य-व्याकरण-दर्शनादिविषयानधीत्यासौ तत्रैव रणवीरसंस्कृतविद्यालये चिर पाठयामास । काशिकविद्वत्सु कवेरस्य महती ख्यातिरभूत् । तत्रत्यविद्वत्परिषदो मन्त्रिपदमप्यसौ समलञ्चकार । बहुकालानन्तरं काशी परित्यज्य ऋषिकेश-हरिद्वारादिषु विद्यामभ्यसन्नध्यापयंश्चान्ते पुन कूर्माचलमुपेत्य स्वीये ग्रामे १९६८ ई० वर्षप्राये शरीरं तत्याज ।

तारादत्तपन्तस्य कृतीनामालोचनया नूनं सिद्ध्यति यदतीव प्रौढप्रतिभाशालीविद्वान्नयमिति । असौ सर्वथा नूतना सूक्ष्मां व्यावहारिकी च दृष्टिं धारयति । अस्य मौलिकानि रचनानि निम्नाङ्कितानि सन्ति—

१. सूर्यचरितमहाकाव्यम् (ऋतुचरितं वा)
२. गोलविद्या
३. गोलसूत्रम्
४. भारतवर्ष भूगोल. (पद्यमयः)
५. आर्याप्रवाहः (गुरुपरम्परावर्णनात्मक )
६. दाशरथिभरतचरितम् (सप्ताङ्कं टीकोपेतं नाटकम्)
७. भारतोद्धारः
८. इन्द्रियार्थमीमांसा (गद्यमयी)
९. स्वरमीमांसा (गद्यमयी)
१०. वर्णमालासूत्रम् (भाषाटीकासहितम्)
११. पाञ्चभौतिकम् (दर्शनविषयकम्)
१२. कूर्माचलस्येतिहासः (संस्कृतभाषायाम्)

एतेषु ग्रन्थेषु सूर्यचरितं ऋतुचरितं वा षोडश सर्गात्मकं गोलविषयकं विलक्षणं महाकाव्यमस्ति ।[१] अत्र न केवलं भारतस्य विभिन्नभूभागा., नद्य., पर्वता., ऋतवश्च निरूपिताः, अपितु तैः प्रभावितं मानवजीवनमपि साधु प्रतिपादितम् । यद्यपि ऋतुविषयकं वर्णनं कालिदासप्रभृतिभिर्विविधैर्विद्वद्भिर्विहितम्, तथापि ऋतुचरिते कृतं ऋतुवर्णनं नैकाभिदृष्टिभिस्तद्विलक्षणं महत्त्वशालि च सिद्ध्यति । ऋतुकुटुम्बस्य मनोरमं परिकल्पनम्, ऋतुराजस्य देशभ्रमणम्, तत्तत्स्थानानां भौगोलिकं चित्रणम्, सूर्यचन्द्रमसोर्गतिभिरुद्भूतपरिवर्तनानीत्यादयो विषया. काव्यस्योत्कृष्टत्वं प्रमाणयन्ति ।

गोलविद्या गोलसूत्रञ्चेति द्वौ ग्रन्थौ संस्कृतेन भूगोलपरिचायकौ प्राथमिकौ स्तः ।[२] अत्र न केवलं भारतस्यापितु भूमण्डलस्य भूगोल सारल्येनो-

१. महाकाव्यमिद चौखम्बासंस्कृतसीरिजेन प्रकाशितम् ।
२. द्वावपि चौखम्बासंस्कृतसीरिजेन प्रकाशितौ ।

पर्वणित । देशकालजिज्ञासया ग्रन्थावेतौ प्रणयनमुपगतौ । संस्कृतवाङ्मयस्य काव्यनाट्येतिहासादिषु वर्णितानि सरित्पर्वतस्थानादीन्यत्र सम्यक् विवेचितानि । जम्बूद्वीपवर्णनमत्र महत्त्वं भजते । गोलविद्याया पञ्च प्रकरणानि सन्ति । गोलसूत्रमध्यायेषु पादेषु च विभक्तं विलसति । नूतनविषयाणा-मुद्भावनवैपुल्येनैतौ ग्रन्थौ नूनमतितरामुपयोगिनौ स्तः ।

मौलिकग्रन्थप्रणयनेन सह तारादत्तपन्तेन विविधाना ग्रन्थाना टीकाटिप्पण्यश्च प्रणीता । तास्टीकाटिप्पण्य. सन्ति[1]—

१ मन्दारमञ्जरी—कुसुमाख्या टीका
२. चरकसंहिता—भागीरथी टिप्पणी
३. रसार्णवसंहिता— ,, ,,
४. अष्टराङ्गहृदयम्— ,, ,,
५ शार्ङ्गधरसंहिता—भागीरथी टिप्पणी
६. भावप्रकाशः— ,, ,,
७. रसेन्द्रसारसंग्रहः— ,, ,,
८. मानसखण्ड. (स्कन्दपुराणस्य)—हिन्द्यनुवाद. ।

## रामदत्तपन्त.

रामदत्तपन्तनामा विद्वान् पिथौरागढजनपदस्य उपरडा-ग्रामवासिन: पण्डितस्य केवलकृष्णपन्तस्यात्मजो बभूव । बाल्य एव मातापित्रोर्दिवङ्गतत्वा-न्मातुलगृहेऽसह्यकष्टत्वाच्चासौ पलाय्य काशीमुपेयिवान् । तत्र पुनर्विविधाभाव-ग्रस्तं छात्रजीवनं यापयन्नयं साहित्योपाध्याय', साहित्यरत्नमित्युच्चतरां शिक्षा सम्पाद्य शीघ्रमेव विदुषा सम्मानभागभूत् । शास्त्रार्थेऽसौ स्वकीयारुचिं सविशेष न्यबध्नात् । अथ कविरेष बरेलीसंस्कृतमहाविद्यालये पञ्चदशवर्ष-पर्यन्त (१९०८-१९२२ ई०) मध्यापयामास । अत्रैवामुना विविधा ग्रन्थाः प्रणीता: । अस्य जीवनकालः १८६१-१९२८ ई० वर्तते ।[2] कवेः कृतय. निम्नाङ्किताः सन्ति—

| | |
|---|---|
| १. दीपकशतकम् | २. लेखनीकृपाणम् |
| ३. अपरपञ्चरात्रम् | ४ एकादशीनिर्णयाभारप्रकाश. |
| ५. रामनवमीनिर्णय· | ६. अमरकोशव्याख्या |

---

१. टीकाग्रन्थाः चौखम्बासंस्कृतसीरिजेन प्रकाशिता.

२. हि० सं० लिटरेचर (मळेरियार) पृ० ५६५ ।

तत्र दीपकशतकं लेखनीकृपाणं चेति काव्यद्वयं जार्जपञ्चमस्य भारतागमनेऽत्र तद्राज्याभिषेकावसरे तस्मै समर्पितम् । मुग्धेन जार्जेन पञ्चमेन चात्र विषये पञ्चसहस्ररूप्यकपरिमितः पारितोषिकं प्रदत्तम् । ग्रन्थयोरनयो-राङ्ग्लानुवादोऽपि सञ्जातः । दीपकशतके लघुकाव्ये राजनीत्या राजभक्त्याश्च संवादात्मकानि शताधिकानि पद्यानि विलसन्ति । प्रत्येकं पद्यं जार्जपञ्चमस्य स्वागताय प्रज्जलितो दीप इव स्वीकृतम् । मुख्यतोऽत्र जार्जपञ्चमस्य तत्पत्न्या "मेरी" इत्यस्याश्च प्रशस्तिः प्रस्तुता । अस्य "प्रभा" नाम्नी व्याख्यापि ग्रन्थकारेण स्वयं रचिता । रामदत्तपन्तस्य "अपरपञ्चरात्रं" नाम नाटकमपि जार्जपञ्चमविषयकं वर्तते । एकादशीनिर्णयाभारस्तथा रामनवमी-निर्णय इति द्वौ ग्रन्थौ धर्मशास्त्रविषयकौ स्तः ।[1]

### श्रीकृष्णजोशी

त्रिलोचनस्य भवानन्दस्य चेति पूर्वप्रतिपादितकविद्वयस्य वंशपरम्परायां समुत्पन्नः श्रीकृष्णजोशी स्वयुगीनोऽत्युच्चकोटिको विद्वान् बभूव । विद्वानयं अल्मोडानगरस्य चीनाखानमुहल्लाया १८८३ ई० वर्षे जनिं लेभे । अस्य पिता पण्डितो बदरीदत्त आसीत् । अल्मोडायामेवासौ बाल्य-शिक्षणं सम्पाद्य प्रयागस्य म्योर-सेन्ट्रल-कालेजतो बी० ए० तथा एल० एल० बी० इत्युपाधिद्वयमर्जितवान् । म० म० श्रीगङ्गानाथझास्तत्रास्य प्रमुखो गुरुरभूत् । भारतीयतासमुपासकोऽयं १९१० ई० वर्षे हरिद्वारे ऋषिकुलब्रह्मचर्याश्रमं संस्थाप्य तस्य मुख्योऽधिष्ठाता बभूव । १९१२ ई० वर्षेऽमुना वाक्कीलत्वं प्रारब्धम् । अथ कूर्मांचलपरिषदं संस्थाप्य १९१९ तः १९२६ ई० वर्षं यावत्तस्य सञ्चालनमकरोत् । १९२७ ई० वर्षे मालवीयमहोदयस्याग्रहेण वाक्कीलतां विसृज्य काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्याधर्मविज्ञानसंकाये विंशतिवर्षपर्यन्तं धर्माध्यक्षपदं समलञ्चकार । अत्रान्तरेऽखिलभारतीयसनातन-धर्ममण्डलस्य पुनर्गठनं विधाय तस्य मन्त्रित्वमपि सम्पादितवान् । १९१७ ई० वर्षे भारतधर्ममहामण्डलतोऽयं "विद्याभूषण" इत्युपाधिमवाप । विद्याप्रसाराय भारतीयतासंवर्धनाय चासौ बहु कृतवान् । १९६५ ई० वर्षस्य जूनमासेऽयं दिवङ्गतः ।

विविधविषयानधिकृत्य कविवरेण श्रीकृष्णजोशिना पञ्चाशत्संख्या-कप्राया ग्रन्था प्रणीताः । तेषु षड्ग्रन्था एवाद्यावधि प्रकाशिताः । ते सन्ति—

---

१. हस्तलिखिता पूर्णप्रतयोऽल्मोडाया श्रीकेदारदत्तपन्तस्य ग्रन्थालये सुरक्षिताः सन्ति ।

(१) अन्तरङ्गमीमांसा

संस्कृतभाषायामुपनिबद्धेऽस्मिन् मनोविज्ञानविषयके ग्रन्थे भारतीयं पाश्चात्त्यं च मनोविज्ञानं निपुणं प्रपञ्चितम् ।[१] ग्रन्थोऽयं विपुलश्चतुर्षु भागेषु विभक्तः ।

(२) कृतार्थकौशिकम्

वैदिकी पृष्ठभूमिमधिकृत्य कृतं "कृतार्थकौशिकम्" नाम नाटकं षडङ्केषु विभक्तम् ।[२] अत्र गाधिपुत्रस्य विश्वामित्रस्य पराक्रममयी कथा निरूपिता ।

(३) परमतत्त्वमीमांसा

दर्शनविषयकोऽयं ग्रन्थो "मतिप्रशिक्षशास्त्रं" (परात्परतत्त्वस्य मत्या प्रशिक्षणं करोतीति मतिप्रशिक्षम्) इति कथित ।[३] अत्र परमतत्त्वविषयकस्य प्राच्यपाश्चात्त्योभयविधज्ञानस्यैतिहासिकं गवेषणात्मकं चाध्ययनं विहितम् । तत्र भारतीयशास्त्रसम्मताद्वैततत्त्वस्य परब्रह्मणः सर्वोत्कृष्टत्वप्रतिपादनं ग्रन्थकारस्य लक्ष्यं वर्तते ।

(४) श्रीकृष्णमहिम्नस्तोत्रम्

(५) श्रीराममहिम्नस्तोत्रम्

(६) श्री गङ्गामहिम्नस्तोत्रम्[४]

श्रीकृष्णमहिम्नस्तोत्रस्य ५६ संख्याकैः पद्यैः श्रीकृष्णस्य भावपूर्णा स्तुतिर्विहिता । स्तुतिविषये कवेर्धारणा वर्तते—

अम्लानानि सुवर्णानि त्वत्कीर्तिकुसुमान्यहम् ।
चित्वा पुराणवृक्षेभ्योऽपर्ययं ते वनस्रजम् ॥५२ ॥

श्रीराममहिम्नस्तोत्रे ७४ सख्याकपद्यै श्रीरामस्यालौकिकता वर्णिता । अत्र जगज्जननी सीता सांख्यदर्शनस्य प्रकृतिरूपेण भगवान् रामश्च पुरुषरूपेण

१. उत्तरप्रदेशशासनसहयोगेन २०१६ संवत्सरे प्रकाशितोऽयं ग्रन्थ ।

२. नाटकमिदं "अखिलभारतीयसंस्कृतपरिषद्, लखनऊ" इत्यतः १९७५ ई० वर्षे प्रकाशितम् ।

३. वाराणस्याश्चौखम्बाविद्याभवनेन ग्रन्थोऽयं १९६५ ई० वर्षे प्रकाशितः ।

४. एतानि त्रीण्यपि स्तोत्रकाव्यानि "सूर्य-प्रेस काशी" इत्यत्र मुद्रितानि ।

चित्रितौ। श्रीगङ्गामहिम्नस्तोत्रे ७४ संख्याकपद्यैर्गङ्गावतरणयुक्ता तत्स्तुतिर्विहिता।

**अप्रकाशिताः कृतयः**[1]

१. रामरसायनमहाकाव्यम्
२. अखण्डभारतम्
३. सत्यसावित्रं नाटकम्
४. परशुरामचरितं नाटकम्
५. स्यमन्तकमहाकाव्यम्
६. पृथुचरित्रम्
७. भारतमहिमा
८. हिमालयमहिमा
९. कालिकाकेलि
१०. काव्यमीमांसाशास्त्रम्
११. चरित्रमीमांसा
१२. नारदकथा
१३. युधिष्ठिरकथा
१४. श्रीभागवतकथा
१५. दशावतारम्
१६. सीताविवाहः
१७. सुकन्यानाटकम्
१८. सर्वदर्शनमञ्जूषा
१९. अद्वैतवेदान्तदर्शनम्
२०. विशिष्टाद्वैतदर्शनम्
२१. पाश्चात्यदर्शनानि
२२. प्राच्यदर्शनम्
२३. श्रीमद्भगवद्गीताभाष्यम्
२४. योगकारिका
२५. पञ्चमहायज्ञा
२६. ग्रहयोगविधि
२७. वैश्वदेवयज्ञ
२८. भागवतसारम्
२९. प्रातःस्मरणानि
३०. विष्णुसहस्रनामव्याख्या
३१. पथ्यापथ्यम्
३२. सप्ताध्यायी
३३. ज्योतिर्विंत्कण्ठभूषणम्
३४. यन्त्रविद्या
३५. खगोलज्ञानमञ्जूषा
३६. कालमीमांसा
३७. प्रारम्भिक. खगोलः
३८. संगीतराघवीयम्
३९. संस्कृतबोधकम्
४०. विज्ञानगीता
४१. धातुकोषः
४२. लोकोक्तिसंग्रहः

---

१. एतास्वधिकसंख्याकाः कृतयः ग्रन्थकारात्मजस्य नैनीतालवास्तव्यस्य श्रीगरुडध्वज पुस्तकालये सुरक्षिताः सन्ति। तन्महोदयस्य सूचनानुसारेणैवेयं ग्रन्थ प्रस्तूयते।

# मेघदूतस्य काव्यलक्षणम्

डॉ० राधावल्लभः त्रिपाठी

मेघदूतं रचयता महाकविना तदानीं यावत् सर्वथा अस्पृष्टा कापि काव्यविधा सृष्टेति निश्चप्रचम् । अत एव किं प्रमाणमिदं काव्यं किं चास्य काव्यलक्षणमिति विमर्शे विप्रतिपत्तयो भूयस्यः काव्यलक्षणविदां बभूवुः । यद्यपि 'मेघे माघे गतं वयः' इत्युक्तिदिशा मेघदूतस्य मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां तदास्वादस्वारस्ये क्षपितवयसां सचेतसां कृतेऽवान्तर एवायं प्रश्नो यत् का नाम मेघदूतस्य काव्यकोटिरिति, तथापि मेघदूतकाव्यार्थावबोधाय तत्काव्यलक्षणनिर्धारणं नाम नितरां नान्तरीयकतामावहति इति निर्विवादम् । वस्तुतो मेघदूतमूल्याङ्कने आलङ्कारिकाणां धीः क्वचित् कुण्ठितेव प्रतिभाति इति न तत्र तेषां दोषः, अपितु सकलकाव्यलक्षणसीमातिगस्य मेघदूतस्य रचयितुर्महाकवेः शास्त्रविच्छेमुषीणां पारे स्थिताया नवनवोन्मेषनिरूपणे निपुणायाः प्रतिभायाः सामर्थ्यमेवैतत् । अत एव काव्यशास्त्रधुरीणानां मध्ये मेघदूतमीमांसायां स्थितासु विमतिषु केचिदाचचक्षीरन्—अनिबद्धं मुक्तकं वेदं काव्यमिति, अपरे संगिरन्ते –खण्डकाव्यं लघुकाव्यं क्षुद्रकाव्यं वेदमिति, अन्ये त्वेनं संघातमाहुः, सन्देशकाव्यमिति टीकाकाराः, गीतिकाव्यमित्याधुनिकाः कथयन्ति । तत्त्वविदां सतत्त्वान्यप्येतानि काव्यलक्षणानि मेघदूतविषये न पूर्णतः प्रभवन्तीति सविस्तरमेषां निरूपणं कुर्मः ।

## (1) भामहादीनां मतम्

सकलालंकारिकमध्ये आद्यत्वेन गण्यमानो भामहाचार्यस्तु पंचविधं काव्यं निरूपयामास-सर्गबन्धो महाकाव्यं वा, अभिनेयार्थं नाटकादि, आख्यायिका, कथा, अनिबद्धं च । एषु प्रथमचत्वारो भेदा विस्तरेण निरूपिताः, पंचमस्तु मन्यामहे उपक्षेणीय इति मत्वा भामहेन मनाक् स्पृष्ट्वेवोज्झितः । गाथाश्लोकादयोऽनिबद्धभेदाः स्युरित्येव केवलं सोऽनिबद्धमधिकृत्य प्रावोचत्—

अनिबद्धं पुनर्गाथा-श्लोक-मात्रादि... । —काव्यालंकारे १।३०

मेघदूतकाव्येन आचार्यवरो भामहः सम्यक् परिचित आसीदिति तस्य अयुक्तिमद्दोषनिरूपणप्रसंगेन स्पष्टमेव—

> अयुक्तिमद् यथा दूता जलभृन्मारुतेन्दवः ।
> तथा भ्रमरहारीतचक्रवाकशुकादयः ।

अवाचोऽव्यक्तवाचश्च दूरदेशविचारिण. ।
कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते ॥
यदि चोत्कण्ठया यत् तदुन्मत्त इव भाषते ।
तथा भवतु भूम्नेदं सुमेधोभि प्रयुज्यते ॥

—काव्यालंकारे १।४२-४४

अत्र जलभृतः दौत्यं कथं शक्यमिति शंकामवतारयन् समादधानश्च तां स्पष्टमेव मेघदूतं संकेतयति भामहः। अथ विदितमेघदूतकाव्योऽप्यसौ नामग्रहणपूर्वकं किंप्रमाणमिदं काव्यमिति न व्याचष्टे। अत एव मेघदूतकाव्य-लक्षणविचारे भामहस्य किं मतमिति प्रश्ने विकल्पद्वयं संभवति। मेघदूतं तावत् भामहप्रोक्तपंचकाव्यविधासु अन्तिमाया अनिबद्धाख्यश्रेण्यां धारणीयम्, अथवा भामहमतेनेदं सर्वथा न गण्यमुपेक्षार्हं वा काव्यमिति मन्तव्य, यस्य काव्यविधापरिगणनकाले विचारोऽपि न युक्त.। उभयमपि मेघदूतविषये न संघटते। नेद गाथाश्लोकादिवत् स्फुटपद्यानां संकलनमात्रम्। अत एव न अनिबद्धं मुक्तक वा वक्तुं शक्यते अमरुकादिकाव्यवत्। नापि काव्यकोटि-परिगणनकाले उपेक्षणार्हम् 'संचेतसामनुभव. प्रमाणं तत्र केवलमिति' न्यायेनास्य सहृदयहृदय-हृदयवल्लभत्वात्। तथाहि विदितचरमेवेदं तथ्यं विपश्चितां यत् श्रीमद्भगवद्गीतां विहाय संस्कृतवाङ्मये न कस्यापि काव्यस्यैतावत्यष्टीका. समुपलभ्यन्ते, यावन्त्यो मेघदूतस्य। तथैव नान्य किमपि काव्यमुपजीव्य इयन्ति काव्यानि पश्चाद्वर्तिकविभिर्गुम्फितानि, यावन्ति मेघदूतमुपजीव्य। अत एव नेदमुपेक्षामर्हतीति सुश्लिष्टमेवैतत्।

अथ यथाकथञ्चिद् अनिबद्धकाव्यविधान्त.पाति एव सुनिबद्धमपि मेघदूतं परिकल्प्यमित्येव यदि भामहस्याभिप्राय, तदपि मेघदूतं प्रत्युपेक्षादृष्टि-स्तस्य स्फुटैव। नानिबद्धं काव्यं तन्मते न समादरार्हम्। इयमेव दृष्टिराचार्य-दण्डिनोऽपि दृश्यते। मुक्तकादिकाव्यानां विषये स्पष्टमुद्घोषितं तेन—

मुक्तकं कुलकः कोश. संघात इति तादृशः ।
सर्गबन्धांशरूपत्वादनुक्त पद्यविस्तर. ॥

मुक्तकादयः काव्यभेदा. पद्यविस्तरमात्रा. महाकाव्यस्यांशभूता एवेति दण्डी मनुते, न च मेघदूतं पद्यविस्तरमात्रभूतं, नापि सर्गबन्धांशरूपं स्वतन्त्र-काव्यविधाया नवोन्मेषस्य तत्र स्फुटत्वात्।

दण्डिनेव वामनेनापि न कापि तादृशी काव्यविधा सूचिता यत्कुक्षौ मेघदूतान्तर्भाव. शक्येत, अथ च अनिबद्धादिकाव्यानां हेयताप्यनेन तथैवोद्-घोषिता—

'नानिबद्धं चकास्ति एकतेज परमाणुवत् ।
—काव्यालंकारसूत्रवृत्ति, १।३।२६

एवमाभामहाद् वामनं यावत् मेघदूत-विचार-पराङ्मुखत्वं मुक्तकादि-काव्यानां विषयेऽनास्था च दरीदृश्यते। यद्येतेषामाचार्याणा मते मेघदूतं मुक्तकेऽनिबद्धे वाऽन्तर्भाव्यम्, यदि वाऽविचारार्हमित्युभयथापि तेषा मतमश्रद्धेय-मेवेति दिक् ।

२. आनन्दवर्धनस्य मतम्

अनन्तर मेघदूतस्य अमरुकस्य च रसिकेष्वतिप्रियत्वात् आचार्येष्वपि तदाश्रित्य श्रद्धा जजागार। अत एव ध्वनिप्रस्थानपरमाचार्यं आनन्दवर्धन मेघदूते मुक्तके च पूर्ववर्तिनामुपेक्षादृष्टिं समीचीना नामंस्त। ततः प्राक् पृथुल-प्रबन्ध-प्रणायिन आचार्या लघुकायेऽपि मुक्तके प्रबन्धसदृशी प्रभविष्णुता भाति कदाचिदिति न विभावयन्ति स्म। आनन्दवर्धनेन न केवलं ध्वनिकाव्य-निरूपणे मेघदूतादमरुकाच्च असकृत् पद्यान्युदाहृतानि, मुक्तकविषये भामहा-दीना धारणाप्यामूलं परिवर्तिता। तथाहि—

'मुक्तकेषु हि प्रबन्धेष्विव रसाभिनिवेशिन. कवयो दृश्यन्ते। यथाहि—अमरुकस्य कवेर्मुक्तका. शृंगाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव।'
—ध्वन्यालोकः, चौखम्भा सं० पृ० १७५

अमरुकमधिकृत्य ईदृशी सहृदयसम्मतिं विधायाप्यानन्दवर्धनो मेघदूत-विषये तु मौनमेवाललम्बे । ध्वनिवादिनोऽस्याचार्यस्य अमरुककृते सटीका टिप्पणि, मेघदूतविषये पराङ्मुखता च किं ध्वनयत. ? ध्वन्यालोके आनंद-वर्धन प्रमोदभरतुन्दिलं दृष्टिक्षेपं सगौरवममरुके कुर्वाण. मेघदूतस्य निगूढानां गहनगहनानां व्यञ्जनानां विवेचनायावकाशं न लेभे इति त्वाश्चर्यावहमेव। उभयोस्तुलनाया क्रियमाणायां शृंगारामृतशीतगु सन्नपि अमरुककाव्यं मेघ-दूतस्य कला न स्पृशतीति विचारो दृढीयान् संजायते । कमनीयकल्पना-कलितोऽपि अमरुककवे काव्यसंसारो नितान्तमेव संकुचित इति नास्ति संशीति, मेघदूतकविस्तु न केवलां विरहव्यथाकथामाततान, अपितु समग्रस्यापि भारतदेशस्य सांस्कृतिकी छविं प्रेम्ण प्रसारं जीवनदृष्टिं चातिगहनामभिव्यानक्। मुक्तककविममरुकं प्रति युक्त एव आनन्दवर्धनाचार्यस्य बहुमान, किन्तुतदपेक्षया विशिष्टतरां विधा सृजन् मेघदूतप्रणेता महाकविस्तु विशिष्टतरमेवस्थानमर्हति। अन्यच्च अमरुककवेर्मुक्तकानि परस्परासम्बद्धानि, न तत्र मेघदूतवदेकसूत्रता राजते। वस्तुत. पूर्वापरनिरपेक्षत्वं हि नाम मुक्तकस्य लक्षणम्। अत एव आनन्द-वर्धनस्य प्रागुक्तमन्तव्यं व्याख्यास्यन् युक्तमेव बभाषेऽभिनवगुप्तः—'पूर्वापर-

निरपेक्षेणापि येन रसचर्वणा क्रियते तदेव मुक्तकम्' इति । इदं पूर्वापर-निरपेक्षत्वं नाम 'मेघदूतविषये न घटते । अमरुकवद् पूर्वापरनिरपेक्षतया रसचर्वणां कुर्वत्स्वपि मेघदूतपद्येषु क्रम अन्वितिश्च स्त इति अमरुक-मेघदूतयो-र्विशेषः । अत एव च मेघदूतं जटिलभावबोधसंवलितं सदमरुकापेक्षया काव्यविधापरिगणनकाले विशिष्य विचारसपेक्षते, तच्च नानन्दवर्धनेन विहितम् ।

**रुद्रटस्य मतम्**

काव्यविधापरिगणने मेघदूतस्योपेक्षाया· प्रतिकुर्वन्निव रुद्रट. मेघदूतमेव मनसि कृत्वा लघुकाव्यस्य क्षुद्रकाव्यस्य वा लक्षणं निर्ममे । तच्च यथा—

ते लघवो विज्ञेया येष्वन्यतमो भवेच्चतुर्वर्गात् ।
असमग्रानेकरसा ये समग्रैकरसयुक्ता ॥
कुर्यात्क्षुद्रे काव्ये खण्डकथाया च नायक सुखिनम् ।
आपद्गत च भूयो द्विजसेवकसार्थवाहादिकम् ॥
अत्र रस करुण वा कुर्यादथवा प्रवासशृंगारम् ।
प्रथमानुरागमथवा पुनरन्ते नायकाभ्युदयम् ॥
—रुद्रटकृत-काव्यालकारे, १६।६, ३३-३४ ।

अत्र चतुर्वर्गादन्यतमत्वम्, आदौ नायकस्य सुखमत्वं पुनश्चापद्गतत्वं, तस्य सेवकत्वं प्रवासशृंगारप्रयोगश्चेत्यादीनि लक्षणानि मेघदूतमेवानुसरन्ति । किन्तु मेघदूतमधिकृत्य तल्लक्षणं कुर्वतापि रुद्रटेन मेघकाव्यमर्म नावगतमित्यपि लक्षणात् स्पष्टमेव । प्रथम तु लघुकाव्येन क्षुद्रकाव्येन वाऽभिधानेन लघुत्वं क्षुद्रत्वं वा अस्य काव्यविधायास्तन्मते सूचितं भवति । अन्यच्च खण्डकथाया कृते तदेव लक्षणमूरीकुर्वताऽनेन एवंविधकाव्ये इतिवृत्तात्मकता भवेदित्यपि सिद्धान्तितम् । तथैव च 'पुनरन्ते नायकाभ्युदयमिति' कथयतोऽस्य सुखान्तमिदं काव्यमित्यपि अभिमतम् । एतच्च त्रितयमपि मेघदूतविषये न सत्यम् । न खलु मेघदूते इतिवृत्तात्मकता स्थूलघटनानां वा अन्वितिर्विद्यते, कथातत्त्वं तत्र सर्वथा न्यक्कृतम्, इतिवृत्तेऽन्तरनुस्यूताः सूक्ष्मा अभिप्राया एव कविनाऽभिव्यक्ता, तेषा चाभिव्यक्तिरेवास्याभिप्रेता, न पुनरितिवृत्तकथनम् । न च क्षुद्रमिदं काव्यं वक्तुं शक्यते, नापि सुखान्तम् । मेघदूतस्य अपूर्णताया मिथ्या संभावनां कृत्वा तदन्ते च केनचित् कालिदासान्धभक्तेन संयोजितानि इतिवृत्त-पराणि प्रक्षिप्तपद्यान्यपि रुद्रटेन कालिदासग्रथितानि इति मत्वा लक्षणमिदं निर्मितमिति प्रतीयते । अत एव मेघदूतस्य काव्यार्थमसाववगन्तुं न शशाकेति शक्यते वक्तुम् ।

(४) **भोजदेवस्य मतम्**

अथ पूर्वसूरिभिर्विहितानि मेघदूतकाव्यलक्षणानि अतिव्याप्त्यव्याप्तिदोष-दूषितानि दृष्ट्वैव भोजदेवो मेघदूतस्य काव्यकोटिनिर्धारणे नूतनपरिकल्पनां कलयामास। संघातो नाम काव्यप्रकार एव मेघदूतलक्षणमिति तस्य मतम्। वस्तुतः संघातो नाम काव्यभेद. दण्डिना प्राक् कलितमेवासीत्—

'मुक्तकं कुलकं केश सघात इति तादृश ।'

इति पूर्वोदाहृतकाव्यादर्श-स्थले। काव्यादर्श-टीकाकारेण वादिजंघालेन संघातस्योदाहरणत्वेन मेघदूतमेवोपस्थापितम्। अन्य टीकाकार तरुण-वाचस्पति एकार्थत्वम् एकविषयत्वं नाम संघातलक्षणं ब्रुवाण शरत्सघातं नाम काव्यमस्योदाहरणं निरूपयामास। भोजदेवोऽपि तरुणवाचस्पतिरिव एकार्थत्वमेव संघातलक्षणं मेने तदुदाहरणं च मेघदूतमुपन्यस्तावान्। इदं संघातत्वमप्य-लक्षणमेव मेघदूतस्य। यतो हि एकविषयस्य वर्णनात् काव्यं संघात इत्युच्यते। यथा—शरदृतोर्वर्णनात् शरत्संघात-इति, न तथा मेघस्य वर्णनान्मेघदूतं संघात इति वक्तुं शक्यते, मेघवर्णनस्य कवेरनभीष्टत्वात्। अत एव अव्याप्तिरस्य लक्षणस्य मेघदूतविषये।[1]

(५) **राजशेखरस्य मतम्**

एवं च मेघदूतकाव्यविधानिर्णयप्रकरणेऽतिजटिलतामुपयाते द्वौ विकल्पौ काव्यविवेचकाना समक्षं भवतः स्म। पूर्वस्वीकृत-मुक्तकादिलक्षणेषु तथा परिष्कार कार्यो येन मेघदूतस्य तदन्त पातिता सम्भवेदिति प्रथम, अथ च मेघदूतमुपलक्ष्य सर्वथा नूतनैव काव्यकोटि कल्प्या इति द्वितीय। काव्यमीमांसा-कारेण राजशेखरेण एषु प्रथमो विकल्पोऽङ्गीकृतः। तेन मुक्तकगतस्य अर्थस्य पंचविधत्वं परिकल्पितम्। तद्यथा—

स पुनर्द्विधा। मुक्तक-प्रबन्ध-विषयत्वेन। तावपि प्रत्येकं पञ्चधा। शुद्ध., चित्रः, कथोत्थः, सविधानकभू, आख्यानवाश्च। तत्र मुक्तेतिवृत्तः शुद्ध। स एव सप्रपञ्चश्चित्र। वृत्तेतिवृत्त कथोत्थ। सम्भावितेतिवृत्तः सविधानकभू। परिकल्पितेतिवृत्तः आख्यानवान्।'

—काव्यमीमांसाया नवमेऽध्याये।

अत्र अर्थस्यैव शुद्धचित्रादिभेदेषु विभाजनं न पुनर्मुक्तकस्य। वस्तुत इमे अर्थभेदा मुक्तकेष्विव प्रबन्धेष्वपि भवन्तीति स्वयमेव सूचितं राजशेखरेण। अत एव काव्यार्थविषयत्वात् विभाजनमिदं न मेघदूत विषयीकरोति।

---

१ भोज श्रृंगारप्रकाश.—डॉ० वी० राघवन्, पृ० ६२८।

### (६) वल्लभदेवस्य मतम्

मेघदूतस्य प्रथमटीकाकार वल्लभदेवस्तु मेघदूतकाव्यविधानिर्णयमुपक्रममाणो द्वितीयमेव विकल्पं श्रित । तन्मतेन पूर्वाचार्यैर्निर्णीता. सर्वा अपि काव्यविधा मेघदूतविषये परास्ताः । तद्यथा—

'अथ यदेतद् भवान् व्याचष्टे किमेतदुच्यते । मन्त्रदूतश्रवणाद्यभावान्महाकाव्यमपि खण्डकाव्यवन्न भवति । तथाऽऽख्यायिकाव्यपदेशस्तु दूरापेत एवात्र । प्रावृडाश्रय प्रवासविप्रलम्भः कवेर्वर्णयितुमिष्टोऽत्र । स च नायकमनाश्रित्य वर्ण्यमानस्तथा रसवत्तां न धारयति । न च शृंगारविधानम् । गुह्यकोऽत्र नायकतया श्रित. । तस्य च विरहोन्मत्तत्वाद् दूत्ये मेघप्रेरणमपि नायुक्तमिपि केलिकाव्यमित्येतत्सर्वं स्वस्थम् ।'

—मेघदूत-वल्लभदेवटीका पृ० १

[Ed. E. Hultzsch, Royal Asiatic Society, Calcutta, 1911,]

वल्लभदेवमतेन महाकाव्य-खण्डकाव्याख्यायिकादिव्यपदेशा मेघदूतविषयेऽयुक्ताः । स तु मेघदूतं केलिकाव्यमित्यभिप्रैति । किन्तु किं नाम केलिकाव्यं किं चास्य लक्षणमिति न केनापि क्वचिन्निर्दिष्टम् । अत एव केलिकाव्य लक्षणं यावन्न निर्णीयते तावत् कथं मेघदूतं केलिकाव्यमिति अनुत्थानोपहतो वल्लभदेवस्य पक्ष. ।

### रागकाव्यं गीतकाव्यं वा

अभिनवगुप्तस्तु अन्यैराचार्यैरपरामृष्टं रागकाव्यं गीतकाव्यं चेति द्विविधं काव्यमपि निर्दिशति । तद्यथा (ना० शा० ४।२७२) अभिनव भारत्याम्—

'गीयत इति गीतं काव्यम् ।……

एष एव तु प्रकारः कलाविधिना निबध्यमानो राघव-विजय-मारीचवधादि-रागकाव्य-भेदमुद्भावयतीति । यथोक्तं कोहलेन—

लयान्तरप्रयोगेण रागैश्चापि विवेचितम् ।
नानारसं सुनिर्वाह्यं कथं काव्यमिति स्मृतम् ॥

लयतश्चास्य गीत्याधारत्वेनाप्राधान्ये गीतेरेव प्राधान्यमिति न काव्यार्थविपर्यासवशेन रागभाषादिविपर्यासो नाट्य इव । तथा हि—राघवविजयस्य हि ठक्करागेणैव विचित्रवर्णनीयत्वेन निर्वाहः । मारीचवधस्य ककुभग्रामरागेणैव । अत एव रागकाव्यानीत्युच्यन्त एतानि ।'

(नाट्यशास्त्र काशीहिन्दु वि० वि० सं०, प्रथमो भागः पृ० ४३७-३८)

एतयोः काव्ययोः गेयतायाः रागाणां च प्राधान्यं भवति। नैतद् मेघदूतेऽस्ति। अभिनवनिर्दिष्ट-राघवविजयादिवत् गीतगोविन्दं गीतकाव्यं रागकाव्यं स्यात्, न तु मेघदूतं तथा। यद्यपि मेघदूतविषय एतल्लक्षणं न केनापि विचारितं, तथापि कश्चिद् ब्रूयादिति परिकल्प्यैवमुक्तम्।

**(७) सन्देशकाव्यवादिनां मतम्**

सन्देशकाव्यं दूतकाव्यमिति वा मेघदूतस्य कृते सर्वप्रचलिता संज्ञा। एषा च मेघसन्देशो मेघदूतं वेति अस्य काव्यस्य व्यपदेशादेव प्रचलिता स्यात्। आलङ्कारिकेषु न केनापि सन्देशकाव्यस्य दूतकाव्यस्य वा लक्षणं व्यधायि। वस्तुतः मेघदूतमनुसृत्याहमहमिकया तत्सदृशकाव्यनिर्माणलालसानां तट्टीकाकाराणामेव वा मेघदूतस्य दूतकाव्यत्वे सन्देशकाव्यत्वे वाऽभिप्रायो दृश्यते, न पुनः कस्याप्याचार्यस्य। तेष्वन्यतमेन लक्ष्मीदासकृत-शुकसन्देशकाव्यस्य टीकाकारेण धर्मगुप्तेन स्ववरवर्णिन्यामिदम्प्रथमतया मेघदूतं मानसे निधाय सन्देशकाव्यलक्षणं सूचयता तस्य द्वादश प्रकरणानि निर्दिष्टानि—

(१) आदिवाक्यम् यथा—

मेघदूते कश्चित्कान्तेत्यादि प्रथमपद्यम्।

(२) दौत्ययोजनम् यथा—

सन्देशं मे हर धनपतिक्रोधविश्लेषितस्येत्यादि यक्षोक्तिषु।

(३) व्रज्यांगदेशनम्—

मार्गं तावच्छृणु इत्यादिना अलकामार्गवर्णनम्।

(४) प्राप्यदेशवर्णनम्—

'तस्योत्संगे प्रणयिन इव स्रस्तगंगादुकूलाम्' इत्यलकावर्णनम्।

(५) मन्दिराभिज्ञापनम् यथा—

यक्षेण स्वभवनवर्णनम्।

(६) प्रियासन्निवेशविमर्शनप्रकरणम् यथा—

'सा तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः।'

(७) अन्यरूपतापत्तिसम्भावना यथा—

'जाता मन्ये शिशिरमथितां पद्मिनीवान्यरूपाम्।'

(८) अवस्थाविकल्पनप्रकरणम् यथा—

'आलोके ते निपतति पुरा सा बलिव्याकुला वे' त्यादि।

(९) वचनारम्भप्रकरणम् यथा—

'वक्तु धीर. स्तनितवचनैर्मानिनी प्रक्रमेथा।'

(१०) सन्देशवचनप्रकरणम् यथा—

भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहम्' इत्यादौ।

(११) अभिज्ञानदानप्रकरणम् यथा—

भूयश्चाह त्वमपि शयने कण्ठलग्ना पुरा मे' इत्यत्र।

(१२) प्रमेय परिनिष्ठापनप्रकरणम् यथा—

'कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे' इत्यत्र।

यद्यपि एतेषा प्रकरणाना मेघदूते पूर्णतः विद्यमानता प्रत्यक्षेति दर्शितमेव, तथापि मेघदूतस्य काव्यलक्षणमेभिर्न साधयितुं शक्यते। असाधारणधर्मवचनं खलु लक्षणम्। न खल्वेभिर्मेघदूतस्य असाधारणत्वं स्फुटति। अथ यदि 'यत्र कोऽपि (विरही) कमपि जडं चेतनं वा पदार्थं दूत्येन नियोज्य सन्देशं तेन प्रेषयति तत् सन्देशकाव्यं दूतकाव्यं वे' ति यदि लक्षणं विधीयते, तदपि न मेघदूतं क्रोडीकरोति। यतो हि धूमज्योति.सलिलमरुतां सन्निपातरूपो मेघो नात्र सन्देशं शृणोति, न वा गृह्णाति, न च तमादायालका प्राप्नोति, न च प्रेयसी प्रति तं निवेदयति। यत्र दूत्येन नियोजितपुरुषो सन्देशं न गृह्णाति तत्र ग्रहणाभावे कथं विरहिणा सन्देशस्य प्रदानम् इति अव्याप्तिरत्र सन्देशकाव्यत्वलक्षणस्य मेघदूते। अथ च—मेघः सन्देशं शृणुयाद्वा न वा, तमादाय यायाद्वा न वा, यक्षस्तु तस्मै सन्देशं दित्सति, तेन वा सन्देशं प्रेषयितुकामोऽस्तीति सर्वथा घटत एव सन्देशकाव्यत्वं मेघदूत इति चेन्न, सन्देशप्रदानस्य कवेरनभिप्रेतत्वात्। अयमभिप्रायः-सन्देशप्रेषणे मेघस्य दौत्यप्रकल्पने वा न मेघदूतस्य स्वारस्यम्। यतो हि यथा भ्रमरसन्देश-शुकसन्देश-पवनदूतादिपरवर्तिकाव्येषु यथा नायका भ्रमरशुकादिभिः सन्देशं प्रेषयन्ति, ते च यथेप्सितं गत्वा सन्देशं श्रावयन्ति, इत्येतादृशं वृत्तं मेघदूते न परिणमति। अत एव पश्चाद्वर्तिदूतकाव्यानां दौत्ययोजनाया स्वारस्यं स्यात्, न पुनर्मेघदूतस्य। अत एव इतर काव्येभ्यः प्राकरणिककाव्यस्य इयन्तं विशेषं परिलक्ष्य तेभ्यो व्यतिरिक्तैव विधा एतस्य कृते कल्पयितुमुचिता, न पुनर्दौत्य-

कर्मविहीनस्य अप्रधानभूतदौत्यकार्यस्य च काव्यस्य दूतकाव्यकोटौ सन्निवेश उचित.।

अन्यच्च—मेघदूतनायको मेघं दूत्येन नियोजयितु वस्तुतो वाञ्छत्येव-इति यत् मन्यते, तत्कस्मात् ? अचेतनं पदार्थं दूत्येन प्रकल्पयन् जन· पूर्णत उन्मत्त स्यात्। न पुनर्मेघदूतस्य यक्षस्तादृश· इति कवेरेव वचोऽत्र प्रमाणम्—

तस्य स्थित्वा कथमपि पुर कौतुकाधानहेतो
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥

अत्र नायक. पूर्णविभ्रान्त इत्यभिप्रायस्तु न कथमपि आयाति। विरहिणो यक्षस्यान्तर्बाष्पत्वं मेघमालोक्य चिरं च ध्यानं न उन्मत्तपुरुषस्य लक्षणं भवितुमर्हति, अपितु दुःखाकुलितस्यैव। उन्मत्त. सन्नुच्चैः रुद्याद् हसेद् वा, न पुनरन्तर्बाष्प सन् विचारं कुर्यात्। मेघस्य 'कौतुकाधानहेतुत्वम्' जनानां च 'अन्यथावृत्तित्वं मेघालोके' यक्षस्यैतामेव भावदशा व्यञ्जयतः, नोन्मत्तताम्। वस्तुतो मेघदूते यक्ष. यद् यत् कर्म समाचरति, यच्च यच्च वक्ति तस्मिन् सर्वत्र तस्य असन्दिग्धा विवेकशीलता अभिव्यज्यते, न कथमप्युन्मत्तता कुत्रापि। एवं गतेऽपि यदि मेघदूतेऽसौ मेघं दूत्येन नियोजयन्निव दृश्यते, तर्हि तत्र कवे कविनिबद्धनायकस्य च गूढेन केनाप्यभिप्रायेण भाव्यम्।

इदमत्रावधेयम्। सर्वत्रापि मेघदूतकाव्ये स्वीयेऽन्तर्मानसे यक्ष एतत् तथ्यं प्रति निरन्तरमेव जागरूक: यदचेतनोऽयं मेघो न दूत्यमर्हति न च विधास्यतीप्सितम्। चेतनाचेतनयोर्भेदं नासौ सर्वथा विस्मृतवानस्ति, अपि तु भेदं जानन्नपि न तस्य गणना करोति इति स्वयमेव कविरूचे--

धूमज्योति.सलिलमरुतां सन्निपात क्व मेघ.
सन्देशार्थाः क्व पटुकरणै प्राणिभि प्रापणीयाः।
इत्यं चेतस्यपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥

अत्रापरिगणयन्निति पदेन जानन्नपि यक्षोऽजानन्निवाचरतीत्येव अर्थं सूच्यते। यत्र अन्तर्मनसि मेघस्य जडत्वं संभावयन्नपि यक्षस्तमालपति, तत्र तत्त्वत· सन्देशप्रदानं दौत्यप्रकल्पनं वा न मन्तुं शक्यते। वस्तुतो भावावेशाद्

विवशहृदयो यक्षो मनोगतं स्वीयं यस्मै कस्मैचिद् निवेदयितुकामो सर्वथा एकाकी न कमपि अन्यमुपयुक्तं सहचरं समानधर्माणं लभमानो जानन्नपि किमपि मनसि कृत्वा मेघमेव मनोन्माथिभावानामभिव्यक्तये उपकरणत्वेन कलयामास । अतथात्वे तु अष्टभिर्मासैः ये भावावेगास्तन्मानसमान्दोलयन्तिस्म, तैरनभिव्यक्तिमुपागतै. स सर्वथा विक्षिप्त एव स्यात् । यक्षस्य मानसिकी दशा क्वचिद् विक्षिप्तिसीमानं स्पृशन्त्यपि सर्वत्र विवेकशीलतामभ्यन्तरे क्रोडी-करोति । अत एव तदीयचेतनाया द्वैविध्यं सर्वत्र मेघदूते परिलक्ष्यते । एकतस्तु जडोऽयं मेघो न सन्देशं नेष्यतीति वस्तुस्थितेर्बोधस्तदुक्तिषु अत्यन्तं प्रच्छन्नो विद्यते, अन्यतस्तमाच्छाद्य तेन जानताप्युपकल्पितो नेष्यत्येवेति विक्षिप्तिजननी मनोवेदनामवरोद्धुं रचितो मिथ्या आश्वासः । यत्र जानन्नपि विवेकसम्पन्नो जन. घोरनिराशातमिस्रायाः स्वात्मानं त्रातुं मिथ्या-विश्वासमेव सृष्ट्वा यथा कथञ्चित् समुच्छ्वसिति तादृश्यां मनोभूम्यां यक्षोऽपि तिष्ठति । अत एव—

तां चावश्यं दिवसगणनातत्परामेकपत्नी
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ।

इत्याद्युक्तिषु 'अवश्यम्' 'अव्यापन्नाम्' 'अविहतगति' इत्येतादृशाकारा-दिपदेषु 'अयं मेघो न ता द्रक्ष्यति,' 'क्वचित् सा व्यापन्ना न स्यात्' 'मेघस्यास्य गतिस्तु यत्र तत्र विहतैव' इति वस्तुस्थितिबोधः आशंका वितर्कश्च सर्वत्रान्तर्ग-भितानि । अनेके प्रश्नास्तस्य मानसमान्दोलयन्ति इति प्रश्नेनैव तस्योक्तीनां मेघदूतस्य चावसानं जायते—

कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न न खलु भवतो धीरतां कल्पयामि ॥

अत्र 'कच्चित् त्वया बन्धुकृत्यं व्यवसित' मिति प्रश्नेन, नानेन मेघेन अस्मत्प्रलापो श्रुतो न चावधारित इति बोध एव ध्वन्यते, अन्यथा उन्मादेन सर्वथा विश्वासमुपागतो जनस्तु प्रश्नमेव एतादृशं न कुर्यात्; 'श्रुतं त्वया सन्देशोऽस्माकं, गच्छाधुने' त्येव कथयेत् । इत्थं यक्षस्य विश्वासेन अविश्वासः आशंकया आश्वासः निराशया चाशया मेघदूतकाव्ये पंक्तिशः अभिव्यञ्जनैक-धनेन महाकविना गुम्फिता इति विरहि-हृदयस्यातिविचित्र-गहनजटिल-संश्लिष्ट-दशाया. समुद्घाटने मेघदूतस्य स्वारस्यम्, न सन्देशप्रेषणे, दूतप्रकल्प-ने वा । यस्माच्च पवनदूतादिवन्न सन्देशप्रदानेऽस्य स्वारस्यम्, अतो नेदं सन्देशकाव्यं दूतकाव्यं वा ।

**८. आधुनिकानां मतम्**

आधुनिकास्तु पाश्चात्त्येषु 'लिरिक' इति संज्ञायमानं गीतिकाव्यं मेघदूतं

मन्यन्ते। इदं च गीतिकाव्य नाम कवेर्नितान्तमेव स्वीयान्तस्तमभावानां समुद्गार । न तत्र वस्तुपरकताया: कृते (Objectivity) स्थानलवोऽपि सम्भाव्यते। मेघदूते तु वस्तुपरकता सर्वत्रानुस्यूतेति विप्रतिषिद्धमेतत् यद् गीतिकाव्यं मेघदूतमिति। तथा हि—न केवलं 'कश्चित्कान्ता विरहगुरुणा' इत्यादि—कविनिबद्धोक्तिषु, अपितु यक्षस्योक्तिष्वपि कवेर्दृष्टिस्तस्मात्, स्वतन्त्रैव सर्वत्र परिस्फुरति। कविर्यक्षेण तादात्म्यमनुभवन्निव प्रतीयते, किन्तु न तत्त्वत स तथा विद्यते। तस्य दृष्टिर्यक्षात् पृथग्भूय सततं जागरूका कामिहृदयस्य विजृम्भणं परिष्कुर्वाणा औदात्त्यं नयमाना च वरीवर्ति। अन्यथा यक्षस्य प्रणयभावनया सह काव्येऽस्मिन् समग्रभारतस्य सांस्कृतिकी छवि:, कवेर्जीवनादर्शबोधः संस्कृतिनिष्ठा कामुकस्योक्तिभ्यः सर्वथा उपरि राजन्ती अनल्पलावण्यच्छटां विकिरन्ती कल्पना अभिव्यक्तिं यायात् ? यक्षस्तु एकाकी कामुक व्यथितश्च विद्यते, कविश्च तटस्थ। अत एव यक्षो कामपीडित-स्त्रीशरीरगन्धमेव यदा सर्वत्र आघ्राति, नारीदेहस्य प्रतिच्छविमेव सर्वत्रावलोकयति, तदा तदीयोच्छ्वसितं परिष्कुर्वन् कवि तत्र अमरमिथुनप्रेक्षणीयामवस्थां रचयति—

> नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
> मध्ये श्याम स्तन इव भुवः शेषविस्तारपाण्डु ।

अलक्षणमेतद् गीतिकाव्यस्य यत्कवे: स्वोपनिबद्धपात्रात् ताटस्थ्यं नाम, अन्तरंगमनोदशोन्मीलनेन सह बहिरगदृश्यफलकस्य च चित्रणम्। यतश्चेदम-लक्षणम्, अतो न गीतिकाव्यं मेघदूतम्।

प्रवाचकः

सागर-विश्वविद्यालये

# संस्कृताध्ययनस्यानुसन्धानस्य च दिशो व्यवस्थाश्च

विश्वनाथ मिश्र

सामोदं स्वातन्त्र्यसरिदवगाहमाने भारतेवर्षे यत्र देशस्य सर्वविध-विकासाय क्रियन्तेऽनेके समुपाया., प्रत्यहमनुष्ठीयन्ते विभिन्नकार्याणि, सफली-क्रियन्ते योजनाबद्धानुष्ठानानि, तत्रैव विमृश्य चेदं चेखिद्यते चेतो यद् भारतीय-संस्कृते प्राणास्पदं संस्कृतं जराजीर्णमिव रुजाक्रान्तमिव भग्नमनोरथमिव किं बहुना विगतप्राण कङ्कालमिव समुद्वेजयति मनासि सुमनसाम् ।

नास्त्यावश्यकता वाचो विग्लापनस्य । चेदस्माक देशस्य मुकुटमणि-र्हिमालयो भवेद् ध्वस्त कथञ्चन, सीमान्तपाला, गभीरसलिलसाराः पारावारा स्युः शुष्यमाणा कदाचिन्न तादृशी हानिर्भारतस्य यादृशी सस्कृतमणिमञ्जूषा-पि हृत-रत्नराशिनाशेन ।

भारतवर्षे साम्प्रतं प्रचलति द्विविधा संस्कृत शिक्षा । एका तु आग्ल-विद्यालयेषु विश्वविद्यालयेषु च, अपरा च प्राचीनपरम्परामवलम्ब्य संस्कृत-महाविद्यालयेषु विश्वविद्यालयेषु च । तत्रांग्लविद्यालयीयसंस्कृतशिक्षा यत्र हिन्द्या, किं वा आग्लभाषायामेव वा मम्मट. कदा प्रादुर्बभूव ? कालिदास समये किं भोज्यं किं च लेह्यमासीत् इत्येवरूपेण कालो याप्यते तत्र मूलमपहाय पत्रगणनापरायणै संस्कृतं रक्षिष्यते इति केवलं दुराशामात्रम् । अतोऽपहाय-परम्परामिमा संस्कृत-विद्यालयेषु च प्रचाल्यमाना संस्कृतशिक्षण-परम्परामेवा-धारीकृत्य प्रस्तूयते किमपि । एतदुपक्रमे महता कष्टेन परं हृदयेन तथ्यमिद भवति सर्वै. स्वीकरणीय यदद्य संस्कृतसंस्थानषु प्रचाल्यमाना संस्कृतशिक्षा सर्वथा विफलता गता वर्तत इति ।

तत्रत्यमध्ययनमध्यापनञ्चाभासमात्रं विलुप्तप्रायमेवेति शक्यते वक्तुं निश्चितम् ।

कस्याश्चिदपि भाषाया अध्ययनस्य चत्वारि फलानि भवन्त्याशास्य-मानानि । एषु एकमपि फलं नोपलभ्यते सस्कृतशिक्षाया साम्प्रतम् । तानि च फलानि सन्तीमानि—प्रथमं भाषाज्ञानम्, द्वितीयं विषयज्ञानम्, तृतीयं जीवन संस्कारः, चतुर्थ जीविकोपार्जनक्षमता च ।

यस्या द्वारेण प्रचलति अध्ययनमध्यापनञ्च तस्या सम्यक् ज्ञानं सर्व-प्रथममावश्यकम् । भाषाया. व्याकरणं शुद्धं ज्ञानमन्तरा, न लेखन, न भाषण,

न शास्त्रार्थं, न परिसंवादो वा भवितुमर्हति। अपि च भाषाज्ञानविधुरस्य सर्वाणि प्रयोगक्षेत्राणि त्रुटिपूर्णानि भवन्ति अनर्थजनकानि चेति भाषाज्ञानं कस्याप्यध्ययनस्य प्रयोजनत्वेनावधार्यते।

द्वितीयं फलं विषयज्ञानम्। कस्यापि स्वाभिलषितस्य अध्ययनपथमानीयमानस्य विषयस्य सर्वाङ्गपूर्णं निर्भ्रान्तिञ्च ज्ञानमेवाध्ययनस्य परं प्रयोजनम्। एतदर्थमेव स्थाप्यन्ते विद्यालयाः, उद्घाट्यन्ते पुस्तकालयाः, सञ्चाल्यन्ते विभिन्न-संस्थानानि, व्ययीक्रियन्ते विपुलान्यर्थजातानि, तदुपर्येव सम्भाव्यते सर्वविधो राष्ट्रियविकास। अत स्वाधीतविषयस्य तत्त्वावगाहि वैदुष्यं नवनवायमानो बुद्धिप्रकर्षश्च महत्त्वपूर्णं फल भवति शिक्षायाः। तृतीय फलमध्ययनस्य जीवन संस्कार एव। पतञ्जलिनाऽपि चतुर्भि प्रकारैर्विद्योपयुक्तता प्रतिपाद्य व्यवहारकालेनैव तत्परिसमाप्ति प्रत्यपादि। अध्ययनानुरूपं जीवनस्य निर्माणमपि फलत्वेनोपकल्पितं मनीषिभि.। धर्मसंस्कृतिशब्दाभ्या ये मानवीया. सदाचारादयो गुणगणा गृह्यन्ते, तेषा जीवनस्य प्रत्येकक्षेत्रे आचरणमध्ययनस्य महत्त्वपूर्णं प्रयोजनम्। अतएव श्रूयते – 'यस्तु क्रियावान् पुरुष स विद्वान्।' चतुर्थं फलमस्ति अध्ययनावाप्तयोग्यतया जीविकार्जनक्षमता। कस्यापि विषयस्य शिक्षामुपेत्य जनस्तादृशी योग्यतामासादयेत् यया असौ राजकीयामन्यां व वृत्ति प्राप्य जीवनस्य भारं निर्वोढु शक्नुयात्। इदमेव फलं जीवनस्य कृते परमोपयोगीति सर्वेषा विचारकाणामेकमत्यमस्ति।

एषा चतुर्णा फलाना यदि न भवति अवाप्तिस्तर्हि व्यर्थमध्ययनं व्यर्था शिक्षा, किं बहुना जीवनमेव व्यर्थमिति विचारकाणामाकूतम्।

अनया दृष्ट्या यदि विचार क्रियते तदा आधुनिकं संस्कृताध्ययनं दृष्ट्वा नैराश्यमेव हस्तगतं भवति। कष्टमेव जायते, प्रतिपदम्, अवनतं च भवति शिर समवलोक्याधुनिकान् संस्कृतज्ञान्।

परा काष्ठां गता भाषा ज्ञानस्य दुर्दशेदानीम्। प्रथमश्रेण्यामाचार्यपरीक्षोत्तीर्णा अपि छात्राः शुद्धभाषया स्वकीयं परिचयमपि दातुमशक्ता कलङ्कयन्तीव आचार्योपाधिम्। प्रतिवर्षं संस्कृत-संकायादिषु पठ्यन्ते परीक्षकाणा प्रतिवेदनानि। तत्र शास्त्राचार्यकक्षस्थैः छात्रै वायुस्य, भ्रातृस्य सदृशानि पदानि लिखितानि कं नोद्वेजयन्ति नमयन्ति च केषां न शिरांसि। समुज्जृम्भमाणे एतादृशे भाषाज्ञाने विषयज्ञानस्य कथा तु वक्तुमप्यशक्या। फलत. चक्षुषी विस्फार्यावलोक्यताम् अद्यत्वे संस्कृतमधीयानाना मध्ये कियन्तो भवन्ति क्षमाः परिभाषेन्दु - शब्देन्दु - महाभाष्य - व्युत्पत्तिवादावच्छेदकत्व-निरुक्त-प्रभृति ग्रन्थानध्यापयितुम्। व्याकरणाचार्या अपि सम्यक्तया लघुकौमुदीं पाठयितुं

शक्ताः सन्ति किम् ? साहित्याचार्या अपि लक्षणाया ज्ञानरूपत्वं, व्यापाररूपत्वं शाब्दत्वमार्थत्वं वा विवेचयितुं समर्था सन्ति किम् ? यदि चोच्यते कावश्यकता अद्यत्वे शेखरमञ्जूषा-काव्यप्रकाशादि-ग्रन्थाना रहस्योद्घाटनस्य । अनुपयोगिनः खलु इमे ग्रन्था पाठ्यन्ता यथा कथञ्चित् । बहिष्क्रियन्ता वा परीक्षात. । शिर.शूलोत्पादकेनैनेषामध्यापनेनालम् । परं नैतत् समीचीनं, यतो हि – अपाकृतेषु प्रौढिमम्पादक-ग्रन्थरत्नेषु हितोपदेश-पञ्चतन्त्रादिकमपि पाठयितुं कथं सम्पादयिष्यन्ते । के वा भवेयुस्तेषा सम्पादयितार ? इत्यप्यालोच्यताम् । पल्लवग्राहित्वमेव संस्कृतमिति मन्यसे चेत्, संस्कृत-वाङ्मय-विशाल-भाण्डागार-खचिता भारतीयसंस्कृतिमणि-मञ्जूषा अनुद्घाटितैव स्यात् ।

नेदं विस्मर्त्तव्यं यदद्यत्वे रघुवंशपञ्चतन्त्र-सदृशं पुस्तकमपि पाठयितुं प्रौढैरेव विद्वद्भि· सम्पाद्यन्ते । समूलोन्मूलिताया प्रौढपरम्पराया संस्कृतं भविष्यत्यपि न वा जगति इति जाज्वल्यमान. प्रश्न सुस्थिर स्थास्यति पाषाण-खण्ड इव पुरस्तात् सर्वेषाम् । सन्धिसमास-विवेक-पुर सरं ग्रन्थपंक्ति-वाचनेऽसमर्था कथमपि व्याख्यातुमप्रभवो "जायाप्रतिग्राहितगन्धमाल्याम्" इति पदं संस्कृतं रक्षिष्यन्तीति दुराशामात्रम् ।

एवमेव धर्मसंस्कृति-सदाचार-विषयेऽपि अकिञ्चित्-करं संस्कृताध्ययन-मपार्थमेव जीवनाचरणे । तस्मात् तृतीयं फलमपि खपुष्पायितमेव जीविकार्जन दृष्ट्याऽपि न सफलमिदमध्ययनमिति अचिरादेव स्पष्टीकरिष्यते ।

ननु किमेतस्य निदानमिति चेत् पञ्चसूत्रात्मकं कारणं वर्तते अस्या अनर्थपरम्पराया इति मे मति । तानि च पञ्च सूत्राणि सन्तीमानि—

(१) अनियोज्यानुयोजनम् (२) पी० एच० डी० उपाधेर्महत्त्वम्

(३) वेतनक्रमे वैषम्यम् (४) परीक्षा-पद्धतेर्दु रवस्था

(५) प्राथमिक-शिक्षाया दुर्दशा ।

अथेदानी प्रत्येकं सूत्रं समासतो व्याख्यायते—

(१) संस्कृतज्ञाना कृते मुख्यं जीविकासाधनम् अध्यापनम् । तत्र च भवन्ति *अध्यापनस्थानानि* परिमितानि । प्रत्याशिनश्च भूयास. । कुत्रापि स्थानेऽध्यापिपयिषया निर्वाचनसमये न योग्यता परिचीयते, न पाटवमाकलय्यते, न विदग्धता काम्यते, न वा शास्त्रीया प्रौढिरपेक्ष्यते अपि तु डाक्तरोपाधि काम्यते तत्रापि स्वकीयत्वमेव लोचनपथ - गोचरीक्रियते । प्रणाल्याऽनया कवलितानि भवन्ति, निखिल-स्थानानि प्रधानचतुरै. शास्त्रज्ञानशून्यैर्विडम्बना-प्रधानैः । तत. सीदन्ति पठितारः, उपेक्षिता ज्ञातार , दूरमुत्सारिता विदग्धता

अपाकृता च भवति शास्त्रीया प्रौढि । एवरीत्या अनियोज्यानुयोजने जागरूके यदाकृतभूरिपरिश्रमै स्वाधीतविषय-सूक्ष्मतम-रहस्योद्घाटनपरायणै. कथमपि विशिष्टं स्थानं लब्धुं पारयिष्यत एव नहि, तर्हि कथ केनापि पठ्यताम् संस्कृतम् ? कथ वा क्रियताम् पञ्चत्व-साधक श्रम कठिनतम-ग्रन्थावबोधने। कथमिव वा क्रियता शिर स्फोटनं फकि कामर्म वेदने ? फलस्वरूपं संस्कृताध्ययनं निष्फलमुपेक्षणीय हेयं निन्दनीयञ्च कथ न भवेदिति सुधिय स्वयमेव विचारयन्तु ।

अयञ्चापरो गण्डस्योपरिविस्फोट संस्कृत सर्वनाशायोपकल्पित: पी० एच० डी० उपाधेरनिवार्यता पाठयितुं यत्र कुत्रापि संस्कृतम् । हं हो कियती विडम्बना ? शेखर-महाभाष्य-रसगङ्गाधरव्युत्पत्तिवाद-सदृशाना ग्रन्थानामध्यापने किमुपकरिष्यति पी० एच० डी० उपाधिधरो जन इति न वेद्मि । कल्प्यतामेक. शाब्दज्ञानलवलेशहीन. पाणिनिसमये भोज्यलेह्यनामान्यादाय निर्माय च तेषा सूचीपत्रं लब्धवान् पी० एच० डी० उपाधि नियुक्त. पाठयितुं व्याकरणं शेखरस्य पंक्तिवाचनेऽप्यसमर्थ· कियती हत्या विधास्यति व्याकरणशास्त्रस्येत्यपि विचारितं केनापि ? एवमेव अन्यशास्त्रविषयेऽपि पी० एच० डी० महाभागानामिदमेव वैशिष्ट्यं, यदि न स्युस्ते स्वाधीतविषयपठीयासश्चेत् । सार्धद्वयशतपृष्ठात्मकं गुरुकलेवरमपि अन्त सारहीनं बहुव्ययसमयसाध्यं केनापि विचारकेण कथमपि कदाप्यनवलोकनीयं पुस्तकालयाना भारभूतं पुस्तकाभास लिखित्वैव यदि कोऽपि मन्यते योग्यतमस्तर्हि हताशा वदान्या वास्तविकयोग्यता कुत्र शरणमवाप्स्यति इति शोचनीयो विषय· । अवस्था यामस्या सस्कृतस्य सुरक्षा गगनकुसुमायिता कथं न भवेत् ? आङ्ग्लविद्यालयेषु संस्कृतमध्यापयन्तो जना. प्रतिसप्ताह विंशतिहोरा ततोन्यूनां होरा वा पाठयन्तीति विश्वविद्यालयीयो नियम । तत्रापि एकेन जनेन एकमेव पुस्तक वेदान्तसारमन्यद् वा पाठ्यते । वेतनञ्च लभ्यते द्विसहस्र-मुद्रात्मकम्, सार्धसहस्रमुद्रात्मकं वा । अल्पीयसा श्रमेण नानासौविध्योपेतं विपुलं वेतनम् । अपरत्र संस्कृतमहाविद्यालयेषु अध्यापयता जनेन प्रत्येकं दिने षट्होरामभिव्याप्य नैकपुस्तकोपेतानि नैकानि पत्राणि पाठयन्ते, वेतनञ्च लभ्यते अधिकादधिक षट्शतं सप्तशतं वा महताश्रमेणाल्पीयान् लाभ । कियद् वैषम्यम् ।

उभयत्राध्ययनपरायणेषु छात्रेषु कुत्र योग्यतासम्पाद्यते इति तु कथनस्यावश्यकतैव नास्ति । तावताऽपि । संस्कृतविदुषा वेतन - दृष्टयाऽवमाननलज्जास्पदं संस्कृतविकासप्रतिबन्धकं कथं न स्यात् । फलत संस्कृतं यदि नश्यति तर्हि वर्तते कस्य दूषणम् ?

संस्कृतस्य विनाशे परीक्षापद्धतेरपि महत्त्वपूर्णं स्थानम् । श्रूयते प:८०,I-

पुरे 'शास्त्रकार परीक्षा' इत्युक्त्यनुसारेण पूर्वं प्राचीचलत् शास्त्रार्थ-द्वारा परीक्षा। अतएव तदानीं पाणिनि-कात्यायन-गदाधर-पक्षधर-सदृशा. समभूवन् विद्वांसो-येषा कृतयोऽद्यापि संस्कृतं गौरवान्वित कुर्वन्ति। इदानीञ्च प्रचलति कुत्सिता लिखितरूपा परीक्षा।

अत्र प्रतिशतं षट्त्रिंशदंका भवन्त्यपेक्षिता उत्तीर्णतायै। तत्रानुचितानाम-वैधानाञ्चोपायानामाश्रयणम् परा ख्याति गतम्। अनुनयेन, विनयेन, भयेन, छलेन, द्रव्यदानेन वा अयोग्येभ्योऽधिकाङ्कदानम्, योग्येभ्यश्च न्यूनाङ्कदानं मथ्नातीव चेतांसि विदुषाम्। अस्यां स्थितौ योग्यताया. प्रत्यक्षं तिरस्कारं दृष्ट्वा योग्याश्छात्रा अध्ययनाद् विमनायन्ते, तर्हि किमत्रचित्रम्। योग्यता हत्या अनर्थकरी, सस्कृतविनाशिकेति सुस्थिरम्।

एतत् क्रमे प्राथमिक शिक्षाया दुरवस्थापि मनाक् आलोक्यताम्। नाद्यावधि निर्णीत यत् सस्कृतशिक्षामन्दिरे प्रविविक्षूणा छात्राणामध्यापन क्रियता कथम्? वैज्ञानिकेऽस्मिन् युगे शिक्षा-विज्ञान-गवेषकाणा-सर्वसम्मत मतमिदं यत् प्राथमिकी शिक्षा यावदेव सरला रुचिरा च करिष्यते तावदेव शिक्षा प्रचारे सौकर्यमासादयितुं शक्येत। दृश्यते तावत् आंग्लादिभाषाणां प्रत्यह प्रचार-बाहुल्यम्। अत्र सस्कृत-शिक्षायान्तु अद्यापि तादृशमेव काठिन्य यादृशं शतवर्षेभ्यः पूर्वमासीत्। पूर्वं भाषाज्ञानं तदनुव्याकरणमित्यनुभवसिद्ध-परम्परामपहाय सुबन्ततिङन्त-कृदन्तादिज्ञाना-भाववतश्छात्रस्य पुरत स्थाप्यन्ते लघुकौमुदी रघुवंशादीनि पुस्तकानि कण्ठाग्रा-र्थम्। कथ्यते चासौ बालो यन्नेत्रे निमील्य कुरु कण्ठस्थमिति। स चार्थज्ञान-शून्यो बाल कतिपयदिवसव्यापिन्या कण्ठस्थीकरणप्रक्रियायां शिर शूलमवाप्य पलायते शालात। ख्यापयति च सर्वत्र अतिकठिनं संस्कृतमिति। अत्र राज-स्थाने तु सेकेण्डरी कक्षया सह साम्यव्यामोहेन प्रवेशिका-कक्षाया पाठ्यक्रम तादृश सम्पादितो यत्र संस्कृतपुस्तकानां गौणत्वमेव जातं येनात्र सस्कृतज्ञान खपुष्पायितमेव भवति।

इद पञ्चसूत्रात्मक प्रत्यवायचक्रवाला निखिल संस्कृतजगत् कवलयितुमुद्यतमिवाद्य दरीदृश्यते। यद्येतस्य प्रतिकारो न विधास्यते तर्हि सस्कृत भविष्यत्यपि न वेति वक्तुमशक्यम्। अतोऽनर्थ-परम्परामूलभूतस्य कारण-चक्रवालस्यापाकरणार्थं समासतः प्रस्तूयन्ते केचन विचारा.। सस्कृतस्य परिवेशन स्वस्थं शान्तञ्च विधीयताम्। यद्-यद् भवति आग्लविद्यालयेषु तत्सर्वं संस्कृतविद्यालयेषु स्यादिति कामना सर्वथा अनर्थकरी। सामान्य-शिक्षया सह संस्कृतस्य वर्षणम् उन्मत्तमहिषस्य पादे भद्रपुरुष बन्धनतुल्यमेवास्ते।

आधुनिक-शिक्षाया अनपेक्षित-धावनिकात संस्कृतं यदि दूरं न यास्यति तदा आत्मनो रक्षामपि कर्त्तुं न शक्ष्यतीति निश्चप्रचम् ।

अत्र तु प्रथमतयावश्यकमिदं यत् संस्कृतस्य वास्तविकविद्वांसो निष्पन्नाः स्यु । तदर्थमेव प्रयत्नो विधीयताम् । प्रौढविद्वास एव संस्कृतस्य विशिष्टतमे पदे सादरं समाहूय नियोज्यन्ता, पुष्कलेन वेतनेन च सत्क्रियन्ताम् । साक्षात्कारसमये च मध्येसभं कठिनतम ग्रन्थ पाठयित्वा वास्तविकयोग्यता परिचीयताम्, अयोग्यता विदूष्यताम्, पक्षपातः सर्वथा अपाक्रियताम् । यस्य पुरत स्फुरति सरहस्यावैयाकरणसिद्धान्तकौमुदी, येन च करतलामलकीकृतं तत्-तच्छास्त्रीय रहस्यम्, तादृशा एव विद्वासस्तत्तच्छास्त्रस्य अधिकारिणो विद्वासो मन्तव्या सभाजनीयाश्च योग्यतानुरूपं स्थानं प्रदाय । दूरतो नमस्क्रियन्तां डाक्टरोपाधिधारिण । अनुमन्यताञ्च डाक्टरोपाधि संस्कृतजगद्ध्वंसक-धूमकेतु-रूपेण । विरचय्य प्रत्यब्दं शास्त्रार्थ-प्रतियोगितां भविष्णवश्छात्रा. पुरस्क्रियन्ता, प्रोत्साह्यन्ताञ्च गभीरवैदुष्यावाप्तये । प्राथमिकशिक्षा च सरला बोधगम्या च तथा विधेया यथा अहमहमिकया छात्रा लभन्ता प्रवेशं संस्कृतं पठितुम् ।

अर्थयुगेऽस्मिन् संस्कृतज्ञा अपि अर्थेन योज्यन्तामिति समीहया समावेशनीया आधुनिका अपि विषया संस्कृतपाठ्यक्रमे इति मन्यसे चेत् कामं क्रियता सन्निवेश आधुनिक विषयाणा, परं संस्कृतस्य मौलिकं स्वरूपं सुरक्षितं यथा स्यात् तथा यतनीयम् । समारोप्यन्ताम् वृक्षा किन्तु शाश्वतिक-प्रसन्न-विमला दिव्य-सौरभ-प्रसाधितदिगन्तरा पारिजातवल्लरी न विनाश्यताम् । कुल्या. निर्मीयन्ताम्, किन्तु दिव्यपय प्रवाहपूरिता शीतलावगाहन-परितृप्त-मानव-मनोहारिणी मन्दाकिनी कलकलधारा नावरोध्यताम् । सर्वस्मिन् वस्तुनि प्रात्यक्षिक लाभ एव स्यादिति मानसी वासना अपाक्रियताम् । मूल सिच्यताम् न तु पत्राणि । मन्ये पथाऽनेनाचरद् संस्कृत-जगत् विकसद् सुरक्षितं समृद्धञ्च स्थास्यति ।

यावद् वर्तते अनुसन्धानस्य प्रश्नस्तत्रेद निश्चितं शक्यते वक्तुं यदाधुनिकमनुसन्धान सर्वथा दिग्भ्रान्तं शिक्षाजगतोऽनिष्टायैवोपकल्पितम् । तस्मात् किमपि विशिष्टं तत्त्वमादाय तादृशमभूतपूर्वमनुसन्धानं विधेय यत् किमपि गूढतमं रहस्यं सत्यापयितुं शक्यते; स्पृहणीयं च भवेत् सर्वेषा कृते । वेदेषु वर्णितानि, पुराणेषु पुष्टानि, रामायणमहाभारतादिषु उल्लिखितानि, निखिलानि तत्त्वान्यद्य संशयदृशा समवलोक्यन्ते । क्रियतामनुसन्धानमेषा सत्यत्वमापादयितुम् । चन्द्रमसो जलतत्त्वेनाभिभवादग्रहस्तत्र उष्णास्पर्शस्येति

मुक्तावल्यां विश्वनाथ । आधुनिकैः वैज्ञानिकैश्च चन्द्रमसि जलतत्त्वं निषिध्यते । विधीयतामेतद्विषयेऽनुसन्धानम् ।

यदि लिलेखयिषा वर्तते व्याकरणशास्त्रे तर्हि तत्रापि नाल्पता विषयाणाम् । व्याकरणे इष्टय., आचार्या कृत्वा न निवर्तन्ते, कैयट-नागेशयो विप्रतिपेधता इत्येवंरूपा गभीरविवेचनसापेक्षा वगीकृयन्ते नैकेविषया येऽनुसन्धातुं शक्यन्ते । एवमेव सर्वेषु शास्त्रेषु नास्त्यल्पता अनुसन्धेयविषयाणाम् । जायमाने एतादृश-विषयानुसन्धाने संस्कृतश्रीर्वर्धिष्यत एव । लाभश्चावश्यमेवाधि जिगांसूनाम् ।

पी० एच० डी० उपाधि विना योग्यो न भवतीतिबुद्ध्या यत् किमपि यत कुतश्चिदादाय क्रमहीनेनासारेण संग्रहेण देशस्य कोऽपि लाभ. कालत्रयेऽपि केनापि कर्तुं न शक्यते इति त्रैकालिक सत्यम् ।

एव रीत्या समासत प्रदर्शिता सस्कृताध्ययनानुसन्धानयो साम्प्रतिकी स्थितिस्तन्निराकरणोपायाश्चेत्यलम् ।

आचार्यः
शार्दूल-विद्यापीठे
बीकानेर

# प्रकाश्यमानाः संस्कृतपत्रिकाः

य० कृष्णशर्मा

सागरिकाया एकादशवर्षीय - प्रथम-चतुर्थाङ्कयो प्रकाशिते "प्रकाश्यमाना संस्कृतपत्रिकाः" इति शीर्षके लेखे अनुल्लिखितानां पत्रिकाणा नामधामादिकमत्र प्रस्तूयते ।

## मासिक्यः ।

### (१) संस्कृत-प्रकाशिका

संस्कृतस्य प्रचारमुद्दिश्य ईसवीयस्य १९७२ तमवर्षस्य जुलाई मासे संस्कृतप्रकाशिका-नाम्नी मासिकी उदिता । मूल्यमस्याः वार्षिकं रूप्यकचतुष्टयमासीत् इयमिदानी न प्रकाश्यते ।

संकेत —

अखिलभारतसंस्कृतभाषासमितिः
वरोडा स्ट्रीट, वेस्ट मांबल, मद्रास—७०००३३

### (२) श्रीपण्डितः ।

"अह्नोतु पडित-यश "

ईशवीये १९७४ तमे वर्षे श्रीपण्डितस्य प्रकाशनमभवदिति प्रतीयते । मासिक्या. अस्या उपलब्धे रामायण-महाभारत-कालमीमांसा-सम्मेलनस्मारकाके आग्लभाषानिवद्धलेखनाभ्यां सह कतिचन संस्कृत - रचनाः दृश्यन्ते । अङ्कस्यास्य रक्षापत्रोपरि. वर्ष ४. अक. ११,१२ इति मुद्रित वर्तते । परं अस्मिन्नेवाङ्के संपादकीये "......श्रीपण्डित त्रिवर्षदेशीय. समवर्तत । आत्मना आत्मनो वा ज्ञाताज्ञातकर्मपरिपाकात् तृतीयेऽस्मिन् वत्सरे अङ्केषु महत् व्यवधान प्राप्नुवन्नपि कथंकथमपि परिवत्सरं पर्यपूयरत् ।" "......अग्रिमे चतुर्थे वर्षे कथमय व्यवहरतीति प्रचलिष्यतीति भगवान् शङ्कर एव जानाति जानातु वा" इति पठाम ।

श्रीपण्डितमिमं पण्डितप्रवरा, श्रीमधुसूदन - शास्त्रिण समपादयन् । वार्षिक मूल्यमस्य द्वादश रूप्यकाण्यासन् । श्रीमधुसूदन-शास्त्रि-भवन. मदैनी,

वाराणसी, इत्यस्मात् स्थानात् श्रीपण्डित: प्रकाश्यते स्म । इदानीं तु लुप्त एव श्रीपण्डित: ।

(३) सुप्रभातम् ।

जम्मूकाश्मीरिकमेकमात्र संस्कृतपत्रं सुप्रभात ईशवीयस्य १९७६ तमवर्षस्य फेब्रुवरी मासे उदितम् । पत्रमिद प्रथम संस्कृतमिति नाम्ना १२-१०-१९७५ दिनाङ्के नवरात्रेषु दुर्गाष्टम्या जनिमलभत । अथ च शासनानुमत्या सुप्रभातमिति नामपरिवर्तनमभवत् ।

पत्रेऽस्मिन् सामयिकस्य सर्वविधस्यापि गद्यपद्योभयस्य साहित्यजातस्य प्रकाशनं भवति। दुर्गासप्तशत्या हिन्दी पद्यानुवादः धारावाहिकरूपेण प्रकाश्यतेऽधुना सुप्रभाते । उत्साहशालिनः कवयः पं० श्री रामकृष्ण-शास्त्रि-महोदया. सुप्रभातं संपाद्य प्रकाशयन्ति स्वकीयेन श्रमेण व्ययेन च ।

"सुप्रभातस्य पत्रस्य नाव्ययो व्ययमीहते" इति "अव्यय" इति काव्य-नाम्ना प्रसिद्धाना सुप्रभात-संपादकानां प्रतिज्ञा । सुप्रभातमाध्यमेन संस्कृतस्य संस्कृतसमाजस्य च मानोन्नतये अविरतं प्रयतन्ते संपादकमहोदया ।

केन्द्रराज्य-सर्वकारयो: अनुदारया नीत्या, विशेषतश्च संस्कृतसमाजस्य अविचलेन औदासीन्येन च हेतुना कंचित् काल (अक्टूबर, ७७–जनवरी ७८) सुप्रभातमिद स्थगितमासीत् । तेन च सुप्रभातस्य द्वितीयवर्षीया. नवम-दशम एकादश-द्वादशा अङ्का: न प्रकाशिता इति तर्कयामि । अनुकूलाया दैवगतौ ई० १९७८ फेब्रुवरी मासत तृतीयवर्षस्य प्रथमाङ्केन साकं सुप्रभातस्य पुनः प्रकाशनं स्यात् ।

प्रत्यङ्क षोडशपृष्ठपरिमितस्य सुप्रभातस्य वार्षिकमूल्यं द्वादश रूप्यकाणि ।

संकेत:—

पं० श्री रामकृष्ण शास्त्री 'अव्यय"

श्रीरामप्रकाशनं, १२२ रघुनाथपुर, जम्मू —१८०००१

(५) संस्कृतमञ्जूषा

समाचार-विचार-प्रधान संस्कृतमासिकमिद साप्ताहिक - वार्तापत्रवद् विस्तृताकारा, प्रत्येकं प्राय षट्पृष्ठ-परिमिता च प्रकाश्यते । गद्यमया. पद्यमया रचनाश्चापि अत्र सन्निविश्यन्ते ।

ईशवीयस्य १९७६ तमवर्षस्य अगस्तमासे मञ्जूषेयमाविरभूत् । श्रीमन्त· रमेशचन्द्रशास्त्रिमहोदया. पत्रमिद संपादयन्ति । वार्षिकं मूल्यमस्याः षड्रूप्यकाणि ।

स केत —

सस्कृतमजूषा
खेडा खुर्द, दिल्ली—११००४२

(५) सर्वगन्धा

सर्वगन्धेयं संस्कृतपत्रिकाप्रपञ्चे नवयुगस्य नान्दीरूपेण अवतरति। प्रगतिशीला संस्कृत-मासिकीयं "सर्वगन्धा महाशङ्ख संस्कृताऽस्मानि जागृहि" इति युगानुरूप स्पन्दितु सस्कृतसमाजमाह्वयति ।

"समाजेऽद्य सस्कृतपण्डिताः "आदरणीया मूर्खा·" इति मन्यन्ते । यतो हि ते पण्डिताः सस्कृतभाषाया वास्तविक महत्त्व उपादेयता उपयोगितां च प्रकटीकर्तु असमर्था, कण्ठस्थीकृत विषय केवलं श्रावयितु समर्था., देशस्य प्रगते, परिवर्तितपरिवेशाच्च दूरस्थिता, सग्रहालय-पुत्तलिका इव कौतूहल-मात्रफला·, समाप्तैहलौकिक-प्रयोजना, सर्वज्ञब्रुवा, स्वय विनश्यन्त संस्कृत च विनाशयन्ति ।"

एतन्माभूदिति बुद्ध्या समसामयिकपरिवेशं गृहीत्वा संस्कृतभाषा आधुनिकीकर्तुमेव अवातरत् सर्वगन्धा । अस्यां बालोपयोगि मनोरञ्जनं, वर्गप्रहेलिकाप्रभृति बुद्धिव्यायाम, आधुनिकभारतीय - भाषाज्ञानवर्धनाय संस्कृतस्य व्युत्पत्ति-व्याकरणाशा, अन्ये च रोचका विषया —यथा संस्कृत-सेविना जीवनपरिचय, चलचित्र-समीक्षा, मासस्य मुख्या समाचारा, प्रश्नोत्तरा, लेखाः, चित्राणि, गीतानि च—यथाशक्तिचित्ताकर्षकरूपेण दास्यन्ते ।[1]

केवलं प्रगतिशीला एव रचना. प्रकाश्यन्ते सर्वगन्धायाम् । प्रत्यङ्कं मुखपत्रे प्रकाश्यमाना व्यंग्यार्था कविता, संपादकीयं (गन्धवह) च पाठकान् आवर्जयत । सर्वगन्धाया कर्गजं मुद्रणं च सुशोभने ।

१८९९ तमे शकवत्सरस्य राष्ट्रिय-वर्षारम्भे (मार्च, १९७७) सर्व-गन्धाया आविर्भाव । (सर्वे गन्धा यस्या पत्रिकायामिति, बहुव्रीहि·) समर्था वैयाकरणा. डॉ० वीरभद्रमिश्रमहोदया सर्वगन्धा सपाद्य प्रकाशयन्ति ।

---

१. सर्वगन्धा प्रवेशाङ्कः सम्पादकीयम् ।

प्रत्यङ्कं षोडशपृष्ठपरिमिताया सर्वगन्धाया वार्षिक मूल्यं दश-रूप्यकाणि ।

संकेत.—

संपादक सर्वगन्धा

कुमारसदनं, बाबूगंज, लखनऊ—२२६००७

(६) हयास्यप्रदीप

सस्कृतातलकन्नडभाषामयोऽयं हयास्यप्रदीप विशेषेण सास्कृतिकान् धार्मिकाश्च लेखान् उपहरति वाचकेभ्य । विशिष्टाद्वैतसम्प्रदायपीठस्य मैसूरु श्रीपरकालमठस्य मासिक मुखपत्रं हयास्यप्रदीप ई० १९७७ अक्तूबरमासे उदज्वलत् ।

सकेतः—

स पादक. हयास्यप्रदीप ,

श्रीपरकालमठः, मैसूरु,

(७) संस्कृतामृतम्

सस्कृतामृतं नीयतां करे सस्कृतामृतं पीयतां मुखे ।
सस्कृतामृतं धीयतां हृदि सस्कृतामृतं चीयतां गृहे ।।

मंस्कृत द्वारा वैदिक संस्कृतिसेवा, राष्ट्रगौरववर्धनं च संस्कृतामृतस्य मुख्यमुद्देश्यम् । श्री प्रभाकर - रामरत्नशास्त्रिणां प्रधानसंपादकत्वे ई० १९७८ तमे वर्षे सस्कृतामृतमिदं धरामवातरत् । वार्षिकं मूल्यं द्वादश रूप्यकाणि ।

सं केत —

सं पादक. सं स्कृतामृतम्,

१४१८. बाजार गुलियान्, दिल्ली—११०००६

(८) संस्कृतश्री

सस्कृतश्रीरियं पाक्षिकी पत्रिका । सस्कृत-तमिलोभयभाषामयीयं तमिलभाषाभिज्ञाना कृते सस्कृतशिक्षणाय बालपाठानपि प्रकाशयति ।

"देशस्य सर्वेषु भागेषु गृहे-गृहे सस्कृतभाषावगमाय सुलभा सामग्री अनया पत्रिकया वितीर्यते । अल्पकाययापि अनया बहु साधयितु पार्यते । यदि तत्र-तत्र सस्कृतप्रणयिभिरंगुल्यग्रमपि वा इदमर्थे उद्ध्रियेत ।

संस्कृताध्ययनाय प्ररोचनं नाम सरससंस्कृतवाङ्मयप्रकाशनमेव। तत्रापि प्रयत्यते यथाशक्ति पत्रिकयानया"।[1]

ई० १९७७ अक्तूबरमासस्य एकविंशतारिकायामुदिता। श्री राधाकृष्णशास्त्रिण अस्या सपादका सन्ति। वार्षिकं मूल्यमस्या. षड्रूप्यकाणि।

संकेत —

संपादक सस्कृतश्री

२५, तंजावूर् ट्यॉक् स्ट्रीट्, तिरुचिरापल्ली—६२०००१

## त्रयमासिक्यः

### (१) मनीषी

दरभंगास्थ-संस्कृत-विश्वविद्यालयत "मनीषी" नाम्नी त्रैमासिकी विद्वत्पत्रिका ई० १९७४ तमे वर्षे प्राकाश्यत इति संभाव्यते। अधिकं तु न जानामि[2]।

### (२) भास्वती

"भास्वतीति निरुक्ते उषोनामसु अन्यतमम्। भास्वत्या प्रकाशकत्वं प्रेरकत्व सर्वजनाह्लादकत्वं च प्रतिपन्नमेव। एवं पत्रिकाया मांगल्यरूपाया भास्वत्या तद्गुणराशिरोचिष्णुता स्थेमान लभतामिति काचिदीहा अतिवेलं स्पन्दते। ... "संस्कृतवाङ्मयस्य उपबृंहणे, परिष्कारे च पत्रिकाया अवदान महता प्रमोदाय यथा भवेत् तथा प्रयतिष्ये। अत्र विद्वद्भि दीयमान-मवदान प्रार्थये येनास्या प्रवृत्ति साध्वी प्रीतये ज्ञप्तये च स्यादिति"।[3]

डॉ० अमरनाथ पाण्डेयाना सपादकत्वे ई० १९७६ मार्च मासे भास्वती त्रैमासिक्या प्रथमाङ्क आविष्कृत। ६६ पृष्ठपरिमिते भास्वत्या प्रथमाङ्के "पृथ्वीचन्द्रमण्डलयो सूर्यमण्डलादुत्पत्ति." "भक्ति-ज्ञान-समीक्षा" "प्लेटो प्रथमो

---

१. संस्कृतश्री १-१ संपादकीयम्।

२ ई० १९६३ वर्ष आरब्धा "कामेश्वरसिंह-संस्कृत-विश्वविद्यालय-पत्रिका" ई० १९७४ तमे वर्षे आरब्धो "मनीषी" च अपीदानी प्रकाश्येते नवेति न जानामि। असकृत् पत्रप्रेषणेऽपि न किमप्युत्तरं लभ्यते तत।

३. भास्वती १-१ संपादकीयम्।

यवनालोचकानाम्" प्रभृतय सप्तलेखा. सान्त। ।पद्वत्पात्रकाया अस्या वार्षिक मूल्यं दशरूप्यकाणि ।

सकेत —प्रो० अमरनाथ पाण्डेय.

सस्कृतविभागाध्यक्ष.,

काशीविद्यापीठम्, वाराणसी ।

(३) परमार्थ सुधा

सस्कृतभाषाया सेवामेवोद्देश्यत्वेनाङ्गीकृत्य संस्कृतवाक्शरीरा नानाशास्त्रार्थविचार - चारुसर्वाङ्गी वाग्योगविदां वाक्लताकुसुमद्रवै. अधिवासिता चेयं "परमार्थसुधा" शास्त्रीयानेव निबन्धान् प्रकाशयति । पत्रिकेयं स्वनाम्नात्मन परमार्थैकनिष्ठत्वमुद्घोषयति । परमार्थशब्दस्य बाहुल्येन परमतत्त्वे परमात्मनि परब्रह्मणि अध्यात्मसिद्धान्ते वा रूढो विद्यते । एतेन विभिन्न-लौकिकविद्यारसिका विद्वासो लेखका पाठकाश्च अस्या पत्रिकाया. विरक्ता. भवितुमर्हन्ति कदाचित् । परंतु नैतस्या परमार्थशब्दस्य केवलमुपर्युक्त. एवार्थ संमत. । अत्रतु धर्मदर्शनेतिहास-साहित्यकला विज्ञानादिनाम्ना विभिन्नशाखा प्रशाखा-शतोपबृंहिताना शास्त्राणा य. कोऽपि सिद्धान्तः परमार्थतया परमोत्कृष्टतया च स्वीकृत:, स एवात्र परमार्थशब्दन अभिप्रेत. । तस्मात् यं कमपि प्राचीनं नवीन प्राच्यं पाश्चात्यं वा शास्त्रीयविषयमवलम्ब्य विवेचनात्मक वस्तुतत्त्वावबोधकश्च लेख. अत्र सन्निविश्यते ।"[१]

".. तत्त्वमिद मनसि निधाय परमार्थसुधाया लेखकै स्व-स्वविषयप्रतिपादनप्रसङ्गे व्यापिका दृष्टिमङ्गीकृत्य यथासंभवं देशविदेशयो आधुनिकविचार-धाराया अपि विशेष. सामान्यो वा परिचयो दीयेत, तर्हि पत्रिकाया. उद्देश्यपूर्ती, पाठकानां ज्ञानवृद्धौ च तेषा समधिक सहयोगो जायेत ।"[२]

परमार्थसुधेयं विक्रमस्य २०३३ तमवर्षस्य आश्विनमासे (ई० १९७६) आविरभूत् । अस्या. प्रथमाक: राचीनगरे प्रकाशित । द्वितीयतश्च अकात् वाराणस्या प्रकाशमेति । राँचीस्थ परमार्थन्यासस्य संरक्षकत्वे, डॉ० सत्यनारायणशर्ममहोदयानां प्रधानसंपादकत्वे, वाराणसीस्थ-सार्वभौम संस्कृतप्रचारकार्यालयसंचालकानां संस्कृतप्राणानां पं० श्री वासुदेवद्विवेदी शास्त्रिणा संपादकत्वे च अभिवर्धते ।

---

१. परमार्थसुधा - १-२ सपादकीयम् ।
२. " : १-४ : " ।

प्रत्यङ्क पञ्चाशतोऽप्यधिकानि पृष्ठानि । मुद्रण कर्गज च सुशोभनम् । वार्षिक मूल्यमष्टौ रूप्यकाणि ।

सकेत:—

व्यवस्थापक. सार्वभौम-सस्कृतप्रचार-कार्यालय·
डी, ३८।११०, हौजकटोरा, वाराणसी

(४) उत्कलोदय

वैदिक-धर्मस्य सस्कृतेश्च परिप्रचार., सस्कृतवाङ्मयपरम्पराया विकास, युगोपयोगि सस्कृतशब्दाना व्यावहारिक. प्रयोग., जनेषु सस्कृत-साहित्यस्य परिप्रसारश्च उत्कलोदयस्य आभिमुख्यमस्ति । बालसाहित्यमप्यत्रा-वकाशं लभते ।

चत्वारिंशत्पृष्ठ-परिमिते उत्कलोदयस्य प्रथमेऽङ्के गायत्रीमहत्त्वं वेदे पञ्चतुंवाद. इत्यादयो लेखा विराजन्ते । श्री वेदव्यास-सस्कृत-प्रचारपरिषद. मुखपत्रस्यास्य श्रीब्रह्मानन्द-सरस्वतीस्वामिन सरक्षका., पं० दिगबरमहा-पात्राश्च संपादका सन्ति । ई० १९७७ जनवरी मासे उत्कलोदय: जनिमल-भत । वार्षिकमूल्य षड्रूप्यकाणि ।

सकेत —संपादक उत्कलोदय.
गुरुकुल-वैदिकाश्रम
वेदव्यास, राउरकेला—७६९००४
उडीसा

(५) ऋतम्भरा

मौलिककृतय, काव्यं, नाटक, निबन्ध, चरित्रवर्णन, बोधकथा, हास्यलेख, हास्यविनोदकण्डिका, व्यग्यलेख, संस्कृतेतरसाहित्यात् उत्तमाना कृतीना समग्ररूपा साररूपा वा अनुवादा, प्राचीना कृती विषयान् वा आश्रित्य विमर्शात्मका संशोधनात्मकाश्चेत्यादि विविध साहित्यजातं समाद्रियते ऋतम्भरा ।

जबलपुरविश्वविद्यालयस्य संस्कृतविभाग ऋतभरामेना प्रकाशयति । ऋतम्भरेय पूर्व ई० १९६४ वर्षे आरब्धा वत्सरमेक प्रकाशमेत् । तत: परं द्वादश-वर्षाणामज्ञातवासमनुभूय भूयश्चेदानी सस्कृतसमाजं समुपतिष्ठते । ई० १९७७ तमे वर्षे ऋतम्भराया द्वितीयसपुटस्य प्रथमाक प्रकाशित: ।

ई० १९७८ एप्रिलमासे च द्वितीय-तृतीय-तुरीयाका. संयुक्तरूपेण आविष्कृता. सन्ति । अस्मिन् च सयुक्ताके पूर्वाकादनुवृत्त डॉ० हसूरकराणा ऐतिहासिकी आख्यायिका "अजातशत्रु" अशतः प्रकाशिता कतिभिश्चन लेखैरन्यै सह ।

डा० कृष्णकान्त चतुर्वेदिन पत्रिकामिमा सपादयन्ति । प्रायोऽत्र प्रत्यक पञ्चाशत् पृष्ठानि भवयु । वार्षिक मूल्यमस्या दशरूप्यकाणि ।

सकेत —

ऋतम्भरा-समिति
सरस्वती-विहार पचपेढी,
जबलपुर-विश्वविद्यालय, जबलपुर (म० प्र०) ४८२००१

(६) अजस्रा

"संस्कृत-संपदा संरक्षणाय, विभिन्नपद्धतिजुषा रचनाना संवर्धनाय, प्रातिभनूतनकृतीनां संसर्जनाय च" अजस्रानाम्न्याः त्रैमासिक्या उदय.। पत्रिकेयं नवलेखकानामुत्साहपरिवर्धन-संरक्षणोन्मुखीकरणेषु प्रभूतं सहयोगं विधाय प्राचीनसंस्कृत-क्षेत्राणां प्रकाशनारक्षणविधौ पर्याप्त कर्तव्यता विनियोज्य प्राचीन-नवीनमार्गयोः सेवाकार्यधुरं परिणद्धकन्धरा वक्ष्यति ।[1]"

पंचाशत् पृष्ठपरिमिते अजस्राया प्रथमाङ्के मौलिककाव्यानि, सशोधन-लेखाश्च विलसन्ति ।

ई० १९७७ तमवर्षस्य जुलाई-मासे अजस्रायाः आरम्भ.। डॉ० अशोककुमार-कालियामहोदयाः पत्रिकामिमा सपादयन्ति । वार्षिक मूल्यमस्या. दशरूप्यकाणि ।

सकेतः—

अखिलभारतीय-संस्कृत-परिषत्
महात्मागाधीमार्ग, हजरतगंज,
लखनऊ—२२६००१

### षाण्मासिकी

(१) संस्कृतविमर्शः ।

"विमर्शरूपिणी-विद्या"

प्राचीना पाण्डित्यपद्धति, अर्वाचीना विमर्शपद्धति च प्रोत्साहयितुं

---

१. अजस्रा १-१ ' सपादकीयम् ।

विकासपथमानेतुं च संस्कृतविमर्शाख्याया. षाण्मासिक्या विद्वत्पत्रिकायाः उदय । संस्कृताङ्ग्लोभयभाषामयी शोधपत्रिकेयं डॉ० वी० राघवन्-दाण्डेकर-प्रभृतीनां ख्यातविदुषा सपादकत्वे ई० १९७३ जुलाईमासात् प्रकाशमेति । संस्कृत-विमर्शस्य प्रथमेऽङ्के "सामगानपरिचय", विध्यर्थविमर्शः, बाणभट्टस्य काव्यप्रतिभा इत्यादि शीर्षका. षट्निबन्धा गैर्वाण्या, दश निबन्धाश्च आंग्लभाषाया प्रकाशिताः सन्ति ।

"विमर्श" इत्याख्या केन्द्रीयविद्यापीठशोधपत्रिका ई० १९७२ तमे वर्षे तिरुपतितः प्रकाशिता आसीत् । अयमेव च विमर्श. परतो नाम्न, प्रकाशनस्थानस्य च किंचित्परिवर्तनेन "संस्कृतविमर्शाख्यया" दिल्लीत प्रकाशमेति । वार्षिकं मूल्यमस्य पञ्चदश रूप्यकाणि ।

संकेत —

निर्देशक

राष्ट्रिय-संस्कृतसंस्थानम्,

शास्त्री-भवन, नवदेहली

## वार्षिक्यः

### (१) गायत्री

श्रीनंदलाल-बाजोरिया-संस्कृतमहाविद्यालयस्य (अस्सी, वाराणसी) वार्षिकी पत्रिका गायत्रीय ई० १९७७ वर्षे उदिता । प० श्री भालचन्द्रपाडेय-महोदये संपादितायामस्या संस्कृत-हिंदी-भाषानिबद्धा. गद्य-पद्य-रचनाः विलसन्ति ।

ई० १९७६ वर्षे अनेन विद्यालयेन "अभिव्यक्तिः" नाम काचित् वार्षिकी प्रकाशनाय सज्जीकृता आसीत् । पर समयाभावात् अमुद्रिता पाण्डु-लिपिरूपेण पुस्तकालये सुरक्षिता इत्यवगम्यते ।[1]

### (२) हिमतरङ्गिणी

श्रीविश्वनाथ-स्नानकोत्तर-संस्कृतमहाविद्यालयस्य (उत्तरकाशी) वार्षिकी पत्रिका प्रधानाचार्य-श्रीप्रेमलाल-थपलियालमहोदयाना सपादकत्वे ई० १९७७ वर्षे आरब्धा । अस्याः प्रथमे वार्षिकाके संस्कृत-हिंदी-गढवाली-भाषा निबद्धा विदुषा छात्राणा च रचना प्रकाशिता सन्ति ।

---

१. गायत्री : १९७७: सपादकीयम् ।

(३) वैजयन्ती

राजस्थान-सस्कृत-संविदः वार्षिकी वैजयन्ती ई० १९७६ तमे वत्सरे आरब्धेति ज्ञायते। अस्याः प्रथमाकः "प्रतिदर्शाङ्क." इति द्वितीयश्च (ई० १९७७) "वेदाङ्क." इति च प्रथितौ। वेदांके अस्मिन् संस्कृत-हिन्दी-भाषा-निबद्धाः वेदवैशिष्ट्यप्रतिपादका निबन्धाः प्रकाशिता।

मन्त्री, राजस्थान संस्कृत संविद्,
राजस्थान संस्कृत कालेज, जयपुर—२ (राज)

(४) महीधरप्रभा

श्रीशिवसङ्कटहरण-आदर्श-संस्कृत-महाविद्यालयस्य (सकाहा, हरदोई उ० प्र०) वार्षिकीयं ई० १९६६ तमवत्सरात् प्रकाश्यते इति सभावयामि। अस्याः षष्ठोन्मेषः दृष्टो मया, यस्मिन् विद्वद्वराणा छात्राणा च सरससुन्दरा बोधप्रदाश्च रचना विलसन्ति।

डॉ० राधेश्याममिश्रमहोदयैः संपादितोऽयमंक (१९७१-७२) सर्वथा प्रशंसार्हः।

महीधरप्रभायाः मूल्यं रूप्यकत्रयम्।

(५) सुधालहरी

संस्कृत-विज्ञान-वर्धिनी-परिषद. वार्षिकी सुधालहरी ई० १९७१ वर्षात् प्रकाशयितुमारब्धा। अत्र विमर्शविभागः काव्यविभागश्चेति भागद्वयमुपकल्पितम्। "शास्त्र-साहित्यादि-विविधविषयानुबन्धिभि· प्रौढैर्विमर्शनिबन्धने., सरसैश्च काव्यखण्डे रसिकविद्वज्जनमनुरञ्जयितुं प्रतिवर्षं सुधालहरी-सञ्चिकामाविष्कर्तुं व्यवस्यति परिषदियम्।" श्री रघुनाथाचार्याः सुधालहर्याः प्रधानसंपादकाः। मूल्यमस्या. रूप्यकद्वयम्।

कार्यदर्शी—संस्कृत-विज्ञान-वर्धिनी-परिषत्,
श्रीविश्वेश्वर-संस्कृतांध्र-कलाशाला
स्टेशन रोड, वारंगल् (आ० प्र०)

(६) शाब्दी

वाराणसेय-संस्कृतविश्वविद्यालयीय-व्याकरण-परिषद वार्षिकी शाब्दी ई० १९६१ तमे वर्षे प्रकाशयितुमारब्धा। "प्रवचन-लेखनादि-बहुविधेषु संस्कृतवाङ्मयोपबृंहणोपायभूतेषु बहुकालात् पत्रिकाया· प्रकाशनमपि लक्ष्यतया

अन्वेषिण व्याकरणपरिषत्सदस्या । तत् शाब्दी-नाम्नीमिमां वार्षिकी प्रकाश्य स्वोद्देश्यमंशेन प्रापारीदियं परिषत् ।' व्याकरणशास्त्रस्य सिद्धान्तानां, महत्त्वस्य च सार्वजनीन. प्रचार., शास्त्रसंरक्षणपूर्वक देववाण्या सार्वजनीन प्रचारश्च परिषदोऽस्या उद्दिष्टमस्ति । श्रीमन्तः मुरलीधरमिश्रमहोदयाः शाब्दी संपादयन्ति । अस्या प्रथमांके व्याकरणशास्त्रसम्बद्धाः एकोनत्रिशत् लघुकाया निबन्धा. सङ्कलिता सन्ति । मूल्यमस्याः रूप्यकद्वयम् ।

(७) प्रतिभा

वाराणसेय-संस्कृतविश्वविद्यालययीय-साहित्यपरिषद. वार्षिकी प्रतिभा ई० १९७० तमवर्षात् (सं० २०२७ रामनवमी) प्रकाशयितुमारब्धा । साहित्यपरिषद तत्तत्पाक्षिकसभासु छात्रै. वाचिता साहित्यशास्त्रविषयका निबन्धा संकलिताः सन्ति प्रतिभाया प्रथमेऽके ।

"साहित्यविद्याकल्पलतिकेयं कुसुमिता" यथा संपुष्पितस्य वृक्षस्य दूराद्गन्धो वाति "इति श्रौतार्थं सार्थकं विदधाना स्वीयं सौगन्ध्यं सर्वत प्रसारयितुमिव संप्रवृत्ता । संपादकमहोदयस्य इयमस्ति शुभकामना "यदियं प्रतिभा अस्मिन् वर्षे (ई० १९७०) वार्षिकी, अग्रिमे हायने च त्रैमासिकी, अनन्तर क्रमशो मासिकी, पाक्षिकी, साप्ताहिकी, दैनिकी च निस्सरन्ती समन्तात् भारतभुवं प्रचारपथमायातु"[1] इति ।

प्रतिभाया. प्रथमाकः साहित्यपरिषद तदानीतनमन्त्रिणा श्रीशिवजी-उपाध्यायमहोदयेन सपादिता । विश्वसिमि यत् प्रतिभेयमनुवर्तते इदानीमपीति ।

(८) प्राची

वाराणसेय-संस्कृतविश्वविद्यालयीयच्छात्र-परिषद वार्षिको प्राचीयं ई० १९६० तमे वर्षे प्रथममाविष्कृताऽसीत् । अथ च प्रकाशनात् लुप्तां ता ई० १९६९ तमे वर्षे पुनश्च प्रकाशपथमानयन् छात्रपरिषत् । छात्राणां प्रतिभाविकासनदिशि स्तुत्यमेव कार्यं निर्वर्तयतिच्छात्रपरिषदियं प्राचीप्रकाशन-द्वारा । "प्राचीपत्रिकेयं समेषां प्राच्यशास्त्राणां, सर्वासां भारतीयकला-विद्यानां, निखिलाना दार्शनिकतत्त्वाना च गूढानि मर्माणि रहस्यानि च आकल-यन्ती समस्तभारतीय-संस्कृतानुशीलनसंसक्त-चेतसा छात्राणां पुरत. भारतीय-विद्याया भारतीयसंस्कृतेश्च मार्गनिर्माणं विदधती संस्कृतवाङ्मयोपासकानां शास्त्रसाहित्यविनोदरुचिं सवर्धयिष्यति" ।[2]

---

१. प्रतिभा :१९७० सपादकीयम् ।

२. प्राची .१९६९ शुभाशंसनत ।

श्रीमद्भि. सङ्कटानन्द जानकीप्रसादद्विवेद-जगन्नारायणपाण्डेयमहोदयैः संपादिते प्राच्या अस्मिन् अंके (ब० १८६८) संस्कृतविभागे षड्डुत्तरशतं, हिंदीविभागे चतुर्विंशतिश्च पृष्ठानि संति ।

(८) उषस् १८७७

कोडंगलूरु-संस्कृतविद्यापीठपत्रिकाया अस्मिन् प्रथमांके संस्कृताग्लमलयालमभाषामया विदुषां लेखाः संकलिताः सन्तीत्यवगम्यते ।

कोडंगलूरु-संस्कृतविद्यापीठम्,

कोडंगलूरु (केरल)

स्मारकांका.

(१) सुवर्णमहोत्सवदीपिका १८६३

संस्कृतकलाशालाया सुवर्णमहोत्सवस्मारिकायामस्यां कलाशालायाः परिचय. सम्बद्धाङ्कचित्राणि च विलसन्तीत्यवगम्यते ।

महाजन-संस्कृत-कलाशाला

पेरडाल—कासरकोड् (केरल)

(२) सुवर्णमहोत्सवः १८६३

बेंगलूरुनगरस्थ- भारतीय-गीर्वाण - प्रौढविद्याभिवर्धिनीमहापाठशालायाः सुवर्ण-महोत्सवः श्री० के० एम्० मुंशी महोदयानामाध्यक्षे ई० १८६३ वर्षस्य जूनमासे संपन्नः । उत्सवस्मारकत्वेन प्रकाशितेऽस्मिन् अंके महापाठशालापरिचयः, संस्कृतांग्लकन्नडभाषासु विदुषां लेखाश्च विलसन्ति । अंकमिमं पण्डित-प्रवर श्री० वी० रामभट्ट महोदया. समपादयन् ।

अस्या एव महापाठशालाया "वज्रमहोत्सव" ई० १८७१ तमवर्षस्य मार्चमासे समपद्यत । तत्स्मारकत्वेनापि "वज्रमहोत्सवः" इति कश्चिदंकः पण्डितराज श्री वी० एस्० रामचन्द्रशास्त्रि-वर्यैः सम्पादितः प्राकाश्यत वज्रमहोत्सवसमित्या ।

सकेत —अध्यक्ष, शंकरमठमहापाठशाला,

शंकरपुरं, बेंगलूरु—४

(३) वेदशास्त्रकवितासदः १८७२

मद्रपुरीस्थया अखिलभारतीयसंस्कृतभाषासमित्या ई० १८७० मार्च-

मासे प्रवर्तिते कवितासदसि पठिता समर्पिताः च श्लोका अस्या् स्मारिकायां प्रकाशिता । मूल्यं रूप्यकद्वयम् ।

अखिलभारतीयसंस्कृतभाषासमिति·

१४ ईस्ट्, मादा स्ट्रीट् मैलापूर्, मद्रास्—६००००४.

(४) वज्रमहोत्सव-सविनीर् १९७४

शृंगेरीश्रीमठीयाया सद्विद्यासञ्जीविनीमहापाठशालाया वज्रमहोत्सवः ई० १९७४ वर्षस्य नववरमासे समघटत । तदा प्रकाशितायामस्यां स्मारिकायां संस्कृताङ्गलकन्नडतमिलभाषामयाः रचना· संकलिता सन्ति । (केपुचिदंकेषु कन्नडरचनाना विभाग नैव योजित इत्यन्यदेतत्) बहुभि सुन्दरैः चित्रैः युक्तायामस्या स्मारिकाया द्वादशोत्तरद्विशतपृष्ठानि सन्ति । मूल्यमस्याः दशरूप्यकाणि । पं० श्री एम्० वी० नरसिंहमूर्तिशास्त्रिण· पत्रिकामिमां समपादयन् ।

अध्यक्षः, श्रीसद्विद्यासञ्जीविनीमहापाठशाला,

शृंगेरी श्रीमठ शृंगेरी (कर्णाटक)

(५) अभिनव-संस्कृतम् १९७४

अखिलकर्णाटक संस्कृतकविसंमेलनस्य पञ्चममधिवेशनं ई० १९७५ वर्षस्य जनवरीमासे बेंगलूरुनगरे समपद्यत । तदानी प्रकाशितमिदमभिनवं संस्कृतम् । प्रा० श्री के० टी० पाण्डुरंगमहोदयैः सम्पादितेऽस्मिन् अंके बहूनां कवीनां "चन्द्रं गतो मानव" इति समस्यापूर्तिपद्यानि, संस्कृताङ्गलकन्नड-रचनानि च विलसन्ति ।

(६) संस्कृतसंमेलनम् १९७६

बेंगलूरराष्ट्रिय-विद्यालयीय-संस्कृताध्ययन समिते· आश्रये ई० १९७६ वर्षस्य फरवरीमासे त्रिदिवसीयं संस्कृतसंमेलनं समपद्यत । तत्र प्रकाशितः स्मारकाकोऽयं नाम्नि केवलं संस्कृतं बिभर्ति । अंकेऽस्मिन् "संस्कृतग्रन्थ-प्रणयनदौस्थ्यम्' शीर्षकः एकः केवलं लघुलेख· गैर्वाण्यां, त्रयः आङ्गलभाषा-मयाश्च लेखा· सन्निवेशिताः ।

(७) शतमानोत्सवसंस्मरणसंचिका १९७६

मैसूरुनगरस्थाया· श्रीमहाराजासंस्कृत-महापाठशालाया [illegible] ई० १९७६ वर्षस्य [illegible] मासे संपन्न· । तदा [illegible] ।

श्री अय्यंगारमहोदयैः संपादितायामस्यां शास्त्रीया· संस्कृताग्लकन्नडभाषामया निबन्धाः सन्ति। राष्ट्रनेतृणां केषांचित्, अध्यापकवृन्दस्य च प्रतिकृतयः स्मारिकायाः शोभां वर्धयन्ति।

अध्यक्षः, श्रीमहाराज-संस्कृतमहापाठशाला,

मैसूरु (कर्णाटक)

(८) शतमानोत्सव-संस्मरण-प्रकाशनम्। १९७६

श्रीवेदवेदान्त-बोधिनी-संस्कृतमहापाठशालाया (मेन्नुकोटे) शतमानोत्सव-स्मारकेऽस्मिन् संस्कृताग्ल - हिंदी-कन्नड-भाषामया विदुषा रचना उपलभ्यन्ते। विशिष्टाद्वैतदर्शनसंबद्धा., अन्ये च शास्त्रीया विषया प्रतिपादिता दृश्यन्ते अत्र। मार्कि द्विशतपृष्ठपरिमितस्यांकस्य मूल्यं पञ्चविंशति रूप्यकाणि।

संपादकः—

विद्याभूषणं, ए० एन्० श्रीनिवास अय्यंगार्

३४, गोदामंदिरं,

९ क्रास्, स्विमिंग्पूल् एक्स्टेन्शन्,

मल्लेश्वरं, बेंगलूरु– ७६०००३

(९) राजस्थान-संस्कृत-साहित्य-संमेलनस्मारिका १९७७

ई० १९७७ तमवर्षस्य अगस्तमासे संस्कृतदिवस समारोहावसरे प्रकाशितेयं स्मारिका। राजस्थानसंस्कृत - साहित्य-संमेलनमिदं कदाचित् संस्कृतपर्वणि ईदृशी· स्मारिकाः प्रकाशयति। प्रस्तुतायां स्मारिकायां राज्यपाल-श्रीरघुकुलतिलक - महोदयाना "रक्षाबन्धपर्वणि संस्कृतरक्षासंकल्पः" शीर्षकः लेखः विशेषेण उल्लेखमर्हति। (यतहि भारतेऽद्य केचित् संस्कृतस्य अध्यापकाः प्राध्यापकाश्च सांस्कृतसमारोहेषु संस्कृतेतरभाषामाश्रित्य प्रभाषन्ते लिखन्ति च, तत्रेमे राज्यपालाः शासने अधिकृता आग्ली हिंदी वा विहाय गैर्वाण्या प्राभाषन्त। गैर्वाण्या मानोन्नतये किं कर्तव्यमस्माकमिति मार्गदर्शनमकुर्वन् इति इमे सर्वथा सुयोग्या राज्यपालाः। सर्वेषामपि संस्कृतज्ञानां धन्यवादानर्हन्तीमे श्रीरघुकुलतिलकमहोदयाः राज्यपाल-मन्त्रि-प्रभृतिशासकानामादर्शभूताश्च)। स्मारिकायामस्यां काश्चन संस्कृतहिंदीरचना विलसन्ति। श्रीमन्तः मोतीलाल-जोशीमहाभागाः स्मारिकामिमा समपादयन्।

राजस्थानसंस्कृतसाहित्यसमेलनम्,

शाहपुराबाग, आमेर्रोड्, जयपुर (राज)

## प्रासङ्गिकं किंचित्

(१) "जर्नल् आफ् दि कर्नाटक युनिवर्सिटी" (ह्यूमॉनिटीज्) (धारवाड) इत्याख्ये शोधपत्रेऽपि कदाचित् संस्कृतशोधरचनानि प्रकाश्यन्ते। "शब्दशक्ति-विचार" इत्याख्य विद्वल्लेखः सम्प्रति तत्रशोधपत्रे धारावाहिरूपेण प्रकाश्यते।

(२) धर्मभास्कराख्ये मराठीमासपत्रे (बंबई) कदाचित् संस्कृत-रचनानि प्रकाशमियन्तीति सभावयामि। ई० १९७८ जुलैमासस्य धर्मभास्कराके "विज्ञानस्य प्रगति." इति शीर्षक. संस्कृतलेख. प्रकाशितो विद्यते।

(३) द्वारका श्रीशारदापीठत. प्रकाश्यमानाया शारदापीठप्रदीपाख्यायां आंग्लभाषानिबन्धप्रधानायामपि कदाचित् संस्कृत-शोध-निबन्धा अपि प्रकाश्यन्ते इति श्रूयते।

(४)

पवनारे धामतीरे श्रीविनोबानिदेशने।
ब्रह्मविद्यामन्दिरस्थै झङ्कारोऽस्ति प्रकाशित.॥

सन्त श्रीविनोबा महानुभावानां ब्रह्मविद्यामन्दिरवासिनीना भगिनीना संस्कृतप्रेमपरिणाम. झङ्कारोऽयमुदित. हस्तलिखितमासिकरूपेण १४ ११. १९७४ तमे दिनाके। झंकारस्य प्रथमेऽके संस्कृत-लघु-रचनानां विंशति: संकलिता इति शारदाकात् ज्ञायते। (शारद. १६-६)

(५) मेलुकोटे (कर्णाटक) संस्कृत महापाठशालाया पुरा "योगिनी" (१९३७ ई०) इति "रोहिणी" (१९५१ ई०) इति च हस्तलिखित-संस्कृत-मासिक्यौ प्रकाश्येतामित्यवगम्यते।

(६) मणिपुर-संस्कृतपरिषदा पूर्वं कदाचित् ज्योतिराख्या काचित् संस्कृतमासिकी कंचित्कालं प्राकाश्यत। पं० श्री, मणिरत्नाशर्म महोदयै संपादितमासीदिदं ज्योतिरित्यवगम्यते। परिषदियमद्यापि संस्कृतसेवाया प्रसिता वर्तते।

मन्त्री, मणिपुर-संस्कृत-परिषत्
डी० एम्० कालेज् कॅम्पस्
इंफाल (मणिपुर)
७९५००१

(७) गाण्डीव-साप्ताहिकस्य संस्थापक-संपादकस्य पं० श्रीरामबालक शास्त्रिमहोदयस्य स्वर्गमनमभूत् ई० १९७५ सितंबरमासे विंशतारिकायाम्। ततश्च मासिक नवमासान् यावत् गाण्डीवस्य टकार. न श्रूयते स्म। पुनश्च केषाचित् संस्कृतप्राणाना विद्वद्धौरेयाणा प्रयत्नेन ई० १९७६ नवंबरमासे गाण्डीवस्य प्रकाशनमारब्धम्। संप्रति गाण्डीवमिदं "दर्शनकेसरी" पं० श्री गोपालशास्त्रिमहोदयै सपाद्यते। शराश्च समुत्तेजिता। गाण्डीवमिदानी— "गाण्डीव-कार्यालय, श्रीसंपूर्णानद संस्कृत - विश्वविद्यालय., वाराणसी" इत्यत. स्थानात् प्रकाश्यते।

(८) 'संस्कृत-रत्नाकरः' (दिल्ली) प्रकाश्यते अद्यापि (ई० १९७८) इति क्वचिदुल्लिखितं शारदाके। असकृत् पत्रप्रेषणेन, धनादेशप्रेषणेन वा न किमप्युत्तर लभ्यते तत.।

(९) त्रैमासिकी स्वरमगला ई० १९७२ दिसंबरमासे प्रकाशमेष्यतीति संभावितमासीत् सागरिकाया. ११-४ अके। परं सा ई० १९७५ जनवरी मासे जनिमलभत दीर्घकालस्य गर्भवासादनन्तरम् इत्यवधेयम्।

(१०) अखिलकर्णाटक-संस्कृतपरिषद (सुब्रह्मण्य-सदनं, मंगलूरु—३) वार्तापत्रिका "संस्कृतवाणी" २२. ६. १९७८ तमे दिनाके प्रकाशिता। मासिकरूपेण अस्या प्रकाशमिच्छति परिषत्। प्रस्तुत अंक. कन्नडभाषया प्रकाशितः। मुखपत्रे केवलं "संस्कृतवाणी" इति देवनागरी (कन्नडाग्ल-लिपिभ्या सह) मुद्रितम्।

(११) संस्कृतपत्रकारितेतिहासाख्यो ग्रन्थ. प्रकाशितो विद्यते खलु। हिंदीभाषायां रचित. अयं ग्रन्थ. "विवेक प्रकाशन, सी० ११।१७ मॉडल्टाउन्, दिल्ली—९" इत्यस्मात् स्थानात् पंचाशद्रूप्यकमूल्येन लब्धुं शक्यते।

(१०) अलीगढ-मुस्लिमविश्वविद्यालयीय - संस्कृतविभागात् प्रकाश्य-मानायां प्राच्यप्रज्ञा—नाम्न्या हिंदी-शोधपत्रिकाया कदाचित् संस्कृतरचना अपि प्रकाश्यन्ते। उपलब्धे 'प्राच्यप्रज्ञायाः' चतुर्थके (१९७१) "उपसम्पद्विधि." नाम-बौद्धग्रन्थ: प्रकाशितो दृश्यते।

———

# 'असुर'-शब्द विमर्शः

शिवसागर-त्रिपाठी

संस्कृत-साहित्ये 'असुर' शब्द सुरप्रतिरोधी असदर्थको राक्षसवाची च। ऋग्वेदे स्वयं शब्द देवपर्यायत्वेनापि प्रयुक्त। यथोद्घोषितं महर्षिणा प्रजापति-वैश्वामैत्रेण—'महद्देवानामसुरत्वमेकमिति'[1]। देवपरकोऽयमर्थ खलु मौलिकः प्रतीयते। वर्तमानोऽर्थस्तु पश्चाद्वर्ती प्रतीयते। यश्चार्थ-परिवर्तनस्यार्थाप-कर्षस्य वा समुदाहरणम्।

महर्षिणा वाल्मीकिना स्वग्रन्थे समुल्लिखितं यत् समुद्रमन्थनाज्जातायाः वरुणात्मजाया सुराया प्रतिग्रहणाद्देवा 'सुरा' इत्यभिविश्रुता, किन्तु तस्या अप्रतिग्रहणात्तु दैतेया 'असुरा' इति विख्याताः—

> दिते पुत्रा न तां राम! जगृहुर्वरुणात्मजाम्।
> असुरास्तेन दैतेया. ... ... ॥[2]

अत्र सुरां वरुणात्मजा इति प्रोच्य तत्र देवतात्वमारोपितमिव, परं रामायणस्यापरस्मिन् बम्बई-संस्करणे सुराशब्दस्यापि समुल्लेख प्राप्यते—

> सुराप्रतिग्रहाद्देवा सुरा इत्यभिविश्रुता।
> अप्रतिग्रहणात्तस्या दैतेयाश्चासुरास्तथा॥[3]

एवमसुर-शब्दनिर्वचने नञ्समासत्वेन यत् कथितं तल्लोकविश्वासविरुद्धं अथ च शास्त्रासम्मतमपि प्रतीयते, परं कथनमेतद् असुराणा प्रकृति द्योतयति यन्मूलतस्ते सुरा निन्दनीयान् सुरादितामसपदार्थान् अग्राह्यान्मन्वतेस्म।

असुरशब्द सुरप्रतिषेधार्थक, किन्तु सुरशब्दः ऋग्वेदे न लभ्यते। सुरा-शब्दस्तत्रावश्यमेवानेकत्र प्रयुक्त[4]। सुरा खलु तत्कालेऽपि निन्दनीया अग्राह्या चासीत् यामुपसेव्य च जना दुर्मदा पारस्परिकसघर्षरताश्चोप-वर्णितास्तत्र। 'सुरासुनेति'[5] इति महर्षिणा यास्केन निरुक्तम्। एवमेव ये

---

1. ऋक् ३/५५
2. वा० रा० बाल० ४५/३७-३८
3. सर मानियर विलियम्स-कोशाड उद्धृतम्
4. ऋक् ८/२/१२, ७/८६/६ आदि
5. नि० १/११

दयादान-दाक्षिण्यादि-गुणानामभिषवनं न, तेऽसुरा इति अथवा 'अ' कारं स्वार्थे आगमत्वेन स्वीकृत्य एतद्गुणविशिष्टो देवः इति वक्तुं शक्यते। श्री ब्रडके महोदयेन 'सम इन्डो आर्यन् इटीमालोजीज' नामके लेखे भारोपीयं—'एसु' (esu) पदं शून्यक्रमाकारेण (Zero-Grade Form) 'असु'-पदेन 'सु' पदेन वा सम्बद्धय[1] 'असुर'-'सुर' शब्दौ एकात्मनौ स्वीकृत्य उपर्युक्तमेव स्वशैल्या समर्थितमिव । डा० रामचन्द्र-जैन महाशयेनापि द्वावपि शब्दौऽसुधातुनिष्पन्नौ सदर्थप्रतिपादकौ मत्वा श्रमणधर्मप्रतिपादकोऽसुर. इति समुल्लिखितम्[2]। इदमपि सम्भाव्यते यत् 'सुरा'-सेविनः सोमपायिनः सोमयाजिनश्च सुरा इति अपरे चासुरा इति विश्रुता स्यु । अथवा वैदिक साहित्य-सम्मत उदक-रस अन्नयशोघृत-ओषधिरसवाची 'सुरा'-शब्दो ग्राह्यः । एतद्दृष्ट्यापि रामायणीयं निर्वचनं विचारणीयम् ।

शतपथब्राह्मणे गर्भोपनिषदि च 'असु' शब्द' प्राणवाची[3] । 'प्रजापति-रसुना सुरानसृजत' इति तैत्तिरीयब्राह्मणमतम्[4] । जैमिनीयोपनिषदि मन. पर्यायत्वेनासुरम् 'असुषुरमते[5]' । 'असुरिति प्राणनामास्त. शरीरे भवति, तेन तद्वन्त' इति निरुक्तम्[6] । 'अवेस्ता' ग्रन्थेऽपि 'अङ्हु' इति तद्भवशब्दः प्राणवाची । पुराणेऽपि असुरा असुजन्मान.[7] । एकाक्षरकोशेषु 'र' इति रक्षणार्थः अत असुरा प्राणरक्षका इति । यथा रक्षितृत्वेनैव 'रक्षांसि'[8] राक्षसाश्च[9] निरुक्ता ।

यास्कीये निरुक्ते 'असुरिति प्रज्ञा नाम[9]' । अत्रापि मत्वर्थीयं 'र' मिति स्वीकृत्य असुरा. प्रज्ञावन्तो बुद्धिमन्तश्चेत्यपि बोध्यम् । तत्रैव 'असुरत्वमादि-लुप्तम्' इति लिखितम् अर्थात् मूलशब्दस्तु 'वसुर' आदिव्यञ्जनलोपत्वाद् अथ 'असुर' इति। दुर्गाचार्येणात्र 'उदकवान् त्वष्टे' ति व्याख्यानं, परमसुरः वैभवशाली धनवान् चेति वर्तमान-प्रसङ्गे स्वीकर्तुम् शक्यते ।

---

१. द्र-ऐ या इ-पृ० ५९
२ ए ऐ इ-पृ० १५९
३ निघण्टु १/१२/२५
४. श० ब्राह० १२/८/१/४
५ ते ब्रा १/३/३/५
६ श ब्रा १२/७/:/१४
७. अथर्व १०/६/५, ६/१/१८, ६/६९/१
८. श ।ब्र—६/६/२/६, ग उप ब्रा १/४०
९. त ब्रा—२/३/८/२

'आसुरी माया स्वधया कृतासीति प्राणो वा असुस्तस्यैषा माया स्वधया कृता' इति शतपथब्राह्मणे[1] 'असु' शब्दो मायार्थक । अतोऽसुरा अलौकिक-माया-सम्पन्ना 'मायिनो' वा यथाथर्ववेदे उक्तम्[2] ।

पाणिनीये धातुपाठे अस्-धातुः 'भुवि' गतिदीप्त्यादानेषु 'उपतापे' क्षेपणे च पठित । तदनुसारं असुर सत्तावान्, गतिमान्, दीप्तिमान्, दानी, शत्रूणा नाशकः, पीडादायक प्रक्षेपकश्च ।

उपरिलिखितानामर्थानां सदृशतमेष्वर्थेष्वेव 'अहुर,-ऐसिर-अस्सुर-अथुरा-अश्शु (श्शू-स्सू) र-प्रभृतय क्रमश अवेस्ता नार्समाइथालोजी-असीरिया-प्राचीन ईरानी-शूषाभाषा-पूर्वोत्तर ईराक-सम्बद्धा विदेशीया शब्दाः 'असुर' शब्दस्यैव अपभ्रंशास्तद्भवा वा। भाषावैज्ञानिकमिदं तथ्यमपि ध्येयं स्वीकार्यञ्च । अथ च डा० वासुदेवशरण अग्रवालमतेन[3] तु 'असुर' आयुधजीवी संघ., तस्य पर्शवादिगणपाठात्[4] । ये खलु डा० हेमचन्द्रजोशी-प्रभृति विद्वास 'आर्या बहिरागता' इति मतमवलम्ब्य 'असुर' शब्दं विदेशीयं असीरिया-भाषा-सम्बद्धं मन्वते[5], तच्चिन्त्यम् ।

पुराणस्मृतिवर्णितेषु अष्टविधविवाहेष्वन्यतम 'असुर' इति[6] । यस्य परिभाषा व्याख्या चास्य परिवर्तितेऽर्थे कृतेति प्रतीयते[7] । वस्तुत प्रारम्भे स्वमूलार्थसम्बद्धस्य समाजसम्मतस्यास्य विवाहस्य आसुरपद्धतौ असुराणा धनाधिक्यं विशेषः ।

'असति गच्छति अन्तरिक्षे दीप्यते स्वयमादत्ते वा जल' मिति असुरः सूर्यो देव[8] । अमरकोशे पर्यायत्वेन प्रयुक्त 'पूर्वदेवाः[9]' शब्द असुराणा पूर्वदेवतात्वं स्पष्टं द्योतयति । अस्य स्पष्टीकरणं भानुजिदीक्षितेन स्वबुद्ध्या 'अन्यायाद्धि देवत्वाद् भ्रष्टा.[10]' इति कृतम् ।

---

१ मनो वा असुरम् तद्ह्युसुषु रमते-जै उप—३/३५/३

२. नि—३/८

३ असु प्राण स्मृतो विप्रास्तज्जन्मानोऽसुरा , लि० पु० ७०/१९८, वापु—९/२१

४ ए को—२३/३०, २५/११५

५. ओषधयः—तास्त्वा वधु प्रजावती पत्ये रक्षन्तु रक्षस -अथर्व १४/२/७

६ रक्षामेति च यरचते राक्षसास्ते भवन्तु व -वा रा, उत्तर ४/११-१३

७ नि १०/३४

८. श ब्रा—६/६/२/६

९. अथर्व १९/६६/१

१०. षा भा—पृ० ४६१

वस्तुत. प्रारम्भिके काले असुरेषु (देवेषु) कदाचित् पारस्परिकसंघर्षस्य स्थितिरुत्पन्ना प्रतीयते। ये खलु ईरान (आर्याणां देश.) प्रभृति देशेषु गता., ते तत्र मूलरूपेणैव अहुरा., अस्सुरा:, अश्शुरा वा जाता। एवमेव भारते असदर्थप्रयुक्तै: दानव-दैत्यादि-शब्दै: सम्बद्धा: तत्रत्या[1] शब्दा अपि द्रष्टव्याः। अपरे च भारतीया असुरा (देवा:) तद्भिन्नतां द्योतयितुं स्वयं सुरा. जाता:, अपरान् (अ-सुरान्=अदेवान्) च मत्वा सम्भवत. द्वेषेर्ष्याविशादेव स्वरूपत, व्यवहारत. प्रकृत्या च त एवं प्रस्तुता. यद्भयावहा हेयाश्च जाता:। एषैव स्थिति ईरानादिदेशेष्वपि तत्रत्यै. कृता.। भारतस्य देव: तत्र 'द-एव' इति अदेवत्वेन दानवत्वेन वा व्यपदिष्ट.। तत्सम्बद्धाः शब्दास्तत्र अन्यभाषास्वपि द्रष्टव्या.[२]। एवमेव वृत्रघ्नः (इन्द्र.) तत्र 'वेरेथ्रघ्न' इति गन्धर्वश्च 'गन्दरेवा' इति विशिष्टौ दैत्यौ। यवनदेशीयं 'डायोनिसस' नाम दानवासुरस्य दानवेशस्य वा तद्भवं रूपमिति स्पष्टं प्रतीयते।

श्री आनन्दकुमार-स्वामिना 'एन्जेलस एण्ड तितैन्स' नामके लेखे प्रतिपादितं यत् देवासुरो प्रकाशान्धकारदेवौ मूलतश्चभिन्नौ[३]। इदमपि उल्लेख्यं ध्यातव्यं च यद् द्वयोरपि शब्दयो: मूलधातू (√अस, √दिव् च) सदसद्भावनानुस्यूतौ[४]। एषा स्थिति: एतयोर्थपरिवर्तने सहायिकेति अनुमीयते। मोनियर-विलियम्स महोदयेन द्वयोरपि अर्थयो: सप्रमाणमुल्लेख. कृत: सदसदर्थप्रतिपादकाश्चान्येऽर्था अपि प्रदत्ताः।

उपरिलिखितम् अनेकविद्वत्सम्मतं ऐतिहासिकं विघटनं संघर्षो वा ऋग्वेदकाल एव सम्पन्नमिति प्रतीयते, यत. तत्र परिवर्तितेऽप्यर्थे 'असुर' शब्द: प्राप्यते[६]। नार्मन ब्राउन महाशयेन एकस्मिन् ऋक्सूक्ते[७] द्विविधौ असुरौ स्वीकृतौ, परं तेन तत्रोपलक्ष्यमाणाः प्रतीकात्मकता रूपकात्मकता वा नख्यातेति न सर्वै: स्वीकृतं तन्मतम्[८]। विद्वद्भि वेदेष्वसुर-संस्कृतिसम्बद्ध-

१ पा—५/३/११७

२. द्र० 'शब्दार्थ चिचार' पृ० ७२ (भाषा, जून १८६३)

३. मनु—३/२१, वि पू—३/१०/२४

४. ज्ञातिभ्यो द्रविणं दत्वा कन्यायै चैव शक्तितः
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते॥ मनु—३/३१

५. आप्टे पृ० ७१-I, मो वि—१२१-I

६ अमर—१/१२

७. तदेव, सुधा व्याख्या

८. यथा डेन्स (Danes), डेन्मार्क (Denmark), स्केन्डेनेविया (Scandenavia), स्वेडेन (Sweden) आदि

बीजानामन्वेषणमपि कृतम् । श्री भगवद्दत्तेन श्री ज्वालाप्रसाद-शर्मणा च तथाकथिताया असुरसंस्कृते मूलं आर्यसंस्कृतिरेवेत्युद्घोषितम्[१] ।

अतः इदमप्यवधेयं यदधिकाशत असुर-सम्बद्धा उल्लेखा वर्णनानि व्याख्याश्च तस्य परिवर्तितमर्थमेव पोषयन्ति । निरुक्तेऽपि 'असुरा असुरताः (न सुष्ठुरता —दुर्ग.) त एव ये स्थानेष्वस्ता स्थानेभ्य' इति वा[२] । एवमेव पूर्ववर्णितेभ्य 'असु' सम्बद्ध-निर्वचनेभ्य. इदमपि निष्कर्ष्टुम् शक्यते यद् ये खलु प्राणेषु शरीरेषु वा रता., तद्रक्षणे तत्परा. 'यावज्जीवेत् सुखं जीवेद्, ऋणं कृत्वा घृतं पिबेदि' ति अथवा 'ईट ड्रिंक एण्ड बी मेरी' ति सिद्धान्त-प्रतिपादका भौतिकता-निबद्धाः तेऽसुरा । एवमेव आध्यात्मिकताविरहिताः वैभवसंलग्ना , बुद्धिमन्तो मायिनः असु (शोक दु खादि)[३] प्रदाः अप्यसुरा. ।

तैत्तिरीयब्राह्मणे[४] दुर्गाचार्य-व्याख्याया च 'असुरप्रशस्तार्थक । तदनुसारमसुराणामुत्पत्तिः प्रजापते अशुभांगेभ्य अवांगेभ्यो[५] वा वर्णिता । पुराणे ष्वपि[६] सिसृक्षो ब्रह्मण. जघनभागादेव तेषामुत्पत्तिं स्वीकृत्य तदेवोपबृंहितम् । एतत्सर्वम् तेषा कामासक्ते द्योतकं प्रतीकात्मकं वर्णनमिति अथवा तेषु निकृष्टताया हेयतायाश्च भावारोपणमिति स्वीकर्तुम् शक्यते ।

सामविधानब्राह्मणे[७] 'यदसुर्य्यम् तदसुराणामसुरत्वम्' इति असुरः अ-सु (सू) र्य[८]—सम्बद्धः यत प्रजापति तान् नक्तं असृजत् । अत एवासुरा ब्राह्मणेषु[९] पुराणेषु[१०] साहित्येऽपि रात्रितमःसम्बद्धा निशाचरत्वेन चोपवर्णिता ।

---

१. यथा देव (फा० देवु (असी०) डेविल (अं०) डायाबोलस (लै०) डायाबोलोस(ग्री०), देओफल (ऐं० सैं०) डायाविल (फ्र०) डायाबोलस (इटली) डायाबिल (स्पे०);

२. द्र० ऐ या इ पृ ५९

३. अस् भुवि, गतिदीप्त्यादानेषु, उपतापे, क्षेपणे ।
दिवु-क्रीडा-विजिगीषा व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति गतिषु ।

४ मो वि १२१—I

५. ऋक् १०/१३८/३, १२४/५, १५७/६, अथर्व ८/९/२४, श ब्रा—१/२/४/८

६. ऋक् १०/१२४

७. ऐ या इ पृ० ६०

८. मोहनजोदड़ो एण्ड हड़प्पा असुर कल्चर—(भगवद्दत्त) दि शिने स्पीक्स (The shine speaks), ज्वाला प्रसाद शर्मा—द्र० ऐ या इ पृ० ५८-५९

९. स्थानेष्वस्ता स्थानेभ्य इति वा—नि० ३/८

१०. द्र० शब्दार्थ कौस्तुभम्

एवमेव वैयाकरणै. प्रदत्ता व्युत्पत्तयोऽपि अस्य परिवर्तितमर्थमेव, द्योतयन्ति। अस्यतीति विग्रहे उणादौ असु (क्षेपणे) धातोः उरन् प्रत्यये[1] सिद्धयति 'असुर' शब्दः। अत्र कण्ड्वादिगणीयः अस् (उपतापे) धातुरपि स्वीकर्तुम् शक्यते। यत. स उपतापयति सर्वानिति। असुर (प्रसवश्वर्ययो.) धातोः निष्पन्नस्य 'सुर' शब्दस्य विपरीतार्थकोऽसुर शब्दः अनीश्वरवाची। शब्दकल्पद्रुमे वाचस्पत्ये च 'असुषु विष्वग् विषयासु प्राणनक्रियासु रमते' इति 'नास्ति सुरा यस्य स.' इति उपनिषद्रामायणगतनिर्वचन-संकेतोऽपि प्राप्यते। सुधा-व्याख्यायामप्येषैव स्थितिः।

एवमसुरशब्दो मूलत देववाचीति विशदी भवति। आदिस्वरलोपात् तदर्थवाची सुरशब्दोऽपि[2]। असुर शब्दस्यार्थपरिवर्तनम् अर्थपकर्षो वा पारस्परिकद्वेषवशादेव जातं भिन्नता प्रदर्शयितुं 'सुर' शब्दोऽपि प्रचलितः। असुराणाः प्रकृति-द्योतकं रामायणस्य निर्वचनं मूलाभावं संकेतयतीति प्रतीयते। पूर्वाग्रहग्रस्तमस्तिष्कं निर्वचनमिदं अद्भुतदृष्ट्या विलोकयतीति शम्।

संस्कृत-विभाग
राजस्थान-विश्वविद्यालय
जयपुर।

---

१. असेरुरन्—उ० १/४२-I

२. यथा वैदिक साहित्ये (आ) त्मा, त्मानं, त्मनि, त्मने, ; (अ) द्भुत (ऋक् ८/९०/३) आदयः शब्दा. द्रष्टव्याः।

# विंशशताब्दिकं संस्कृतनाटकम्

**रेवाप्रसादो द्विवेद.**

लेखका प्रो० रामजी उपाध्यायः, प्रकाशकः संस्कृत-परिषत्, विश्वविद्यालयः सागरम्, प्रथम संस्करणम् १९७८ ई०, पृष्ठ सख्या २५०, मूल्यम् १५ रूप्यकाणि

संस्कृतभाषा हि विश्वस्य महत्तममाश्चर्यम्। 'श्रुतिमहती सरस्वती' त्यनितरसाधारणेन विरुदेन महाकविभि सभाज्यमानाया अस्या वाङ्मयसन्तानो यतः प्रभृति प्रारभत तत प्रभृति भागीरथ्या सन्तान इवैव प्रत्यग्रायत एव प्रतिक्षणम्। युगाना समविषमाः पर्यया आदर्श इवास्मिन् सन्ताने प्रतिबिम्ब-भावेनाद्यावधि निर्भराः। या चात्र कान्ति साप्युत्तरोत्तरं प्रकाशमेवासादयते। अत एव वर्तमान-शताब्द्या सरस्वत्या अस्याश्चतुरस्रो विकासोऽनुभूयते। तत्तान् विषयानादाय परशताः शोधप्रबन्धाः साम्प्रतमपि संस्कृतेन निबध्यन्ते, निबध्यन्ते च काव्यनाट्यादीनि। काव्येष्वपि मुक्तकानां खण्डकाव्यानां च कथा दूर एव तिष्ठति, महाकाव्यान्यपि साम्प्रत भूयो विरच्यन्ते प्रकाश्यन्ते च साटोपं ससंरम्भं च। नाट्येषु पुनस्ततोऽप्यधिकः संस्कृतज्ञाना समुत्साह। अस्यामेव शताब्द्या संस्कृतेन तावन्ति नाट्यानि प्रकाशितानि यावन्ति श्रेष्ठ-भाषासु तासामारम्भकालत इदानी यावदपि प्रायेण न निर्मितानि, का वार्त्ता संस्कृतस्य १९, १८, १७ शताब्दीप्रसूताना नाट्यानां, का च वार्त्ता ततः पूर्वमुपनिबद्धानां तेषाम्। शास्त्रप्रधानतया संस्कृतमधीयानेषु नाट्यादिकं भूम्ना न प्रतितिष्ठतीत्यप्राप्तपर्याप्तप्रचारापि नाट्यानीमानि पुस्तकस्थान्येव तिष्ठन्ति, नास्ति ततस्तेषामभावः। एतेषां सर्वेषा लाभाय परिचयाय च शासकीयः कश्चिदनुसन्धानाभियोगोऽपेक्ष्यते। देशस्य प्रतिकोणं विकीर्णानामेषां शिल्पोत्तमाना न सम्भवत्येवान्यथा सुरक्षा, का नाम कथा प्रचारस्य। अमुमेवं नाट्यराशिमाराधितुं सागरिकासम्पादकैरुपाध्याय श्रीरामजीमहाशयै बहूनि वर्षाणि सर्वतोभावेन समर्पितानि। देशस्य शताधिकान् प्राचीनान्नवीनांश्च पुस्तकालयान् साक्षादालोड्य महोदयैरेभिः प्रायेण पञ्चशतानि संस्कृतनाट-कानि संप्राप्तानि, प्रतिपङ्क्ति पठित्वा सर्वाण्यप्येतानि गुणदोषतोऽनुवीक्षितानि। च। महानयमपर एषामनुग्रहो यदेभिरनुवीक्षणान्येतानि ग्रन्थरूपेणापि संदब्धानि। १२०० पृष्ठप्रमाणो ग्रन्थ एष हिन्दी भाषया सोदाहरणानि कथानकानि प्रस्तूय समेषामप्येषां विंशशताब्दीनाट्यानामालोचनमपि संक्षिप्य तथा प्रस्तौति यथा विनापि मूलं मूलभूतस्य कथानकस्य च रसो लभ्येत। स चासौ महाग्रन्थो

भगवदनुग्रहादुपाध्यायानामेषां सुमहताऽभियोगाच्च मुद्रितरूपेणाप्यचिरेणैव लप्स्यते। तत पूर्वं 'मध्यकालीन संस्कृत नाटक'—नामाऽपि विशालो ग्रन्थ एभिः प्रकाशमानायितो येन संस्कृतनाट्यानामितिहासे नवीना क्रान्तिरिव समजायत। अनेकेषा नाटकाना कथानकान्यपि पूर्ववर्त्तिरितिहासलेखकै. स्वकीयया कल्पनयैव इतिहासग्रन्थेषु विपर्यस्यादायिषत। तानि सर्वाणि महोदयैरेभि. संशोधितानि नाटककलेवरस्य प्रत्येकमक्षरं स्वयमनुशील्य। कृत्य.रावणादीना विषये प्रसृततमा भ्रान्तय एभिरेव महाशयैर्निरस्ताः। एवमेव छायानाटकादीनामपि छायात्वादिकेष्वपि विषयेषु एभिरेव विदुषा चक्षूंषीवोन्मीलितानि तथ्यजातमाविष्कृत्य। तेनैव पथाऽऽधुनिकेष्वपि नाटकेषु दत्तावधानैरेभि हिन्दी भाषया पूर्वोक्तो यो नवीनतमइतिहासग्रन्थो निरमायि तस्यान्तिम खण्डमिमे सागरिकाया विशेषाङ्कतया प्रकाशयन्ति। 'विंशशताब्दिक संस्कृतनाटकम्'—इति नाम्ना प्रकाश्यमानेऽस्मिन् विशेषाङ्के विंशस्यास्य ई० वर्षशतकस्य प्रायेण ५०० नाटकानां सामग्री संक्षेपेणोपच्छन्द्यते। अहिन्दीविदोऽप्येतेन संस्कृतनाट्यसाहित्यस्य साम्प्रतिकीमपि निरवच्छेदा सन्तति ज्ञातुं प्रभवन्ति। विशेषाङ्क एष. पृथग् ग्रन्थात्मनापि प्रकाश्यते येनैकोऽभिनव. संस्कृतग्रन्थोऽपि विश्वचक्षुपी उन्मीलयितुं क्षमस्य संस्कृतस्य ग्रन्थराशि वर्धयति।

अत्रापि ग्रन्थे १९७५ तम ई० वर्ष यावदेव निर्मिताना मौलिकानामेव संस्कृतनाटकाना संग्रहो लभ्यते, न तु तदुत्तरं प्रणीतप्रकाशिताना न वा तत पूर्वमपि भाषान्तरनाटकानुवादरूपेण रचिताना संस्कृतनाटकानाम्। तेषामेषा संकलेन विंशस्य ई० वर्षशतकस्य संस्कृतनाटकाना संख्याऽतिभूयस्त्वमासादयेत्। सुशक एतेन संस्कृतभाषाया. प्राणवत्ताया उन्नयः। ततश्च पाश्चात्यानां पौरोभाग्यमनुसरता भारतीयानामपि योऽयं प्रवादो यत् संस्कृते नूतनस्य साहित्यस्य सृष्टि सप्तदशेनैव शतकेन खण्डितप्रसरेति तस्य हि निकृत्तमेव मूलम्। उपेक्षामेरुमधितिष्ठद्भिरर्वाग्दृग्भि. संस्कृतस्य यन्मृतत्वमुपगतं च भूमा तत्र फलितस्तावन्नायं स्थाणोरपराधो यदेनमन्धो न पश्यतीति न्याय।

अयमत्र ग्रन्थे विशेषो यदसौ भारतस्य सर्वासामपि दिशा संस्कृतपात्र निहितं नाट्यामृतं प्रस्तौति। अत्र हि वङ्गोद्भवाना यतीन्द्र-विमल-चौधरी प्रभृतीनामिव दक्षिणोद्भवानां महालिङ्ग-शास्त्रि-प्रभृतीनामपि, पश्चिमोद्भवाना श्रीरामवेलण्कर प्रभृतीनामिवोत्तरोद्भवाना काशिराज श्री प्रभुनारायणसिंह प्रभृतीनामपि रूपकाणामत्र हैयङ्गवीनसदृशं परिचयरसमनुभूय संपूर्णापि भारतमही स्वकीयमैक्यमिवाविष्करोति। भाषाऽपि ग्रन्थस्यास्यैतादृशी या हि प्राथमिकछात्रोऽप्यवगन्तुं प्रगल्भेत। इयमेव हि आदर्शभूता भाषा इतिहासकृताम्।

ग्रन्थकारः श्रीमानुपाध्यायो नाट्यतत्त्वप्रत्यभिज्ञानेऽपि भृशं प्रायतत। ततश्चासादितसूच्यदृश्यत्वादिप्रविभेद-रहस्यतया परिगत-सन्धिसन्ध्यङ्ग-यथातथ्यतया च ग्रन्थकृतोऽस्य नाट्यसमीक्षा समीक्षाया अप्यादर्श प्रस्तवीति यत्र शिक्षितैर्नाट्यानुशीलनमार्गोऽपि लब्धुं शक्यते' तथ्यैकपरायणतया च महामतिरेष दोषानपि स्पष्टमुद्गिरति न विचिकित्सते तत्र नाट्यकर्त्तु. सौमनस्य-पण्यखिलीकारात्।

असौ हि ग्रन्थ एतदपि प्रत्याययति यत् शताब्द्यामस्या संस्कृतनाट्यक्षेत्रं पुस्तकनिर्माणमात्रसीमितं नास्ति, संस्कृतनाट्याना प्रयोगेष्वप्यत्र प्रजागर्त्तितरा प्रकृतिरिति ततश्च कस्य नाट्यस्य प्रयोग· कुत्र वा समपद्यतेत्यपि ग्रन्थेऽस्मिन् पाठकैर्ज्ञातुं शक्यते।

डिम-व्यायोगादयो ये विरलप्रचारा नाट्यविशेषा ये च प्रकरण· प्रभृतयो विशालाकारास्तेषामपि निर्माणेषु प्रजागर्त्तितरामिदं वर्षशत-कमित्यपि ग्रन्थादस्माद् वेदितुं शक्यते, का कथा एकाङ्कनाटकानाम् एकनट-नाटकाना वा भाणप्रभृतीनाम्।

संस्कृतनाट्येषु हास्यरसस्य प्रधानता प्रायेण विरला। राष्ट्रप्रीतिरपि च तथैव। विंशशताब्दीनिर्मितेष्वेषु नाटकेष्वेषामपि विशेषाणा दर्शनानि सुलभानि। लोककथा उपजीव्यापि कतिचन रूपकाणि निर्मितानीति तेभ्य. सुखावगमो लोकालोक। प्रतीकरूपकाण्यपि प्रबोधचन्द्रोदयादि-सदृशानि शताब्द्यामस्यां संदृब्धानीति ज्ञायते यद् भारतीयाया अस्या असाधारण्या अपि नाट्यप्रवृत्तेरक्षुण्ण इदानी प्रसर।

नाट्येष्वेषु गीतिकलाप्यलङ्कारतयोपजीव्यते। ततश्चच्छन्दोयोजनाप्यत्र विविधतामयी दृश्यते। तान्येतानिच्छन्दांसि क्वचित् प्रसादमयानि क्वचित् पुनरोजोदिग्धान्यपि न भवन्ति माधुर्यमयानि, विशेषेण गौडाना जीवन्यायतीर्था-दीनाम्। संवादेष्वपि वैविध्यं प्रतिक्षेत्रं सुलभम्। ततो विदर्भादिक्षेत्रवैशिष्ट्य-बुद्धिमाबिभ्रता राजशेखरादीनां साहित्य-मार्ग-दर्शनमिदंयुगेऽपि भूतार्थायित एव। रमाचौधुरीप्रभृतीना सैषा गौडीया शैली भवभूतेर्मालतीमाधवमिवा-नुहरति। एवं ग्रन्थेनानेन संस्कृतस्य पद्यकाव्यं, गद्यकाव्यं, नाट्यसाहित्य चेति त्रितयस्यापि यीशोरस्यां शताब्द्या य आदर्श सोऽयं कार्त्स्न्येन प्रस्तूयते केवलं नाट्यक्षेत्रमात्रमधिकृत्य नितान्तमपेक्षित सुप्रतीक्षितश्चासौ नूत्नतम संस्कृत-नाट्येतिहास संस्कृतविश्वस्य नियतमेव महत्तमो लाभ.। नूनमसौ सुमेधसा प्रहर्षाय कल्पेतेति परिलक्ष्यते।

# राजस्थानस्यैतिहासिक-महाकाव्यानि

रामलखन पाण्डेयः

भारतस्येतिहासे राजस्थानस्य महत्त्वपूर्णं योगदानमिति विदितमेव भवताम्। तत्र चैतिह्यरसिकैस्तत्रत्यविद्वद्भिः काले-काले राजाज्ञया वा स्वेच्छया वा तत्कालविशिष्टाना पुरुष-स्थान-समाज-राज्यादीनां यच्चारुचित्रं चित्रितं स्वकीयकृतिषु तदप्यस्ति नूनं महत्त्वशालि मनोहारि च। तत्र कृताया गवेषणायां पञ्चदशख्रीष्टशताब्दादारभ्यैकोनविंशतिशताब्दं यावद् राजस्थानस्य द्वादश महाकाव्यानि ऐतिहासिकानि सिद्ध्यन्ति। तद्यथा—

| | महाकाव्यानि | लेखक | रचना शताब्दी |
|---|---|---|---|
| १. | पृथ्वीराजविजयम् | अज्ञातनामा | १६ तमा |
| २. | सुर्जनचरित्रम् | चन्द्रशेखरः | १६-१७ तमा |
| ३. | राजप्रशस्तिमहाकाव्यम् | रणछोडभट्ट | १७ तमा |
| ४. | हरिभूषणम् | गंगारामः | १७ तमा |
| ५. | राजरत्नाकरम् | सदाशिवभट्ट | १७ तमा |
| ६ | अभयोदयम् | भट्टो जगजीवन | १८ तमा |
| ७. | अजितोदयम् | भट्टो जगजीवन | १८ तमा |
| ८. | अजितचरित्रम् | बालकृष्णदीक्षित | १८ तमा |
| ९ | ईश्वरविलासम् | श्रीकृष्णभट्ट. | १८ तमा |
| १०. | जयवंशम् | सीतारामपर्वणीकर | १९ तमा |
| ११. | कच्छवंशम् | कृष्णराम. | १९-२० तमा |
| १२. | मानवंशम् | सूर्यनारायण. | २० तमा |

अथैतेषामैतिहासिकमहाकाव्यानां संक्षिप्तं विवरणं पृथक्-पृथक् प्रस्तुमः।

## पृथ्वीराजविजयम्

अप्रकाशितमपूर्णञ्चैतत्पृथ्वीराजविजयं नामैतिहासिकं महाकाव्यं सम्प्रति द्वादशपत्रमात्रोपलभ्यमेशियाटिक सोसायटी कलकत्ता इत्यत्र १७४३४ तमे ग्रन्थक्रमाङ्के सुरक्षितं वर्तते। पत्रसंख्याविहीनेषु तेषु द्वादशपत्रेषु श्लोक-संख्यानुसारं ६२४ इत्यत. प्रारभ्य ७७९ यावद् १५६ श्लोकाः प्राप्यन्ते। तत्र सप्तमे पत्रे "गोकुलप्रसादस्येदं पुस्तकं पृथ्वीराजविजयम् खण्डितं १२ पत्रादि

इत्यस्ति लिखितम् । तेनैवास्य ग्रन्थस्य नामकरणम् । अथ गोकुलप्रसादः किन्तु तस्य लेखक उताहो रक्षक इति सर्वथा विवादास्पदम् । तथाप्यस्य महाकाव्यस्य प्रणयन पृथ्वीराजशासनकालेऽभवदिति कृत्वा अस्य ग्रन्थस्य रचनाकाल. षोडश-शताब्द्या उत्तरार्धः स्वीक्रियते ।

उपलब्धे चैतस्मिन् ग्रन्थखण्डे राज्ञ. सोढदेवादारभ्य भीमसिंहं यावदर्थात् १०२३ खीष्टाब्दात् १५३७ खीष्टाब्दपर्यन्तं तत्रत्यशासनं दर्शितम् । तत्र सोढदेवस्य विवाह, दुलहरायस्य जन्म, तेन कुलदेव्या साक्षाद्दर्शनम्, तस्य दक्षिणदेशे मरणम्, बीजलदेव-तत्पुत्रराजदेव-तत्पुत्रकीलन-तन्महिषीद्वय-तत्पुत्रषट्कोल्लेख, पृथ्वीराजस्य राज्याभिषेकः, पूर्णमल्लस्य नृपतित्वम्, भीम-सिंहस्य शासनोल्लेखश्चेत्यादिना सुस्पष्टं प्रतिभाति यदस्मिन् महाकाव्ये जयपुर-नृपतीना शासनादिकं विस्तरेण निपुणं वर्णितं स्यादिति ।

संपूर्ण-ग्रन्थस्य समीक्षणात्पूर्वं ग्रन्थस्यास्य महाकाव्यत्वं भवतु नाम प्रश्नास्पदम् किन्तु ऐतिहासिकत्वं त्वस्य निश्चप्रचमेव ।

## सुर्जनचरितम्

सुर्जनचरितस्य निर्माता गौडीयाम्बष्ठजातीयो जितामित्रपुत्रश्चन्द्रशेखर-महाकविरिति तेन स्वकीय परिचयो ग्रन्थान्ते निवेशित एव । तद्यथा—

> गौडीय. किल चन्द्रशेखरकविर्य प्रेमपात्र सता
> मम्बष्ठान्वयमण्डनात्कृतधियो जातो जितामित्रत ।
> ग्रन्थोऽयं निरमायि तेन वसता विश्वेशितुः पत्तने ॥ २०-६४ ॥

सुर्जनमहाराजस्यायं संस्थानपण्डित तदाज्ञयैव काव्यं विरचयाञ्चकारेति तत्समानकालिकत्वं सुस्पष्टमेव । सुर्जनसिंहस्य शासनकालः १५८५-१६०८ ई० अस्तीति ग्रन्थस्यास्य प्रणयनं षोडशशताब्द्या अन्तिमदशकस्य सप्तदशशताब्द्या प्रथमपादस्य चान्तराले समभवत् । सुर्जनपुत्रस्य भोजस्य राजसिंहासनाधि-रोहणं तदुत्तरं राज्यशासनं चाप्यत्र वर्णितमिति सप्तदशशताब्द्याः प्रथमपादान्ते ऽस्य समाप्ति संभाव्यते ।

विंशतिसर्गात्मकं महाकाव्यमिदं नृपतेर्वासुदेवादारभ्य सुर्जनपुत्रं भोजं यावत्कोटामण्डलान्तर्गतबुन्दीनरेशाना वर्णनं प्रस्तौति । सुर्जनमहाराजस्य वर्णनं तत्राधिकतया संजातमिति काव्यस्य नाम्नैव सुपष्टम् । सुर्जनसिंहं वर्णयता कविना तत्पूर्वजानां केषाञ्चिच्चौहानवंशीयाना नरेशानां वर्णनमत्र सम्यगुपनिबद्धमन्येषां च तद्वंश्यानां संक्षेपतो नामैव गृहीतम् ।

**कथावस्तु**

प्रथमसर्गे विविधदेवतानां स्तुतिपुरःसरं खलनिन्दादुर्जनप्रशंसापूर्वकं च काव्यकरणहेतुमुपन्यस्य नरदेवश्रीचन्द्रजयपाल जयराम-सामन्तसिंह-गुर्वक-चन्दनव्रज-विश्वपतिसंज्ञकाना राज्ञां संक्षिप्तं वर्णनम्। द्वितीयसर्गे प्रथमं विश्वपतेर्गुरुपुत्रस्य सुनयस्य वर्णनं विधाय तद्द्वारा उपदेशपूर्वकं विश्वपतये शाकम्भरी-देवीमाराधयितुमादेश प्रदत्त इति चर्चितम्। तृतीयसर्गे सुनयविश्वपत्योः शाकम्भरीगमनम्, मन्दिरपुष्पवाटिकयोश्चित्रणम्, देव्या. प्रादुर्भावश्चेति प्रतिपादितम्। चतुर्थसर्गे देव्याः स्तुति, वरदानप्राप्ति, लवणाम्बुधिनिर्मिति, पुन· राजधानीप्रवेश, विश्वपतिपुत्रस्य हरिराजस्य मुगलैः सह संग्राम., जोधपुरे दुर्गनिर्माणञ्चेति कीर्तितम्। पञ्चमसर्गे हरिराजपुत्रस्य सिंहराजस्य यशोवर्णनम्, तस्य विवाह, सन्तानाभावे निर्वेदः, संन्यासग्रहणम् तद्भ्रातृजस्य भीमदेवस्य सिंहासनाधिरोहणम्, दिग्विजयार्थप्रस्थानञ्चेति वर्णितम्।

षष्ठसर्गे विग्रहदेव-गुन्ददेव-रामनाथ-दुर्लभराज-दुसलदेव वीसलदेव-पृथ्वीराज-वल्हणनाम्ना नृपतीनां वर्णनं वर्तते। तत्र वीसलदेवेनावतीराज्यस्य स्वायत्तीकरण-प्रसंगे अवन्त्या महाकालेश्वरस्य च वर्णनमाधुर्य मनो मोदयते। सप्तमसर्गे वल्हणपुत्रस्य नलदेवस्य वर्णनपुरःसर पुष्करतीर्थस्य महिमा बहुविस्तारित.। अष्टमसर्गे तत्पुत्रजगदेवस्य, तत्पुत्रद्वितीयवीसलदेवस्य, तत्तनयाजयपालस्य च वर्णनं विधाय वसन्तं मनोहारि वर्णितम्। नवमसर्गे कामिनीभिः साकमजयपालस्य वारिविहारवर्णनम्, नागकन्यादर्शनम्, सिद्धसाहाय्येन नागलोक-गमनम्, शेषनागदर्शनम्, तत्कृपया सुदामनागस्य कन्यां परिणीय प्रत्यागमनं चेति निरूपितम्। दशमसर्गे सोमेश्वरस्य पृथ्वीराजस्य च बहुविध-कार्यकलापा वर्णिताः। तत्र पृथ्वीराज. शहाबुद्दीनं पराजितवान्, पश्चाच्छहा-बुद्दीनस्तमन्धं चकार, चन्दकविसहयोगेन च पृथ्वीराजस्तं दुष्टं जघानेति वर्णनं सविशेषं वर्तते।

एकादशसर्गे पृथ्वीराजस्य वंशजानां—प्रह्लादस्य, गोविन्दराजस्य, वीरनारायणस्य, वाग्भटस्य, जैत्रसिंहस्य, हम्मीरदेवस्य च शासनादिकं दर्शितम्। द्वादशसर्गे रणथम्भौरदुर्गे अल्लावद्दीनसेनया सह हम्मीरस्य शौर्यपूर्ण-युद्धवर्णनम्, हम्मीरमहिषीणामग्निप्रवेशवर्णनम्, हम्मीरस्य वीरगतिप्राप्ति वर्णनं च विद्यन्ते। त्रयोदशसर्गे हम्मीरदेवस्य सप्तम-पूर्वजस्य पृथ्वीराजस्य भ्रातु-र्माणिक्य-राजस्य वंशजान्-चण्डराज-भीमराज-विजयराज-दयण-कोल्हण-गंगदेव-समरसिंह-नरपाल-हम्मीर-वरसिंह-भारमल्ल-नर्मदाभिधेयान्-प्रतिपाद्य नर्मदा-त्मजस्य सुर्जनदेवस्योत्पत्ति, तस्य शैशवयौवनयो राज्याभिषेकस्य च वर्णन-पूर्वक सर्गान्ते तस्यैव यशः कीर्तितम्। चतुर्दशसर्गे जगमालसुता कनकावती

परिणेतुं सुर्जनस्य जगमालपुरं प्रति प्रस्थानं, वैवाहिककार्यकलाप, सुर्जनकनकावत्योर्मिथोऽनुरागश्चेति कथावस्तु विलसति। पञ्चदशसर्गे सूर्योदयवर्णनम्, कनकावती प्रति मातुरुपदेश, राजधानीपरावर्तनम्, ग्रीष्मवर्णनम्, वारिविहारवर्णनं चेति समाविष्टम्।

षोडशसर्गे सुर्जनपुत्रस्य भोजस्य वर्णनं अकबरसेनया रणथम्भौरपुराक्रमणं च प्रतिपादिते। सप्तदशसर्गे अकबरसेनायाश्चित्रणं युद्धभूमौ सुर्जनस्य पराक्रमवर्णनं च स्तः। अष्टादशसर्गे अकबरात् नर्मदा-काशी-मथुराभूभागानुपादाय तस्मै रणथम्भौरदुर्गसमर्पणम्, सुर्जनस्य नर्मदागमनम्, मथुरागमनं च प्रतिपाद्य विविधान्यतीर्थवर्णनं प्रस्तुतम्। एकोनविंशतितमे सर्गे सुर्जनस्य काशी-प्रयागादितीर्थगमनं, तस्य यशोवर्णनं, काश्यां ब्रह्मसायुज्यप्राप्तिश्चेति प्रतिपादितम्। विंशतितमे सर्गे सभासदां शोकम्, भोजस्य राज्याभिषेकम्, तस्य प्रतापं च प्रतिपाद्य कविः स्वपरिचयं प्रस्तुतवान्।

## राजप्रशस्तिः

महाकविना रणछोडभट्टेन राजप्रशस्तिमहाकाव्यं १६७६ ख्रीष्टाब्दे विरचितम्। यतो राजसिंहस्याज्ञया रणछोडभट्टः १७१८ तमे सवत्सरे माघमासस्य कृष्णपक्षीयसप्तम्या एतत्प्रशस्तिकाव्यलेखनकार्यमारब्धवानिति महाकाव्यस्यास्य प्रथमे सर्गे सूचितम्। कविरय उदयपुरस्य विख्यातनृपतेः राजसिंहस्य सस्थानपण्डित आसीत्।

राजप्रशस्ति. खलु उदयपुरमण्डलस्य महत्त्वपूर्णमैतिहासिकं महाकाव्यमस्ति। उदयपुरंनिकषा काकरोलीक्षेत्रे स्थितस्य राजसमुद्रसंज्ञकस्य जलाशयस्य नौचोकीघट्टस्थितशिलासु इदं महाकाव्यं समुत्कीर्णं वर्तते। असौ शिलालेख· भारतस्य विशालतम। चतुर्विंशतिसर्गात्मकं महाकाव्यमिदं १८७३ ईसवीयवर्षे उदयपुरस्य साहित्यसस्थानेन प्रकाशितम्। एतत्पूर्वं विनोदपत्रिकायामप्यस्य प्रकाशन समभवत्। तत्पूर्वमपि "एपीग्राफिया इण्डिया" इत्यस्य षष्ठे भागेऽस्य प्रकाशन संजातमासीत्।

**कथावस्तु—**

प्रथमसर्गस्य प्रारम्भे एकलिङ्गस्तुति-परकं मङ्गलाष्टकं चेति मङ्गलाचरणम्। अथ राजसिंहेन राजसमुद्रनिर्माणस्योल्लेखः, तदाज्ञया रणछोड़भट्टस्य राजप्रशस्तिकाव्यारम्भसूचना, संस्कृतकवीना प्रशस्तिकथायाश्च महत्त्वम्, एकलिङ्गमाहात्म्यं चेति विषयं प्रतिपाद्य सर्गान्ते कवि· स्वकीयो वंशवृक्षो नियोजितः। द्वितीयसर्गे गोवर्धनवन्दनानन्तरं सूर्यवंश्यानां राज्ञां वंशावली

नियोजिता। तत्र मनो प्रारभ्य विजयं यावद् १३५ राज्ञां नामोल्लेख कृत.। तृतीयसर्गे विजयपद्मादित्य प्रभृतीना प्राचा राज्ञा वर्णन विधाय कवि स्वकीय-वंशपरिचयमदात् । चतुर्थसर्गे नरपतिप्रभृतीन् कतिपयमेवाडनृपतीनुल्लिख्य महाराणाप्रतापस्य तदात्मजस्यामरसिंहस्य च पराक्रमपूर्ण जीवनमुपन्यस्तम् ।

पञ्चमसर्गस्यादावमरसिंहस्यैव शौर्यात्मककार्याणि वर्णितानि । अथ जगत्सिंह राजसिंहासनमारोहति। तदाज्ञया अक्षयसिंहो डूँगरपुरनरेशस्य दमन व्यधात्, नगर लुण्टितं नष्टं चाकरोत्। तदाज्ञयैव च १६२८ वक्रमसम्वत्सरे रामसिंहो देवलियानगरमाक्रम्य तदलुण्टत् । ततो जगत्सिंहपुत्रस्य राजसिंहस्योत्पत्तिरभूत्, षष्ठसर्गे राजसिंहस्य राज्याभिषेक ,१७१० वैक्रमसंवत्सरे तस्य सदाकंवरीनामिकाया महिष्या गर्भाज्जयमसिंहस्य जन्म, सर्वंतु विलासं नवोद्याननिर्माणं च विविच्य दिल्लीश्वरस्य शाहजहानस्य राजसिंहस्य च पारस्परिको राजनीतिविषयककार्यकलापश्चर्चितः।

सप्तमसर्गस्यादौ राजसिंहस्य विजययात्राया विशद-वर्णनं वर्तते। महाराजसैन्येन दरीबानगर लुण्टितम्। माण्डलशाहपुरयो योद्धार २२-२२ सहस्राणि, बनेडायोद्धारश्च २० सहस्राणि रूप्यकाणि राजसिंहाय दण्डस्वरूप समर्पितवन्त । टोडानरेशो रायसिंह ६०,००० रूप्यकाणि तस्मै दण्डस्वरूपं ददौ। एतस्या विजययात्रायां राजसिंहसैन्येन वीरमदेवस्य महिख नाम नगरं म. . . . . , नवदिवसपर्यन्तं मालपुरानगरस्य लुण्टन कृतम्, टोक-साभर लालसोट चाटसूग्रामान् विजित्य प्रभूतं करग्रहणं च कृतम्। तत छायिनिनामिकाया नद्यां ओघप्राबल्यवशादुदयपुरं प्रत्यागत्य विविधोत्सवायोजनस्य वर्णनं विद्यते ।

अष्टमसर्गस्य कथावस्त्वनुसारं राजसिंह औरङ्गजेबस्य दिल्लीश्वरत्व-प्राप्तेः सूचनां प्राप्य तं प्रसन्नं कर्तुमरिसिंहं तत्र गमयति, औरङ्गजेबस्य तद्भ्रातु "शूजा" इत्यस्य च पारस्परिकयुद्धे तस्य साहाय्यं करोति, विजयी दिल्लीश्वरश्च राजसिंहप्रतिनिधिं सम्मानयति। तत. परं राजसिंहाज्ञया फतेहचन्दो बांसवाडाराज्यमाक्रम्य समरसिंहं च पराजित्य प्रभूतं धनं प्राप्नोति। राजसिंहो डूँगरपुरनरेशं गिरिधरं सिरोहीनरेशं च स्वायत्तीकरोति। अथ स किशनगढदुर्गं प्रविश्य दिल्लीश्वराय रक्षिता रूपसिंहस्य पुत्री परिणयति। तदा मेवलदेशमधिकृत्य हिरण्यकामधेनुप्रभृतिदानपूर्वकमशीतिसहस्ररूपकव्ययेन जनासागरस्य (जलाशय-विशेषस्य) निर्माण कारयति ।

नवमसर्गे राज्ञो राजसमुद्रनिर्माणेच्छया तस्य प्रस्तावितजलाशयस्य रूपरेखानिर्धारणम्, पर्वतद्वयमध्ये गोमतीनद्या सेतुनिर्माणम्, जलाशयस्य

खननम् अपारजलराशिनिःसरणञ्चेति विस्तरेण वर्णितम्। दशमसर्गेऽपि राजसमुद्रविषयकं वर्णनं दूरं प्रचलति। अष्टवर्षेषु पंचमासेषु षड्दिनेषु च तस्य निर्माणकार्यं सम्पूर्णतामगात्। ततो विविधदानस्य प्रासादनिर्माणस्य च वर्णनं विलसति। एकादशसर्गे अधिराजसमुद्रं निर्मितविविधसेतुवर्णनं विराजते। द्वादशसर्गतश्चतुर्दशसर्गं यावच्च राजसमुद्रप्रकरणमेव प्रपञ्चितम्। तन्नामजलाशयस्य प्रतिष्ठापनावसरे निमन्त्रिता राजानश्चान्यजनाश्च सपरिवारं समाययु।

पञ्चदशसर्गादारभ्य सप्तदशसर्गपर्यन्तं राजसमुद्रस्य प्रतिष्ठा विशदं प्रपञ्चिता। अष्टादशसर्गे नवदशसर्गे च मुख्यतया राजसमुद्रनिर्माणमुद्दिश्य नैकसहस्रब्राह्मणादिजनेभ्य कृतस्य विविधदानस्य चर्चा प्रवर्तते। विंशतितम-सर्गानुसारं महोत्सवे समागतेभ्योऽन्येभ्यश्च राजभ्यो राजसिंहद्वारा गजाश्वबहु-मूल्यवस्त्राद्युपायनानि समर्पितानि। शासनाश्रितेभ्यश्च धनादिकं प्रदत्तम्।

एकविंशतितमे सर्गे राजसमुद्रस्य निर्माणकार्ये सजातस्य व्ययस्य विवरणं दानादीनि च विवृतानि। द्वाविंशति सर्गे दिल्लीश्वरौरङ्गजेबो राजसिंहस्य राजधानी राजनगरमाक्रामति किन्तु राजसिंहसैन्येन कृता स्वकीय-सैन्यादिकस्य महती हानिं विलोक्य विवशो राष्ट्रत्रयं लक्षत्रयं रूप्यकं वा राजसिंहाय समर्प्य सन्धिमार्गं निश्चिनोति। त्रयोविंशतितमे सर्गे राजसिंहस्य पञ्चत्वप्राप्त्यनन्तरं तदात्मजस्य जयसिंहस्य राज्याभिषेको वर्णित, तस्य पराक्रमश्च कीर्तित। चतुर्विंशतितमे सर्गे प्रधानतया विविधतुलादानस्य वर्णनं विलसति।

## हरिभूषणम्

हरिभूषणमहाकाव्यस्य रचयिता महाकविः श्रीगंगारामोऽस्ति। महाकाव्यस्य सर्गान्तेष्वयं स्वपितुर्वंशस्य चोल्लेखं कृतवान्। तदनुसारेणासौ भट्टमेवाडाजातीयो ब्राह्मण, पिता चास्य माधवभट्ट। १७०५ ख्रीष्टाब्दा-त्पूर्वमेव कविरयमभूदित्यनुमीयते। यतोऽस्य कृतौ हरिभूषणे महारावत— हरिसिंहस्य दिल्लीगमनं वर्णितम्, किन्तु ततस्तस्यागमनादिकं नोल्लिखितम्। हरिसिंहस्य दिल्लीगमनकाल इतिहासानुसारेण १६८५ ई० पुनरागमनकालश्च १७०५ ई० वर्तते। अतोऽस्मात्कालादस्य पूर्ववर्तित्वं सिद्ध्यति।

नवसर्गात्मकेऽस्मिन् महाकाव्ये प्रतापगढनरेशानां वर्णनं विराजते। अस्य प्रकाशनं १९३२ ख्रीष्टाब्दे श्रीजगन्नाथशास्त्रिण प्रयासेन समभूत्, किन्तु साम्प्रतमिदं दुर्लभग्रन्थश्रेण्यामापतितम्। एतस्यैका प्रतिः उदयपुरशोध-संस्थानस्य पुस्तकालये प्राप्यते।

**कथावस्तु**

प्रथमसर्गेऽर्धनारीश्वरस्य राजधान्या देवलियानगर्य्या वर्णनं वर्तते। अथ मोकलस्य कुम्भाजी क्षेमसिंहश्चेति पुत्रद्वयस्य जीवनं प्रस्तूय क्षेमसिंहस्य यशोगीतम्। सर्गान्ते क्षेमसिंहस्य मृगयावर्णनं विलसति। तेनास्य सर्गस्य नाम "मृगयाविहार" इति।

युद्धनिर्गमनाख्ये द्वितीये सर्गे क्षेमसिंहात्मजस्य सूर्यमल्लस्य गुणगानम्, सूर्यमल्लपृथ्वीराजयोर्युद्धं चेति वर्णितम्। युद्धवर्णनाभिधाने तृतीयसर्गे तयोर्युद्धं सविशेषं विविच्य सूर्यमल्लद्वारा पृथ्वीराजस्यालिङ्गनादिकं निरूपितम्। चतुर्थसर्गे ऋतुवर्णनं विलसति। बहादुरपराजयाख्ये पञ्चमसर्गे विक्रमादित्यस्य पत्रं प्राप्य तदनुसारं बाघसिंहो बहादुरशाहेन सह युद्धं विधाय तं पराजयति। बाघसिंहपुत्रस्य रायसिंहस्याप्यत्र पराक्रमः कीर्तितः।

प्रतापविजयनाम्नि षष्ठे सर्गे रायसिंहात्मजस्य बीकाजीवस्य, तत्पुत्रस्य तेजसिंहस्य च वर्णनं वर्तते। अत्र महारावतस्य बीकाजीवस्य चित्रणं कृतम्। सर्गेऽस्मिन् डूंगरपूरनरेश आसकरण, बांसवाडानरेशः प्रतापसिंहश्चेत्यनयोर्युद्धे प्रतापसिंहस्य धर्मभ्रातृत्वरूपेण बीकाजीवस्य साहाय्यकरणं निरूपितम्। सर्गस्योत्तरार्धे तेजसिंहस्य यशोगीतम्।

म्लेच्छसंहारसंज्ञके सप्तमे सर्गे यवनसेनानायकस्य माखनखानस्य चित्तौड़नरेशस्यामरसिंहस्य च युद्धवर्णनमस्ति। अष्टमसर्गे सिंघाजीवतनयस्य यशवन्तसिंहस्य जीवनमुपन्यस्तम्। रामसिंहयशवन्तसिंहयो संग्रामः, रामसिंहस्य पराजयः, यशवन्तसिंहात्मजस्य हरिसिंहस्य जन्म चेत्यादिविषया अन्यत्र विन्यस्ताः। नवमसर्गे सप्तश्लोकाः किञ्चिद् गद्यञ्चेति अपूर्णोऽयं सर्ग। तत्र च हरिसिंहस्य गुणगानमात्रम्।

## राजरत्नाकरम्

इदानी यावदप्रकाशितं राजरत्नाकर नामैतिहासिकं महाकाव्यमुदयपुरराजाश्रितस्य महाकवेः सदाशिवनागरस्य कृतिः। विद्याधरनाम्नो महापण्डितस्य वंशजोऽयं कविवरः सामवेद व्याकरणज्योतिषच्छन्दोगणितादिविविधविषयाणां विद्वान्, भानुविन्नाम्नो गुरो शिष्यो बभूव।

काव्येऽस्मिन्नुदयपुरमहाराजानां, विशेषतो राजसिंहप्रथमस्य शासनं विवेचितम्। राजसिंहस्य राज्यकालः १६५२-८० ई० बभूव। तस्यैव शासनकाले चास्य महाकाव्यस्य प्रणयनमभूदिति पर्यालोचनेन ज्ञायते। एतस्य ग्रन्थस्य खण्डितं प्रतिद्वयं राजस्थान-प्राच्यविद्या-प्रतिष्ठाने सुरक्षितमस्ति। महाकाव्यस्यानुपलब्धांशविवरणं प्रस्तूयते—

१. प्रथमसर्गस्य सप्तदशश्लोकस्योत्तरार्धम् ।

२. सम्पूर्णो द्वितीय· सर्गः ।

३ द्वादश सर्गस्य षष्ठश्लोकस्य द्वितीयचरणादारभ्य चतुर्दशसर्गस्य १७ तमश्लोकस्य प्रथमचरणपर्यन्तम् ।

४ चतुर्दशसर्गस्य ३२ तम श्लोक· ।

५ अष्टादशसर्गस्य नवमश्लोकस्य द्वितीयचरणत १७ तमश्लोकस्य प्रथमचरणं यावत् ।

**कथावस्तु**

प्रथमसर्गे एकलिङ्गस्तुतिपरकमंगलाचरणानन्तरं मेवाडराज्यस्यामरावत्या मेवाडाधिपतेश्चन्द्रेण साम्य प्रदर्श्य कविना स्वकीयो वंशपरिचयः प्रदत्त. । सम्पूर्ण द्वितीयसर्गोऽनुपलब्ध. । तृतीयसर्गे रावतस्य रणसिंहस्य पुत्रयोर्मालव-शल्पयोर्वर्णनपूर्वक ब्राह्मणाशीर्वादेन शल्पस्य चित्रकूटेश्वरत्वम्, भ्रात्रोः पारस्परिकं मनोमालिन्यम्, शल्पस्य सीसोदगमनम्, पितुर्देहान्ते सति पुनरागमनम्, सपरिवारं मालवद्वारा आडनगरं प्रति प्रस्थानम्, कालान्तरे डूंगरपुरं प्रति प्रस्थाय "सीसोदिया" इति नाम्ना विख्यापनम्, शल्पस्य वंशजानां "राणा" तथा "आडा" इत्युपनामद्वयेन विख्यातिश्चेति विषया विस्तरेण वर्णिताः ।

चतुर्थसर्गे उदयपुरस्य प्राचीननृपतीनां यशाकर्ण-नागपाल-पूर्णमल्ल-भवनसिंह-भीमसिंहलक्ष्मणसिंहा-रिसिंहमोकल-कुम्भकर्ण - संज्ञकानां संक्षिप्त-चरित्राणि चित्रितानि । पञ्चमसर्गे राणाकुम्भा माण्डव्यपुरस्य हनुमन्मूर्तिं कुम्भलगढे संस्थापयति, वसन्तपुर पुनरुद्धारयति, तत्र भगवद्विष्णवे सप्तजलाशयानां निर्माणं करोति, आबू-नागौर-गुजरात-मालवप्रदेशान् विजित्य आगौरदुर्गानधिकरोति, एकलिङ्गमन्दिरं च नवीकरोति ।

षष्ठसर्गे संग्रामसिंहस्य शासनं विविच्य रत्नसिंह, विक्रमादित्यः, उदयसिंहश्चेति तस्य पुत्रत्रयस्य जीवनमुपन्यस्तम् । तत्रोदयसिंहशासने उदय-पुरस्य राजधानीचयनं, उदयपुरसागरनिर्माणम्, अकबरेण सह युद्धं च प्रतिपाद्य तत्पुत्रस्य प्रतापसिंहस्य जीवनं प्रस्तुतम् । सप्तमसर्गे सहभोजने प्रतापसिंहस्य सम्मिलनाभावान्मानसिंहस्यापमान., तद्द्वारा दिल्लीश्वरसकाशं प्रतिवेदनम्, ससैन्यं प्रतापसिंहेन सह तस्य युद्धं चेति वर्णितम् ।

अष्टमसर्गेऽमरसिंहेन खानखानोपनाममुगलस्य स्त्रीणामपहरणम्, जगत्सिंहप्रथमेन शूजानामानं शत्रुं निहत्य डूंगरपुरस्य विध्वंसनम्, उदयपुरे

सप्तमसर्गे "वलुंदा" इति स्थानेऽजितसिंहो रक्षितः किन्तु मुगलसैनिका-स्तदन्वेषणपरास्तत्रागन्तुमर्हन्तीति कृत्वा स "सिरोही" इत्यत्र नीतः। इतः परं मुगलसैनिकैः सह युद्धस्य वर्णनं वर्तते। अष्टमसर्गादारभ्य सप्तदशसर्ग यावज्जोधपुरादिकं दुर्गमधिकर्तुं राठौडसामन्तानामनेकविधः कृतः प्रयासः सुस्पष्टं सविस्तरं च वर्णितः। सप्तदशसर्गस्यान्तेऽजितसिंहो जोधपुरं दुर्गं स्वायत्तीकरोति। ततो ग्रन्थान्तं यावदजितसिंहस्य युद्धादिबहुलं राज्यविस्तारकं च शासनं निपुणं वर्णितम्।

## अभयोदयम्

अभयोदयं नाम जोधपुरमण्डलस्य तृतीयमैतिहासिकं महाकाव्यम्। तच्च महाकवेर्जगज्जीवनस्य कृतिः, यत्र जोधपुरनृपतीनां विशेषतोऽभयसिंह-स्येतिहाससम्मतं वर्णनं काव्यत्वमालम्ब्य विराजते। इदानीं यावदप्रकाशित-मिदम्। अस्य दशसर्गेषु ४०८ श्लोकाः सन्ति। एतस्यादर्शग्रन्थस्तु सम्प्रति नोपलभ्यते, किन्तु तस्यैका प्रतिलिपिः जोधपुरमहाराजस्य पुस्तकालये सुरक्षितास्ति।

### कथावस्तु

प्रथमसर्गे जोधपुरनरेशानां मालदेव-शूरसिंह-गजसिंह-यशवन्तसिंहा-वर्णनं विधाय यशवन्तसिंहस्य यादवराजपुत्री चह्वानवंशीया चेति द्वयी वर्णिता। द्वितीयसर्गे यशवन्तसिंहस्य राज्यकालश्चर्चितः। जालौरे तो महाराजस्य चौहानवंश्याया महिष्या गर्भादभयसिंहोऽजीजनत्। तृतीयसर्गे शाहबहादुरेण सहाभयसिंहस्य युद्धवर्णनमस्ति। तस्य जालौरगमन-मप्यत्र प्रतिपादितम्। चतुर्थसर्गे महाराजस्याभयसिंहस्य वीरोचितकर्माणि निरूपितानि।

पञ्चमसर्गे महाराजस्य दिल्लीगमनं हस्त्यश्वादिभिस्तस्य कृतं सम्मानं चेति वर्णितम्। षष्ठसर्गे दिल्लीश्वरेण "राजराजेश्वरः" इत्युपाधेः प्राप्तिः, आमेरनरेशस्य जयसिंहस्य कन्यया सह विवाहः, राज्यस्य शोभनं सञ्चालनम्, वृन्दावनयात्रा चेति विषयाः प्रपञ्चिताः।

सप्तमसर्गानुसारेणाभयसिंहो नागौरराज्यमनुजाय बखतसिंहाय प्रादात्, "राजाधिराज" इत्युपाधिना स विभूषितश्च, इन्द्रसिंहो दिल्लीमगच्छत्, १७२७ ख्रीष्टाब्दे मुहम्मदशाहस्यामन्त्रणेनाभयसिंहो दिल्लीं प्रस्थितवानित्यत्र वर्णितम्। मेडतादुर्गे स्वानुजस्यानन्दसिंहस्याक्रमणं श्रुत्वा स स्वयं मेडता-मगमदिति। अष्टमे नवमे च सर्गयोर्महाराजस्य गढमुक्तेश्वरयात्रा, भक्तिमार्गा-

श्रयणम्, वीरोचितकर्माणि च वर्णितानि। दशमसर्गे जालौरं प्रत्यागमनं प्रतिपादितम् ।

## ईश्वरविलासम्

ईश्वरविलास नाम महाकाव्य महाकवे श्रीकृष्णभट्टस्य कृतिः। सुप्रसिद्धः कविरसौ प्रथम बूंदीनरेशस्य बुधसिंहस्य राज्याश्रित आसीत्, पश्चात्तस्य कवित्वादिगुणैराकृष्टो द्वितीयजयसिंहस्तं जयपुरमानयत्। तस्य जयसिंहस्य ज्येष्ठपुत्रेण ईश्वरसिंहेनाज्ञापित सन्नयं एतदैतिहासिकं महाकाव्यं चकार। ईश्वरसिंहस्यात्र वर्णनबाहुल्यमिति नाम्नैव सुस्पष्टम्। तदतिरिक्तमप्यत्र मुख्यतस्त्रयोदश-महाराजानां जीवन समुपन्यस्तम्। तेषां नामानि यथा—पृथ्वीराज, भारमल्ल, भगवद्दास, मानसिंह, भावसिंह, जगत्सिंह, महासिंह, जयसिंह, रामसिंह, कृष्णसिंह, विष्णुसिंहः, सवाई-जयसिंह, माधवसिंहश्चेति। महाकाव्येऽस्मिँश्चतुर्दशसर्गा उपलभ्यन्ते। काव्यमिदं पूर्णमपूर्णं वेति विद्वत्सु विप्रतिपत्ति।

**कथावस्तु**

प्रथमसर्गे सूर्यवंशप्रशस्तिपूर्वक पृथ्वीराज-भारमल्ल-भगवद्दास मानसिंहाना शासनं वर्णितम्। महाराणाप्रतापस्य कोपभाजनं मानसिंह दिल्लीश्वरस्य साहाय्येन नैकदुर्गानधिकुर्वन्नैकविधपुण्यपुष्पैरीश्वरं पर्यपूपुजदित्यत्र विस्तरेण प्रतिपादितम्। ततस्तत्पुत्रं भावसिंहमुल्लिख्य तदात्मजस्य जगत्सिंहस्य, तत्पुत्रस्य प्रथमजयसिंहस्य च वर्णनं कृतम्। जयसिंह शिवराजं बन्दीचकार, लक्षचण्डीमियाज, दिल्लीश्वरसैन्यं च ररक्ष। जयसिंहात्मजो रामसिंह स्वकीयबुद्धिबलेन शिवराजं तत्पुत्रञ्च कारागारादमोचयत्। रामसिंहस्य सुपुत्र कृष्णसिंहो "राजौरगढं" स्वायत्तीकृतवान्, तस्मादौरङ्गजेबस्तं घातयितुं प्रायतत।

द्वितीयसर्गे कृष्णसिंहात्मजो विष्णुसिंह जाटजातिमाक्रम्य मथुरामण्डलं निर्भयमकरोत्, वृन्दावनं च समलंकृत्य तत्रोत्सवानायोजयत्। पश्चात् शिवानन्दगुरोर्विद्यामन्त्रमवाप्य तीर्थयात्रामकुरुत। तत्पुत्रो जयसिंहः "जजिया" नामकात् कराद् हिन्दूसमाज मुक्तं चकार, सैयदसैन्यं च विनिहत्य स हिरण्यपुरं निकषा यवनसैन्यमजयत्। सर्गान्ते जयसिंहस्य गुणगानं विलसति।

तृतीयसर्गे जयपुरे राजधानी-निर्माणं तस्य वर्णनं चास्ति। चतुर्थपञ्चमषष्ठसर्गेषु जयसिंहस्य यागादिविविधपुण्यकार्याणि कीर्तितानि। सप्तमसर्गे जयसिंहबुधसिंहयोर्मनोमालिन्यम्, औरङ्गजेबत "सवाई" इत्युपाधे प्राप्तिम्, विवाहम्, जयगढादिनिर्माणं च विविच्य सर्गान्ते तस्य शौर्यादिकं गीतम्।

अष्टमे सर्गे ईश्वरसिंहस्य जन्म, संस्कारादिकर्म, विविधोत्सवायोजनं चोन्मील्य तस्य युवराजपदप्राप्तिर्वर्णिता। नवमसर्गे दिल्लीश्वरस्य मुहम्मद-शाहस्य सहायतार्थे युवराजो दाक्षिणात्यवीरान् पराजित्य पितरं प्रसादयति। दशमसर्गे गोविन्ददेवस्य भक्तिभावनया भावितात्मनो जयसिंहस्य स्वर्लोक-गमनम्, ईश्वरीसिंहस्य राजसिंहासनारोहणम्, राजभिर्विविधोपायनप्रदानम्, उत्सवायोजनम्, राजाज्ञया कृष्णभट्टस्य काव्यनिर्माणम्, राज्ञे तत्समर्पणम्, कवये ग्रामदान चेत्यादिकं प्रस्तूय सर्गान्ते ईश्वरसिंहस्य रणप्रयाणमुपक्षिप्तम्।

एकादशसर्गे सैन्यप्रयाणवर्णनपुरःसरं मार्गे उदयपुरनरेशेन कृतमीश्वर-सिंहस्य सम्मानं प्रथितवान्। द्वादशसर्गेऽनयोर्वार्तालाप प्रपञ्चितः। त्रयोदश-सर्गे मरुप्रदेशनृपतिना सानुजेनाभयसिंहेन सहेश्वरीसिंहफकीरचन्दयोर्वार्ता चर्चिता। चतुर्दशसर्गे दिल्लीश्वराज्ञया कोटानरेशदमनार्थमीश्वरीसिंहस्य कोटानरेशसाहाय्यप्रयुक्तप्रस्थानम्, ईश्वरीसिंहाज्ञया मरहट्टभटैः महाराणा-जयसिंहस्य स्वकीयप्रतिज्ञास्मारणम्, तदसाफल्ये मरहट्टेश्वरसिंह-सैन्ययोर्मध्ये जयसिंहस्य सैन्यहननम्, तस्य दर्पदहनं चेति कविना निपुणं वर्णितम्।

## जयवंशम्

जयवंशमहाकाव्यस्य रचयिता महाकवि. श्रीसीतारामपर्वणीकरस्तृतीय सिंहस्य राज्याश्रित कविरासीत्। तृतीयजयसिंहस्य राज्यकाल १८१८-१८.५ ई० वर्तते। अस्यैतिहासिकमहाकाव्यस्य प्रकाशनं १९५० ख्रीष्टाब्दे राजस्थानविश्वविद्यालयेन कृतम्। ऊनविंशतिसर्गात्मकं महाकाव्यमिदं सम्पूर्णमुपलभ्यते। इदं महाकाव्यं महाराजसोढदेवाद् (१०३० सं०) आरभ्य द्वितीयं माधवसिंह (१८०० सं०) यावदनेकराजानां राज्यशासनं समकालिक समाजचित्रणं च प्रस्तौति।

### कथावस्तु

प्रथमसर्गे ईशसिंहमुल्लिख्य तत्पुत्रस्य सोढदेवस्य च जीवनं संक्षिप्य सोढदेवात्मजस्य दुर्लभराजस्य जीवनचरितमुपन्यस्तम्। द्वितीयसर्गे दुर्लभराजस्य शासनव्यवस्थां परिचाययन् कालिकस्य जन्म, कालिकद्वारा "भाण्डारेजं" प्रत्याक्रमणम्, विजयप्राप्तिश्चेति कवि· वर्णितवान्। तृतीयसर्गे कालिकद्वारा दाक्षिणात्येष्वाक्रमणम्, अम्बापुरीनिर्माणं चेति वर्णयता कविना कालिकस्य शासनव्यवस्था कीर्तिता। चतुर्थ-पञ्चमसर्गयोः कालिकोत्तरकालिकानामने-केषां कछवाहवंश्यानां राज्ञा शासनं प्रतिपादितम्।

षष्ठसप्तमसर्गयो. आमेरनरेशस्य मानसिंहस्य साङ्गोपाङ्गं शासनं

वर्णितम् । अष्टमसर्गे जयसिंहस्य राज्याभिषेकं तस्यैश्वर्यं च निरूप्य तस्य दिग्विजय-वर्णन प्रस्तुतम् । नवमसर्गे मिर्जाराजस्य रामसिंहस्य तत्पुत्रस्य कृष्णसिंहस्य च वर्णनं विलसति । दशमसर्गे रामसिंहस्य मरणानन्तरं विष्णुसिंह. शासनं समचालयत् । विष्णुसिंहस्य द्वा पुत्रौ बभूवतु, जयसिंह. विजयसिंहश्चेति । तयो शिक्षादिकमप्यत्र वर्णितम् । कालान्तरे जयसिंह जयपुरस्य शासकोऽभूत्, विजयसिंहश्च हिण्डोनराज्यं प्राप्नोत् ।

एकादशसर्गे जयसिंहस्य गुणगानं विराजते । द्वादशसर्गे जगन्नाथस्य सम्मानम् तारकेश्वरमन्दिर-निर्माणम्, ब्रह्मपुरीनिर्माणम्, नृसिंहदुर्गवर्णनम्, मालवाश्रमादिवर्णनम्, जयपुरवर्णन चेति कथावस्तु विलसति । त्रयोदशसर्गे जयसिंहस्य दिग्विजयवर्णन चकास्ति । तदनुसार जयसिंह मथुरा, काशी, वृन्दावन, अवन्तिपुरं, महाकालेश्वर, गुजरात, पुण्यपत्तन, जोधपुरं, पुष्कर, अजमेरं, हरिद्वार, लाहौर च जितवान् ।

चतुर्दशसर्गे ईश्वरसिंहस्य जन्म जयसिंहेन कृतस्याश्वमेधयज्ञश्च वर्णित । पञ्चदशसर्गे माधवसिंहस्य जन्म, जयसिंहस्य मरणम्, ईश्वरसिंहस्य शासनम्, तस्य स्वर्लोकगमनम्, माधवसिंहस्य राजसिंहासनारोहणं चेति कथानक वर्तते । षोडशसर्गे माधवसिंहस्य शासनं विविच्य तस्य, पृथ्वीसिंह. प्रतापसिंहश्चेति, पुत्रद्वयस्य वर्णनं कृतम् । सप्तदशसर्गे प्रतापसिंहस्य विद्यानुरागित्वं कुशलप्रशासकत्वं चेत्यादि गुणा वर्णिता. । अस्यैव राज्यकाले मिथिलाया दुर्गानाथमैथिलो नामा महान् विद्वान् जयपुरमागच्छत् । अन्तिमे सर्गद्वये तृतीयस्य जयसिंहस्य जन्म, तस्य गुणकीर्तनम्, सुशासनम, तत्कालेऽनेकविदुषां जयपुरागमनम्, विविधधार्मिककार्यं चेति सविस्तरं वर्णितम् ।

### कच्छवंशम्

कच्छवंशस्य प्रणेता प० श्रीकृष्णभट्ट आसीत् । द्वितीयस्य रामसिंहस्य राज्यकाले तेनेद महाकाव्यं रचितमिति विदुषां मतम् । महाराजस्य माधवसिंहद्वितीयस्यापि सस्थानपण्डित कविरयमासीदित्यनुमीयते । कच्छवंशमहाकाव्यमद्यावधि न प्रकाशितम् । अस्यैका प्रतिलिपिः जयपुरस्थस्य प० देवेन्द्रकुमारभट्टस्य गृहे सुरक्षिता । तत्र सप्तदशसर्गस्य ७१ तमश्लोकं यावद्वर्णनं प्राप्यते । अस्य सप्तदशसर्गेषु २७१६ श्लोका. सन्ति । जयपुरस्य कस्मिँश्चिदपि महाकाव्ये एतावन्त श्लोका नोपलभ्यन्ते । जयपुरशासकाना विषये समुपलब्धेष्वैतिहासिक-महाकाव्येषु एतन्महाकाव्यं विशिष्टतमम् ।

**कथावस्तु**

अस्य महाकाव्यस्य द्वितीयसर्गं यावज्जयपुरस्य काल्पनिकवंशावलीवर्णनं वर्तते। तत्र कूर्मस्य पुत्रः कच्छसंज्ञक आसीत्। तस्यैव नाम्ना तद्वंशस्य नाम "कच्छवंशम्" इति जातम्। तृतीयसर्गे क्रमेण ईशदेवस्य, सोढदेवस्य, दुलहरायस्य, कालिकस्य च जीवनं विवेचितम्। चतुर्थसर्गे कालिकस्य राज्याभिषेकः, आमेरस्य राजधानीकरणम्, अम्बिकेश्वरमहादेवस्य स्थापनम्, कालिकस्य द्वयोः महिष्योश्चतुर्णां पुत्राणां च वर्णनम्, हनुसंज्ञकस्य ज्येष्ठपुत्रस्य राजसिंहासनारोहणम्,कालिकस्य मृत्यु ,हनो- मरणानन्तरं जानडदेवस्य शासनम्, तदात्मजस्य पज्वनजीवस्य विवाहश्चेत्यादिविषया विस्तारेण प्रपञ्चिता।

पञ्चमसर्गे यथाक्रमं जयपुरशासकानां—मलेशि-राजदेव-कीलन-कुन्तलदेव-जोणशि-उदयकरण-नरसिंह-वनवीर-उद्धरण-चन्द्रसेनेत्यादीनां शासनं संक्षिप्तम्। षष्टसर्गे चन्द्रसेनादारभ्य आसकरणं यावज्जयपुरनरेशानां राज्यकालश्चर्चितः। सप्तमसर्गे भारमल्लस्य भगवद्दासस्य च जीवनं विन्यस्तम्। तयोः शासनकालस्य विविधैतिहासिकघटनानामुल्लेखः सर्गेऽस्मिन् कृतः। अष्टमसर्गे मुख्यतो मानसिंहस्य, भावसिंहस्य, प्रथमजयसिंहस्य च जीवनमुपन्यस्तम्। नवमसर्गे जयसिंहस्य रामसिंहप्रथमस्य च राज्यकालश्चर्चितः। दशमसर्गे विष्णुसिंहस्य, तस्य पुत्रयोर्जयसिंहविजयसिंहयोश्च शासनादिकं वर्णितम्। तत्र विष्णुसिंहस्य शासने संजाता प्रायेण सर्वा अपि प्रमुखा घटना अत्र चर्चिता। जयसिंहस्य (प्रथमस्य) च जीवने यानि महत्त्वपूर्णानि कार्याणि अभूवन्, तानि सर्वाण्यपि सर्गेऽस्मिन् सुस्पष्टं वर्णितानि।

एकादशसर्गे मुख्यतया जयसिंहद्वितीयेन सम्पादितस्य वाजपेययागस्य विस्तृतं विवरणं प्रस्तूय तत्पुत्रयोरीश्वरीसिंहमाधवसिंहयोर्जीवनमुपन्यस्तम्। ईश्वरीसिंहस्तत्र युवराजपदमलंचकार। द्वादशत्रयोदशसर्गयोरीश्वरीसिंहस्यैव शासनं विस्तरेण वर्णितम्। ईश्वरीसिंहस्य मरणानन्तरं सर्गान्ते माधवसिंहस्य राज्याभिषेकवर्णनं विद्यते। चतुर्दशसर्गे माधवसिंहस्य राज्यकालं विविच्य, तस्मिन् दिवङ्गते तद्भ्रातुः प्रतापसिंहस्य शासनवर्णनमारब्धम्। पञ्चदशसर्गे प्रतापसिंहस्य मरणानन्तरं नरवरनगरस्य मानसिंहो बलाज्जयपुरस्य शासकोऽभूत्, पश्चात् प्रतापसिंहस्य पुत्रस्तृतीयजयसिंहस्तमपदस्थं कृत्वा राजसिंहासनमारुरोह शासनं चाकरोत्। सप्तदशसर्गे रामसिंहद्वितीयस्य शासनव्यवस्था निरूपिता। ततः रामसिंहो विवाहार्थं जोधपुरं गच्छति। तत्र कश्चिद्यवनः महाराजस्य मनोविनोदाय श्येनक्रीडनकं दर्शयति। इतः परं किमभूदिति सम्पूर्णग्रन्थस्य प्राप्तेरभावान्न वक्तुं शक्यते। ग्रन्थस्यान्तिमो भागो नोपलभ्यते।

## मानवंशम्

मानवंशमहाकाव्यस्य प्रणेता कविः सूर्यनारायणोऽस्ति। व्याकरणाचार्योऽयं पण्डितप्रवर एतद्वाञ्छति स्म यज्जयपुरस्य सर्वासां वंशावलीनां साम्यावस्थ विचार्य तादृशमेकं महाकाव्यं लेख्यं यत्रार्थिकी, राजनीतिकी, धार्मिकी च स्थिति समाविष्टा भवेदिति। अतएव तेनेदं महाकाव्यं रचयितुं प्रारब्धम्। दुर्भाग्यवशात्स रोगाक्रान्त सप्तदशसर्गानन्तरं परलोकमगच्छत्। तेन महाकाव्यमिदं सप्तदशसर्गान्तर्गतमेव समाप्तम्।

### कथावस्तु

प्रथमसर्गे कछवाहाकुलस्य पूर्वजानां वंशावली सक्षेपेण प्रस्तुता। द्वितीयसर्गे सोढदेवस्य शासन बिलिख्य तत्पुत्रस्य दुलहरायस्य जीवनमुपन्यस्तम्। तृतीयसर्गे दुलहरायस्य शासनं विवेचितम्। १०९६ विक्रमसंवत्सरे स पञ्चत्वं प्राप। ततस्तत्पुत्रो हनुदेवः सिंहासनमारुरोह। चतुर्थसर्गे हनुदेवस्य शांतिमयं शासनं निरूप्य तन्मरणानन्तरं जानडदेवस्य राज्याभिषेकादिकं वर्णितम्। पञ्चमसर्गे हनुदेवस्य पृथ्वीराजेन सह वार्ता, प्रधानसेनापतिपदप्राप्तिः, अनेकदुर्गाणा स्वायत्तीकरणम्, जयचन्द्रेण स्वकीयकन्यायाः स्वयंवरस्यायोजनम् तत्र पृथ्वीराजस्य मूर्ति संस्थाप्य तस्य तिरस्करणम्, पृथ्वीराजेन सयोगिताया अपहरणम्, तत्रैव युद्धे पज्वनजीवस्य मरणमित्यादि कथावस्तु विलसति। षष्ठसप्तमसर्गयो क्रमेण मलेशि-राजदेव-कील्हणादीनां वर्णनं कृतम्।

अष्टमसर्गे पृथ्वीराजस्य लोकोदयप्रवणं राज्यशासनं प्रतिपाद्य सर्गान्ते पृथ्वीराजस्य मरणानन्तरं पूर्णमल्लस्य राज्याभिषेकश्चर्चित। नवमसर्गे पूर्णमल्लस्य, भीमदेवस्य, रत्नसिंहस्य, राजसिंहस्य, भारमल्लस्य च शासनानि प्रतिपादितानि। दशमसर्गे भगवद्दासस्य शासने प्रमुखघटना वर्णिता। एकादशसर्गे मानसिंहस्य शौर्यादिकं प्रपञ्चितम्। द्वादशसर्गे सुतशोकवशाद् मानसिंहो दिवङ्गत। तदनन्तरं भावसिंहो राजा बभूव। तस्यायोग्यतया जगत्सिंहस्य पौत्रो मिर्जाराज. जयसिंहस्तमपदस्थ कृत्वा स्वयं राजा बभूव। चतुर्दशसर्गे मोहनसिंहस्य साहाय्येन "सवाई" इत्युपाधिधारिणा जयसिंहेन आमेरराज्याधिकरणम्, जयसिंहविजयसिंहयोर्द्वयोः भ्रात्रोर्वार्तालापः, विजयसिंहस्य मरणं चेत्यादि वर्णितम्। षोडशसर्गे जयपुरस्य संस्थापनम्, जयपुरशोभावर्णनम्, अश्वमेधयज्ञसम्पादनमित्यादि कथावस्तु विन्यस्तम्। सप्तदशसर्गे जयसिंहस्य मरणोपरान्तमीश्वरसिंहस्य शासनवर्णन प्रारब्धम्। ग्रन्थस्यान्तिम श्लोकः ग्रन्थसमाप्तेः परिचायको नास्ति।

---

# भारवेर्बिम्बविन्यासः

(डॉ० अयोध्या प्रसाद द्विवेदी)

कालिदासोत्तरवर्तिसंस्कृतसाहित्यस्य महाकाव्यपरम्परायां ललितबिम्बविन्यासधिया भारवेर्नाम सादरं शोभते । द्विविधं विविच्यते तावदिह तस्य बिम्बनविधिः । प्रथमं संवेदनदिशा, ततोऽभिव्यक्तिमुखेनोक्तिवैविध्येन वा । तत्रायं क्रमः—

## दृश्यबिम्बम्

दृश्यत्वेनेह ज्ञानेन्द्रियैर्गृहीतं निखिलमपि रूपरसादिकं संवेदनमभिप्रैमि । तत्र प्रथमं चक्षुरिन्द्रियसंवेद्यं चाक्षुषं बिम्बं वर्णाश्रित-मूर्ता-प्रस्तुतोपकल्पित-रूपोद्भावकवर्णनपरत्वात्प्रायेण त्रैविध्यमापद्यते । जीवने नेत्रेन्द्रियस्येतरकरणापेक्षया साधकतमत्वात्काव्येऽपि तत्संवेदनप्राचुर्यमासाद्यते । अतो महत्स्वाभाविकं यद्भारवेर्बिम्बनकलायां चाक्षुषबिम्बबाहुल्य भवेत् । तत्रापि, वर्णबिम्बं संश्लिष्टासंश्लिष्टत्वेन श्वेत-रक्त-पीत-हरित-कपिशवर्णानामुल्लेखपुरस्सरं बहुविध भारवेः काव्येषूपलभ्यते । तथापीन्द्रधनुस्तस्मै रोचते—

मृणालिनीनामनुरञ्जितं त्विषा विभिन्नमम्भोजपलाशशोभया ।
पयः स्फुरच्छालिशिखापिशङ्गितं द्रुतं धनुष्खण्डमिवाहिविद्विष ।।कि० ४।२७ ।।

कमलिनीनां हरिद्वर्णतया हरितवर्णता, पद्मदलकान्त्या आरुण्यं सुपक्वकलमाग्रैश्च पिङ्गलत्वमापादितं केदार जलमिह शरदर्तौ संश्लिष्टत्वाद्द्रवीभूतमैन्द्र धनुष्खण्डमिवोत्प्रेक्षितमस्ति । वस्तुत., मृणालिनीना हरीतत्वम्, विकचाम्भोजदलानां रक्ताभा शालिशिखानाञ्च पीतत्वं पृथक्त्वेन यावदनुभूयन्ते न तावत्समवायेन । पूर्वमेतेषां व्यतिकरकल्पनम्, ततस्तस्य पयसि परावर्त्तनम्; तदोपमेयं पयो भारवे प्रस्तुतं, यदर्थमाहृतमिन्द्रधनुष्खण्डमिहाप्रस्तुतं, तस्यापि द्रुतत्वमन्यथा कथं पयस्सादृश्यम् ? त्रिविधेषु प्रकृतबिम्बशकलेषु 'स्फुरच्छालि शिखापिशङ्गितम्' इति पदबिम्बप्रयोगेण 'वायुप्रकम्पितानां सुपक्वधान्यपादपानां पीतवर्णता' सर्वमतिशेते । यतो न केवलं पदार्थाभिधानं बिम्बोपादानकम्, अपितु विशेषीकरणमेव तस्य जीवातुः । अत एवात्रोपमानभूताखण्डलं धनुर्न तावत्प्रत्यक्षत्वेनोत्पद्यते यावदुपमेयभूतं पय एव सपरिवेषमाकल्प्यते । तस्य क्लिष्टं द्रवत्वोत्प्रेक्षणमप्यनुभूतौ न निर्बाधम् । परं,

1. यत्र ग्रन्थनिर्देशो न विहित तत्सर्वं किरातार्जुनीयादेवोद्धृतम् ।

मुखैरसौविद्रुमभङ्गलोहितैः शिखाः पिशङ्गीः कलमस्य बिभ्रती ।
शुकावलिर्व्यक्तशिरीषकोमला धनुः श्रियं गोत्रभिदोऽनुगच्छति ॥ ४।३६॥

इत्यत्र, ऐन्द्रं धनुः स्थान एव प्रत्यक्षायमाणत्वमुपयाति । इहापि पूर्ववद्धरितपीतरक्तानां संश्लेषणं कृतमस्ति किन्तु, धनुष आकृत्युत्पादिका 'आकाशे पङ्क्तिबद्धोड्डयनपरा शुकावलि' प्रस्तुतबिम्बविधायिका तु विशेषोवित्थावहा अन्यच्च, इदं भवत्याकाश एवाकाशस्थानीयमप्रस्तुतम् । अतएव 'रत्नच्छायाव्यतिकर इव ····' (पू० मे० १५) इत्यत्र कालिदासीय-कल्पनाया स्फुटत्वेन वर्णानामनुल्लेखेऽपि मेघसान्निध्यालङ्कृतमाखण्डलधनुष्खण्डं समक्षमुदितमिव चक्षुषा संगृह्यते । स्पष्टमेवात्र भारवे 'मुखैरसौविद्रुमभङ्गलोहितैः ····'इत्यादि बिम्बनशिल्पोपरि कालिदासस्य ।

असौ मुखालम्बितहेमपत्रं यिन्नर्मणि मण्डलचारशीघ्रः ।
अलातचक्रप्रतिमं विहङ्गस्तद्रागलेखावलयं तनोति ॥
—(विक्र० ५।७) ।

इत्यस्य काव्यबिम्बस्य प्रभावः परिलक्ष्यते । भारवेः कल्पनाया जलं न केवलं द्रुतमिन्द्रधनुष्खण्डमिव, अपितु, बलस्यारुणेन रजसा रक्तत्वमापन्नं बलगजेरुन्मथिताना सरोजाना रेणुभिर्मिश्रितममरापगाया जलं माञ्जिष्ठं वसनमिवोपमितम् (कि० ७।३६) । इत्थं संवेदनबिम्बोज्जृम्भणे संश्लिष्टवर्णयोजनं भारविस्परत्रापि बहुशो विदधाति (कि० १६।५३,५८) ।

श्रोत्रबिम्बदृष्ट्या 'उदितोपलस्खलनसंवलिताः स्फुटहंससारसविरावयुजः' (६।४) इत्यत्र हंससारसविरुतमिश्रः उत्कोटिग्रावोपरि पततो जलस्येन्द्रनीलगिरौ सुव्यक्तं कलकलो ध्वनिः, अन्यत्र मेघगर्जनम् (१०।१९), भ्रमरगुञ्जार (६।२), कोकिलारवः (१०।२२), मयूरकेका (१०।२३), शिवारुतानि (११।३८), मृदङ्गनाद (७।१), वीणावादनम् (१०।१८), गाण्डीवनिनादः (१३।१६), बाणनिस्वन (१३।१), सेनाकलरव (१४।२७), विविधपशुपक्षिणामार्त्तनादाश्च (१२।४६) श्रूयन्ते । अन्यच्चोदाह्रियते मिश्रध्वनिबिम्बमेकम् :—

ध्वनिरगविवरेषु नूपुराणां पृथुरशनागुणशिञ्जितानुयातः ।
प्रतिरवविततो वनानि चक्रे मुखरसमुत्सुकहंससारसानि ॥
—(१०।४) ॥

यत्र, रमणीना नूपुररवास्तासामेव रशनाशिञ्जितैरेधमानाः स्वातन्त्र्येण गिरिगह्वरप्रतिरवेण च श्रोत्रेन्द्रियं तृप्यन्ति ।

एवमेव,

सध्वानं निपतितनिर्झरासु मन्द्रैः सम्मूर्च्छन्प्रतिनिनदैरधित्यकासु ।
उद्ग्रीवैर्घनरवशङ्कया मयूरैः सोत्कण्ठं ध्वनिरुपशुश्रुवे रथानाम् ॥
—(७।२२)

इत्यत्र निर्झरस्य कलकलेन संवर्धमानो रथध्वनिर्मेघगर्जित-भ्रान्त्या मयूरैः सोत्कण्ठमाकर्ण्यते । परं, सर्वाधिकं महत्त्वपूर्णं सर्वथा नूतनत्वेनोपनिबद्धं कवेः सूक्ष्मेक्षणप्रमाणकं श्रोत्रबिम्बं किरातार्जुनीयस्य षोडशे सर्गे द्रष्टव्यमस्ति यत्र, अभितप्त आयसि पयोनिपतनं छनछनायितम् :—

पराहतध्वस्तशिखे शिखावतो वपुष्यधिक्षिप्तसमिद्धतेजसि ।
कृतास्पदास्तप्त इवायसि ध्वनिं पयोनिपाताः प्रथमे वितेनिरे ॥ (१६।५६)

स्पृश्यबिम्बन्तु अगण्यमेव (१८।५, १५, ३२ इत्यादिषु) । आघ्रेयबिम्बेषु गजमदस्याधिकोल्लेखः (७।२४, ३४) । अङ्गरागस्य (८।५) एलायाश्च (७।३८) सुगन्धिराघ्रायते । अतः परमगुरु-तमालोशीराणा सुरभिमिश्रणमुल्लेख्यमस्ति (१२।५०) । स्वतन्त्रमास्वाद्यबिम्बन्तु नोपलभ्यते, केवलमेकत्र सगन्धोल्लेखमास्वाद्याभावमुखेनास्वाद्यबिम्बमुपकल्पितम् :—

आघ्राय क्षणमतितृष्यतापि रोषादुत्तीरं निहितविवृत्तलोचनेन ।
सम्पृक्तं वनकरिणां मदाम्बुसेकैर्नाचेमे हिममपि वारि वारणेन ॥ (७।३४) ॥

अतितृषितोऽपि सेनागजेन्द्रो वन्यद्विपमदमिश्रित सुरसरितो जल घ्रात्वैव केवलं मुमोच, न चाचचाम । 'उत्तीरं निहित-विवृत्तलोचनेन' इत्यनुभावबिम्बेनैवासहिष्णोः सेनागजेन्द्रस्य रोष उन्नेयो 'रोषादि' ति पदं त्वधिकमुपन्यस्तम् । भारवेरस्मिन् बिम्बनशिल्पे नियतमेवादिकवेरस्य—

स्पृशन् सुविपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥
(वा० रामा० ३।१६।२१) ॥

प्रभावो भवेत् । वाल्मिकिनापीह 'वन्यद्विपस्य करसङ्कोचबिम्बेन' आस्वाद्याभाव एव प्रतिबिम्बतस्तथाप्यधिकतरमावर्जयति ।

मूर्त्तोपमानसमायोजनेनापि दृश्यता प्रतिपाद्यते । भारवि सुखस्यास्थिरत्व समुद्रतरङ्गेण (११।६६), मनसः प्रसादमञ्जलिना (३।३७) सम्मूर्त्तयति । हंसमाला-सारसपङ्क्तिश्च मेखलार्थं, कमलं नेत्राय तु बहुधा सर्वैरपि कविभिः प्रयुक्तानि । पारम्परीणञ्चेदं गुम्फनमनवीकृतत्वदूषितम् । भारविणा तु कति-

चिन्मूत्लानि मूर्त्तोपमानानि बिम्बत्वेनोपकल्पितानि। तद्यथा—वितथं यशो वितानमिव (३।४२), क्षीणं यश. शुष्कं जलमिव (३।४६) अभिमानं हस्तिदन्तमिव (३।४५), द्विषच्छद्म पङ्कमिव (३।३८)। न केवलममूर्त्तं मूर्त्तयितुं, प्रत्युत मूर्त्तमप्यधिकतरमुद्भावयितुं मूर्त्ताप्रस्तुतमप्यभिनवतयोपलभ्यते—'ऊर्मिरेखाभिरङ्कितं सैकतं सरित्तटं रमण्यास्तरङ्गितं क्षौममिव' (४।६), अन्यत्र 'तदेव सैकत तट रमणीजघनस्थलमिव प्रतिबिम्बितं यतो गवां कदम्बं शुभ्रदुकूलमिवापसरति' (४।१२), 'वात्याभिर्वियति विवर्त्तित उत्फुल्लकमलिनीपराग कनकमयातपत्रमिव' (५।३८), सरोजरजसारुणित कलहंसकुल सरिदुत्तरीयमिव' (६।६), 'अर्जुनस्य प्रस्वापनास्त्रेणोत्पादिता महातमिस्रा भीमा सभेव'—यथा विदुषां सभाया सामान्यजनानां प्रतिभा विनश्यति तथैवान्धकारेण शिवसेनाथा शक्तिर्विनष्टा (१६।२७) इति।

रूपोद्भावकता तु नूनं निखिलेऽपि बिम्बप्रकारे प्रायेण विभाव्यत एव। विशेषेण चाग्रे स्वभावोक्त्यादौ प्रत्यक्षीभविष्यति।

### अदृश्यबिम्बम्

दृश्यबिम्बवर्गेषु रूप-रस गन्ध-स्पर्श-शब्दविषयप्रतिबद्धानां तत्तदिन्द्रियग्राह्याणा चाक्षुषादीनामेव समाहारस्तत्रयोपरि दर्शितः। अदृश्यवर्गं तु बाह्येन्द्रियसम्पर्कशून्यत्वमन्तरिन्द्रियमात्रगोचरत्वम्। यतोवस्तुत, काव्यबिम्बं भवतु दृश्य न वा, परं गोचरत्वन्तु तस्याभिमतमेव कदाचिदपि तस्यागोचरत्वाभावात्। अन्यथा किं काव्यकर्मणा बिम्बनशिल्पेन वा? भावास्त्वगोचरा एवान्त.प्रसुप्ताः। तेषामुद्बोधोऽर्थावलम्बो वा बिम्बप्रसवकाल। तदुपायनीभूतेयं वाक्। अत एव 'रमणीयार्थप्रतिपादक. शब्दः काव्यम्, रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता' इति रसगङ्गाधरकार। तद्रामणीयकं काव्यकर्त्तृभि कुत्रचित् स्थूलगोचरत्वेन क्वचिच्च सूक्ष्मगोचरत्वेन प्रतिपिपित्स्यते। इदं सूक्ष्मगोचरत्वमेवादृश्यबिम्बमिति पदेनेह समीह्यते।

भारविरदृश्याङ्कने स्वल्पतरममूर्त्ताप्रस्तुतं प्रयुञ्जानो दृश्यते। तद्यथा—महोक्षं सविग्रहं दर्पमिव (४।११), रम्या वनस्थली मनस. प्रसत्तिमिव (६।१७), नर्तकीना चरणेषु परिषक्तमलक्तकं सवपुषं चित्तानुरागमिव (१०।४३) स प्रतिबध्नाति। अर्जुन किरातानामायुधव्रजमन्तरैव स्वशरौघैस्तथैव निर्जघान यथातिपातित. काल. क्रियाफलं विनिहन्ति (१४।५१)। अत्र, अर्जुनो मूर्त्तः, तदर्थममूर्त्तोऽर्थवान् कालः (समयः)। पशुपतिना अर्जुनस्य सर्पास्त्राणि तार्क्ष्योदयहेतुना मन्त्रेण तथैव निवारितानि यथा नेता नयेन परोपजापं निवारयति (१६।४२)। इत्थमेव—

अमर्षिणा कृत्यमिव क्षमाश्रयं महोद्धतेनेव हितं प्रियं वचः।
बलीयसा तद्विधिनेव पौरुषं बलं निरस्तं न रराज जिष्णुना॥
(कि० १४।६३)॥

अर्जुनेन ध्वस्तं किरातसैन्यं तथैव न शुशुभे यथा शान्तिसाध्यं कार्य क्रोधवता, हितं मनोहारि च वचो मदगर्वितेन केनचित्पुरुषेण बलवता दैवेन च यथा पौरुष निरस्तं सन्न शोभते। अत्र बलं सैन्य मूर्त्तं प्राकरणिकं यत्कृते कृत्य-वाक्-पौरुषाणामप्राकरणिकयोजना। अस्तु कृत्यादीना मूर्त्तत्वं तद्भेदाविष्करणं, परमत्र तु सामान्यवचनत्त्वान्न तेषा मांसलत्वम्। 'अमर्षिणा-मदोद्धतेन-बलीयसे'—तिपदसन्निवेशस्तु प्रस्तुताप्रस्तुतयोरुभयत्र साधु सम्बद्ध्यते। इदमेव भारवेर्बिम्बनशिल्पस्य 'प्रसन्नगम्भीरपदत्वम्' यद्दृश्यादृश्ययोः सर्वत्र राराजते।

### स्वभावोक्तिबिम्बम्

पपातपूर्वां जहतो विजिह्मतां वृषोपभुक्तान्तिकसस्यसम्पदः।
रथाङ्गसीमन्तितसान्द्रकर्दमान् प्रसक्तसम्पातपृथक्कृतान् पथः॥ (४।१८)

प्रावृषि मार्गाणां पङ्किलत्वाज्जलमयत्वाद्वा तत्र समरेखगामित्वस्या सौकर्याज्जनाः प्रायेण ततो वक्रेणोद्गच्छन्ति। सम्प्रति शरदि तच्छुष्कत्वात् त एव मार्गाः समगतिकास्सञ्जाताः। तदुपरि शकटानां सञ्चलनेन घनीभूतेषु कर्दमेषु लम्बायमानानि विततानि चक्रचिह्नानि संदृश्यन्ते। अनवरतञ्च जनाना गमागमत्वात् तेषा पादसञ्चार-रेखाङ्किताऽस्तदितरभूमिपृथग्भूताः शारदीया मार्गा स्फुटपरिचीय-माना। तत्पार्श्वयोश्च सस्यसम्पदो वृषभैर्भक्षिताः। वर्षापगमे शरदतौ ग्राम्य-मार्गाणां कीदृशी दशेति यथातथ्येन प्रत्यङ्कित भारविणा। 'सीमन्तित' इति पदबिम्बं मार्गेषु लम्बायमाना रथाङ्गपङ्क्तीः चाक्षुषत्वं नयति। 'वृष' इति पद-प्रयोगः सोद्देश्यं विहितः। एतेन प्रतीयते यत् कर्षणार्थ यदा वृषाः कृषीवलै-रानीयन्ते नीयन्ते च तदा ते वार्यमाणा अपि स्वाननान्यवनमय्यान्तिकस्थानि सस्यफलानि मध्ये-मध्ये बलाद् भक्षयन्ति। अनेनेवात्र न 'पशु' इति सामान्य-प्रयोग, क्षेत्रपरिसरेषु तद्रक्षणाय सामान्यपशु-प्रवेशनिषेधात्। इत्थं सपरिवेषम-खण्डत्वेन शरत्कालीनभारतीयग्रामीणमार्गबिम्बमिह परिस्फुरति। कविर्न केवलं भौमं मार्गमपितु, गगनपथमपि नयनपदवीमवतारयति—

अदीपितं वैद्युतजातवेदसा सिताम्बुदच्छेदतिरोहितातपम्।
ततान्तरं सान्तरवारिसीकरैः शिवं नभोवर्त्म सरोजवायुभिः॥
—(कि० ४।२९)॥

अस्मिन्नेव प्रसङ्गे द्रष्टव्यमस्ति अपरञ्च मेघाच्छन्नस्य नभसो वर्त्मना गच्छतां देवसेनास्यन्दनयुजामश्वानां गत्वरबिम्बम् :—

सेतुत्वं दधति पयोमुचां विताने
संरम्भादभिपततो रथाञ्जवेन ।
आनिन्युर्नियमितरश्मिभुग्नघोणाः
कृच्छ्रेण क्षितिमवनामिनस्तुरङ्गाः ॥
—(कि० ७।१८) ॥

अन्तरिक्ष इन्द्रकीलपर्वतं यावन्मेघमण्डलं विततमस्ति। तदेव मेघपटलमिह सेतुरिवोपकल्पितो रथगमनपथ । अपरञ्च, आकाशस्य यत्स्थलात् तत्पयोदवितानसेतुना देवसेना—स्यन्दनं सरति, तदूर्ध्वस्थमतो नभोवर्त्मेदं सदपि समरेख निम्नाभिमुखं वर्तते। तेनावाङ्मुखगेन पयोमुक्पटलसेतुना जवेनावतरन्तोऽपि रथयुजस्तुरङ्गमा महता काठिन्येन क्षितितलमुपजग्मुः। सायासगमने मार्गस्याधोगामिता हेतुः। 'नियमितरश्मिभुग्नगोणा.' इति समस्तविशेषणबिम्बेनैवेहोच्चैरधोऽभिपतनं रथस्य विभाव्यते। सारथिना प्रग्रहनियमनं वाहानां च भुग्नघोणत्वं तदैवोद्भवत । घनोपरि गमनप्रवृत्तस्य रथस्यात्र वैशिष्ट्यं भारविणा न प्रादर्शि यथा कालिदासेन—'गतमुपरि घनाना वारिगर्भोदराणां पिशुनयति रथस्ते सीकरक्लिन्ननेमिः' (शाकु० ७।७) इत्यादौ। 'पयोमुचाम्' इति प्रयोगो भवतु नाम सोद्देश्यं तथापि तदुपरि रथसंक्रमणरूपन्तु न शब्दोपात्तम्। कथयितु शक्यते यत् कालिदासो वस्तुतो यत्सर्वमपेक्षितमुट्टङ्कयति भारविस्तदेव सङ्केतयति स्वाभिप्रेतमर्थंप्लुतेन गम्भीरपदबिम्बविन्यासेन। तद्भेदनं विना नार्थच्छवि· स्वरूपमाधत्ते।

खे खेलगामी तमुवाह वाह
सशब्दचामीकरकिङ्किणीक ।
तटाभिघातादिव लग्नपङ्के
धुन्वन्मुहुः प्रोतघने विषाणे ॥ (कुमा० ७।४९) ॥

इत्यादौ कालिदासीये स्वभावोक्तिबिम्बने किमभीष्टं नोट्टङ्कितम्? सुतरा स्पष्टं द्वयोर्बिम्बनशिल्पयोरन्तरत्वम्। यदा भारवि वस्तु-क्रिया-व्यापारादीना परिणतिमुल्लिख्य चमत्कर्तुं प्रवर्तते. तदा कालिदासस्तेषां स्वरूपोल्लेखद्वारेण रसिकानावर्जयितु समीहते। अत एव कालिदासस्य वक्रोक्तिरपि स्वभावोक्तिरिव विलसति, भारवेस्तु स्वभावोक्तिरपि वक्रोक्तिरिव प्रतिभाति। यद्यपि भारवि 'अनेकराजन्यरथाश्वसङ्कुलम्' (१।१६), 'घनपोत्रविदीर्णशाल-

मूलम्' (१३।२) अथवा तद्यथोपर्येव 'नियमितरश्मिभुग्नघोणा.' इत्यादिविशेषण-परकपदबिम्बविन्यासेन कस्यचिद्वस्तुनस्तत्क्रियादीनां वा रूपं चित्रयितुं दत्ता-वधानो दृश्यते, तथापि प्रायेण स्वप्रतिभाबलात् संस्कारानुरूपाच्च प्रमातृभिर्यथा-वसरं तत्पूर्णं कल्प्यते, कल्पयित्वा चस्वाद्यते । प्रसङ्गेऽस्मिन् एकं बाण-सन्धान-बिम्बं परीक्षणीयम् :—

> विचकर्ष च संहितेषुरुच्चैश्चरणास्कन्दननामिताचलेन्द्र ।
>
> धनुरायतभोगवासुकिज्यावदनग्रन्थिविमुक्तवह्नि शम्भुः ॥ (१३।१८) ॥

यदा भगवता शङ्करेण सशरसन्धानं स्वकीयं धनुराकृष्टं, तदा तच्चरणा-वष्टम्भेन अचलेन्द्रोऽप्यधोननाम । यद्यपि तस्य धनुषि प्रत्यञ्चायमानो नागराजो वासुकिरेव दृढं स्थित आसीत् । तथापि, आकर्षणे तस्यापि—नागराजस्य मुख-ग्रन्थिभ्यः अग्नेः भयङ्करा स्फुलिङ्गाः प्रादुरभूवन् । अत्र वाराहोपरि बाणसन्धा-नोद्यतस्य किराताधिपतेः शारीरिकी मुद्रामबिम्बयता कविना 'चरणास्कन्दन-मिताचलेन्द्र' इत्युल्लिखता बाणसन्धाने शम्भोरस्यातिशयबलपूर्वकता प्रति-बिम्बिता । अचलत्वेऽपीन्द्रत्वं, तस्याप्यवनमत्वम्, इत्यनेनैव शम्भोश्चरणयोर्महता दार्ढ्येन तत्र कीलायितत्वं, तेन च सर्वापि तस्य शरसन्धानोद्यतस्य शारीरिकी अवस्था आकल्प्यते सहृदयेन, परं कविना तु शम्भोः भयङ्करं रूपं पदबिम्बे-नाभिधया नोपात्तम् । अपितु उत्तरार्द्धेन ज्यावासुकेर्दैहिकी व्यथा '...... वदन-ग्रन्थिविमुक्तवह्नि' इत्यनेन स्फुटतरम् अनावृता । स्पष्टमेव, समाधिस्थस्य शिव-स्योपरि शरसन्धानोद्यतस्य कामस्य —

> 'स दक्षिणापाङ्गनिविष्टमुष्टिं
> नतांसमाकुञ्चितसव्यपादम् ।
> ददर्श चक्रीकृतचारुचाप
> प्रहर्तुमभ्युद्यतमात्मयोनिम्' ॥ कुमा० ३।७० ॥

अथवा इन्द्रमुपस्थितस्य सकामुकस्य तस्यैव कामस्य—

> 'अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
> रतिवलयपदाङ्के चापमासज्य कण्ठे ।
> सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्र
> शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ।'
>
> —कुमा० ३।६४

इति कालिदासीया बिम्बद्वयं भारवेर्बिम्बनशिल्पाद् विभिद्यते । वस्तु वर्ण्यस्य वस्तुनोऽपेक्षितवैशिष्ट्यानां सामयिकं सम्मूर्त्तनमेव काव्यबिम्

सम्प्रेषणीयत्वम्। यथा मृत्युकाले स्खलद्गतेर्वाण-विद्धशूकरस्य ससम्भ्रमं बिम्बम्—

अथ दीर्घतमं तमः प्रवेक्ष्यन् सहसा रुग्णरयः स सम्भ्रमेण।
निपतन्तमिवोष्णरश्मिमुर्व्यां वलयीभूततरुं धरां च मेने॥
स गतः क्षितिमुष्णशोणितार्द्रः खुरदंष्ट्राग्रनिपातदारिताश्मा।
असुभिः क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्निरासे॥

अत्र, मृत्योर्दंष्ट्रायां प्रविशतो भ्रमीश्च गृह्णतो विलुप्यमानसंज्ञस्य तस्य शूकरस्य मनोदशाया याथार्थ्यप्रतिबिम्बनम् 'उर्व्याम् उष्णरश्मेः निपतनेन' तरूणां धरायाश्च वलयीभूतत्वेन' इति बिम्बद्वयेन विहितमस्ति। एवमेव 'प्रत्यग्रशोणितपरीताङ्गेन' तेन शूकरेण 'निजखुरैर्दंष्ट्राभिश्चाश्मविदारणम्' 'स्वहन्तारमर्जुनं प्रति तस्य क्षणिको दृष्टिपातः' 'तस्य चान्तिममतिगम्भीरं निनादः' इति तस्यानुभावबिम्बेन पृथक्त्वेन समवायेन च प्रतिकर्त्तुमशक्तस्य व्यर्थक्रोधस्यान्तर्दशानावरणे भारविः प्रकामं प्रभवति।

एवमेव, अन्यवन्य-जलीय-स्थलीयजीवजन्तूनां गतिमयं स्थिरं वा स्वाभाविकं चित्रमुपलभ्यते। यथा बलवति उपस्थिते भये पलायनपरस्य चमरीमृगस्य कण्टकाकीर्णेषु वंशविततिषु तत्पुच्छसंसक्तिः तेन च तथैव तत्र तस्य सधृत्यवस्थितिः (१२।४७), सहसा सेनाकलकलेन प्रतिबुद्धानां मृगाधिपाना मुखविजृम्भणम् (१२।४८), भीतानां शफरीकुलानां परिवृत्तिभिर्नदीना व्याकुलत्वम् (१२।४९)। एभिस्त्रिभिरपि बिम्बैः संश्लिष्टतया अरण्यनिवासिनां जन्तूनां भीतिः, तया च तेषां मनःस्थितिः प्रतिपाद्येते। भीतेः कारणन्तु किराताधिपस्य शम्भोर्मृगया परायिण्या सेनया तदरण्यस्योन्मथनम्। अन्यत्र पुष्पावचय - व्यग्रायाः प्रगल्भाया देवाङ्गनाया रूपाङ्कने पृथक्-पृथक् अवयवोल्लेखनेन तत्समुदयेन च प्रतीत्या प्रगल्भारूपबिम्बम्—'नितम्बयोर्गुरुतया नीव्या शिथिल-बन्धनत्वम्, वस्त्राञ्चलापसरणेन उरोजयोः सुव्यक्तिः, कार्श्याधिक्येन त्रिवल्यदर्शनं, रोमावल्याश्च स्फुटत्वम्, पृष्ठे विलम्बितः केशराशिः, विवृते च बाहुमूले' (१-१७-१८)। नायिकानुभावबिम्बने तु भारविणा सम्पूर्ण एवाष्टमसर्गो व्ययीकृतः। किरातवेषधारिणः शिवस्य वन्यं रूपाङ्कनमपि न न्यूनम् (१२।४१)।

## वक्रोक्तिबिम्बम्

सर्वप्रथमं द्रष्टव्यमस्ति गोपीनां दधिमथनकृत्यं यत्र गोप्यो नर्तकीभिः प्रतिबिम्बिता—

परिभ्रमन्मूर्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितैर्नवातपामृष्टसरोजचारुभिः ॥
निबद्धनिःश्वासविकम्पिताधरा लता इव प्रस्फुरितैकपल्लवा ।
व्यपोढपार्श्वैरपवर्तितत्रिका विकर्षणैः पाणिविहारहारिभिः ॥
व्रजाजिरेष्वम्बुदनादशङ्किनीः शिखण्डिनामुन्मदयत्सु योषितः ।
मुहुः प्रणुन्नेषु मथां विवर्तनैर्नदत्सु कुम्भेषु मृदङ्गमन्थरम् ॥
स मन्थरावल्गितपीवरस्तनीः परिश्रमक्लान्तविलोचनोत्पलाः ।
निरीक्षितुं नोपरराम बल्लवीरभिप्रनृत्ता इव वारयोषितः ॥

—(कि० ४।१४-१७) ॥

इह चतुर्भिः पद्यबन्धैः संश्लिष्टविशेषणमहिम्ना समत्वेन युगपदेव प्रस्तुताप्रस्तुतयोर्बिम्बद्वयं—एकतो 'गोपीदधिमथनबिम्बम्', यदेव कवेर्मुख्यं प्रतिपाद्यं; यदर्थञ्च 'मुहुः प्रणुन्नेषु मथां विवर्तनैर्नदत्सु कुम्भेषु' इति प्रधानत्वेन क्रियोक्तिः, अपरतश्च 'नर्तकीनृत्तबिम्बम्', यत्प्रतीतये 'अभिप्रनृत्ता इव वारयोषिताम्' इत्यमुख्यो व्यपदेशः। अनयोरानुषङ्गिकत्वेन 'परिभ्रमन्मूर्धजस्मितोदयादर्शितदन्त - मुखैश्चलत्कुण्डल - निबद्धनिश्वासविकम्पिताधराव्यपोढपार्श्वैरपवर्तितत्रिका-विकर्षणै पाणिविहार-हारिभि - मन्थरावल्गितपीवरस्तनी.' इति सप्तसंख्यकानि बिम्बानि गुम्फितानि। स्पष्टमेव दधिमथनकर्मणि व्यापृताना गोपीना स्वाभाविकशरीरचेष्टोपात्तानि इमानि बिम्बानि नर्तनव्यासक्ताना वारयोषितामनुभावपक्षेऽपि तुल्यत्वेन सहकारीणि। एतदतिरिक्तं प्रतिश्लोकं पृथक्त्वेनानयोरुपकारीणि कतिपयखण्ड-बिम्बान्यप्युपनिबद्धानि। तानि तु प्रकृत्युपात्तानि। तद्यथा – 'बालातपरश्मिरञ्जितेषूत्फुल्लारविन्देषुभ्रमरपरिभ्रमणम्' (मथनकर्मणा नृत्तेन वा कम्पितानां गोपीना नर्तकीनां वा कनककुण्डलद्युतिपिङ्गलेषु ईषद्दोलायमानाननेषु तदलकानां परिवृत्तिरिति मुख्यामुख्यबिम्बयुग्माङ्गत्वेन पूर्वोक्तस्यावयविनः सहकारि; एतदर्थम्)। प्रातरेव दधिमथनं, पद्मविकासः, अतो बालातपस्य सामयिकत्वम्। यद्यपीह सरोजाना वातेरितत्वं शब्दतो नोपात्तम्, केवलं षट्पदानामेव परिभ्रमत्व-मारोपितम्, एतेन क्षणमनुभूतिर्विहन्यते यतो नह्यचञ्चलारविन्दोपरि भ्रमरभ्रमि, अपितु चञ्चलारविन्दोपरि भ्रमरभ्रमिरेव प्रकृतमुपकरोति। गोपीमुखानां स्थिरत्वे कथं तन्मूर्धजानामेवास्थिरत्वम्? तथापि, 'चलत्कुण्डल' इत्यत्र 'चलदि' ति विन्यासेन मुखस्यापि चञ्चलत्वमनुमीयते। वस्तुतस्तु, 'चलत्' इति विशेषणपदं 'मुखैः' इत्यस्य पूर्वं 'चलमुखै' इतिवत्प्रयोज्यमासीत्। मुखानां चञ्चलत्वे तु कुण्डलानां तत्केशरराशीनाञ्च चाञ्चल्यं सुतरामनुभवनीयं भवेत्। द्वितीयश्लोके लतया उपमितिस्तु नितरामेकदेशीया। तत्र कादाचित्केनाधरविकम्पनमात्रेण पल्लवस्य स्फुरणकल्पना। पाणिभिः मन्थगुणाकर्षणै

सञ्चलितनितम्बानां गोपीनाम् आङ्गिकाभिनयैश्च नर्तकीनां पार्श्वसञ्चलनं तथा च तासां त्रिकानावरणमेवाधिकतरं विलोभयति। 'व्रजाजिरेषु....' इत्यादौ गोपीभि मन्थनदण्डाना विवर्त्तनैरुद्भूतानां दधिभाण्डेषु मन्थरनादबिम्बम्। 'मृदङ्ग'विन्यास्तु नृत्तबिम्बपक्षे वाद्यप्रतीतिमुद्भावनाय। प्रसङ्गादम्बुदनादशङ्का मयूरीणाम् इति बिम्बयोजनं दध्याधिक्यं तस्य च मथनप्रामुख्यं तवेति बोधनाय। तदैवाग्रे 'परिश्रमक्लान्तविलोचनोत्पला', मन्थरावल्गितपीवरस्तनी' इति बिम्बयुग्मस्य औचित्यम्। सम्पूर्णापि इयं दधिमथनबिम्बमाला प्राचीने भारते दुग्ध-दध्याधिक्यमासीत् इति तथ्यं सम्यगुन्मीलयति। एतेन गोधनास्याधिक्य-मपि तदानीन्तने समाजे, भारतीय-संस्कृतौ च तस्य बहुमानत्वं, महत्त्वपूर्णं स्थानं चाभिव्यज्येते। अत एव भारविः पयस्वनीनां गोचरादुपावर्तमानानामपि महत्स्वाभाविकं बिम्बं प्रस्तौति यद्विषय-साम्यादत्रैवोर्द्ध्रियते:—

> उपारताः पश्चिमरात्रिगोचरादपारयन्त पतितुं जवेन गाम्।
> समुत्सुकाश्चक्रुरवेक्षणोत्सुकं गवां गणाः प्रस्नुतपीवरौधसः॥
>
> —(कि० ४।१०)॥

वक्रोक्तिदिशा पार्थकिराताधिपयोर्युद्धबिम्बानि महत्त्वशालीनि सन्ति। सव्यापसव्यगतिभ्यामुग्रं चापनिर्घोषं विदधन्तं किरातवेषधारिणं महेशमवलो-क्यार्जुनस्तथैवाशङ्कितवान् यथा पर्यायप्रतिपादितकर्णास्फालनमुन्मत्तं गजं दृष्ट्वा तन्नियन्ता विशङ्कते (१७।२५)। युद्धे शम्भुना समाप्तिं गमितेऽप्यर्जुन-तूणीरे पूर्वाभ्यासवशात्स पुनरपि सविभ्रम्भं तन्मुखोपरि शरमादातुं स्वकरं तथैव निपपात, यथा कश्चिद् गज. अन्यद्विपेनापीतेऽनस्तोयशून्येऽपि पर्वताश्म-रन्ध्रे तृष्णाकुलतया पानीयमन्वेष्टुं स्वशुण्डादण्डं पातयित्वा तमितस्ततो विचालयति—

> रिक्ते सविभ्रम्भमथार्जुनस्य निषङ्गवक्त्रे निपपात पाणिः।
> अन्यद्विपापीतजले सतर्षं मतङ्गजस्येव नगाश्मरन्ध्रे॥
>
> —(कि० १७।३६)।

अत्र जलान्वेषणपरेण प्रत्यक्षायमाणेन गजशुण्डादण्डेन गजस्य तृष्णा-कुलत्व, बाणशून्ये निषङ्गवक्त्रे चार्जुनस्य ससम्भ्रमकरनिपतनेन नु तस्यान्तरा-कुलत्वमुज्जृम्भेते। अर्जुनस्य शरौघैस्तापिता प्रमथसेना परिमण्डलतया तथैव स्थिति चक्रे, यथा रविकिरणसमूहैर्ग्लापितो जलराशिरभितो वर्त्तुलत्वेन रेखाङ्कितो दृश्यते (१४।६४)। पार्थप्रहारेण जातव्रणत्वाच्छोणितमयं शम्भो-र्विशाल वक्षस्थलं प्रत्यग्रसान्ध्यरागरञ्जितो मेघ इव बभौ (१८।४), शिवस्य वक्षस्थलोपरि अर्जुनस्य मुष्टिप्रहाराः सह्याद्रेः पृथुनि रोधसि सिन्धोर्भृशरया महोर्मय इव प्रतिहताः (१८।१५)। इह सर्वत्र कविर्युद्धं चित्रयितुं प्रकृत्युपमान

बिम्बमाकलयति। प्रकृते· स्वतन्त्रं सुकोमलञ्च बिम्बनमपरत्र सूर्यास्त-चन्द्रोदय-रूपेण प्राप्यते (९।२,१९)।

जीवनस्य बहुविधां व्यावहारिकीमनुभूतिं बिम्बद्वारेण भारविर्गुम्फितवान्। युद्धप्रकरणादेवैकमुदाहरणं दीयते, यत्र अर्जुनस्याग्नेयास्त्रं प्रशमयितुं शङ्करेण वरुणास्त्रं प्रायुङ्क्ति —

> महानले भिन्नसिताभ्रपातिभिः समेत्य सद्यः क्वथनेन फेनताम्।
> व्रजद्भिरार्द्रेन्धनवत्परिक्षयं जलैर्वितेने दिवि धूमसंततिः।। १७।५७ ।।

पयोदखण्डमिव पतितो जलराशिः तत्र प्रचलज्ज्वालाकराले एकपदमेव शुष्कत्वमगात्। महानलस्य प्रचण्डता अनेन द्योत्यते। प्रस्तुतमिमं विषयमधिक-चमत्कारेणावगमयितुमिह 'क्वथनेन फेनताम्' इति बिम्बविधानम्। उग्रे तपसि प्रतिष्ठितमर्जुनं परीक्षितुकाम इन्द्रो वृद्धर्षिवेषेण यदा तदाश्रममुपससार, तदा वार्द्धक्याधिक्याद् वलिमता पलित-पाण्डुरेण भ्रूयुगलेन स प्रालेयनिचयेन परिम्लानदलाब्ज-सरोवर इव समभूत् (११।४), तथा च कार्श्याधिक्याद्भारा-क्रान्त इव, प्रायो गृहिण्या दत्तावलम्बनो यष्ट्याश्रितः कश्चिदाढ्न इव (औदरिक इव) इन्द्रस्तदानीमदृश्यत (१५।५)। नियतमेव भारविः स्वपत्न्या साहाय्य-मादायोद्गच्छन्तं यष्ट्यावलम्बनेन च कृतगमनं कञ्चनौदरिकं जनं ददर्श तेन चाधिकं स प्रभावितोऽभूत्। तस्योपचेतने विद्यमानमिदं दृश्यं काव्यसर्जनक्षणे काव्यबिम्बं सत्सामयिकं बहिराविर्बभूव।

जीवनस्य तिक्तं मधुरञ्चानुभवं भारविर्बहुशो बिम्बयति—युद्धकाले रिक्तेऽपि तूणीरे पूर्वसंस्कारतया अर्जुनस्य पाणिः तूणीरमुखं पुनस्तथैवोपपात यथा कश्चित्पूर्वोपकृतः स्वस्तधनमात्मीयमुपास्ते (१७।३७), गत्वापि ततः कृच्छ्रेण तथैव विश्लिष्टवान् यथा पूर्वोपकर्त्तुः पराङ्मुखत्वे कश्चित् कृतज्ञो विफलमनोरथी निवर्तते (१७।४१)। उपकृतो जनः स्वोपकारि मित्रं स्वभावतः काले सप्रयोजनमुपयाचते। न स विश्वसिति यदिदानीं तस्योत्तमर्णः सहसा निर्धनत्वमुपगतः। परं यदि, समर्थोऽपि सन् धनिकः अस्वीकरोति, तदा कीदृशी न भवति अर्थिनो मनोदशा? निराशिनोपावर्तमानेन तेन कीदृग्विधा मनोरुजा नानुभूयते? अस्योपयुक्तं प्रतिफलनमत्र कवेर्लेखन्या समपद्यत। अर्जुनस्यामोघमपि तूणीरमद्य समये निरर्थकमिति कियती नोद्विग्नता आक्रोशो वा तस्य जिष्णोश्चेतसि समाजायेताम् इति सकलमखण्डत्वेन सहृदयसंवेद्यम्।

**भाविकम्**

भाविकबिम्बदृष्ट्या हिमवतो वर्णनप्रसङ्गे-शम्भुना पार्वत्या पाणि-ग्रहणस्य सात्त्विकः सत्स्पर्शः उल्लेख्यः (५।२९,३३)। परीक्षितुं गतवतामरेन्द्रेण

पृष्टोऽर्जुनः स्वतपश्चर्याहेतुमतीवमार्मिकत्वेनोद्भावयन् शत्रुभिर्बलाद् द्रौपद्याश्चीरापहरणं तत्कृतमतिलज्जाकरमपमानकृत्यञ्च तस्य पुरतः स्मरति (१४।४९,५१,५२)। तथा च देवेन्द्रमाराध्य स्वापयश.शल्यमुद्धर्त्तुं स दृढं प्रतिज्ञातवान् (११।७९)। त्रयोदशसर्गे शूकरं वीक्ष्यार्जुन. शङ्कालुस्सन् बहुविधं तर्कयति (१३।३-१३)। इत्थमेव किराताधिपतेरसाधारणरणनैपुण्येन चकितस्यापगतशक्तेरर्जुनस्य तर्काकुलमपरमपि स्थलं (१६।२-१७) द्रष्टव्यमस्ति। पार्थस्य जीवने ये केचन संग्रामा. पूर्वमभूवन् तेभ्यो विलक्षणोऽयं संग्राम —

असृङ्नदीनामुपचीयमानैर्विदारयद्भिः पदवीं ध्वजिन्याः ।
उच्छ्रायमायान्ति न शोणितौघैं पङ्कैरिवाश्यानघनैस्तटानि ॥

—(किरा० १६।१०) ॥

इत्यत्राद्यत्वे युद्धे पौर्वकालिकी भौतिकी भयङ्करता यद्यपि न विद्यते, तथापि अर्जुनस्य पौरुषक्षयो जायते। अतः आत्मन शक्तिपराभवहेतुकं यदूहात्मकं स्मृत्युपादानकं चित्रमत्र तेनोद्भावि, तत्र सर्वत्रापमानं, तिरस्कारः, ग्लानिः, परिताप, विक्षोभाकुलोऽन्तर्दाह विषादश्चानुभूयन्ते। प्रथमे सर्गे किरातार्जुनीयस्य शत्रो प्रतिकर्त्तुं धर्मराजं प्रेरयन्त्या द्रौपद्या. सर्वा अपि भाविकोक्तयोऽतीव हृदयस्पर्शिन्य.। द्वितीये च सर्गे भीमस्योक्तिषूत्साहसमवेत स्वाभिमानमुखं बिम्बपुञ्जं कः सचेता. आत्मीयमिव नास्वदते ? अमराङ्गनानां सरसबिम्बोल्लेखस्तूपरिष्ठाद्वक्रोक्तिप्रसङ्गे कृत एव। अत्रैकमुदाहरणं प्रस्तूयते यस्मिन्नायिकाया अन्तर्भावना समीचीनतया प्रत्यङ्किता—

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥

—(कि० ८।१४) ॥

भ्रान्त्या आत्मीयामेव परकीया मन्यमान तस्यै कुसुमान्युपाहरन् कश्चित् प्रियो यदा तन्नामोच्चैर्गृह्णाति, तदा आत्मनः प्रियस्य अपरस्यामासक्तिमवबुद्ध्य दु खिन्यास्तत्प्रियाया निर्वेदो 'न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम्' इत्यनुभावबिम्बेन सङ्केतित। प्राय मुग्धाना मनोदशा. तासामनुभावबिम्बेनैव शालीनतया महाकविभिः अभिव्यक्ता। 'एवं वादिनि······' (कु० ६।८४) इत्यत्र कालिदासोऽपि 'लीलाकमलपत्रगणनबिम्बेन' पार्वत्या लज्जामाविष्करोति। अथवा लज्जावनताया मालविकाया 'पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षम्' (माल० २।६) इत्यनेनान्तर्दशाविष्करणम्।

भारवेर्बिम्बनशिल्पस्य कतिपयान्यन्यान्यपि वैशिष्ट्यानि संक्षेप्याणि सन्ति। तद्यथा, साङ्केतिकबिम्बनदिशा[1] स्वल्पमेव स्थलमुदाहर्त्तव्यमस्ति। तन्निखिलं प्रकृतिपरम्। तथा चागामिप्रसंगस्य घटनायाश्च सङ्केतमपशकुन-शकुनरूपेण तत्करोति। अस्मिन्नूनमेव वाल्मीकीयबिम्बनकर्मणः प्रभावोऽनुसन्धेय।

## निष्कर्ष

इत्थं बिम्बविश्लेषणपुरस्सरं निष्क्रष्टुं पार्यते यद् भारवे-र्बिम्बनशिल्पं पूर्ववर्तिकविभि पर्याप्तं प्रभावितमस्ति, विशेषत कालिदासेन। परं नहि तादृशं रसाप्लुतत्वमिहदृश्यते। वक्रोक्तिबिम्बनप्रियस्य भारवेः कला-त्मकत्वमेवाधिकं पुष्णाति। भावाभिव्यक्त्योस्तादृशी तुल्ययोगिता नेह परि-लक्ष्यते। कालिदासस्तु रससिक्ते बिम्बनशिल्पे नितरां निष्णात.। अनुचिकीर्षु-रपि भारविस्तस्यार्द्धांशमपि ग्रहीतुं न क्षमते। कृतेऽप्युद्घोषे यत् 'भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये' (१४।४), 'विविक्तवर्णा-भरणा सुखश्रुतिः', 'प्रसन्नगम्भीरपदा सरस्वती' (१४।३) इति च, कथं स एव 'नारिकेलफलसंमितं' विनिर्माति, यस्य विभेदं विना रसास्वादस्तु दुर्लभ एव ? अतो भवतु नाम गम्भीरपदत्वं प्रसन्नत्वन्तु कादाचित्कमेव। वस्तुविन्यासधि-यापि भारवेर्बिम्बविधानं नहि महनीयतां भजते। यतो हि तस्य विस्तृतवर्णन-पद्धत्या स्थले-स्थले मूलवस्तुबिम्बं विच्छिन्नमिव प्रतिभाति। बिम्बनिर्माणे तूपमोत्प्रेक्षयोर्विशेषं साह्यं निर्विवादम्। अर्थान्तरन्यासेनापि यत्र-तत्र बिम्बनिर्मितिर्जाता। परमुपदेशप्रदं नीतिप्रधानञ्च तद्बिम्बकुलम्। अल्पमेव रूपकादीनां प्रयोगः। बिम्बविधानमन्वीक्ष्य किरातार्जुनीयस्यैवं कथयितुं शक्यते भारवेर्व्यक्तित्वमूल्याङ्कनमधिकृत्य संक्षेपेण यत् पण्डितो भारवि निपुणोऽपि राजनीतौ दैवं बलवद् विश्वसिति। प्रकृतेर्निखिलमपि रूप तमाव-र्जयति किन्तु इन्द्रधनुषः सौन्दर्यं तं समधिकं प्रभावयति। जलीयप्राणिषु मत्स्याना स्थलीयेषु गजाना स्वभावेन सोऽधिकं सुपरिचित आसीत्। संवेदन-दृष्ट्या वर्ण-शब्दबिम्बानामेव प्रयोगबाहुल्यं प्राप्यते। नूतनबिम्बोद्-भावने तु तस्य महत्त्वं निस्सन्दिग्धमेव। ग्राम्यमार्गचित्रणं दधिमथनादि बिम्बमस्य प्रामाण्यं द्रढयति। अत., सोत्साहं निष्क्रष्टुं शक्यते यद् भारवे-र्बिम्बाविन्यासे मध्यमवर्गीयभारतीयजनजीवनस्यैकं प्रतिबिम्बं सम्यगुन्मीलितं भवति। लोकसंस्कृतेश्चित्रणमेव भारवेर्बिम्बनशिल्पस्य वैशिष्ट्यम्

---

१. कि० ३।६०, ७।३ तथा १८।१७।

# कालिदासस्यावास-भूमिः

डॉ० रामजी उपाध्यायः

कालिदास. कुत्र न्यवसदिति प्रश्न प्रश्नान्तरैः संयुक्त । तथाहि— कुत्रायं जनिमलभत, छात्रजीवनं क्व व्यत्याययत्, गृहस्थः सन् क्वावसत्, के राजानस्तेन काव्यरसामृतपानेन सन्तर्पिता, कुत्र चासौ विदुषा संगतिमवाप्तुमभ्रमत्, कुत्र च पंचत्व प्राप—इति बहव. प्रश्नाः विमृशार्हा । कालिदासेनेये प्रश्ना स्वयमुत्तरिता स्यु, अथवा तत्समकालिका. परवर्तिनो वा ग्रन्थकारा· कदाचिदेतेषां समाधानं कृतवन्त इति सम्भाव्यते । तथापि इदमित्थन्तयाऽस्मिन् विषये न किमपि वक्तुं शक्यते । एवं स्थिते वंग-मिथिला-मध्यदेश-राजस्थान-गुर्जरदेश-महाराष्ट्र-लंका-प्रभृति-देश-प्रदेशाना विद्वांस. काले काले कालिदासं स्वदेशीयं समर्थयन्ति । तत्र मध्यप्रदेशः कश्मीरदेशश्च कालिदासस्यावास-भूमित्वेन प्रायश· पुरस्क्रियेते ।

प्रथमं मध्यप्रदेशे कालिदासस्य निवासस्थानसंभावना विचारणीया । अत्र ऋतुसंहारगता. सूचना विशेषं महत्त्वमावहन्ति । ऋतुसंहारं कालिदासस्य प्रथमा कृति । कालिदासश्च स्वपत्न्या. प्रीत्यर्थं विन्ध्यभूमौ काव्यमेतन्निबद्धवान् । यत शिशिरवर्णने उक्तमत्र—

प्रकामकाम प्रमदाजनप्रियं वरोरुकालं शिशिराह्वयं शृणु ।

वरोरु-पदेन शृणुपदेन च नवपत्न्या सान्निध्यमभिव्यज्यते ।

अन्येऽपि बहव श्लोकाः पत्नी सम्बोध्य तेनात्र लिखिता, यथा—

१. निदाघकालोऽयमुपागत प्रिये ।

२. मणिप्रकारा. सरस च चन्दनं<br>
शुचौ प्रिये यान्ति जनस्य सेव्यताम् ।

३. घनागम. कामिजनप्रियः प्रिये ।

४ प्रिये प्रियङ्गु प्रियविप्रयुक्ता ।

५. विपाण्डुता याति विलासिनीव ।

६. वसन्तयोद्धा समुपागत. प्रिये ।

७ सर्व प्रिये चारुतरं वसन्ते ।

कालिदासऋतुसंहारकाव्यं प्रथमं स्वपत्नी सम्बोध्य पश्चाच्च स्वयुगस्य रीत्यनुरूपं सहृदयनागरिकान् संबोध्याश्रावयदिति स्पष्टमेवाधोलिखितेन सन्दर्भेण—

रक्ताशोकविकल्पिताधरमधुमत्तद्विरेफस्वन ।
कुन्दापीडविशुद्ध दन्तनिकरःप्रोत्फुल्लपद्मानन ।
चूतामोदसुगन्धिमन्दपवन शृङ्गारदीक्षागुरुः
कल्पान्तं मदनप्रियो दिशतु वः पुष्पागमो मङ्गलम् ।

अत्र रवः पदेन नागरिकाः श्रोतार इति व्यज्यते। बहव एतादृशाः श्लोका विलसन्ति ऋतुसंहारे।

ऋतुसंहारे कवेः शृङ्गारमयी प्रवृत्तिर्विलसति। तत्कृते च प्रेयस्याः सान्निध्यमपेक्ष्यते। कश्मीरदेशीयः कालिदासो विन्ध्यदेशस्य निदाघपीडितः पत्नीवियुक्तश्च काव्यमिदं रचितवानिति कश्मीरं कालिदासस्य जन्मस्थानं मन्यमानाः केचन यदूचुस्तत्तु सत्यं न स्पृशति। वस्तुत ऋतुसंहारे संभोग-शृंगारोऽङ्गी। गृहस्थाश्रमसंस्थः कृतदार कालिदासः काव्यमिदं कृतवान् इति अस्य प्रथमकृतित्वेन पत्नी नागरिकाश्च प्रति सम्बोधनेन ज्ञायत एव। विन्ध्य-भूमौ कालिदासेनेयं कृती रचितेति अधोलिखितपद्याभ्यां सूच्यते—

तृणोत्करैरुद्गतकोमलाङ्कुरै—
श्चितानि नीलैर्हरिणी मुखक्षतैः।
वनानि वैन्ध्यानि हरन्ति मानस
विभूषितान्युद्गतपल्लवैर्द्रुमैः ॥
जलभरनमितानामाश्रयोऽस्माकमुच्चै—
रयमितिजलसेकैस्तोयदास्तोयनम्राः ।
अतिशयपरुषाभिर्ग्रीष्मवह्नेः शिखाभि
समुपजनिततापं ह्लादयन्तीव विन्ध्यम् ॥

इत्थमवसितब्रह्मचर्याश्रमः कृतनिवेशः कालिदासो यां विन्ध्यभूमिं समलञ्चकार तत्र वनोपवनानां नैसर्गिकी सुषमा समुल्ललास। अत्रैव कालिदासस्य पैतृकं गृहं बभूव। वस्तुत इयं विन्ध्यभूमिरेव तस्य मूलनिवास-स्थानम्।

कालिदासस्य पैतृकनिवासस्थली नासीदुज्जयिनी नगरी। यतो हि कविनोल्लिखिते पैतृकनगरे नासीत् शिप्रा तत्सदृशी वा कापि विशाला नदी, न च तन्नगरमपि विशालमभूत्। अभित एतत् शालीक्षुकेदारा लसन्ति स्म, समीपतश्च आम्र-पलाशाशोक-वंश-कदम्ब-सर्जार्जुन-केतकी-कुंकुम-चन्दन-वकुल-कोविदार-वनान्यभूवन्। हस्ति-सिंह हरिणादयो मृगाः हंस-मयूर-सारस-कलहंस-कोकिल-प्रभृतयश्च पक्षिणः प्रदेशमिममलञ्चक्रुः।

हिमालयाय कापि प्रीति कवेरस्य बभूव। हिमालयं भागीरथी च भारतीयसंस्कृतेः प्रतीकतया असौ कलयामास। हिमालयसंस्थानां महनीयानामाचार्याणां सन्निधौ कालिदासेन हिमप्रदेशस्यानन्य उत्कृष्टा विभूतयो-सदृशावलोकिता, स्वकाव्येषु च वर्णिताः। छात्रजीवनमनु कालिदासेन कश्मीरान् हिमप्रदेशाश्च पद्भ्यां पर्यटदिति भृंश सम्भावना। कश्मीरेषु असौ जनिमलभतेति न कुत्रापि सूच्यते।

कालिदासं कश्मीरसंभवं साधयितुं केचन विद्वासो भूतार्थमन्यथा विधाय तथ्यं विसंवादयन्ति। तथाहि— मेघदूते वर्णिता अलका कालिदासस्य जन्मभूमि, सा च कश्मीराणामुत्तरभागे सिन्धूपत्यकायां स्थितेति तेषा मति। नैतद् युज्यते, यतो हि मेघदूते ब्रह्मावर्त, कुरुक्षेत्रं, कनखलं, गंगोत्री मानसं सरश्चावगाह्य मेघ कैलाशमाप्नोति। अस्मिन् मार्गे नास्ति कश्मीरदेशस्य प्रसार।

कश्मीरस्य शैवप्रत्यभिज्ञादर्शनेन कालिदासो भृशं भावितमानस आसीदित्यप्येतेषा विदुषामभिप्रायो दृश्यते। इदमपि मतं न चेत श्लिष्यति, यतो अष्टमख्रीष्टशतकमनु प्रत्यभिज्ञादर्शनं समुदियाय, कालिदासस्यावस्थितिस्तु गुप्तकालात् पश्चान्न मन्तुं शक्यते।

वस्तुतो विन्ध्यभूमिरेव कालिदासस्य मूलनिवासस्थानम्। विन्ध्यपर्वतमालेयं प्राङ्मागधं प्रत्यङ्मालवं च विस्तीर्णा। अस्मिन् विपुले भूमिभागे विदिशोज्जयिन्यौ राजधान्यौ आस्ताम्, ययोः कालिदासो विशिष्य सम्मानपात्रं बभूव, उज्जयिन्यां च दीर्घकालं गुप्तराजाना काव्यगुरु सन् सन्यवसत्। यथा स्निग्धभावेनायमुज्जयिनी वर्णयामास, तेनानुमीयते यत् यत्र कुत्राप्यस्य मूलनिवासस्थान स्यात्, अस्य कविताकामिनी तूज्जयिन्यामेव विललास। तत्रैव चास्य वसतिरभवत्। अत्रैव विक्रमादित्य-कुमारगुप्तयोरभिप्रायेण विक्रमोर्वशीय कुमारसम्भवेऽनेन रचिते।

भारत-पर्यटनोपक्रमे लंकामपि कवि प्राप इति सम्भाव्यते। लंकाया कविर्जीवनान्तं जगाम इति कुत्रचित् सूचितम्। पराक्रमबाहुचरित्रे अन्येष्वपि च ग्रन्थेषु कालिदासस्येयमन्तिमा यात्रा वर्णिता।

आहिमालयादासिंहलं आकामरूपेभ्य आगुर्जर कालिदास पद्भ्या पर्यटन् यत्र कुत्रचिन्नातिचिरमुवास। अनेन विधिना समग्राणां भारतानां स्वरूपं विलोक्य स्थलपुराणेषु समवलोक्य च भारपण्डितो बभूव। स चासौ समग्रस्यापि देशस्य रसिकसमाजं काव्यरसास्वादेन सन्तर्पयन् औदात्त्यमेकत्व च भारतस्य समदिशात्। वस्तुतः स राष्ट्रकविः, समग्रस्यापि राष्ट्रस्य निवासी।

# महाकाव्यपरम्परायां सुर्जनचरितम्

रामलखन पाण्डेय

सुर्जनचरितमहाकाव्यस्यान्तिमश्लोको वर्तते कविपरिचयात्मक.।[1] तदनुसारमस्य प्रणेता बंगीयाम्बष्ठजातीयो जितामित्रपुत्र. श्रीचन्द्रशेखरकवि.। कविरयं कोटान्तर्गतबुन्दीनरेशस्य सुर्जनस्य प्रेयान् संस्थानपण्डित आसीत्। तदाज्ञयैव चानेन काश्यां महाकाव्यमेतन्निबद्धम्।[2] नात परं तद्विषयक किमपि वृत्त साक्षादुपलभ्यते। अन्तिमे वयसि काशीमधिवसता बुन्दीनरेशेन सह प्रारम्भिकसमागमानन्तरमसौ बंगदेशीयो महाकविर्गुणगणलुब्धेन नृपतिना स्वकीयसंस्थानकवि कृत. स्यादिति संभवति। १५८५-१६०८ खीष्टाब्दान्तराले कदाचिन्नूनं सुर्जनसिह. कोटामण्डलमधिशासितवानिति बुन्दीराज्येतिहासात्प्रतीयते। सुर्जनचरिते चात्र सुर्जनस्य दिवङ्गमनं तत्पुत्रस्य रावभोजस्य राज्याभिषेकादिकञ्चेति वर्णितम्। तस्मादेतन्महाकाव्यप्रणयनं षोडशसप्तदशशताब्द्यो· क्रमेणान्तिमप्रथमदशकावभिव्याप्य तिष्ठतीति निश्चेतु युज्यते।

चन्द्रशेखरकविकृतं सुर्जनचरितं सर्वै महाकाव्यसामान्यलक्षणै· परिपूर्णं सदपि काञ्चन तादृशान् विशेषानावहति सततम्, यद्वशादस्य विलक्षण सरलसरलं सात्त्विकं सौन्दर्य सहृदयाना मनांसि नितरामारञ्जयत्समुज्जृम्भते। विदितमेवैतद् यत्कालिदासस्य पश्चवर्तिन प्रायशः कवयः शब्दाडम्बरं चित्रतां समासभूयस्कतादिकं च समाराधयन्तो नैजमाश्चर्यंकरं प्रभाव मानवानां मस्तिष्के समारोप्य स्वकीयं विद्वत्तेजोऽसह्य लोके वितनितुं निरन्तरं समुत्कटा कामनाभादधाना विलोक्यन्ते। षोडशसप्तदशशताब्दिके च काले सास्कृतिकी कविताकामिनी तादृशैर्विद्वद्भिर्वाग्जालपातिता सत्यतितरां पीडिता आसीत्। कालेऽस्मिन् विकराले कविरेष शब्दाडम्बरनिगडिता तामुन्मोच्य रसादेरुन्मुक्त-

---

१.· गौडीय. किल चन्द्रशेखरकविर्यं· प्रेमपात्रं सता—
मम्बष्ठान्वयमण्डनात्कृतधियो जातोजितामित्रत· ।
निर्बन्धात् नृपसुर्जनस्य नितरां धर्मैकतानात्मनो
ग्रन्थोऽयं निरमायि तेन वसता विश्वेशितुः पत्तने ॥ २०. ६४ ॥

२. आज्ञाबलात् तदपि शूरजनस्य राज्ञ····। १.७
जिह्वाविलोलनविलासवशा द्विजिह्वा मूर्ध्ना धृता अपि नहि प्रकृतिं त्यजन्ति।
तेभ्यो न भीतिरिह भूपतिसुर्जनस्य जागर्ति जाङ्गलिकवत्करुणाविशेषः॥
॥ १.८ ॥

स्वच्छनीलाम्बरतले निसर्ग नर्तयितुं तस्माच्च सहृदयलोकलोचनमानन्दयितुमल बहु चकार।

कविरत्र प्रायेण कालिदासं यत्र कुत्रचिच्छ्रीहर्ष माघं चानुकर्तुं दूरं प्रायतत इति केषाञ्चिद्वक्तव्यमाधुनिकालोचकबुद्धिविलसितमेव केवलम्। "संवादास्तु भवन्त्येवे" त्याद्यानन्दवर्धनानुसारं सत्स्वप्यनेकत्र तादृक्संवादेषु कविरसौ केवलं स्वकीयां हृदिस्थां काञ्चिदस्मान् पुरः समुपस्थापयितुं प्रयतते तत्र चाधिकतया स्वभावविलसितामेव सरलां सरसां कान्तिमतीञ्च तां तदर्थं स्वीकुरुते, इति वक्तव्यमेवात्र समीचीनम्। स्वभावसरला भारतीया वीराङ्ग-नेवास्य कविता लास्ये लसन्त्यपि रणस्थले चण्डी इव हुङ्कृत्या चङ्क्रममाणा परमार्थे स्वशासितस्वतन्त्रेव सुशोभतेतराम्। ऐतिहासिकपृष्ठभूमिमाश्रित्यापि नेयमितिहासमेवानुगच्छति, अपित्वनायासेनेतिहासमुपस्कुर्वती स्वच्छन्दं विहरति। तद्विधं पूर्वोक्तं सौन्दर्यमेतस्य काव्यस्य कथावस्तुना सह किमप्या-विष्कर्तुमिह प्रयासो विधीयते।

विंशतिसर्गात्मकेऽस्मिन् सुर्जनचरिताख्ये महाकाव्ये चौहानवंशीयहाडा-क्षत्रियकुलस्य राजवंशश्चित्रीकृतः। यद्यपि हाडाक्षत्रियकुलमग्निवंशीयं यत्र कुत्रचित्प्रतिपाद्यते, तथापि विविधान्योपलब्धसाहित्यानुसारं चौहानवंशस्य सूर्यप्रभवात् हाडाक्षत्रियकुलस्य तदन्तर्गतत्वात् च कुलमेतत्सूर्यसंभवमेव सिद्ध्यति। प्रकृतग्रन्थश्चैतन्मतमेव प्रमाणयति। तदनुसारं पुष्करतीर्थे लोक-कल्याणकरं यज्ञमेकं सम्पादयता ब्रह्मणा विघ्नाशंकया दिवसाधिनाथे स्वकीयां दृष्टिं दिदेश। समनन्तरञ्चैकोऽवार्यवीर्यस्तेजस्वी सायुधश्चतुर्बाहुः पुरुषस्तद्वि-म्बादवातरत्। चतुर्बाहुमानेवापभ्रंशतामुपगच्छन् क्रमशश्चाह्वाणः, चौहाणः, चौहानश्चेति बभूव। तद्वंशज एवैतन्महाकाव्यविषयको राजवंश.।[1] यद्यपि ५५१ खीष्टाब्दप्रायसम्भवाद्वासुदेवादारभ्य १६१० खीष्टाब्दकालिकं सुर्जनपुत्रं रावभोजं यावच्चौहानराजवंशस्यातिदीर्घा परम्परात्र विषयीकृता, तथापि पर्याप्तं वर्णनं दशानामेव महाराजानामालोक्यते। ते सन्ति—वासुदेव., विश्वपति., हरिराज., भीमदेवः, अनलदेवः, बीसलदेव., पृथ्वीराज., हम्मीरदेव, रावसुर्जन, रावभोजश्चेति। तत्रापि वैशिष्ट्येन विवेचनविषयोऽत्र रावसुर्जन एवेति महाकाव्यस्य नाम्नैव सुस्पष्टम्।

तत्र प्रथमसर्गे मङ्गलादिकं सम्पाद्य वासुदेवाद्विश्वपतिपर्यन्तं दशसंख्या-केषु राजसु वासुदेवविश्वपत्योर्वर्णनं सविशेषं कृतम्। स्थालीपुलाकन्यायेन वासुदेववर्णने कवेर्भाषासारल्यमवलोकनीयमत्र। तद्यथा—

---

१. सु० च० ७, ५७-६०।

सत्ये युधिष्ठिरउदग्रबले च भीम—
श्चापेऽर्जुन स नकुलस्तुरगाधिरोहे ।
शास्त्राभियोगसमये सहदेव एव—
मेकोऽवतार इव पाण्डवपञ्चकस्य ॥ १. १० ॥

तस्यैव प्रतापानुकीर्तनप्रसङ्गे कियन्मनोहारिणीमतिशयोक्तिमुपस्थाप्य व्यतिरेको व्यञ्जित इत्याकल्यताम्—

नक्तं दिनं सममदीपि सुमेरुश्रृङ्ग—
मारोहति स्म महसा जितसैंहिकेय ।
अस्तं जगाम न कदापि जगत्प्रकाश—
स्तस्य प्रतापतपन. पुनरन्य एव ॥ १.१३ ॥

तत्रैव कवेः कल्पनाकौशलं विलोक्यताम्—वासुदेवस्य कीर्तिहंसी शत्रूणामपयशपंकेऽवशिष्टं यश.कमलतन्तु भोक्तुं निपुण मार्गयति ।[1] वासुदेवस्य दानवीरतां युद्धप्रियता च युगपदेवोपवर्णयता कविनोक्तम्—वासुदेवो यदि शत्रु ललनाश्रुभिश्चर्मण्वती नदीं नापूरयिष्यत तर्हि दानसकल्पप्रयुक्तजलव्ययै सा नूनं पंकभावमधास्यत ।[2] "सर्वे नवा इवाभान्ति" इत्युदाहरणस्वरूपं विश्वपतिवर्णने कालिदासस्य भावविशेषं परिष्कुर्वत. कवेरस्य कवित्वमालोच्यताम् । कालिदासो रघुवंशे लिलेख--

कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥

चन्द्रशेखरकवेश्चात्र पद्यमस्ति—

कामं बभूवुरपरेऽपि पुरा नरेशा
धन्या परन्तु धरणीयमनेन भर्त्रा ।
आलम्बते न कमला कतमं समृद्ध
नारायणोरसि परं लभते प्रतिष्ठाम् ॥ १.३१ ॥

द्वितीय सर्गानुसार विश्वपति स्वात्मनि नृपान्तरानधिगतवैशिष्ट्याभावं विलोक्य निर्वेदमापद्यते । तद्गुरुपुत्र. सुनयश्च निर्वेदस्यानौचित्यप्रदर्शनपूर्वकमचलयशसो लिप्सामुत्पाद्य शाकम्भरी देवीमाराधयितुं तमुपदिशति । जागर्ति

---

१. दुष्कीर्तिपंकगतवैरियशोमृणाललेशानशेषयितुमाशु गवेषयन्ती ।
यस्योल्लसद्विशदवारिदगर्भशुभ्रा बभ्राम विश्वमखिल किल कीर्तिहंसी ॥ १ १५ ॥

२. एतस्य दानसलिलव्ययितप्रवाहा चर्मण्वती ध्रुवमधास्यत पङ्कभावम् ।
नापूरयिष्यत यदि प्रसभोपरुद्धविद्वेषिवामनयनानयनाम्बुपूरैः ॥ १.१८ ॥

यदि वस्तुतो निर्वेदभावस्तर्हि महाराजसुलभाभिरपि भोग्यभौतिकविभूति-भिरसौ नैव शान्तिमुपयातीति निपुणमत्र प्रतिपादितम्। निर्विण्णं विश्वपतिं प्रति निदर्शनमुखेन स्वकीयं वैक्लव्यभावमभिव्यञ्जयन्नाह सुनयः —

क्व तनुर्नवयौवनाश्रया क्व विरागस्तव देव दारुणः।
न निदाघकठोरमातपं सुकुमारा सहते हि माधवी ॥ २ ३७ ॥

भक्तिभावोद्बोधिका गेयतात्र लोक्यताम्—

त्वमप्येवं देव कमपि सुखसेवं परतरं
भजन्नद्धा श्रद्धाधिकतरविशुद्धाशयतया।
अरण्ये पुण्ये वा क्वचन पशुशून्येऽपि विषये
ध्रुवां सिद्धिं विद्धि प्रगुणितसमृद्धिं करगताम् ॥ ६० ॥

तृतीये सर्गे देव्याराधनप्रकरणं प्रकीर्तितम्। तत्र सुनयेन सह विश्वपतेः शाकम्भरीमन्दिरं प्रति प्रस्थानप्रसङ्गे औचित्येक्षिकयोत्प्रेक्षणमिदं समीक्ष्यताम्, "कुम्भस्तनीभिः परिरभ्यमानाः शुभशकुनसूचका वारिपरिपूर्णा कुम्भा परिपाकाय कृताग्निप्रवेशतपसः फलमिव समश्नुवन्ति"—

समश्नुवानान् स्वपरोपताप—
वह्निप्रवेशोग्रतपःफलानि।
कुम्भस्तनीभिः परिरब्धकण्ठान्
सम्भावयामास स पूर्णकुम्भान् ॥ ३ ५ ॥

मन्दिरस्थविविधवाद्यादिध्वनिध्वननप्रयुक्तशब्दावली कियती खल्वर्थानु-गामिनीति विचार्यतामिह—

क्वचिद्विपञ्चीक्वणितानुविद्धैर्वेणुक्वणादानुगतैः सुगीतैः।
नृत्यत्प्रताङ्गीरसनाकलापसलापिमञ्जीररुतैश्च तारैः ॥
सम्मार्जनाकौशलदत्तरङ्गैराकारिताना मुखरैर्मृदङ्गैः।
शिखण्डिनां ताण्डवपण्डितानां केकाभिरेकान्तमनोहराभिः ॥ ४७ ॥

चतुर्थसर्गे विश्वपतिकृतं देवीस्तवनम्, तस्मै देव्या वरदानम्, तद्वशात्तेन लवणाब्धिनिर्माणम्, राजधानीप्रवेश, तस्य प्रतापवर्णनम्, तत्पुत्रहरिराज-वर्णनम्, हरिराजस्य यवनपतिना सह युद्धम्, यवनपतिपराजय, हरिराजेन विजयस्मारकत्वेन योधपुरदुर्गनिर्माण चैतावन्तो विषया विराजन्ते। तत्र त्रयोविंशतिश्लोकैः कृता शाकम्भरीस्तुतिः स्तोत्रसाहित्ये विलक्षणं स्थानमाद-धाति। पृथ्वीराजविजयाख्ये महाकाव्ये लवणाकरनिर्माणश्रेयो वासुदेव आवहति

किन्त्वत्र देवीप्रसादाद्विश्वपतिस्तत्साधयतीति विसंवादः। विश्वपतिपुत्रस्य हरिराजस्य पराक्रमप्रतिपादने ओजस्विनी काव्यशैली दर्शनीयास्ति। तद्यथा—

> कोदण्डं गाण्डिवस्याप्युपचितयशसश्चण्डतां खण्डयन्तं
> दोर्दण्डोद्दण्डदर्पप्रकटितविकटध्वानधन्यं धुनानः।
> काण्डीरः काण्डपातैरथरिपुरथिनां खण्डयन् मुण्डजालं
> तस्तारस्फारधारोद्धुररुधिरधुनीघोरणीभिर्धरित्रीम् ॥ ४.४६ ॥

पञ्चमसर्गे हरिराजपुत्रस्य सिंहराजस्य तद्भ्रातृजस्य भीमदेवस्य च शासनं विवेचितम्। सिंहराजेनात्र बन्दीकृता वैरिणा कोमलाङ्ग्य कन्या किन्नाम दुःखास्पदं जीवनं न यापयन्तीति मधुरया वक्रोक्त्या प्रतिपाद्य तद्वशादेवायं राजा संततिविहीन इति साधुतरं व्यञ्जितम्।[१] भ्रातृजं भीमदेवं राजानं विधाय वनङ्गते सिंहराजे तदाज्ञया भीमदेवो दिग्विजयमादृत्यापि न पितृव्य इव वैरिकुलकदर्थनमेव तत्र सर्वस्वं स्वीकुरुत इति तदीयविजययात्राया योग्यत्वं प्रतिपादयति कविवरः।[२]

षष्ठसर्गे भीमदेवतनयतो विग्रहदेवतो वल्हणं यावद्दशमहाराजेषु विग्रहदेवस्य, वल्लभस्य, बीसलदेवस्य च मुख्यं जीवनांशं विविच्यान्येषां प्रायेण नामोल्लेख एव कृतः। तत्र बीसलदेवकृतावन्तिविजयप्रसङ्गेऽवन्त्या वर्णनं कालिदासीयमवन्तिवर्णनं सश्रद्धमनुगच्छदिव प्रतिभाति।[३] बीसलदेवमुखेन महाकालेश्वरं स्तुवन् कविः हृदिस्थं सात्विकं सारल्यभावं भाषया चित्रयन्निव विभाति।[४] विग्रहदेवविहितगुर्जरविजयप्रकरणे तद्वैभवमुत्प्रेक्षते—

> यत्पुरं परितो रत्नैः पूरयित्वा प्रजापतिः।
> यानि शिष्टानि तान्येव नीरधौ निदधे ध्रुवम् ॥ ६.४ ॥

सप्तमसर्गानुसारं वल्हणपुत्रः प्रतापी नृपतिरनलदेवः पुष्करतीर्थमुपैति। तत्र चासौ प्रसङ्गवशात्पुरोहितमुखाच्चोहानवंशप्रवर्तनात्मकस्य ब्रह्मणो यज्ञस्य वर्णनं शृणोति[४]। सर्गस्यास्य शरद्वर्णनं पुष्करतीर्थकीर्तनञ्चामूलं मनो मोदयेते। शरदि प्रसभमनुरक्ता कमलिनी स्वस्वामिनः सूर्यस्य करैराकृष्यमाणा सत्यपि

---

१. प० स० ७-२७।
२. इत्थं विधाय जगतीजययोग्ययात्रा......॥ ५.६१ ॥
३. प० स० ४६-६२।
४. प० स० ६५-८०।
५. स० स० ५७-६०।

परपुरुषाणामिव भ्रमराणां सामीप्यान्नवोढया नायिकयेव न पारयति शिरो-ञ्चलमपाकर्तुम्—

> अन्तःसरागापि रुषामघोशेनालम्भ्यमाना सहसा करेण ।
> नितान्तमीष्यान्मुखपद्ममुद्रामुपालि नालं नलिनी विमोक्तुम् ॥७.७॥

भ्रमरगुञ्जितैः स्वागतवचनं व्याहरती वायुना लोलायमाना कमलिनी वर्षर्तुं बहिर्व्यतीत्य समागतस्य मरालस्य स्वागतार्थं जगाम इव—

> चिरप्रवासान्मिलितं मरालं पक्षानिलोद्धूततरङ्गलोला ।
> प्रत्युज्जगामेव समालपन्ती सरोजिनी षट्पदहुङ्कृतेन ॥ ७.१० ॥

पुष्करं वर्णयन् कविः कथयति यदगस्त्यमुनिना निःशेषं पीतमम्बुधिं विलोक्य विष्णुः कल्पान्ते शयनार्थं मन्ये पुष्करं सृष्टवानिति ।[1] अथ यस्य ब्रह्मणः कमण्डलौ मन्दाकिनी अपि सामस्त्येन प्रविश्य तत्रैव मण्डलितप्रवाहा बभूव, स ब्रह्मा तमेव स्वकीयं कमण्डलुं पुष्करजलेन कोटिशः पूरयति, किन्तु नैतेन स्तोकमपि पुष्करस्य पूर्णता व्यपैति ।[2]

अष्टमे सर्गेऽनलदेवस्यावशिष्टं चरित्रं चित्रीकृत्य तद्वंशजानां क्रमेण जगदेवस्य वीसलदेवद्वितीयस्याजयपालस्य च जीवनमुपन्यस्तम् । सर्गान्ते वसन्तोपवर्णितः । तत्र यज्वा वसन्तो विरहकातरान् हन्तुं सम्पादिते यज्ञे पलाशैरिन्धनैर्मनसिजमग्निं प्रज्वाल्य वनवासिनो द्विजान् (पिकान्) ऋत्विजः कृतवानिति पश्यतां कल्पनाकौशलः ।[3] कुरवकं वर्णयता कविनोक्तं यत्प्रसवस्तु (पुष्पफलोद्गम इत्यर्थः) विधिवशः किन्तु कुरवकात्परो रसिकस्तरुः नान्यः कश्चिदिति निश्चप्रचम्, यतः प्रियायाः सकृदालिङ्गनसमुद्गता अस्य रोमहर्षाः (कण्टकाः) अधुनापि शैथिल्यं नोपयान्ति—

> विधिवशः प्रसवोऽस्तु यथा तथा
> कुरवकान्न परो रसिकस्तरुः ।
> सकृदुपात्तवधूपरिरम्भजाः
> शिथिलिता यदमुष्य न कण्टकाः ॥ ८.४५ ॥

---

१. अ० स० २९ ।

२ अ० स० ३० ।

३. ज्वलयताथ पलाशमयेन्धनै—
मनसिजज्वलनं मधुयज्वना ।
विरहिणामभिचारमखे द्विजः
प्रथमऋत्विगकारि वनप्रियः ॥ ८ ४१ ॥

नवमसर्गानुसारमजयपाल· कामिनीभिः सहोद्यानं प्रविश्य वासन्तीं शोभामास्वाद्यमान· काञ्चिदलौकिकीं सुन्दरीं विलोक्य कामकाष्ठां भजते। सा सुन्दरी विलक्षणाभिर्भङ्गीभिर्नृपतिविषयां स्वकीयामनुरक्तिमभिव्यञ्जयन्ती तदक्ष्णोः पुर एव सरोवरेऽन्तर्हिता। तां सम्प्राप्तुमतितरां विकलश्चासौ राजा सिद्धपुरुषपरामर्शेन भगवदाराधनबलेन च नागलोकं प्रविशति। तत्र च शेषस्य सहयोगेन सुदामनागस्य दुहितरं पूर्वोक्तां सुन्दरीं विजया परिणीय तया सह राजधानीं प्रत्यागच्छति। अत्राकल्यता कवेर्बिम्बविधानम्—

घनकुञ्जतिरोहितं युवत्यास्तरुमुच्चैः कुसुमाशया युवत्या।
कलकङ्कणझङ्कृतं निशम्य क्षणसंभावितवैशसा सपत्नी॥
स्फुरिताधरपल्लवा सकम्पा पवमानोल्लसितेन कापि वल्ली।
अरुणं मुखमातपेन भूयोऽप्यरुणिम्नैव तिरोहितं वहन्ती॥
द्रुतमुच्चलितं कृतप्रयत्ना विनिरुद्धा घनवीरुधां वितानै.।
सहसावचितै. सह प्रसूनैर्न दुकूलं गलितं विदाञ्चकार॥

एवमेव "कामिभिरवचितपुष्पपंक्तिमन्वेति भ्रमरसमूह" इति वक्तव्ये "परिणयोपरान्तं पत्या नीयमानायाः सखिभिर्दूरमनुगतायाश्च नायिकायाः पतिगृहगमनकालिकं स्नेहाञ्चितं चारु चित्रं" समीक्ष्यतां हृदयाक्षिभिर्भवद्भि.—

जननावधिसेवितां नितान्तं वत सत्स्वामिवधूमिवान्तरागाम्।
स्वपदव्यसनेऽपि षट्पदाली सुमन सन्ततिमन्वियाय दूरम्॥

दशमसर्गस्य कथानुसारं अजयपालात्मजस्य राज्ञो गंगदेवस्य पुत्रेण सोमेश्वरेण कर्पूरदेवी परिणीयते। कालान्तरे पृथ्वीराजो माणिक्यराजश्चेति पुत्रद्वयं सा देवी प्रसूते। अश्विनीकुमाराविव समानशोभाशालिनौ तौ पृथ्वीराजमाणिक्यराजौ पितृप्रदत्तराज्यं समं विभज्य शासनं कुर्वन्तौ रेजतुः। इत. पृथ्वीराजवंशवर्णनमारब्धुकामः कविरवशिष्टेऽस्मिन् सर्गे तावत्पृथ्वीराजस्य महिष्ठं जीवनं कीर्तितवान्। तत्र प्रधानस्थलानुसारमसौ स्वात्मनि प्रसभमनुरक्तां जयचन्द्रदुहितां कान्तिमतीं हरणपूर्वकं परिणिनाय। अथ नैकशः पराजित्य निगडितमपि स्वकीयं कुटिलं शत्रुं शहाबुद्दीनं दयया मुक्तञ्चकार। भविष्यति तेनैवायं पराजितोऽन्धीकृतश्च। किन्त्वन्ते चन्दाभिधेन सहयोगिना समुद्बोधित. सन् शब्दवेधिना वाणेन तं दुष्टं जघान।

कान्यकुब्जेश्वरकन्यकाया. कान्तिमत्याः सखी समागम्य पृथ्वीराज प्रति कान्तिमतीसौन्दर्यमुपस्थापयन्ती तस्या. पूर्वरागवत्याश्चित्रं कीदृश्या शब्दावलीतूलिकया चित्रयतीति विलोकनीयमस्ति। तद्यथा—

जातौ कफोणौं शिथिले कपोलं कराम्बुजन्मन्यथ नासिकायाम् ।
निधाय दृष्टिं त्वयि चित्तवृत्तिं निनाय दीना कतिचिद्दिनानि ॥ १०.२५ ॥

कामेनातितरां पीडिता मत्सखी मरणासन्नदुःखान्यावहती सूचयन्ती सा विचित्रया खलु भङ्ग्या कथयति यद्भगवतः शङ्करादवाप्तवस्तूनि स्वसेवारतायै कान्तिमत्यै समर्पयन् कामदेवः क्रमेण दाहं मूर्च्छां च समर्प्य सम्प्रति ततः प्राप्तं स्वकीयमनङ्गत्वमपि तस्यै प्रदातुं प्रस्तुतोऽस्ति—

अवाप्तदाहस्तनुते स्म दाहं मूर्च्छाङ्गतोऽसौ व्यचरच्च मूर्च्छाम् ।
मन्ये मनोभूरतनुत्वमस्यै निजं पदं दित्सति सेव्यमानः ॥ १०.३६ ॥

प्रेमव्यापारविलसिते प्रसङ्गे कान्तिमतीहरणावरोधकं समापतन्तं कान्यकुब्जेश्वरस्य सैन्यं कविरुचितोचितया शृङ्गारवीरोभयरसानुकूलया भाषया विवृण्वन्नाह—

रिङ्गत्तुरङ्गं विलसच्छताङ्गमुत्तुंगमातङ्गमुपात्तपत्ति ।
स्फुरत्पताकं घनघोषघोरं सैन्यं रिपोः सन्निदधे तदानीम् ॥ १० ११७ ॥

एकादशद्वादशसर्गीयकथावस्तुनि पृथ्वीराजस्य वंशजाः षड्राजानो विषयीकृताः । तत्रान्येषां नामाद्युल्लेखपूर्वकं प्रायेण सम्पूर्णेऽप्यस्मिन् सर्गद्वितये हम्मीरदेवस्य शासनादिकं प्रस्तुतीकृतम् । तुलादानम्, यज्ञसम्पादनम्, अलावद्दीनस्य रणस्तम्भपुराक्रमणम्, हम्मीरमहिषीणां "जोहर" कीर्तनम्, युद्धवर्णनम्, हम्मीरस्य वीरगतिप्राप्तिश्चेति विषया अत्र महत्त्वं भजन्ते । हम्मीरदेवस्य प्रतापं व्याजेन स्तुवन् कविः कथयति—

करावलम्बं वितरन् प्रजानां करग्रहं नाम करोतु सम्यक् ।
इदं त्वयोग्यं जगतीपतिर्यद् बबन्ध मित्रं रिपुवद् गुणेन ॥ ११.२० ॥

हम्मीरस्य तुलादानवर्णने ब्राह्मणानां लोभप्रवृत्तिं स्फोरयन् लिलेख यद् यथा यथा स्वर्णादिभारेण तुलाकोटिरधो जगाम तथा तथा ब्राह्मणानां लोभ ऊर्ध्वं जगाम, स्वर्णादिभारवर्धनेन सह तेषां तादृङ्मनोरथोऽपि अवर्धत, ईश्वरांशजो खलु राजा इति कृत्वा हम्मीरस्य हृदि वसन् विष्णुः स्वकीयं सम्पूर्णं गुरुत्वमस्य देहे प्रकटयेदिति ते भगवन्तं प्रार्थयामासुः ।[१] अथैका वीरोक्तिराकर्ण्यताम् । "करदानानुबन्धनं स्वीकृत्य भवद्भिरलावद्दीनः सन्धेयः" इत्युक्ते वैरिदूते हम्मीरदेवश्चौहानवंशजानां राज्ञामत्र विषये शूरोचितं स्वभावमुद्घोषयन्नाह—

रिपुमण्डलमर्कमण्डलं वा तरसोच्चैः पदलब्धये भिनत्ति ।
तनुते प्रणते करावलम्बं करदानं नहि चाहुवाणवंशः ॥ १२.२६ ॥

---

१. एकादशसर्गस्य ४५-४६ ।

अलावद्दीनसैन्येन भवदीयं पुर परितोऽवरुद्धमिति दूतस्य दर्पोक्तिं भर्त्सयन् स प्राह यद् "मदनुपस्थितावेतत्कृतम्, नात्र काचिद्वीरता, शून्यं सदनं जम्बुकोऽपि निर्भयं प्रविशति" इति। तथाहि—

> इयती कियती विकत्थना वा यदि रुद्धं पुरमङ्गमत्परोक्षम्।
> सदनं यदि शून्यतामुपेत् प्रविशेत् तत्र जवेन जम्बुकोऽपि ॥ १२.३५ ॥

हास्योदाहरणमालोकयन्तु। सगरे कश्चन यवन. खड्गेन वैरिणो वर्मणि प्राहरत्, तेन क्षत्रियस्य वर्म तु छिन्नं नाभूदपितु तत्सघर्षेणोद्गताग्निः यवनसैनिकस्य श्मश्रुणं ज्वालयन् तमेव मूर्च्छित चकार—

> उत्क्षिप्योच्चै प्रेरितस्तीक्ष्णखड्गो नाल भेत्तुं वैरिणो वारबाणम्।
> तत्संघट्टादुत्थितोऽङ्के कृशानुर्निन्ये मूर्च्छां लम्बकूर्चावलम्बी ॥ १२.६३ ॥

रणस्थले क्षणे क्षणे हम्मीरं अलावद्दीनं प्रति चाभिसरन्त्या जयश्रियो धृष्टतमां प्रतिक्षणान्योन्यसेवनपरा स्वैरतामुपस्थाप्य कविस्तुमुलत्वं युद्धस्य साधुतरं व्यञ्जयति—

> विश्राम्यन्ती तत्र शुभ्रातपत्रच्छायासीना स्वैरमेवोभयत्र।
> भूयो भूयो भूभृतो सञ्चरन्ती पार्श्वं प्रापन्नैव खेदं जयश्री. ॥ १२.७५ ॥

हम्मीरस्य सप्तम पूर्वज. पृथ्वीराज आसीत्। त्रयोदशे सर्गे तस्य भ्रातुर्माणिक्यराजस्य तद्वंशजाना च शासनादिकं वर्णितम्। माणिक्यराजतः अर्जुनं यावत्पञ्चदशभूभृता वर्णन संक्षिप्यार्जुनपुत्रस्य सुर्जनस्य जन्म-बाल्य-यौवन-प्रतापानामुपस्थापनं विस्तरेण कृतम्। तत्र सुर्जन. स्वकीयं प्रतापं विस्तारयन् दिग्विजयसंग्रामे तैलङ्गकेरलान्ध्रादिनृपतीन् तद्भटान् च यमसदनमगमयदिति तदङ्गनानां दु.स्थितिवर्णनमुखेनैव कविर्ध्वनयति—

> तैलङ्गीरङ्गचौरः प्रसभमपहरन् केरलीकेलिवार्ता—
> मान्ध्रीनीरन्ध्रपीनस्तनघुसृणघनालेपलक्ष्मीं विलुम्पन्।
> कार्णाटीकर्णपूरप्रणयमपनयन्नाशिरासीद् यदीयो
> लाटीताटङ्कचक्रद्युतिचलनचमत्कारहारी प्रतापः ॥ १३.७८ ॥

चतुर्दशसर्गस्य सम्पूर्णमाकर्षणं महाराजस्य सुर्जनस्य वैवाहिकक्रियाकलापानभिव्याप्य विलसति। अत्रान्योक्तिमुखेन कथानकं विभूषयन् कविः साफल्यमवाप। दाम्पत्यचित्रणात्मके पञ्चदशसर्गेऽपि किमप्यधिकं वाच्य-

विलक्षणं ग्रीष्मवर्णनेन प्रकाश्यते। षोडशसर्गीयकथावस्तुनि सम्राजा अकबरेण विहितं रणस्तम्भपुराक्रमणं प्रतिपादितम्। सप्तदशसर्गे युद्धवर्णनमस्ति। अष्टादशसर्गानुसारं सुर्जन अकबराय रणस्तम्भपुरं समर्प्य तस्माच्च नर्मदा-मथुरा-काशीप्रदेशानां भूभागानुपादाय तेन सह सन्धि करोति। अवशिष्टेऽस्मिन् सर्गांशेऽग्रिमे च सर्गे सुर्जनस्य तीर्थयात्रां वर्णयन् तीर्थानां मनोहारि चित्रं चोपस्थापयन्नेकोनविंशतिसर्गस्यान्ते कवि काश्यामस्य महाराजस्य देहत्यागं ब्रह्मसायुज्यप्राप्तिञ्च कीर्तयामास। विंशतितमे सर्गे प्रधानतया सुर्जनपुत्रस्य रावभोजस्य राज्याभिषेकः प्रतापश्च वर्णितौ।

सन्ध्यावर्णने जनकाम्बया श्वसुराम्बया वा सन्ध्यामुपमीयमानः कविर्लिलेख यद् यथा पतिपत्न्यो. प्रेमप्रसङ्गे व्यवधानमुपस्थापयन्ती सा (वार्धक्यातिशयत्वाद्) शीघ्रमेव पञ्चत्वमुपयाति तथैव दिवसरजन्यो. समागमे व्यवधानभूता सन्ध्यापि झटिति विनष्टा—

उचितं तदेव यदतीव मत्सरा स्थितिमाससाद न चिर पितृप्रसूः।
स्फुटमन्तरायितमकारणं यथा बत यामिनीदिवसयोः समागमे ॥१४.३८॥

"वस्तुतो विरहाग्निना ज्वलन् कामिलोको निष्कारणं चन्द्रमस दाहकत्वेनाक्षिपति। अथवा चन्द्रस्तु लोकं शीतलयितुं स्वकीयां चन्द्रिकां विकिरति किन्तु यदि तया चातकमिथुनं दह्यते तर्हि न तत्र चन्द्रस्य कश्चन दोष" इति चन्द्रोदयं वर्णयन्नाह—

यदि चन्द्रिकापि मिथुनं रथाङ्गयोरदहत् तत्र शशिनोऽनुयोज्यता।
विरहाग्निदग्धमनसां हि कामिनामपि जीवितं व्रजति व्रजकीलताम् ॥१४.६३॥

विवाहविधौ शिलातलेन सह सुर्जनहृदयमप्यारोहती कनकावती शिलातलस्य कठोरत्वात् पादेन स्पर्शमात्रं चकार किन्तु सुर्जनस्य प्रेमाम्बुपूरिते हृदये सर्वथा ममज्ज एव—

अधिरोपिता नववधू शिलातल हृदयं निजञ्च परिणायकेन सा।
प्रथमं कठोरतरमस्पृशत् पदा चरमे ममज्ज करुणाम्रदीयसि ॥१४.७५॥

संभोगे नाभिप्रदेशमुपगते पतिकरे नवोढया प्रयुक्तं "ऊँ ऊँ" इति प्रतिषेधात्मकं वचनं कामदेवस्य माङ्गलिक मन्त्राणां प्रणव इति प्रतिपादितम्—

उपनाभि चञ्चलकरे नरेश्वरे प्रतिषेधवाचकमसर्वमीरितम्।
मदनस्य मङ्गलऋचस्तदाभवत् प्रणवो नवोढहरिणीदृशोवच ॥१४ ८८॥

पतिगृहं गच्छन्तीं कनकावती माता समुपदिशति—

भवन्ति भार्याः शतशो महीभृतां गुणैर्भवत्येकतमा प्रतिष्ठिता ।
तारा कलत्राण्यखिला कलाभृतो न रोहिणीसाम्यमुपैति काचन ॥१५.३०॥

वारिविहारवर्णनपरं पद्यमेकमालोक्यताम्–काचित् कामिनी हस्ताभ्यां शीघ्रं शीघ्रं प्रियतमे जलं क्षिपन्ती विलसति। हस्तचाञ्चल्यात् नर्तनपरं तस्याः स्तनद्वयं तदा विलक्षणामभिख्यामवाप। प्रियतमः तत्सौन्दर्यं पायं पायं तृप्तिं न प्रयाति। अन्यत्सर्वं विहाय तस्य दृष्टिस्तत्रैव निबद्धास्ति। सहसा तद्दृष्टिधार्ष्ट्यं विलोक्य तया कामिन्या भूयिष्ठजलेन प्रियतमदृशोः भृशं ताडनमारब्धम्—

कान्ताभिषेकाय पुरः 'समुद्यताभुजद्वयान्दोलननर्तितस्तनी ।
दोर्मूललोलेक्षणमेनमुन्मुखी विलोक्य भूयिष्ठमसिञ्जदक्षिणी ॥१५.६३॥

युद्धकाले रजोभिरन्धीकृते खल्वाकाशे रजोगुणः पदं न्यधात् रक्तप्रवाहपूरिते स्थले च रजोगुण, परं सत्त्वगुणोऽन्यत्र स्थानमलभमानः सन् भटानां हृदयमेव विवेश—

···राजस्तमोरुद्धतरावकाशे जगत्यनासाद्य पदं कुतश्चिद् ।
विवेश सत्त्वं सुतरां भटानां स्वतन्त्रमन्तःकरणं तदानीम् ॥१७.१५॥

मेघवर्णने कादम्बिनी कालभुजङ्गजायया साङ्गं रूपयन् कविरुक्तवान्–

कादम्बिनी कालभुजङ्गजाया प्राणान् पिपासुः पथिकप्रियाणाम् ।
ऊर्ध्वीकृताम्भोदफणा सनादं व्यालोलयद् विद्युतमुग्रजिह्वाम् ॥१८.६८॥

मेघे गर्जिते पिकोऽपि चुकूज इति पिकस्य कूजनेन मिश्रितं मेघगर्जनं वीणास्वरमिश्रितः दुन्दुभिध्वनिरिव बभूव —

आस्वाद्य जम्बूरसमत्यपुष्टश्चुकूज यद् गर्जति तोयवाहे ।
भेरीमुखे भाङ्कृतिभाजि तन्त्रीनिक्वाणवत् तद् द्वितयं बभूव ॥१८.७३॥

भटानां कुलाङ्गनानां कृते च लज्जायाः परा काष्ठा प्रतिपादयन्ती उक्तिरेषा विलोक्यताम्—

अतः परं किन्नु विडम्बनं स्यादपत्रपायाः परमावधिर्वा ।
पृष्ठं परे यत्समितौ भटानां पश्यन्तिवक्षोऽपिकुलाङ्गनानाम् ॥१७.४३॥

सुर्जनः काश्यां देहत्यागानन्तरं शिवस्वरूपतां जगाम। अत्र शिवं प्रति सिष्टमुपहसन् कविः कथयति यत्प्रभुः श्रेष्ठो वा स्यात् प्रसन्नताकाष्ठां भजमानो

वा भवेत्, स स्वकीयवैभवानुसारमेव सेवकं पुरस्करोति। सेव्यमान. शिवोऽपि सुर्जनाय शरीरच्छादनमेकं गजचर्म वाहनं चैकं वृषभं प्रददौ—

भूरिप्रसादसुमुखोऽपि सदीश्वरोऽपि भृत्यं यथाविभवमेव पुरस्करोति।
यद्वाहनं वृषभमम्बरमैभकृत्ति तस्मै ददे प्रमुदितोऽपि स कृत्तिवासा ॥१९.४४॥

यद्यपि महाकाव्यस्यास्य सौन्दर्यलसितं वास्तविकं स्वरूपं समुपस्थापयितुं केषाञ्चिदुदाहरणानां प्रस्तुतीकरणं किञ्चित्करमेव, तथापि महाकवे. कवित्वमेतेन शक्यतेऽनुमातुम्। युगानुकूलं हृदयावर्जकं च कवित्वमिदं सम्पूर्णमपि महाकाव्यं समानरूपेणाभिव्याप्य विराजते। सारल्येन लालित्येन वैलक्षण्येन च पूर्णतया विलसितं काव्यमिद संस्कृतमहाकाव्यपरम्पराया महत्त्वपूर्णं पदमादधाति। ऐतिह्यदृष्ट्या समग्रमपि ग्रन्थममुमालोच्य निर्णीयते यदस्य कर्त्ता न तादृश इतिहासवेत्ता यादृश कविरिरिति। अथवा विद्वानयं इतिहासस्य पर्याप्तं ज्ञानं वहन्नपि काव्यत्वमेव पूजितुं श्रद्धत्ते। प्रकृतराजवंशवर्णने ऐतिह्यमाधारीकृत्यापि सर्वत्र काव्यत्वमेव समुच्छालितम्। ऐतिहासिकमहाकाव्यत्वेन व्यपदेशं लभमानेऽप्यस्मिन् सुर्जनचरिते प्रतिपादिता: सर्वा घटना ऐतिहासिक्य एवेति न शक्यते कथञ्चिदपि वक्तुम्।

———

# संस्कृत-वृत्तम्

डॉ० राधावल्लभः त्रिपाठी

### प्राच्यविद्यापरिषत्सम्मेलनम्

पुण्यपत्तने अखिलभारतीय प्राच्यविद्यापरिषद. २८तमं सम्मेलनं जून-मासस्य १-३ तिथिषु समायोजितम् । तत्र संस्कृतश्रेण्या अध्यक्षत्वं डॉ० श्री रामोपाध्यायैर्निर्व्यूढम् । अस्यां श्रेण्यां संस्कृतसाहित्यसम्बन्धिनः प्रायशो २०० संख्याकाः लेखाः प्रस्तुताः । तेषु राजशेखरस्य रंगपीठेऽवदानं विषयीकृत्य प्रस्तुत डॉ० राधावल्लभत्रिपाठिनो लेखः सर्वोत्तम इति निर्णीतः, अस्य कृते वी० राघवन्-पारितोषकश्च लेखकाय प्रदत्तः ।

### उज्जयिन्यां कालिदासमहोत्सवः

नवम्बरमासस्य ११-१८ तिथिषु उज्जयिन्यां कालिदास-महोत्सवः प्रति-वर्षानुसारं महता सौष्ठवेन समायोजितः । समागतविद्वत्सु श्री ल० ओ० जोशी, श्रीमती कमला रत्नम्, डॉ० विद्यानिवास मिश्रः, डॉ० एस० वी० सोहानी, श्री गोवर्धन पांचालः, डॉ० रे० प्र० द्विवेदी, डॉ० कमलेशदत्त त्रिपाठी च महोत्सवमिमं मण्डयन्ति स्म । शोधपत्रपरिषदि कालिदासतिथिनिर्णयविषये डॉ० रामचन्द्रत्रिपाठिनः, रघुवंश-व्याख्या-विषये पं० बाबूलाल शुक्लस्य, रघुवंश-पद्य-विशेष-विषये श्री वेंकटाचलमहाभागस्य, मेघदूतस्य च काव्यविधानिर्णय-विषये डॉ० राधावल्लभस्य त्रिपाठिनो लेखाः सविशेषं चर्चिता. । कालिदासीय-रंगपीठ-विमर्शः डॉ० रेवाप्रसाद द्विवेदि-कमलेशदत्त-त्रिपाठिभ्या साधु विहितः । १४ दिनाकस्यापराह्णे सम्पन्ना सस्कृत-कवि-गोष्ठी सरसकवितामाधुरीधारया समुपस्थितसहृयानमन्दानन्दसन्दोहेन स्नपयति स्म । तत्र कमलेशदत्तत्रिपाठि-रेवाप्रसादद्विवेदि-श्रीनिवासरथ-भास्कराचार्यत्रिपाठि-सुधाकराचार्य त्रिपाठि-रहसविहारिद्विवेदि-नारायण शास्त्रिखिस्ते-राधावल्लभत्रिपाठि-रतिनाथ झा-प्रभृतय सुकवय. संस्कृतकवितामधु श्रोतृपेयं प्रवाहयन्ति स्म । गोष्ठ्या. संचालनं श्रीमद्भास्कराचार्यत्रिपाठिभिर्विहितम् । विक्रम विश्वविद्यालयस्य कुलपति-महाभागः श्रीमान् प्रभाकर-नारायण-कवठेकरोऽपि काव्यपाठमत्र व्यदधात् । रात्रौ महाकवे. भासस्य प्रतिमानाटकं नितान्तमेव हृदयावर्जकतयाऽभिनीतम् ।

**सागरविश्वविद्यालये कालिदासोत्सव**

अस्मिन् संवत्सरे कालिदासोत्सव सुरुचिसम्पन्नतया सागरविश्वविद्यालयस्य संस्कृत-विभागे सम्पन्न । १७-११-७८ दिनांके कालिदास-विषये विचारगोष्ठी समायोजिता यस्या च डॉ० कमलेशदत्तत्रिपाठी, डॉ० रेवाप्रसाद द्विवेदी, डॉ० नन्दकिशोरदेवराज, डॉ० बच्चूलालावस्थी च प्रमुखवक्तार आसन्। गोष्ठ्या संचालनं डॉ० राधावल्लभत्रिपाठिना कृतं, अध्यक्षता च डॉ० श्रीरामोपाध्यायवर्यै विहिता । विषयप्रवर्तनं काशीहिन्दूविश्वविद्यालयस्य प्राच्यविद्यासंकाये धर्मशास्त्रविभागाध्यक्षेन श्रीकमलेशदत्तत्रिपाठिना कृतम् । प्राचीनसाहित्यस्य प्रासंगिकताप्रसंगेन कालिदासीय-काव्यमाकलयन् त्रिपाठिमहाभाग —कालिदासो मानवीय-गरिमाण सदा रक्षति अत एव साम्प्रतिक-समयेऽपि स समाद्रियत इति प्रत्यपादयत् ।

कालिदासीयकाव्यानां सरस-ललित-वाचा स्वोपज्ञा भाषानुवादा अपि मनोज्ञतरा· श्रीत्रिपाठिना अस्मिन्नवसरे पठिताः। काशीहिन्दूविश्वविद्यालयस्य सेवानिवृत्त-दर्शनशास्त्र-प्राध्यापका दार्शनिकेषु साहित्यकारेषु सुप्रथिता श्रीमन्तः नन्दकिशोरदेवराजवर्या· श्रीत्रिपाठिनो वक्तव्यं पुरस्कुर्वन्त आहुर्यत् कालिदास पुरातन-भारतस्य समग्रमपि नैतिकं सांस्कृतिकं च मूल्यबोधं सम्प्रेषयति अत एव स श्रेष्ठ· । डॉ० बच्चूलालावस्थीमहाभागः वैदिक-चेतनया कालिदासस्यान्त सम्बन्धं गवेषयामास । श्रीमद्भि· आचार्यरेवाप्रसादद्विवेदिभि. कालिदासीय कविचेतनाया विश्लेषणं तदीय-कालजयित्वं साधु व्याख्यातम् । अध्यक्षमहाभागै उपाध्यायवर्यै. स्वभाषणे कालिदासस्य जीवनादर्शा विवेचिता. ।

**सागर-सम्भाग-संस्कृत-सम्मेलनम्**

अरविन्दाश्रमस्य श्रीमातु शततम-मंगल जन्म-ग्रन्थिमुपलक्ष्य सागरसम्भागस्य संस्कृतसम्मेलनं नवम्बरमासस्य २५-२६ दिनाकयो प्राचीन-पवित्र-तीर्थस्थले जागेश्वरधाम्नि बादकपुरे प्रववृते । सम्मेलनस्योद्घाटनं मध्यप्रदेश-विधानसभाध्यक्षैः श्रीनेवालकरमहाभागै प्रथमदिनस्यापराह्णे विहितम् । अध्यक्षता श्रीमता भैयालालसराफेन विहिता । दमोहनगरस्य संस्कृतपरिषदो मन्त्री पं० शारदाप्रसादपाठकः प्रमुखातिथीनां स्वागतं व्याजहार, संस्कृत भाषायाः महत्ता च विशदीचकार। अनन्तरं विश्वहिन्दूपरिषद सागरशाखाया मन्त्री श्रीमधुसूदनवाखलेमहाभाग संस्कृतसम्मेलनस्य रूपरेखा परिषत्प्रतिवेदनं च प्रस्तुतीचकार। उद्घाटनभाषणे श्रीनेवालकरमहाभागेन हिन्दुत्वं विशदतया व्याख्यातं, संस्कृतं नाम नास्ति कठिनं दुर्बोधं, अस्य व्यवहार वर्धनीयो येन एतत् सर्वजनसुलभं भवेदिति च प्रतिपादितम्। अध्यक्षमहाभागेन संस्कृत

साहित्यस्य विशालता सम्पन्नता च सुविवेचिता, जागेश्वरधाम्नि संस्कृत-शोध-संस्थानं स्थाप्यमिति प्रस्तावश्च कृतः । प्रतिवेदनं प्रमुखातिथेरध्यक्षस्य च भाषणे विहाय सभाया समस्तमपि कार्यजातं संस्कृतेनैव सम्पन्नं, संचालनं च सम्मेलनस्य संयोजक· डा० राधावल्लभ त्रिपाठी विहितवान् ।

द्वितीयदिवसे प्रातःकालात् विचारगोष्ठीद्वयं संयोजितं, यदाध्यक्ष्य पं० जीवनलाल अग्निहोत्री चकार । प्रथमा गोष्ठी पाठशाला-पद्धतिं प्रान्तस्य विद्यालयेषु संस्कृतस्य स्थितिं च विषयीकृत्य प्रवृत्ता । यस्यां पञ्चदशवक्तारः स्वविचारान् प्रकटयाम्बभूवु । पाठशालापद्धते रुपादेयता सर्वैरुरीकृता, किन्तु सा नूतन-ज्ञान-विज्ञानै संवलिता स्यादिति प्रस्तावो विहित· । प्रान्तस्य विद्यालयेषु संस्कृतस्य स्थितिरुन्नेया तदुपेक्षा च परिहार्येति सर्वेषां मतिरभवत् ।

द्वितीया गोष्ठी संस्कृत-विद्याया उच्चतराध्ययनानुसन्धानादिकं सम्प्रति तस्याः प्रासंगिकता चाधिकृत्य प्रवर्तिता । उभयोरपि गोष्ठ्यो· कार्यजातं संस्कृतेन सम्पादितं, संचालनं च राधावल्लभत्रिपाठिना कृतम् ।

अपराह्णे कालिदासोत्सव सम्पन्नः । तत्र राधावल्लभत्रिपाठिना पण्डित-गोस्वामिना च कालिदासाय काव्यमुमनोंजलिरर्पितः । प्रमुखवक्ता पं० जीवन-लाल अग्निहोत्री बभूव ।

अस्मिन्नवसरे सागरविश्वविद्यालयस्य संस्कृत-परिषदा प्रकाशितानां ग्रन्थानां नूतनसंस्कृतपत्र-पत्रिकाणा च रुचिरं प्रदर्शनमपि संयोजितम् । परिषद· प्रकाशनोद्योग-परिचयेन समुपस्थिता विद्वासः प्रीता लाभान्विताश्च ।

प्रथमदिवसे उद्घाटनमनु सांस्कृतिक-सन्ध्या समायोजिता । यस्यां दमोहनगरस्थ-सरस्वतीशिशुमन्दिरबालका· भक्तध्रुव-नाटिकां संस्कृतेन प्रस्तूय अभिनयपाटवेन उच्चारणशुद्धचा रसिकहृदयानि जह्रुः । जागेश्वरधाम्न· संस्कृतविद्यालयच्छात्रा शाकुन्तलचतुर्थाकाभिनयेन शंकर-मण्डनमिश्रसंवादेन च चमत्कारमातेनु ।

सम्मेलने शतप्रायाः पण्डिता· सम्मिलिता । इमे प्रस्तावाः सर्वसम्मत्या पारिता·—

१—येषु विद्यालयेषु शास्त्र्याचार्यपर्यन्तं शिक्षण कल्प्यते, तेभ्यो महाविद्यालयानां समकक्षं मान्यता देया, संस्कृतविद्यालयानां यत्र मध्यमापर्यन्तमध्यापन नियोजितं· तत्र उच्चतरमाध्यमिकविद्यालयानां समकक्षं मान्यता कल्पनीया । तदनुसारं च संस्कृत-विद्यालयाध्यापकाना वेतनमानानि संशोध्यानि ।

२—बान्दकपुरस्थ-जागेश्वर-धाम्नि श्री-शिव-संस्कृत-शोध-संस्थानं

स्थाप्यम् । जागेश्वरधाम-न्यास-सभाया अधिकारिणो निवेद्यन्ते यत्ते संस्थानस्य कृते त्वरितं पुस्तकालयस्य पाडुग्रन्थाना संग्रहालयस्य च व्यवस्थां सम्पादयेयुः, शोधनिर्देशाय पण्डितवरेण्यं कमपि संस्थानस्य निर्देशकपदे नियो-जयेयुश्च ।

३—आकाशवाणीत संस्कृतशिक्षणस्य व्यवस्था समुपकल्प्या ।

४—डाकं-तार-विभागेन संस्कृतभाषया शुभकामनादिप्रेषणाय कतिपय-सस्कृत वाक्यानि स्वीकार्याणि ।

५—प्रत्येकस्मिन् मण्डले संस्कृतसमितिः स्थाप्या, यस्या. सभासु संस्कृतेन कार्यजातं निर्वहणीयम् । मण्डलसमितीना संयोजनेन संभागसमितिः निर्माप्या ।

६—विद्यालयेपु महाविद्यालयेषु च संस्कृतशिक्षकाणां नियुक्तिषु शास्त्र्याचार्योत्तीर्णेभ्यः प्राथमिकता देया । शास्त्रिपरीक्षोत्तीर्णाय च महाविद्या-येषु विश्वविद्यालयेषु नियुक्तिर्देया ।

७—प्रतियोगितापरीक्षासु संस्कृताय उचितं स्थानं देयम् । तत्र संस्कृत-विषयेऽपि साहित्य-दर्शनादीनां प्रश्नपत्राणि स्यु ।

८—प्रथमापरीक्षोत्तीर्णाय विद्यार्थिने उ० मा० विद्यालयस्य नवमकक्षायां प्रवेशो देयः । मध्यमापरीक्षोत्तीर्णाय छात्राय पूर्वमाध्यमिकशालायाम् अध्यापक-त्वेन नियुक्तिं प्रदेया, बी० टी० आई-प्रशिक्षणार्थं च तस्मै अनुमतिर्विधेया । एवमेव शास्त्रिपरीक्षोत्तीर्णस्य कृते बी० एड्०—प्रशिक्षणार्थं व्यवस्था स्यात् ।

९—उच्चतरमाध्यमिककक्षापर्यन्तं संस्कृतविषयोऽनिवार्यः स्यात् । प्रदेशस्य सर्वेष्वपि माध्यमिकोच्चतरमाध्यमिकविद्यालयेषु संस्कृताध्यापकाना नियुक्तय. कार्याः ।

१०—बान्दकपुरस्थ-जागेश्वरधाम्नि प्रवर्तमानः वेदांगविद्यालयः महा-विद्यालयस्वरूपं लम्भनीयः ।

११—आधुनिकसंस्कृतविदुषां सचित्रपरिचयः प्रकाश्यतां नेयः ।

१२—मध्यप्रदेशे सस्कृतविश्वविद्यालयः स्थापनीयः ।

१३—उच्चतरमाध्यमिकशिक्षामण्डलान्तर्गत-संस्कृतविषयस्य पाठ्यक्रम-निर्धारणे पाठ्यपुस्तकानां संकलने चयने च शास्त्र्याचार्यादिविशेषज्ञानां परामर्शो ग्राह्यः ।

---

## ग्रन्थसमीक्षणम्

आधुनिक-संस्कृत-नाटक (भागद्वयम्)—डॉ० रामजी उपाध्यायः, पृष्ठाः—१२७१, प्रकाशिका—संस्कृतपरिषत्, सागर विश्वविद्यालयः, १९७८। हिन्दीभाषया विरचितम्।

नैतत्तिरोहितं विपश्चिदपश्चिमानां यत् चिरकालाद् विद्वन्मनीषी रामजी उपाध्यायमहाभागः आधुनिकसंस्कृतसाहित्य-विषयक-गवेषणासु व्यापृतोऽद्यावधि अमरभारत्यां विरचितान् विलुप्तप्रायान् उपेक्षितान् वा परःसहस्रान् ग्रन्थान् परिशील्य तेषामाकलनस्य महदुद्योगमातन्वानोऽस्ति। संस्कृतनाट्य-साहित्यविषयेऽस्य चत्वारः ग्रन्थाः सुरभारतीमन्दिराजिरे स्वर्णकलशायमानाः सन्ति। तत्र प्रथमे अश्वघोषादारभ्य भवभूतिपर्यन्तं नाट्यसाहित्यं समीक्षितम्। द्वितीये 'मध्यकालीन संस्कृत नाटक' इति ग्रन्थे पञ्चदशशतकं यावद् विरचितानि रूपकाणि विवेचितानि। प्रकृतप्रबन्धस्य द्वयोः खण्डयोः आषोडश-शतकादाविंशशती संस्कृते विरचितं नाट्यसाहित्यं विषयीकृतम्। प्रथमखण्डे षोडश-सप्तदशाष्टादशशतकानां साहित्यं विवेचितम्। अत्र प्रायशः २०० रूपकाणां विस्तरशः मूल्यांकनं लेखकेन विहितम्। तत्र प्रमुखाः नाट्यकाराः—रूपगोस्वामि–राजचूडामणि–रामभद्रदीक्षित–हरिजीवनमिश्र–सामराजदीक्षित–चोक्कनाथ–अप्पादीक्षित–घनश्याम–वेङ्कटेश्वरानन्दरायमखी–रामपाणिवाद प्रधानवेङ्कप्प-जगन्नाथानादिमिश्र–सदाशिवदीक्षित-कृष्णदत्त–रायवर्म-प्रभृतयः सन्ति। द्वितीयखण्डे ऊनविंश-शतकयोर्विरचितानि प्रायशः ४०० रूपकाणि विवेचितानि। तत्र सुन्दरवीरस्य त्रीणि, नरसिंहाचार्यस्य वल्लीसहायस्यापि च त्रीणि त्रीणि, सुन्दरराजस्य द्वे, शङ्करलालस्य पञ्च, नारायणशास्त्रिण पञ्च, हरिदाससिद्धान्तवागीशस्य चत्वारि, लक्ष्मणसूरिणस्त्रीणि, पञ्चाननतर्करत्न-स्य द्वे, कालीपदस्य चत्वारि, जीवन्यायतीर्थस्य चतुर्विंशति, महालिङ्गशास्त्रिणो नव, विष्णुपदभट्टाचार्यस्य नव, वेङ्कटराघवन्महाभागस्य द्वादश, यतीन्द्र-विमलस्य अष्टादश, रमाचतुर्धरीणाया एकविंशति, सिद्धेश्वरचट्टोपाध्यायस्य चत्वारि, वीरेन्द्रकुमार भट्टाचार्यस्य द्वादश, श्रीरामवेलणकरस्यापि द्वादश—एवंविधानि रूपकाणि वस्तुतो नूतनतया, रससमृद्धया, नवीनप्रयोगैश्च भारतीयनाट्यसाहित्यभाण्डागारस्य रत्नभूतानि सन्ति। आधुनिक-संस्कृत-नाट्यस्य पृथुलाम् अद्यावधि अनालोचितां गड्डुलिकाप्रवाहन्यायेन

संस्कृतज्ञैरपि उपेक्षिता सामग्री महता समुद्यमेन उपाध्यायमहाभाग इदम्प्रथम-तया जिज्ञासूनां पुरत उपस्थापितवानिति तस्य श्रमः सर्वथा श्लाघ्य एव।

अनेन महाग्रन्थेन संस्कृतमर्वाचीनसाहित्यरचनया विरहितमिति पण्डित-म्मन्याना विमतिस्सर्वथा निराकृता भवति साम्प्रतिकसंस्कृतसाहित्यस्य विपुलता समृद्धि च गोचरीकृत्य प्रहर्षप्रकर्षोऽनुभूयते। अस्माकं समये लिखितानि प्रायश. ६०० रूपकाणि पुरस्कृत्य लेखकेन न केवलमुपेक्षितो मूल्यवान् साहित्यरत्नराशिराविष्कृत., प्रत्युत युगस्य अनन्या विद्वांसः, इतर-भाषाणा साहित्यस्य सुप्रथिता रचयितारः, राजानो मन्त्रिणः, दार्शनिका तेषु तेषु विशिष्टपदेष्वधिष्ठिता महनीया जना अपि सस्कृतेन भूयासं साहित्यमस्मिन् युगे रचयाम्बभूवुरित्यपि सप्रमाण साधितम्। अत्र विवेचितानि रूपकाणि प्रायः सर्वाण्यपि आमनीतानि। अन्यच्च भारतीयसांस्कृतिकरिक्थम्, तद्गतानामु-दात्तप्रवृत्तीना परिचयो यथा सर्वाङ्गीणतया साम्प्रतिकेऽस्मिन् संस्कृतनाट्य-साहित्ये समुपलभ्यते, न तथा इतरभाषाणा साहित्यविधासु। लेखकस्य समीक्षादृष्टि सुपरिपक्वा अन्वेषणमयी च चकास्ति। आधुनकसंस्कृतरूप-काणा सर्वाङ्गीणं पुष्कलं विवेचनमेकत्र विधाय श्रीमता उपाध्यायवर्येण संस्कृतजगत अपूर्वा सेवा सम्पादितेति निश्चप्रचम्।

**संस्कृत कवियों के व्यक्तित्व का विकास**—डॉ० राधावल्लभ त्रिपाठी, पृष्ठा—३६०, प्रकाशिका-संस्कृत परिषत्, सागर विश्वविद्यालयः, सागरम्, १९७६ मू०—२५ रु०। हिन्दीभाषया विरचितम्।

अस्मिन् हिन्दीभाषात्मके ग्रन्थे तरुणेन विपश्चिता नूतना दृशा सस्कृत-कवयोऽवलोकिता गवेषिता विवेचिताश्च। कवेर्व्यक्तित्वपरकेण अध्ययनेन तस्य मूल्याकनं नाम विद्यते साहित्यसमीक्षाया कापि कठिना सरणि, यतो हि नाम तत्र कवेरन्तर्मानसे बाह्यघटनाना प्रभावः तज्जनिता. क्रियाप्रति-क्रियाश्च सूक्ष्मेक्षिकया निभाल्य काव्ये तेषा प्रतिफलनं विवेचनीयं भवति, येन च रचनाया मर्म सर्वङ्कषतयावगतं जायते। लेखकेन एतादृशसमीक्षा पद्धतेर्मानदण्डा. ग्रन्थस्य भूमिकाया सुस्पष्टं निर्धारिता, कवेरभिप्रायेषु च स्फुरति तस्य मर्मावगाहिनी दृष्टि। संस्कृतकवीनामद्यावधि क्रियमाणेऽनु-शीलने तेषा काव्यस्य बहिरङ्गविवेचनमेव प्रधानं भवति, तेषा अन्तरङ्ग जगत् सर्जना-प्रक्रिया तत्समये उद्गच्छन्तश्च मानसगता घातप्रतिघाता नैवोन्मोचिता जायन्ते। अयमभाव श्रीत्रिपाठिना एतद्ग्रन्थरचनया सम्यक् दूरीकृत। अत्र कालिदास-भारवि-भवभूति-भर्तृहरि-नालकण्ठदीक्षित-प्रभृति-कवीना विषये नवीनानि तथ्यानि यथायथं च सूक्ष्मचिन्तनमाविष्कृतानि। ग्रन्थोऽयं छात्राणा पोषाय विदुषा च तोषायालमिति मन्यामहे।

**संस्कृत-निबन्धकलिका**—लेखकौ डॉ० रामजी उपाध्यायः डॉ० राधावल्लभः त्रिपाठी, भारतीयविद्या प्रकाशनम् वाराणसी, मू० ४ रु०। १९७६।

सम्प्रति छात्राणां कृते संस्कृते निबन्धरचनाया अभ्यासस्यावश्यकताऽतितरां जागर्ति। लेखकयोरयं प्रयासस्तत्र सविशेषमुपादेयः। अत्र छात्राणां बोधाय सरल-ललितया परिष्कृतभाषया नवीना लेखा संदब्धाः। नूतन-विषयाणां समावेशेन साकं सुमनोहरा सरणि सर्वत्र संग्रहेऽस्मिन् लसति।

**वेदान्तसारः** (अनुवादकः टीकाकारश्च—डॉ० राधावल्लभः त्रिपाठी, रामनारायण बेनीमाधो, कटरा इलाहाबाद, मू० ३ ५० रु०। (१९७७)

सदानन्दविरचितो वेदान्तसारः सर्वत्र विश्वविद्यालयेषु पाठ्यते। अस्मिन् संस्करणे श्री त्रिपाठिना ग्रन्थस्य हिन्दीभाषया न केवल सरल-प्राञ्जलोऽनुवादः प्रस्तुतः, भूमिकायां परिशिष्टे टिप्पणीषु च प्रकरणगता सर्वेऽपि प्रांसगिकविषयाः सुस्पष्टं विवेचिताः। छात्राणां कृतेऽस्य संस्करणस्योपादेयता सिद्धैव।

---

# सागरविश्वविद्यालस्य संस्कृतपरिषदः प्राप्यपुस्तकानि



# सागरिका



नाट्यवेद–विशेषाङ्कः

•

सप्तदशवर्षे अङ्कौ १–२

•



प्रकाशकः
सागरिका-समितिः, सागर-विश्वविद्यालयः
सागरम् (म० प्र०)

# सागरिका

## नाट्यवेद-विशेषाङ्कः

सप्तदशवर्षे अङ्कः १-२

सम्पादक
डॉ० रामजी उपाध्याय
सागरविश्वविद्यालये
संस्कृतविभागस्य प्राध्यापकाध्यक्ष

प्रकाशक
सागरिका-समितिः, सागर-विश्वविद्यालयः
सागरम् (म० प्र०)

प्रकाशिका

सागरिका-समिति

सागर–विश्वविद्यालय:

सागरम् (म० प्र०)

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ४-०० रूप्यकाणि |
| वार्षिकम् | १२-०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००-०० रूप्यकाणि |
| अङ्कप्रकाश: | प्रतिवर्षम् आषाढाश्विन-पौष चैत्र-<br>[ जून-सितम्बर-दिसम्बर-मार्च- ] मासेषु |

सूच्यम्— आजीवनग्राहकेभ्य: सागरिकाया: प्राचीना अपि सर्वेऽङ्का: सवस्त्र पुटबन्धा निश्शुल्कमुपह्रियेरन् ।

मुद्रक

एकेडेमी प्रेस

६०२, दारागंज इलाहाबाद

# विषय-सूची

१. दशरूपक-मीमासा
रामजी उपाध्याय

२ यायावरीयं नाट्यवृत्तम् १६
राधावल्लभ त्रिपाठी

# नाट्योत्कर्षः

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषम् ।
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ॥
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते ।
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥

भर्तृहरिणा सम्यङ् निर्दिष्टम्—

साहित्य-संगीत-कला-विहीनः साक्षात्पशुः पुच्छविषाण-हीनः ।

अत्र मानवोत्कर्ष-विधायिषु तत्त्वेषु साहित्यं प्राथम्यं भजते इति प्रकटितम् । साहित्येऽपि नाटकं रम्यतममिति सुविदिता सूक्तिः—

'काव्येषु नाटकं रम्यम्' इति ।

काव्येषु ज्ञानम्, उपदेशः, आनन्दश्चेति त्रयं निर्भरम् । एतत् त्रयं सर्व-विधेषु काव्येषु वर्तते नाम । तथापि नाट्येषु ज्ञानादीनां भूयानतिशयो भवति इति भरतेन प्रमाणितम् । तथा हि—

या विद्या यानि शिल्पानि या गतिर्यच्च चेष्टितम् ।
लोकालोकस्य जगतस्तदस्मिन्नाटकाश्रये ॥ ना० शा० ५.५७

अपरञ्च

धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् ।
लोकोपदेशजननं नाट्यमेतद् भविष्यति ॥ ना० शा० २ १२५

सर्वविधेषु काव्येषु नायकादीनां चरितानि वर्ण्यन्ते शब्दद्वारेण, किन्तु केवलं नाट्येष्वेव तेषां प्रत्यक्ष-दर्शनमिव कार्यते चतुर्विधाभिनयेनापि । प्रत्यक्ष-दर्शनेन च तेषां विशेषतरः प्रभावो जन्यते ।[1]

---

[1] अनभिनेय-रूपकेषु संवादस्य विशेषो वर्तते । रूपकं तावत् द्विविधं भवति-अभिनेयम-नभिनेयं चेति नाट्यदर्पणे ३.२ कारिकामधिकृत्य विवृतम् । योरपीय साहित्ये अनभिनेयरूपकाणि बहूनि सन्ति ।

नाट्यस्य परमोत्कर्षो नायकादीनां संवादेन वृद्धिं याति। अपरेषु काव्य-भेदेषु संवादो भवतु नाम। किन्तु तेषु संवादस्य लघ्वी मात्रा वर्तते। नाट्येषु पुनः संवाद आद्यन्तं वर्तते। लोकेऽपि संवादस्य रमणीयता भूयसी दृश्यते। संवादस्येदमेव वैशिष्ट्यं कालिदासस्य मेघदूतमिति गीतिकाव्यस्य श्रेष्ठपदं विदधाति।

नाट्ये संवादद्वारेण घटना वर्त्तमाना इव रोचिष्णु साक्षात् क्रियन्ते। अन्येषु काव्येषु संवादाभावे भूतकालिकी संघटना न तावन्मात्रं रुचिरा भवति। नाट्येषु वर्त्तमानकालिकी भाषा सम्यग् विलसति। सोऽयं संवादो द्वादशरूपोऽभिनयात्मको वाग्वैदग्ध्ये जयते।

एतेषु संवाद सन्दर्भेषु आ कश्मीरात् कुमारी-पर्यन्तं प्रवहमाणा नाना-रूपधरा वाक्सरस्वती सर्वान् लोकान् रंजयति पावयति चेति प्ररोचितं भोजेन—

गिरः श्रव्या दिव्याः प्रकृति-मधुराः प्राकृतधुराः।
सुभव्योऽपभ्रंशः सरसरचनं भूतवचनम्॥
विदग्धानामिष्टे मगधमथुरावासिभि—
निबद्धा यस्तेषां स खलु कविराजो विजयते॥

नाट्येषु यादृशी सुसमृद्धा रस-निर्झरिणी निष्पद्यते, न तादृशी तावदन्येषु काव्यभेदे भावानां विभावानुभावसंचारिणा च प्रत्यक्षव्युत्पत्तिरभिनयेन दृश्यकाव्येव सम्भवति। अपरेषु च काव्येषु रसतत्त्वानि केवल शब्द-संस्पृष्टानि वानुद्दिष्टानि वा प्रायश ऊह्यानि सन्ति। नैतावता रसनिष्पत्तौ वैपुल्यं स्यात्। नाट्यं तु रसस्य परमं स्रोतः। रस एव नाट्यम्।

कवीनां प्रतिभायाः सर्वोच्चविलासो नाट्य-कृतिष्वेव समजायत, यतो हि नाम भारते देवानां प्रीत्यर्थं यत् कृतम् तदेव कर्तॄणामपि बहुमतं बभूव। भरतेन समर्थितं यत् नाट्यस्य परं प्रयोजनं देवानां परमा प्रीतिः स्यात्। तथा हि—

न तथा गन्धमाल्येन देवास्तुष्यन्ति पूजिताः।
यथा नाट्यप्रयोगस्थैर्नित्य तुष्यन्ति मंगलैः॥ ३७.२९

धर्मसिद्धयेऽपि नाट्यस्य महत्त्वं भरतेन विशदीकृतम्। तथा हि—

दानधर्मेषु सर्वेषु कीर्त्यते तु महत्फलम्।
प्रेक्षणीयप्रदानं हि सर्वदानेषु शस्यते॥ ३७.२८

तत्र नाट्यस्य महावैभवं भरतेन प्रमाणितम्—

महारसं महोभोगमुदात्तवचनान्वितम् ।
महापुरुष-संचारं साध्वाचारजनप्रियम् ॥ ना० शा० १९ १४०

लोकाना विनयाधानं तु नाट्यस्यैकं प्रयोजनमिति रामचन्द्र-गुणचन्द्राभ्यां विशदीकृतम्—

दुर्मेधसा हि न्याय्ये वर्त्मनि वृत्त्यर्थं कवयोऽभिनेय प्रबन्धान् ग्रथ्नन्तीति ।

सुरुचि सुसंस्कृति च पुरस्कर्तुकामा लोकाभ्युदयार्थमेव कवयः प्रमोद-निर्भरैर्वाक्यैर्नाटकानि विरचयन्तु इति भारतीयं विधानम्—

एवंविध भवेद्यद्यत्तत्तदङ्के न कारयेत् ।
पितापुत्रस्नुषाश्वश्रूदृश्य यस्मात्तु नाटकम् ।
वाक्यैः सातिशयैः श्रव्यैर्मधुरैर्नातिनिष्ठुरैः ।
हितोपदेशसंयुक्तैस्तज्ज्ञ कुर्यात्तु नाटकम् ॥

अन्यच्च

लोको वेदस्तथाध्यात्मं प्रमाण त्रिविध स्मृतम् ।
वेदाध्यात्मपदार्थेषु प्रायो नाट्य प्रतिष्ठितम् ॥
वेदाध्यात्मोपपन्न तु शब्दच्छन्दस्समन्वितम् ।
लोकसिद्धं भवेत्सिद्धं नाट्य लोकात्मक तथा ॥

ना० शा० २५ १२०-१२१

नाट्ये तु न केवलं नृत्त-नृत्य-लास्यादीना वैशिष्ट्यमपितु नैकविधाना मनोरञ्जककलाना समवायोऽङ्गीक्रियते इति भरतेन समीहितम् । तथा हि

वाद्ये हि यत्न प्रथमं तु कार्यः ।
शय्या हि नाट्यस्य वदन्ति वाद्यम् ॥
वाद्ये च गीते च हि सुप्रयुक्ते ।
नाट्यप्रयोगे न विप्रतिपत्तिमेति ॥ ना० शा० २४ ३०४

अपरञ्चाहार्य-प्रयोगे चित्र-मूर्ति-वास्तु-गर्भाणां कलाकृतीना सौन्दर्य-मद्वितीयमेव मनोरञ्जन-साधनं भवति ।

प्रयोक्तृणामपि गौरवेण नाट्यं भृशमतिशेते । तत्राभिनेतारोऽभिजाता, आत्मगुणशालिनोऽभिरामाश्च भवन्तीति भरतेन निर्दिष्टम् । तथा हि,

सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शना ।
कुमारराजभूमौ तु संयोज्याश्च नरोत्तमाः ॥ ना० शा० ३५.११

गतिवागङ्गचेष्टाभि सत्त्वशीलस्वभावत. ।
परीक्ष्य पात्रं तज्ज्ञस्तु युञ्ज्याद् भूमिनिवेशने ॥ ३५.२

लोकहृदाश्रयकृतां सर्वप्रकृतिप्रचार-संयुक्ताम् ।
नानाश्रयां प्रकुर्व्ते तथा च नारी तु सर्वत्र ॥ ३५.२४

नाट्यस्य वैविध्य वैचित्र्यं वास्योत्कर्षं शिखरयति। तत्र दशविधं रूपकमष्टादशविधमुपरूपकञ्च निर्दिष्टं शारदातनयेन—

नाटकं सप्रकरणं भाण. प्रहसनं डिम. ।
व्यायोग-समवकारौ वीथ्यङ्केहामृगा इति ॥

तोटकं नाटिका गोष्ठी सल्लाप शिल्पकं तथा ।
डोम्बी श्रीगदितं भाणी प्रस्थान काव्यमेव च ॥

प्रेक्षकं सट्टकं नाट्यं रासकं लासकं तथा ।
उल्लाप्यकञ्च हल्लीसमथ दुर्मल्लिकापि च ।
मल्लिका कल्पवल्ली च पारिजातकमित्यपि ॥

एते रूपकोपरूपकैर्बहुविधमञ्जरी-सनाथा इव नाट्य-लतिकानन्योत्कर्ष-शालिनी विलसति ।

नाट्ये तु लोकस्वभावो वर्ण्यते, यथान्येषु काव्यबन्धेषु भवति ।[१] अत्र लोकस्वभावे तु नायकादीनां वैयक्तिकं पौराणिकं वा चरित्रं नाममात्रमेवाङ्गीक्रियते । रामादीन् नायकान् समाश्रित्य यत्किञ्चिल्लोके सम्भावनीयं तत् सर्वं कल्पनया प्रतिभा-दृष्टमिव निबध्नाति कविः । इयमभिनवा कविसृष्टि लोकस्वभावात्मिका रामादीनां समारोपेण तथ्यमिव प्रतिभाति । काव्येषु रामादय उपलक्षण लोकस्य ।

अवस्थानुकृतिर्नाट्यमिति दशरूपकवचनेऽवस्था तु नायकादीना कार्यविशेषाः सन्ति । दशरूपकेऽवस्थामधिकृत्य प्रोक्तम्—रुदितगीतहासासितादय अवस्थेति ।[२]

**नाट्यम्**

दशरूपकानुसारम्

'अवस्थानुकृतिर्नाट्यम्'

अवस्थानुकृतिस्तु नृत्येऽपि भवति । नृत्याद् नाट्यं भिन्नमिति विशदयितुं धनञ्जय प्राह—

(नाट्यं) रसाश्रयम् ।
अन्यद् भावाश्रयं नृत्यम् ।

- प्रकरणेऽस्मिन् रसो भावश्च परिचेयो । रसस्तु वाक्यार्थं, भावश्च पदार्थं । अत्र 'भावा स्थायिनो व्यभिचारिणश्चेव । तैरुपपन्नानि पदानि कथाखण्डानि भवन्ति' ।[३] यत्राभिनये रसो निष्पद्यते, तत्र रूपकं भवति ।

---

१. योऽयं स्वभावो लोकस्य नानावस्थान्तरात्मक; ।
सोऽङ्गाद्यभिनयैर्युक्तो नाट्यमित्यभिधीयते ॥ ना० शा० १९ १४१

अवस्था या तु लोकस्य सुख-दु.ख-समुद्भवा ।
नानापुरुषसंचारा नाटकेऽसौ विधीयते ॥ ना० शा० १९.१४२

२. दश० ४,३०

३. ना० शा० १८.१०४ अधिकृत्येद प्रोक्तमभिनवगुप्तेन । वाक्याभिनयो भरतेन विशदीकृतोऽधोलिखितकारिकायाम्—

नानारसार्थ युक्तैर्वृत्तनिबन्धैः कृत. सचूर्णपदै. ।
प्राकृत-संस्कृत-पाठो वाक्याभिनयो बुधैर्ज्ञेय ॥ ना० शा० १८.४४

# ३

# इतिवृत्त-योजना

रूपकाणि दशविधानि सन्ति। तेषां भेदक-वैशिष्ट्यं वस्तु नेतारं रसं चाश्रित्य सम्भवति। प्रथमं तावत् वस्तु विविच्यते।

भरतानुसारं वस्तु, कार्यम्, इतिवृत्तं वा नाट्यशरीरमेव। तद् द्विविधं भवति—आधिकारिकम्, प्रासङ्गिकञ्च। यद् वृत्तमाश्रित्य फलं प्राप्यते तदाधिकारिकम्।[1] एतदेव धनञ्जयेन दशरूपकेऽपि प्रपञ्चितम्। तद्यथा

> अधिकारः फलस्वाम्यमधिकारी च तत्प्रभुः।
> तन्निर्वर्त्यमभिव्यापि वृत्तं स्यादाधिकारिकम्॥ १ १२

प्रासङ्गिकं वृत्तं तु भरतानुसारं नाट्यकथायामधिकारिकमुपकुर्वाणमानुषङ्गिकं च भवति।[2] प्रासङ्गिकं वृत्तं द्विविधं भवति—पताका प्रकरी च। शारदातनयस्तु भावप्रकाशने त्रिविधं प्रासङ्गिकं वृत्तं

---

१. (क) प्रकरणेऽस्मिन् फलं तु प्रधानफलमेव। रूपके नायकानामनेकफलानि स्युर्नाम। तेषु 'कवियत्फलमुत्कर्षेण विवक्षति तत्प्रधानफलम्। ना० शा० १=५ अधिकृत्य भारती।

(ख) इतिवृत्तं तु नाट्यस्य शरीरं परिकीर्तितम्। ना० शा० १९ १
इतिवृत्तं द्विधा चैव बुधस्तु परिकल्पयेत्।
आधिकारिकमेकं स्यात् प्रासगिकमथापरम्॥ ना० शा० १९.२

यत्कार्यं हि फलप्राप्त्या सामर्थ्यात् परिकल्प्यते।
तदाधिकारिकं ज्ञेयमन्यत् प्रासगिकं विदुः॥ ना० शा० १९ ३

किमिदं कार्यमिति विवृण्वन्नभिनवगुप्त प्राह प्रधानत्वेन सम्पाद्ये फले यो ज्ञानेच्छाप्रयत्नक्रियालक्षण आरम्भः तत्कार्यम्। ना० शा० १९ ३ अधिकृत्य भारती। भरतेन परतो विशदीकृतम्—

कारणात् फलयोगस्य वृत्तं स्यादाधिकारिकम्॥ १९ ४

२ तस्योपकरणार्थं तु कीर्त्यते ह्यानुषंगिकम्।

मन्यते ।[1] उभयविधं प्रासङ्गिकं वृत्तं (पताका प्रकरी च) परार्थेन सह स्वार्थस्य साधकमिति धनञ्जय प्रतिपादयति ।[2] धनञ्जयस्येदं मतमभिनवभारती भारतीयं नाट्यशास्त्रं च नानुवर्तत इत्यस्माकं प्रतिपाद्यम् ।

भरतानुसारं तु प्रासङ्गिकवृत्तेषु केवलं पताका-कोटिकं परार्थसाधकं स्वार्थसाधकं च भवति, न पुन. प्रकर्यास्तथात्वं विद्यते। प्रकरी तु केवलं परार्थायैव भवति । तद्यथा—

> यद्वृत्तं तु परार्थं स्यात् प्रधानस्योपकारकम् ।
> प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥ ना० शा० १९.२४
>
> फलं प्रकल्प्यते यस्या परार्थायैव केवलम् ।
> अनुबन्धविहीनत्वात् प्रकरीति विनिर्दिशेत् ॥ (ना० शा० १९ २५)

एते कारिके विवृण्वन्नभिनवगुप्त आह—यद्वृत्तं तु परार्थं स्यादिति । यस्य सम्बन्धिवृत्तं सविदनुसन्धानं परस्य प्रयोजनसम्पत्तये भवदपि स्वप्रयोजनं सम्पादयति । अत एवाह प्रधानवच्च कल्प्येतेति । सचेतनानुसन्धाना पताका सिद्धिप्रधानस्योपकारिणी । एवं सुग्रीव-विभीषण-प्रभृतिरपि रामादिनोपक्रियमाणे रामादेरात्मनश्चोपकाराय प्रभवमाणे प्रसिद्धि-प्राशस्त्ये सम्पादयतीति । फलं प्रकल्प्यते यस्या इति यतश्च तत परार्थमेव केवलं सर्वमनुतिष्ठति सा प्रकरी । ······· प्रकर्षेण स्वार्थानपेक्षया करोतीति ।

अपरं च प्रकरी तु भरतानुसारमनुबन्धविहीना भवति। अस्मिन् प्रकरणेऽनुबन्धस्य कोऽभिप्राय इत्यभिनवगुप्तेन परोक्षरीत्या पताका-सम्बन्धिकारिकां विवृण्वन् प्राह—'यस्य सम्बन्धिवृत्तं संविदनुसन्धानं परस्य प्रयोजनसम्पत्तये भवदपि स्वप्रयोजनं सम्पादयतीति' अत्र संविदेवानुबन्धो नाम—मदर्थं त्वमेतत्कुरु, त्वदर्थमहमेतत्करिष्यामीति ।[3] प्रकरीचरितेऽनुबन्धो न भवति। पताकाचरितेऽनुबन्धोऽवश्यम्भावी । यथा रामायणे रामसुग्रीवयो, विभीषणरामयोर्वा ।

---

१. शारदातनयस्तु प्रासंगिकं वृत्त त्रिधा मन्यते—

प्रासंगिकाभिधं वस्तु नाटके भवति त्रिधा ।
पताका-प्रकरीयुक्त-पताकास्थानकक्रमात् ॥ सप्तमाधिकारात्

२ प्रासगिकं परार्थस्य स्वार्थो यस्य प्रसगत । दश० १ १३

३. संवित् स्त्रिया प्रतिज्ञायामाचारे ज्ञानसागरे ।
सम्भाषणे क्रियाकारे सकेते नाम्नि तोषिणि ॥ इति मेदिनी ७७ ४२
अत्र क्रियाकार: Agreement अर्थे M Williams Sanskrit-English Dictionary. इति

# ४

## अर्थप्रकृतयः

भरतानुसारं पंचार्थप्रकृतय इतिवृत्तसम्बद्धा सन्ति—बीजं, विन्दु, पताका, प्रकरी कार्यञ्च[१]। एतेषु बीजं प्राथम्यं भजते। यथा कस्यचिद् वृक्षस्य फलं प्राप्तुं प्रथमं बीजमेवोप्यते, तथैव नाट्यवृक्षस्य फलार्थं बीजमुपक्षिप्यते। तत्र रूपकाणि बहुफलानीति प्रागेव प्रतिपादितम्। तेषु प्रधानफलस्य महाबीजं भवति। अन्येषां फलानां कृतेऽवान्तरबीजानि सन्ति। अवान्तरबीजं तु विन्दुर्भवति।

### बीजम्

भरतेन बीजं परिभाषितम्—

> स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति
> फलावसानं यच्चैव बीजं तत्परिकीर्तितम्॥ ना० शा० १९.२२

'तत् (बीजं) क्वचिदुपाय-मात्र क्वचित् फलमात्रं क्वचिद् द्वयमिति, भारत्यामभिनवगुप्तेन प्रपञ्चितम्। तदनुसारं बीजफलयोरविनाभाव—

---

१. पताका, प्रकरी चेतिवृत्तयोजना'-नामक अध्याये प्रागेव वर्णिते।

किमिदमर्थप्रकृतिर्नाम ? अस्मिन् विषये बहुविकल्पाः सन्ति। भरतेन धनञ्जयेन चार्थप्रकृतिर्न परिभाषिता अभिनवगुप्तेन भारत्यामर्थप्रकृति. परिभाषिता—'यत्रार्थः फलं तस्य प्रकृतय उपाया फलहेतव' इति ना० शा० १९ २० अधिकृत्य। अभिनवगुप्तोऽर्थप्रकृतेरनन्यसम्मता परिभाषा निर्दिशति—अर्थस्य समस्तरूपकवाच्यस्य प्रकृतय प्रकरणानि अवयवार्थखण्डा इत्यर्थप्रकृतयः। अन्येषामेतन्मतं बहुभिर्नाट्याचार्यैः स्वीकृतम्। तद्यथा

(क) अर्थं प्रकृतय पंच कथादेहस्य हेतव।

शृङ्गारप्रकाशे द्वितीयभागे पृ० ४८२

भावप्रकाशने च पृष्ठ २०४

(ख) नाटकीयवस्तुन· पञ्च प्रकृतय. स्वभावा भवन्ति। नैतान् परित्यज्य नाटकार्था सम्भवन्ति। नाटकलक्षणरत्नकोशे ६.१

(ग) पाञ्चविध्यात् कथायास्तु प्रकृति.। पञ्चधा स्मृता नाटकचन्द्रिका।

सम्बन्धो भवति ।[१] तत्र चक्रवर्तिपुत्रलाभो मुनिजनाशीर्वचनद्वारेण फलस्वभावस्यैवाभिज्ञानशाकुन्तले । अन्यत्र बीजमुपायमात्रं भवेत् ।[२]

दशरूपके बीजस्य संक्षिप्तलक्षणं भारतीयं नाट्यशास्त्रमनुसरति । तथा हि—

स्वल्पोद्दिष्टस्तु तद् हेतुर्बीज विस्तार्यनेकधा । १ १७

बिन्दुस्तु अवान्तरबीजम् । यदा नाट्यकथायां कार्यमेकं समाप्यते, तदा परवर्तिकार्यस्य सङ्केतो बिन्दुना भवति । एतदेव भरतेन स्पष्टीकृतम्—

प्रयोजनानां विच्छेदे यदविच्छेद-कारणम् ।
यावत्समाप्तिर्बन्धस्य स बिन्दु परिकीर्तित ॥ १९ २३

बीजस्य बिन्दोश्च विस्तार-परिधिरभिनवगुप्तेन प्रदर्शित । तदनुसारं बीजं च मुखसन्धेरेव प्रवर्त्यात्मानमुन्मेषयति, बिन्दुस्तदनन्तरमिति विशेषोऽनयो. । द्वे अपि तु समस्तेतिवृत्त-व्यापके ।[३]

बीजाधानात्पूर्वमपि नाट्यकथाया भूमिका-भागो प्रायशो वर्तते । तद् हि यथा कृषिकर्मणि बीजवपनात् पूर्वं बीजस्याङ्कुरणाय वर्धनाय च भूमि निर्मीयते, तथैव बीजन्यासाय कथाभूमिका स्यात् ।

## बिन्दुः

प्रत्येकाङ्कस्यान्तिमेऽशे बिन्दुना भवितव्यम्, यतो हि नामाङ्कान्तेऽवान्तर कार्यसमापने कथा विच्छिद्यते । तर्हि परवर्तिकार्यस्य कथानुसन्धान बिन्दुद्वारेण भवति । अन्यत्रापि बिन्दु कथा प्रवर्तयति ।

बिन्दुर्यत्सूत्ररूपेण निगद्यते, तदेव प्रवेशके विष्कम्भके वा सविस्तरं प्रपञ्चयते' [४]इति विशदयन् भरत प्राह—

---

१ फलमपि च भविष्यदुपायाविनाभावाद् बीजमित्युच्यते । ना० शा० १९·२२ अधिकृत्य भारती ।

२. तच्च (बीजं) क्वचिदुपायमात्रं क्वचित्फलमात्रं क्वचिद् द्वयम् । ना० शा० १९ २२ अधिकृत्य भारती ।

३ ना० शा० १९ २३ अधिकृत्य भारती ।

४ प्रत्यङ्कान्त यो बिन्दु अनुसन्धानाभिधायिवाक्य, यत् संक्षिप्तं प्रयोजनं तदधिकताकरण विस्तारमुद्दिश्य प्रकरणे नाटके चावश्यं प्रवेशक ।
ना० शा० १८·३२ अधिकृत्य भारती ।

अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य विन्दूनाम् ।
प्रकरण-नाटकविषये प्रवेशक संविधातव्य ।। १८ ३३

अपरं च —इतिवृत्तस्य विन्दुसूत्रस्यूतस्य यदा प्रारम्भावस्था पूर्णत्वमेति तदाङ्कच्छेदो विन्दुद्वारानुसन्धीयमानद्वितीयाङ्काभिधेयरूपो विधेय ।[1]

एतत्सर्वं संक्षेपेण धनञ्जयो दशरूपके प्राह—

अवान्तरार्थविच्छेदे विन्दुरच्छेद कारणम् । १ १७

धनञ्जयस्तु नाट्यकथायामाद्यन्तव्यापिन विन्दुं यत्नावस्थायामेव निवेशयतीति अभारतीयं मतं चिन्त्यमेव । कथाशरीरे सर्वासामवस्थानामन्ते विन्दुना तु भवितव्यमेव ।

## कार्यम्

भरतानुसारं कार्यस्याधोलिखिता परिभाषा युज्येत ।

यदाधिकारिक वस्तु सम्यक् प्राज्ञैं प्रयुज्यते ।
तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम् ।। १९ २६

एता कारिकां विवृण्वन्नभिनवगुप्त प्राह—

'प्राज्ञै प्रधाननायक पताकानायक-प्रकरीनायकैश्चैतनरूपे यद्वस्तु फलरूप प्रयुज्यते सम्पाद्यते, सम्पाद्यत्वेनानुसन्धीयते, तत्फलप्रयोजनो यः सम्पूर्णतादायी पूर्वपरिगृहीतस्य प्रधानस्य बीजाख्योपायस्य फलम् आरभते इत्यारम्भशब्दवाच्यो द्रव्य-क्रिया-गुण-प्रभृतिः सर्वोऽर्थ. (यस्य) सहकारी (तत्) कार्यमित्युच्यते । चेतनैः कार्यते फलमिति व्युत्पत्त्या । सम्यगिति प्रभुमन्त्रोत्साह-शक्तित्रय-सम्पन्नैरित्यर्थं । तेन जनपद-कोश-दुर्गादिक-व्यापार-वैचित्र्य-सामाद्युपाय-वर्ग इत्येतत् सर्वं कार्येऽन्तर्भवति । तत्र परं प्रथमपरिगृहीत. प्रधानभूतोऽभ्युपायो बीजत्वेनोक्तः । '[2]

अन्यत्रापि कार्यस्येदृशी विवृतिर्भरतेनाभिनवगुप्तेन च कृता । तथा हि—कार्यं तु यदाधिकारिकमित्यादि तस्या पञ्चाङ्गस्यानुष्ठानम् । तद्यथा, कर्मणा-मारम्भोपाय·, पुरुष-द्रव्य-सम्पद्देश-काल-विभाग., विनिपात-प्रकार , कार्य-सिद्धिरिति ।[3]

---

१. ना० शा० १८ १३ अधिकृत्य भारती ।

२. अभिनवभारती तृतीयभागे १६ पृष्ठे ।

३ अभिनवभारती द्वितीयभागे ४२५ पृष्ठे ।

अन्यच्च—

यत्कार्यं हि फलप्राप्त्या सामर्थ्यात् परिकल्प्यते ।
तदाधिकारिकं ज्ञेयमन्यत् प्रासङ्गिकं विदुः ॥

(ना० शा० १६.३)

इति विवृण्वन्नभिनवगुप्तः समर्थयति—

'प्रधानत्वेन सम्पाद्ये फले यो ज्ञानेच्छाप्रयत्नक्रिया-लक्षण आरम्भः तत्कार्यमिति ।

भरतेनान्यत्रापि बहुशः कार्यशब्दः समारम्भार्थमभिलक्ष्य प्रयुक्तः । तथा हि—

कालोत्थानगतिरसो व्याख्यासरम्भकार्यविषयाणाम् ।
अर्थाभिधानयुक्तः प्रवेशकः स्यादनेकार्थः ॥

(ना० शा० १८ ३५)

बह्वाश्रयमपि कार्यं प्रवेशकैः संक्षिपेच्च सन्धिषु वा ।
बहुचूर्णपदैर्युक्तं जनयति खेदं प्रयोगस्य ॥

(ना० शा० १८ ३६)

अस्यावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात् ।
कर्तव्योऽङ्कः सोऽपि तु गुणान्वितं नाट्यतत्त्वज्ञैः ॥

(ना० शा० १८.१३)

एकदिवसप्रवृत्तं कार्यस्त्वङ्कोऽर्थबीजमधिकृत्य ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥

(ना० शा० १८.२१)

एकाङ्केन कदाचिद् बहूनि कार्याणि योजयेद् धीमान् ।
आवश्यकाविरोधेन तत्र कार्याणि कार्याणि ॥

(ना० शा० १८ २२)

रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः ।
बीजार्थयुक्तियुक्तं कृत्वा कार्यं यथारसम् ॥

(ना० शा० १८ २३)

सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।
एतास्त्वनुक्रमेणैव पञ्चावस्था भवन्ति हि ॥

(ना० शा० १६.१४)

अर्थप्रकृतीनां फलहेतुता तु किमतः परं स्पष्टतरं भवेत् यतो हि नाम भरतः कथयति—

आसां स्वभावभिन्नानां परस्परसमागमात् ।
विन्यास एकभावेन फलहेतुः प्रकीर्तितः ॥

(ना० शा० १९ १५)

यद्यासामर्थप्रकृतीनां विन्यासः फलहेतुरस्ति, तर्हि तासु अन्यतमं कार्यमिति कथं नाम फल स्यात् ।

अत परं विरुद्धमेव धनञ्जयस्य दशरूपक उद्धृतं मतं समीक्ष्यते । अर्थप्रकृति-प्रकरणे धनञ्जय-धनिकयोर्वचनं विद्यते—

'तस्येतिवृत्तस्य किं फलमित्याह —

कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ॥ (द० रू० १.१६)

धर्मार्थकामाः फलम् तच्च शुद्धमेकैकानुबन्धं द्विव्यनुबन्धं वा ।

एतदनुसृत्यार्थप्रकृतिं विवृण्वन् धनिको ब्रूते—

'अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः'

अस्यां स्थितौ दशरूपकावलोके विसंवादो लक्ष्यते, यत् कथं नाम प्रयोजनसिद्धिहेतुषु अर्थप्रकृतिषु फलरूपं कार्यमन्तर्भवति ? यद्येवं स्यात् तर्हि फलस्य फलहेतोश्चैकात्म्यं जायेतेति चिन्त्यम् ।

अन्येऽपि बहवो नाट्याचार्या धनञ्जयमतमेव समर्थयन्ति । तथा हि—

कथाशरीरव्यापिन्यां नायकसहायादि-क्रियायामुपलभ्यमान प्रधानसम्बन्धी प्रारम्भफलविशेषः कार्यमित्युच्यते । धर्मार्थकामानामन्यतमं हि पुरुषार्थं कार्यमित्यामनन्ति । तदाह भोजः—

यदाधिकारिकं वस्तु सम्यक्प्राज्ञैः प्रयुज्यते ।
यदर्थश्च समारम्भस्तत् कार्यमिति कीर्तितम् ॥

कार्यस्योदाहरणम्—

नीतो विक्रमबाहुरात्मसमतां प्राप्तेयमुर्वीतले
सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया ।
देवी प्रीतिमुपागता च भगिनी लाभाज्जिताः कोसला
किं नास्ति त्वयि सत्यमात्यवृषभे यस्मिन् करोमि स्पृहाम् ॥

कार्यार्थं च दैवपौरुषप्राधान्यमध्यासते ।[1]

---

१. शृङ्गारप्रकाशे ४८३-४८४ पृष्ठे ।

अन्यत्रापि

यदर्थे काव्यस्यारम्भ सिद्धे यस्मिन् समापनम् ।
आनुषङ्गिकसम्पन्न तत्कार्यमिति कथ्यते ॥[1]
फलं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ।
फल यदितिवृत्तस्य स त्रिवर्ग इतीरित ॥
साध्यत्वादेव कार्यस्य सर्वान्ते तत्प्रयोजयेत् ॥[2]
अपेक्षित तु यत्साध्यमारम्भो यन्निबन्धन ।
समापनं तु यत्सिद्ध्य तत्कार्यमिति सम्मतम् ॥[3]
कार्यस्य कारण प्राज्ञैस्तद्बीजमिति कथ्यते ।
वस्तुनस्तु मत तस्य धर्मकामार्थलक्षणम् ॥
फल कार्यमिद शुद्धं मिश्रं वा कल्पयेत् सुधी ।[4]

परवर्तिनाट्याचार्येषु केवल रामचन्द्रो नाट्यदर्पणे नाट्यशास्त्रमभिनवभारती चानुसृत्यार्थप्रकृति कार्यं च विवृतवान् । सोऽर्थप्रकृतिस्थाने उपाय इति पदं प्रयुक्तवान् । अनन्तर स उपायान् व्याख्याति स्म—

बीजं पताका प्रकरी बिन्दु कार्यं यथारुचि ।
फलस्य हेतवः पञ्च चेतनाचेतनात्मकाः ॥१ २८

स कार्यं विवृणोति—

साध्ये बीजसहकारी कार्यम् ।

प्रधाननायक-पताकानायक-प्रकरीनायकैः प्रधानफलत्वेनाभिप्रेते बीजस्य प्रारम्भावस्थोत्क्षिप्तस्य प्रधानोपायस्य सहकारी सम्पूर्णतादायी सैन्यकोश-दुर्गसामाद्युपायलक्षणो द्रव्य-गुण-क्रिया-प्रभृति सर्वोऽर्थं कार्यम् ।

कार्यं तु फलमिति भ्रान्ते. कुतस्त्य नातिगूढम् । प्रथम तावत् तत्सम्बन्धिनाट्यशास्त्रीयकारिकाया पाठभेद एव भ्रान्ते कारणम् । अभिनवगुप्तेनाद्योल्लिखिता कारिका कार्यलक्षण प्रतिपादयितुं मुख्यत प्रचिता—

यदाधिकारिकं वस्तु सम्यक् प्राज्ञै प्रयुज्यते ।
तदर्थो य. समारम्भस्तत्कार्यं परिकीर्तितम् ॥ १९ २६

अस्या कारिकायाः पाठभेदेनाद्योल्लिखितं रूप मूलाद्विवर्तते—

---

१ सागरनन्दी नाटक-लक्षण-रत्नकोशे १ २७ ।

२. शारदातनय भावप्रकाशने २०५ पृष्ठे ।

३. विश्वनाथ साहित्यदर्पणे ६ ६९ ।

४ सिंहभूपाल. रसार्णव-सुधाकरे ३ १८ ।

यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते ।
यदर्थश्च समारम्भः तत्कार्यमिति कीर्तितम् ॥[१]

कार्यस्याभिप्रायः फलमित्यभिनवगुप्तेनापि क्वचित् प्रसङ्गानुसारं व्याख्यातम् ।[२]

इदं विपरिवर्तितं रूपं प्रमाणीकृत्य धनञ्जयादिभिः कार्यमेव फलमिति प्रतिपादित स्यात् ।

अभिनवगुप्तात् प्रागपि नाट्यशास्त्रस्य बहवः टीकाकारा बभूवुः । तेषां मतानि सम्परीक्ष्य सोऽभिनवभारतीमिति नाट्यशास्त्रीयमाकर-ग्रन्थ विरचयामास । तस्य ग्रन्थस्य प्रचारः कश्मीरं विहाय शेषे भारते तावन्मात्रं नाभवत्, यावन्मात्रं दशरूपकस्य प्रचारोऽभवत् । अतएव गड्डरिकाप्रवाहेण तत्रत्या नाट्यशास्त्राचार्या दशरूपकावलोकमनुसरन्ति स्म ।[३]

अर्थप्रकृति-विषयकाः कतिपयप्रश्नाः समाधानमर्हन्ति । प्रथमं तावत् यदि नाम प्रासगिकं वृत्तं (पताका प्रकरी च) अर्थप्रवृत्तेरङ्गभूतं तर्हि आधिकारिकं वृत्तं कथं नार्थप्रकृतौ परिगणितम् । अपरं च बीजं, बिन्दु , पताकास्थानकं चेति त्रयं सूच्यं समाश्रित्य परवर्तिकथा वितन्यते । एतेषा प्रथमं द्वयमेवार्थप्रकृतौ परिगणितौ, न तु पताकास्थानकम् । कार्यस्यार्थप्रकृतावस्थानं नाभीष्टं यतो हि नाम कार्यं पताका-प्रकरीषु सर्वत्र प्रसरत्येव । नेदं किञ्चित् पृथक तत्त्वम् ।

कदाचिदर्थप्रकृतेर्विसंवादं समीक्ष्य कीथ-महाभागेन सम्यगनुशासितम्—

The classification of elements of the plot is perhaps superfluous[४]

---

१ मूलाद्भिन्नोऽयं पाठो नाट्यशास्त्रस्य कार्यविषयकमन्यत्र प्रतिपादित मतं नानुबध्नाति । अस्मिन् प्रसंगे द्रष्टव्यावोलिखिता कारिका—

आसां स्वभावभिन्नाना परस्परसमागमात् ।
विन्यास एकभावेन फलहेतु प्रकीर्तित ॥ ना० शा० १९.१५

२. ना० शा० १९ ९४ अधिकृत्याभिनवगुप्तो व्याख्याति – बीजकार्योपगमनमादानमिति बीजफलस्य समीपताभवनमित्यर्थ इति ।

३. एतदेव समर्थितं कीथ-महाभागेन । तद्यथा—

It was inevitable that the complicated and confused work of Bharata should be superseded for many purposes by something more accessible and cosy to follow and this need wa supplied by the Daśarūpaka of Dhananjaya. The Sanskrit Drama p. 272

४. Sanskrit Drama p. 299

५

## पताका-स्थानकम्

पताकावृत्त प्रधाननायकस्य फलप्राप्तौ आनुकूल्यं साधयति । तत्र च पताकानायकस्य बहुतरेतिवृत्ते व्यापकता भवति । पताकास्थानकेऽपि तादृशं किञ्चिद् वृत्तं भवति येन प्रधाननायकस्य फलप्राप्तौ आनुकूल्य जायते, किन्तु अस्य तु परिमितेतिवृत्तव्यापकत्वम् । पताकानायक कश्चित् पुरुषविशेषः प्रधाननायकस्य साह्यमाचरति ।[1] पताकास्थानकस्य नास्ति कश्चिदपरो-नायक । पताका प्रासंगिककथा भवति, पताका-स्थानक तु वृत्तमात्रमेव ।

चतुर्विध पताकास्थानक भवतीति भारतीयं मतम् । तेषां सर्वेषा सामान्यं लक्षणमभिनवगुप्तो भरतमनुसृत्य व्याख्याति—अर्थः प्रयोजनमुपायश्च कर्मकरण-व्युत्पत्त्या, अन्यस्मिन्नुपाये प्रयोजने वा चिन्तिते अन्य उपायान्तर-प्रयोजनान्तरलक्षण. प्रकर्षेण युज्यते सम्बध्यते यत्रेति तत्पताकास्थानकम् । पताकास्थानकं तु मुख्यमर्थं विचित्रयति ।[2]

प्रथमे पताकास्थानके घटित वृत्तं सहसा समायाति मूलप्रयोजनस्य चोत्कृष्टं सत् भृशं साधकं स्यात्[3] । अस्योदाहरणमभिनवगुप्तो निर्दिशति—यथा रत्नावल्यां सागरिकायां पाशावलम्बन-प्रवृत्तायां वासवदत्तेयमिति मन्य-मानो यदा राजा पाशं मुञ्चति तदा तदुक्त्या 'सागरिकां प्रत्यभिज्ञाय-हा कथं मे प्रिया सागरिका ! अलमलमतिमात्रमित्यादि ।' इदं प्रयोजनस्योदाहर-णम् । अन्यस्मिन्नुपाये चिन्तिते सहसोपायान्तरप्राप्तिर्नागानन्दे वर्तते । तत्र जीमूतवाहनस्य शखचूडाप्राप्तवध्यपटस्य कञ्चुकिना वासोयुगलार्पणम् ।

---

१. तेन सहकारित्वसामान्यात् तत्समाचरणलक्षणात् [पताकास्थानकस्य] पताका-सादृश्यमिति यावत् । ना० शा० १८.३० अधिकृत्य ।

२ यत्रार्थे चिन्तितेऽन्यस्मिस्तल्लिङ्गोऽन्य. प्रयुज्यते । आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ ना० शा० १९ ३०

३ सहसैवार्थसम्पत्तिर्गुणवत्युपकारत ।
पताकास्थानकमिद प्रथम परिकीर्तितम् ॥ ना० शा० १९ ३१

६

## कथावस्तु-प्रकारः

भारतीये नाट्यशास्त्रे चतुर्विधं कथावस्तु वर्णितम् । तद्यथा—प्रख्यातम्, औत्पत्तिकम्, अनार्षम्, आहार्यञ्चेति । एतेषु प्रख्यातमनार्षमाहार्यञ्च पूर्व-परिचितं कथानकं स्वीकुर्वन्ति । औत्पत्तिकं वस्तु नाट्यकविना सर्वथा कल्पितं भवति ।

भरतादिभिर्नाट्याचार्यैः प्रख्यातवस्तु इतिहासादेगृ र्हीतमिति स्पष्टी-कृतम् । तत्र नाटके वस्तु प्रख्यात भवति, प्रकरणे चानार्षमाहार्यमौत्पत्तिकं च वस्तु वर्तते ।[1] एतदधिकृत्याभिनवगुप्तेन व्याख्यातम्—प्रख्याते भारतादौ यद्वस्तु तद्विषयोऽस्य ।[2] इतिहासादौ पुराणानि अपि अभिनवगुप्तेन स्वीकृतानि ।[3]

औत्पत्तिकं तु सर्वथा समुत्पाद्यं वस्तु भवत्येव । अनार्षमिति पुराणादि व्यतिरिक्तबृहत्कथाद्युपनिबद्धं मूलचरितादि । आहार्यमितिपूर्वकविकाव्या-द्वाहरणीयं समुद्रदत्तचेष्टितादि ।[4]

वैदिकसाहित्य उपनिबद्धं कथानकं प्रख्यातमस्ति न वेति विचारणायाम-भिनवगुप्तेनाधोलिखितं निर्देशनं प्रमाणम्—

'अनार्षमिति पुराणादिव्यतिरिक्तबृहत्कथाद्युपनिबद्धम्' इत्यनेन सर्वमार्षं साहित्यं प्रख्यातमिति सम्भाव्यते ।

दशरूपके धनञ्जयस्तु आहार्यमनार्षं च कथावस्तु न स्वीकुरुते । तदनुसारं तु वस्तु त्रेधा भवति—प्रख्यातम्, उत्पाद्यम्, मिश्रञ्चेति । प्रख्यातमुत्पाद्यं च भारतीयं सुसम्मतञ्च, किन्तु मिश्रं नाम वस्तु भरतो न निर्दिशति । वस्तुतो मिश्रवस्तुन. कल्पना अभारतीया ।

---

१. ना० शा० १८.१०, ४५, ४६

२. प्रख्याते भारतादौ । तेनेतिहासाछिऽमाणवस्तु-विषयकं नाटकम् ।
ना० शा० १८.१० अधिकृत्य भारती

३. ना० शा० १८.१२ अधिकृत्य भारती

४ ना० शा० १८ ४५, ४६ अधिकृत्य भारती

धनञ्जयानुसारं प्रख्यातस्य उत्पाद्यस्य च सङ्करात् मिश्रं वस्तु भवति।[१] दशरूपक ईहामृगे मिश्रं वस्तु निर्दिष्टम्। तद्यथा,

मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिमत्। दश० ३ ७२

भारतीये नाट्यशास्त्र ईहामृगे मिश्रं वस्तु न निर्दिष्टम्। तदनुसारं तु कस्मिंश्चिदपि रूपके मिश्रं वस्तु न भवति।

मिश्रवस्तु प्रकल्पनेऽपरोऽयं विसंवादो विचारणीयो यत् नाटके प्रख्यातं वस्तु भवतीति भरतस्य धनञ्जयस्य च सम्मतम्। किन्तु प्रायश सर्वेषां नाटकानां कथावस्तुनि क्वचित्क्वचिदुत्पाद्यकथांश· सम्यग्विलसति। तद्यथा, अभिज्ञान-शाकुन्तले षष्ठसप्तमाङ्कयो कथा कविकल्पितास्तीति निर्विवादम्। अस्मिन्नुत्पाद्ये कथांशे सत्यपि अस्य नाटकस्य कथावस्तु प्रख्यातमेव मन्यते। न प्रख्यातोत्पाद्यमिश्रणेन कथाया मिश्रता कल्पनीया। यदि नाम मिश्रं वस्तु स्वीक्रियेत, तर्हि सर्वेषा नाटकानां कथावस्तु मिश्रं भवेदिति महती विप्रतिपत्ति।

अत एव धनञ्जयस्य मिश्रवस्तुकल्पना चिन्त्यैव। यथा प्रख्याते तथैवाहार्ये अनार्षे च वस्तुनि कविरात्मशक्त्योत्पाद्यांशं योजयित्वाधिकावापं प्रकरोति।[२]

भोजस्तु पञ्चविधं वस्तु मनुते। तद्यथा—इतिहासाश्रयम्, कथाश्रयम्, उत्पाद्यम्, अनुत्पाद्यम्, प्रतिसंस्कार्यं च। एतेषु इतिहासाश्रयं कथाश्रयं, उत्पाद्यञ्च भरतस्य क्रमश प्रख्यातम्, अनार्षम्, औत्पत्तिकञ्च सन्ति। अनुत्पाद्यं तु भूतकालिक-वर्तमानराजानां चरितमेव। प्रतिसंस्कार्यं तु परिष्कृतमैतिहासिकं कथानकमस्ति।[३] प्रतिसंस्कार्यं तु भरतस्य प्रख्यातवृत्ताद् भिन्नं नास्ति, यतो हि नाम प्रख्यातं वृत्तं नाट्ययोजनायामवश्यमेव प्रतिसंस्क्रियत एव। भोजस्य कथाया पाञ्चविध्ययोजनाया मिश्रं नाम कथावस्तु न स्वीकृतम्।

---

१ प्रख्यातोत्पाद्यमिश्रत्वभेदात् त्रेधापि तत् त्रिधा।
प्रख्यातमितिहासादेरुत्पाद्य कविकल्पितम्।
मिश्र च सकरात् ताभ्या दिव्यमर्त्यादिभेदत॥

२. ना० शा० १८.४६ अधिकृत्य भारती।

३ इतिहासाश्रयं, कथाश्रयमुत्पाद्येतिवृत्तमनुत्पाद्येतिवृत्त प्रतिसंस्कार्येतिवृत्तमिति पंच प्रबन्धशरीराणि।···· ···· अनुत्पाद्येतिवृत्तमित्यनेन यथावगतवर्त्तमानातीत-महाराजादिवृत्तवर्णनम्। यथा हर्षवर्धनराज्यवर्धनादीना च वर्णनं हर्षचरिते। इत्यादि श्रृंगारप्रकाशे द्वादशप्रकाशे पृष्ठम् ४८१

७

## कार्यावस्थाः

रूपकेषु आधिकारिक-कार्यस्येतिवृत्तस्य वा पंचावस्था भरतेन प्रमाणिता.—

इतिवृत्तं समाख्यातं प्रत्यगेवाधिकारिकम् ।
तदारम्भादि कर्तव्यं फलान्तं च यथा भवेत् ।। १९ १६

संसाध्ये फलयोगे तु व्यापार· कारकस्य यः ।
तस्यानुपूर्व्या विज्ञेया पञ्चावस्था प्रयोक्तृभि· ।। १९.७

सर्वस्यैव हि कार्यस्य प्रारब्धस्य फलार्थिभि ।
एतास्त्वनुक्रमेणैव पञ्चावस्था भवन्ति हि ।। १९ १८

### आरम्भः

पञ्चावस्था आरम्भ, यत्नः, प्राप्तिसम्भव, नियताप्तिः, फलागमश्च सन्ति । एतासां कृते क्वचिन् मानसिको व्यापार, क्वचिच्छारीरिको व्यापार, क्वचिदुभयविधो व्यापारोऽपेक्ष्यते । तथा हि आरम्भावस्थायामौत्सुक्यमात्रं मानसिकव्यापारोऽस्ति—

औत्सुक्यमात्रबन्धस्तु यद्बीजस्य निबध्यते ।
महत फलयोगस्य स फलारम्भ इष्यते ।। (ना० शा० १९.९)

यथाभिज्ञान-शाकुन्तले नायको दुष्यन्त शकुन्तला समीहते । इद-मौत्सुक्यं न केवलं प्रधाननायकस्य, अमात्यस्य, नायिकाया., प्रतिनायकस्य, दैवस्य वा स्यादिति अभिनवगुप्तेन विशदीकृतम् ।[1] एतेषां कस्यचिदेकस्यौत्सुक्यं हृदयनिरूढं भवति, इतरेषा च शारीरिकव्यापारा. फलेतरदिशि सन्त्येव । यथा अभिज्ञानशाकुन्तले सखीना वृक्षसेचनादि कार्याणि सन्ति ।

दशरूपके धनञ्जयेनारम्भस्य लक्षणं विहितम्—

औत्सुक्यमात्रमारम्भः फललाभाय भूयसे । १.२०

एतत्तु भारतीयं लक्षणमनुवर्तते ।

---

१. सा च नायकस्यामात्यस्य नायिकाया· प्रतिनायकस्य दैवस्य वा ।······दैव-साहाय्यस्य पुरुषकारस्य फलवर्तिता' इत्यादि १९ ६ अधिकृत्य भारती ।

## प्रयत्नः

द्वितीयावस्था प्रयत्नो वा यत्नो वा भरतानुसारं प्रवृत्तिद्वयं व्यनक्ति—

(१) फल प्रति व्यापार ।

तथा च (२) परमौत्सुक्यगमनम् । [1]

औत्सुक्यस्य परमाधिक्यं प्रयत्नावस्थायां भवतीति धनञ्जयेन दशरूपके न प्रकटितम् । तदनुसारं तु व्यापारमात्रमेव प्रयत्नः —

प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वित ॥

धनञ्जयस्यैषा त्रुटिरेव यत् प्रयत्नावस्थाया औत्सुक्यं स नैव निर्दिशति । वस्तुत· प्रयत्नावस्थायामौत्सुक्यं वर्तत एव । तद्यथाभिज्ञान-शाकुन्तले तृतीयाङ्के, प्रयत्नावस्थायाम्—

(तत प्रविशति कामयमानावस्थो राजा)

राजा— जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।

अलमस्मि ततो हृदय तथापि नेदं निवर्तयितुम् ॥ ३ २

(मदनबाधां निरूपयन्) भगवन् कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसन्धीयते कामिजनसार्थः । कुत —

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो—
द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै—
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥ ३ ३

(सखेदं परिक्रम्य) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञात खिन्नमात्मानं विनोदयामि । अभिनवगुप्तानुसारमौत्सुक्यं नाम—उपायविषयस्मरणेच्छा-सन्तान-स्वभाव ।[2]

## प्राप्तिसम्भवः

तृतीयावस्था प्राप्तिसम्भवोऽस्ति । भरतानुसारं तु ।

ईषत्प्राप्तिर्यदा काचित् फलस्य परिकल्प्यते ।
भावमात्रेण तं प्राहुर्विधिज्ञा प्राप्तिसम्भवम् ॥ ना० शा० १९ ११

---

१. अपश्यत. फलप्राप्ति व्यापारो य. फलं प्रति ।
परं चौत्सुक्यगमनं स प्रयत्न· प्रकीर्तितः ॥ ना० शा० १९.१०

२ ना० शा० १९ १० अधिकृत्य भारती ।

अत्र प्राप्तिरीषदुताहो परिकल्पनेपदिति विवेचनीयम् ।

अभिनवगुप्त एतां कारिकां विवृण्वन्नाह—"उपायमात्रेण लब्धेन यदा कदाचित् विशिष्टफलप्राप्तिरीषत् कल्प्यते. सम्भावनामात्रेण स्थाप्यते न तु निश्चीयते, तदा प्राप्तेः सम्भवः ।"

अत्र ईषत्परिकल्पनेति आचार्योऽभिप्रैति । नेदं सम्यक् प्रकल्पनमभिनवगुप्तस्येति मतमस्माकम् ।

नाटकेषु कवयो नायिकानायकयोरैकान्तिकसमागमात् प्रागेव तयोरस्थायिनं समागमं योजयन्ति । तथाहि स्वप्नवासवदत्ते—

> शय्यायामवसुप्तं मां बोधयित्वा सखे गता । ५.८
>
> स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।
>
> चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥ ५.१०

अविमारके तृतीयेऽङ्के नायकोऽविमारको नायिकायाः कुरंग्या सह अज्ञातरूपेण वर्षमेकं न्युष्य पश्चात् पृथग्बभूव ।

प्रतिज्ञायौगन्धरायणे तृतीयेऽङ्के शिष्यारूपेण प्राप्ता वासवदत्ता गान्धर्वविवाहेन परिणीता ।

कुन्दमालायां चतुर्थेऽङ्के सीता मोहं गतं रामं परिष्वजते । पश्चात् रामो रोमाञ्चितो भवति ।

मृच्छकटिके —

> वर्षशतमस्तु दुर्दिनमविरतधारं शतह्रदा स्फुरतु ।
> अस्माद्विधदुर्लभया यदहं प्रियया परिष्वक्तः ॥ ५. ४८

अभिज्ञानशाकुन्तले नायको गान्धर्वेण विधिना शकुन्तलामुपयेमे[1] । विक्रमोर्वशीये नायकयोर्मिलनसुखमीषत्कालं तृतीयेऽङ्के परिणमति ।

मालविकाग्निमित्रे नायको नायिकां मालविकां मिलित्वा संश्लेषमुपजनयति । मालविका तं नाट्येन परिहरति । तदा राजा कथयति—'रमणीय खलु नवाङ्गनानां मदनविषयावतारः । तथाहीयम्—

> हस्तं कम्पयती रुणद्धि रसनाव्यापारलोलाङ्गुलि
> स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।

1. अनुसूया—प्रियंवदे, यद्यपि गान्धर्वेण विधिना निवृत्तकल्याणा शकुन्तला । तृतीयचतुर्थाङ्कयोर्मध्ये मिश्रविष्कम्भके ।

पातु पक्ष्मलनेत्रमुन्नमयत साचीकरोत्याननं
व्याजेनाप्यभिलापपूरणसुख निर्वर्तयत्येव मे ॥ ४ १५

रत्नावल्या नायकयोर्मिलनं द्वितीयाङ्के भवति। पश्चात्—

राजा—(सानन्दं) यथाह भवती। (सागरिका हस्ते गृहीत्वा स्पर्शसुखं नाटयति। )

वसन्तक—भो, एसा खु तुए अपुव्वा सिरी समासादिदा।

राजा—वयस्य, सत्यम्—

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवम् ॥ २. १७

पश्चात् पुनरपि तयोर्मिलनं भवति। राजा नायिकां कथयति—

चलितमपि निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥ ३ १७

प्रियदर्शिकायां नायक आरण्यका कमलवने मिलति। पश्चात् रङ्गपीठे पात्रीभूय तौ परिणयमभिनयतः।

उत्तररामचरिते तृतीयेऽङ्के वनप्रोषिता सीता मूर्छितं राममुपसृत्य हृदि ललाटे च स्पृशति। प्रत्यापन्नचेतनो रामो वदति—

आलिम्पन्नमृतमयैरिव प्रलेपैरन्तर्वा बहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मादानन्दादपरविधं तनोति मोहम् ॥ ३. ३८

मालतीमाधवस्य षष्ठेऽङ्के मालतीमाधवयोरीषत्प्रणयभोगो निदर्शित । तथाहि—

माधव — किं वा भणामि विच्छेददारुणायासकारिणि।
कामं कुरु वरारोहे देहि मे परिरम्भणम् ॥ ६ ११

मालती—(सहर्षम्) कथमनुगृहीतास्मि। (उत्थाय) इयमालिङ्गामि। दर्शनं पुनर्बाष्पोत्पीडनेन प्रियसख्या प्रत्यक्षं न लभ्यते—इत्यादि।

प्राचीनरूपकेषूपर्युक्तास्थायिसमागमप्रसङ्गा ईषत्प्राप्तेरुदाहरणानि सन्ति। ईषत्प्राप्तेरनन्तरं या वियोगावस्थान्तरीभवति सा रसमयसन्दर्भस्य सर्वोत्कृष्टं वैचित्र्यमावहतीति परं प्रयोजनमीषत्प्राप्तेः। अभिनवगुप्तानुसारं विप्रलम्भाद्यभावे तु का तत्र विचित्रता रञ्जनायाः।[1]

---

1. ना० शा० १८. १० मधिकृत्य भारती।

सान्तरायो लाभः पुनर्विच्छेदः पुनः प्राप्तिः पुनर्विच्छेद पुनश्चैतस्यैवान्वेषणं वारं सोऽनिर्धारितैकान्तफलप्राप्त्याशात्मको गर्भसन्धिरिति ।[1]

फलयोगे तु समग्रं क्रियाफलं भवति,[2] किन्तु प्राप्तिसम्भवेऽसमग्रं क्रियाफलमुत्पद्यते । ईषत्प्राप्ति नाम फलप्राप्तेरसमग्रता, तदेव हि प्राप्तिसम्भवस्य प्रधानं लक्षणमिति प्रतिपाद्यं प्रतिभाति भरतस्य । तदनुसारं प्रणयात्मकानि रूपकाणि प्राप्तिसम्भवं यथा तथा सन्धौ घटयन्ति ।

उपर्युक्तं विश्लेषणं तु भरतानुसारमेव । प्राप्तिसम्भवात्मके सन्धौ प्राप्तिरप्राप्तिरेव वेति नाट्यशास्त्रीयं कारिकाशं विशदयन्नभिनवगुप्तः सम्यगाह—

अप्राप्तिरन्वेषणमित्येवंभूताभिरवस्थाभि पुनः पुनर्भवन्तीभिर्युक्तो गर्भसन्धि', प्राप्तिसंभवाख्ययावस्थया युक्तत्वेन फलस्य गर्भीभावात् । तथाहि रत्नावल्यां द्वितीयाङ्के—

सुसंगता—अदक्षिणा इदानी त्वं या एवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि ।

—इत्यादौ प्राप्ति ।[3]

दशरूपके प्राप्तेरसमग्रता धनञ्जयेन न निर्दिष्टा प्राप्तिसम्भवपरिभाषाप्रसंगे इति त्रुटि ।[4] रसार्णवसुधाकरेऽपि प्राप्त्याशाप्रसंगे 'ईषत्प्राप्ति' ननिर्दिष्टा ।

ईषत्प्राप्तिः प्रायः प्रणयात्मकेषु नाटकेषु नायकयोरस्थायिसमागमरूपेण विलसति । तत्पश्चात् कविसमीहितं विप्रलम्भश्रृंगारस्यौचित्यं वर्तत एव । एतदनुसारं भारतीया प्राप्तिसंभवविषयिकी कारिका व्याख्येया ।

तदयमत्र निष्कर्षो यत् प्राप्तिसंभवपदे संभवशब्द उत्पत्तिपर कुमारसंभवपद इव । स चासौ संभवः प्रकृते क्षणमात्रात्मा न तु दीर्घकालिकः स्थायी वा यथा समग्रफलप्राप्तिरूपे फलागमे ।

### नियताप्तिः

प्राप्तिसम्भवे नायकयोर्मिलनं गोपनीयं विधानं प्रवर्तते । तदेव नियताप्तौ गोपनीयतां विजहाति फलागमे च सुप्रकाशिता भवति ।

---

१. दशरूपके १. ३६ अधिकृत्यावलोक. ।

२. अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् ।
इतिवृत्ते भवेद्यस्मिन् फलयोगो प्रकीर्तित. ॥ ना० शा० १९. १३ ।
धनञ्जयोऽप्येतदेव समर्थयति—
समग्रफलसम्पत्तिः फलयोगो यथोदित. ॥ द० रू० १. २२ ।

३. ना० शा० २१. ४१ अधिकृत्य भारती ।

४ उपायापायशंकाभ्या प्राप्त्याशा प्राप्तिसंभवः ॥ द० रू० १. २१ ।

नियताफलप्राप्तिनामिकायामवस्थाया फलप्राप्तिर्न भवति, किन्तु सा दृश्यत इति भरत परिभाषते—

> नियतां तु फलप्राप्तिं यदा भावेन पश्यति ।
> नियता तां फलप्राप्तिं सगुणां परिचक्षते ॥ १९.१२

फलप्राप्तौ या काश्चिदपायकृता बाधास्ता सर्वा अस्यामवस्थाया पूर्वोपात्तेनोपायेन (भावेन) दूरीक्रियन्ते । अत एव फलप्राप्तिर्निर्बाधं हस्तगता इव लक्ष्यीक्रियते । प्राप्तौ सन्देहलेशोऽपि न स्यात् ।

पूर्वोक्तां भारतीयां परिभाषामनुसरन् धनञ्जयो दशरूपके प्राह—

> अपायाभावत प्राप्तिर्नियताप्ति सुनिश्चिता ॥ १.२१

फलागमः

पञ्चमावस्था फलोत्पत्ति, फलयोग, फलागमो वा नाम । एतस्या यथानामाभीष्टा फलप्राप्तिर्भवति ।[१] अभिनवगुप्तानुसारं तु यस्मिन्नितिवृत्ते कर्त्र्यवस्थात्मनि नायकस्याभिप्रेतं तादृशम्, अपि च नानुचितम्, अपि तु प्रतिरूपमुचितं सम्भवात् पूर्णक्रियाफलमिति समनन्तरफलम्, न च विधिफलमिव स्वर्गादिकालान्तरापेक्षि वर्ण्यते, सावस्था नायकस्य फलयोग फलोत्पत्तिर्नाम ।

तत्र सचिवामात्यादेरपि यावस्था, सा वस्तुतो नायकगामिन्येव भवतीति नाटकेषु नावश्यं सर्वा नायकस्य साक्षादेवोपनिबन्धनीया, अपितु सचिवादिगतत्वेनापि फलयोगस्तु साक्षादेव तद् (नायक) गतः ।[२]

इमा पञ्चावस्था एव फलहेतुं विन्यस्यन्ति इति भरतेन स्पष्टीकृतम्—

> आसां स्वभावभिन्नानां परस्परसमागमात् ।
> विन्यास एकभावेन फलहेतु प्रकीर्तित ॥ १९.१५

एतासां फलहेतुत्वे सति धनिकेन निर्दिष्टं अर्थप्रकृतीनां फलहेतुत्वमपास्तम् ।[३] अभिनवगुप्तेनापि अर्थप्रकृतिः फलहेतव इति व्याकृतम् । न तत् साधु ।[४]

———

१. अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् ।
इतिवृत्ते भवेद्यस्मिन् फलयोग' प्रकीर्तित ॥ ना० शा० १९.१३

२. ना० शा० १९.१३ अधिकृत्य भारती ।

३. अर्थप्रकृतय. प्रयोजनसिद्धिहेतवः ।

४. ना० शा० १९.२० अधिकृत्य भारती ।

# सन्धिः

अवस्थाना क्रममनुसृत्य पंच सन्धयो विन्यस्यन्ते[1]। यथा महाभारतं पर्वसु, रामायणं काण्डेषु, महाकाव्यानि च सर्गेषु विभज्यन्ते, तथैव रूपकाणि सन्धिषु विभज्यन्ते। सन्धिशब्दस्य व्याकरणिकव्याख्याभिनवगुप्तेनोपस्थापिता तद्यथा, तेनार्थवयवाः सन्धीयमाना परस्परमङ्गैश्च सन्धय इति समाख्या निरुक्ता।[2] द्वयोर्वस्तुनो सम्बन्धे सति तयोर्मिलनस्थलं सन्धिर्वस्तुत स्यात्, किन्तूपचारत सम्बद्धा खण्डा अपि सन्धिरिति व्यपदिश्यन्ते। पर्वशब्दस्यापि तादृश प्रयोग. मिलनस्थलं सम्बद्ध-कथावयवञ्च व्यनक्ति। सन्धिस्तु कथावयव इत्यभिनवगुप्तस्य स्पष्टं मतम्।[3]

तर्हि एतद् व्युत्पन्नं यत् कस्या अपि अवस्थाया नाट्योचित कथारूपं सन्धि स्यात्। सन्धिनाम्ना स एव कलात्मको विन्यासोऽभिप्रेतो येन रूपकेषु घटनाना तासा संविधानाना च प्रक्रमो वर्ण्यते।

---

१ मन्धयो ह्यवस्था परतन्त्रा। प्रारम्भाभिधान-दशाविशेपोपयोगि कथाखण्डलक मुख-सन्धिरित्युक्तम्। ना० शा० १९.१०५ अधिकृत्य भारती।
महावाक्यार्थरूपस्य रूपकार्थस्य पचाशा अवस्थाभेदेन कल्प्यन्ते। प्रारम्भावस्थोपयोगी यावानर्थराशि स मुखसन्धिः। तस्यार्थराशेरवान्तरभागा उपक्षेपाद्यानि मन्ध्यङ्गानि। ना० शा० १९ ३९ अधिकृत्य भारती।

२ ना० शा० १९ ३७ अधिकृत्य भारती। अर्थभागराशि सन्धिरिति मतमभिनवगुप्तस्य ना० शा० १९ ५० अधिकृत्य भारत्या प्रकटितम्।

३ ना० शा० १९ १०५ अधिकृत्य भारत्या प्रारम्भाभिधानदशाविशेपोपयोगि-कथा-खण्डलकं मुखसन्धे। ना० शा० १९ ४२ अधिकृत्य विमर्श-सन्धिं स्पष्टयताभिनव गुप्तेनान्येपा मत विशदीकृतम्। तथा हि—विमर्शादिकारणत्वाद् विमर्शरूपे कथावयवे म विमर्शो नामेति।
The word Sandhi in Sanskrit dramaturgy denotes both linking up of the parts and also the parts themselves –Siddheshwar Chattopadhyaya, Nātakalaksana–Ratnakośa P. 50

दशरूपके तु धनञ्जयः सन्धिं परिलक्षयते—

अवान्तरार्थसम्बन्ध सन्धिरेकान्वये सति । १.२३

अनया परिभाषया सन्धे सामग्र्यं न प्रतीयते, न च सन्ध्यङ्गेषु फलानुवर्तिनीना घटनाना कलात्मकविन्यासो व्यज्यते। अन्यच्च धनञ्जय सन्धिं मिलन-स्थलमेवेति व्याकरोति। सन्धिस्तु कथावयव इति तस्य परिभाषा न बोधयति।[1]

अन्यच्च विसंवादो धनञ्जयस्याधोलिखितकारिकाया प्रत्यक्षमेव—

अर्थप्रकृतय पञ्च पञ्चावस्था-समन्विताः ।
यथासङ्ख्येन जायन्ते मुखाद्या पञ्च सन्धय । १-२२-२३

पञ्चावस्थानां पञ्चसन्धिभि सह यथासंख्यं युज्यते एव, किन्तु सन्धीनामर्थप्रकृतिभि सह यथासंख्यमसंभाव्य, यतो हि नाम न सर्वेषु नाटकेषु पताकाप्रकर्यो स्थितिरावश्यकी । अन्यच्च विन्दुर्नाम सर्वेषामङ्कानामन्तभागे स्यादेवेति भारतीयो नियम । अतएव प्रतिमुखसन्धावेव विन्दो, गर्भसन्धौ पताकाया, विमर्शसन्धौ प्रकर्या अवश्यम्भाविता असदाग्रह एव ।

धनञ्जयेनापि दशरूपक एवाधोलिखितकारिकाया यथासंख्यस्य वैकल्पिकत्वं पताकाया वैकल्पिकत्वेन प्रमाणितम्—

गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषण मुहु ।
द्वादशाङ्ग पताका स्यान्न वा स्यात् प्राप्तिसम्भव ॥ दश० १ ३६

भरतेन पूर्वोक्तं यथासंख्यं न चर्चितम् । धनञ्जयस्य तदनुसन्धानमसदभारतीयञ्चास्ति ।

इतिवृत्तात्मकावस्थासु प्रतिष्ठितासु सन्धीना विनियोगस्य कावश्यकतेति प्रश्न समाधानमर्हति। वस्तुतोऽवस्थाः कार्यस्य विकासं प्रतिपादयन्ति,तदनुसारेण च ताभिर्नायकस्य चारित्रिकोत्कर्षो व्यज्यते । सन्धिभि कवे कथाविन्यासस्य कलात्मक-सौष्ठवं व्यज्यते। इदमेव प्रयोजनवैशिष्ट्यमवस्थाया सन्धेश्च पार्थक्य समादधाति। अभिनवगुप्तानुसारतस्तु 'महावाक्यार्थरूपस्य रूपकार्थस्य पञ्चाशा अवस्थाभेदेन सन्धिषु कल्प्यन्ते ।'

तत्रावस्था-क्रमेण पञ्चसन्धय मुखं, प्रतिमुखं, गर्भं, विमर्शं, निर्वहणञ्च सन्ति।

---

१ अन्यत्र ३.२६ कारिकाया धनञ्जय 'सन्धि वृत्तखण्ड एव' इति स्पष्टयति ।
शृङ्गारप्रकाशे भोजस्यैव मतम्—अथैतदुपाधे कथाशरीरभागाना मुखादय पञ्च व्यपदेशा भवन्ति ।

१

## सन्ध्यङ्गानि

पंचसन्धीनामङ्गेषु विभाजनं नाट्यशास्त्राचार्यैः समुपकल्पितम्। भरतानुसारं—

> सन्धीनां यानि वृत्तानि प्रदेशेष्वनुपूर्वशः ।
> स्वसम्पद्गुणयुक्तानि तान्यङ्गान्युपधारयेत् ॥

अभिनवगुप्तानुसारतो मुखे द्वादश, प्रतिमुखे गर्भे च त्रयोदश, अवमर्श-द्वादश, निर्वहणे चतुर्दशेतिमिलित्वा सन्ध्यङ्गानि चतुष्षष्ठि. सन्ति। 'सन्ध्यंगानि तु फलानुवर्तीनि स्युः' इति तेषामेकं प्रधानं लक्षणम्।

### मुखसन्ध्यगानि

भरतानुसारेण तु

> यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
> काव्ये शरीरानुगता तन्मुखं परिकीर्तितम् ॥ १९.३८

मुखे कथाबीजस्योत्पत्तिर्भवति। बीजसमुत्पत्तौ बहूनां रसानामर्थानां च सम्भावना स्यादेव। अत्र काव्यशरीरं समुत्पद्यते। एतदेव बीज-समुत्पत्ति। एतदनुसृत्याभिनवगुप्तो व्याख्याति—

प्रारम्भोपयोगी यावानर्थराशि प्रसक्तानुप्रसक्तया विचित्रास्वाद आपतितस्तावान् मुखसन्धि.।[1]

तत्रावस्थानुयोगित्वात् फलप्राप्तये औत्सुक्यमेव प्रधानोऽर्थराशिः। धनञ्जयो दशरूपके मुखस्य भारतीयं लक्षणमुदाहरति।

रसनिष्पत्तिर्भूयसी स्यादिति उद्दिश्येतिवृत्तस्योपकरण-रूपाणि सन्ध्यङ्गानि भवन्ति। तानि च रसस्य विभावादीन् प्रस्तावयन्ति।[2] मुख-

---

१ ना० शा० १९ ३९ अधिकृत्य भारती।

२. तेन रसस्यैवायं विभावादिपरिकरो यदङ्गचक्रम्। ना० शा० १९ १०५ अधिकृत्य भारती। ना० शा० १९ ११५ अधिकृत्य भारती सन्धीनामुपकरणरूपत्वं संकेतयति।

सन्धौ आरम्भ एव कार्यमौत्सुक्यं स्यात् । तदनुसृत्यैकादश सन्ध्यङ्गानि—उपक्षेप, परिकर, परिन्यास, विलोभनम्, युक्ति, प्राप्ति, समाधान, विधानं, परिभावना, उद्भेद, करणञ्च भवन्ति ।

उपक्षेप

भरतानुसारेण

काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृत । १९ ६८

काव्यार्थस्तु इतिवृत्त-शरीरमेव । तस्य प्रथमपदमुपक्षेप स्यात् । अभिनवगुप्तानुसारेण तत्र प्रधानरसस्य संकेतोऽपि स्यात् ।[1]

धनञ्जय उपक्षेपे बीजन्यास निर्दिशति । अत्र बीजपदेनोपक्षेपे फलहेतु-सङ्केत आवश्यकोऽभिमत ।

परिकर.

भरतो धनञ्जयश्चोभौ बीजार्थस्य बाहुल्य परिकर इति परिभाषेते ।[2] अभिनवगुप्तस्तु व्याख्याति—तत ईषद् विस्तार्यते । अर्थात् काव्यार्थं फलं प्रति किञ्चिदग्रे प्रसरति परिकरे । परिकरस्य प्रयोजनमिष्टार्थस्य रचनास्ति ।[3]

परिन्यास

भरतो धनञ्जयश्च परिन्यास समं परिभाषेते—

"तन्निष्पत्ति परिन्यास ' इति ।

अभिनवगुप्तानुसारेण तु 'ततोऽपि निश्चयापत्तिरूपतया परितो हृदये स (काव्य-) अर्थ उपन्यस्यते ।

विलोभनम्

भरतस्य धनञ्जयस्य च विलोभन-परिभाषा समाना विद्यते—गुणाख्यान गुणनिर्वर्णन वा विलोभनमिति । अत्र प्रश्न समुदेति—कस्य गुणानामाख्यानमिति । अभिनवगुप्तेन स्पष्टीकृतं—ततस्तदेव गुणवदिति श्लाघ्यते । अर्थात् काव्यार्थस्य गुणाख्यानमित्यभिप्राय. । किन्तु 'अस्या सर्गविधौ' इत्यादि

---

१ काव्यार्थ इतिवृत्तशरीर-लक्षणोऽभिधेयः, प्रधानरसलक्षण च प्रयोजनसंक्षेपेणोपक्षिप्यते । ना० शा० १९ ६९ अधिकृत्य भारती ।

२ यदुत्पन्नार्थ बाहुल्यं ज्ञेयः परिकरस्तु स ॥ ना० शा० १९ ७०
तद्बाहुल्यं परिक्रिया । दशा० १ २७

३. ना० शा० १९ ७१ अधिकृत्य भारती ।

उदाहरण नायिकाया गुणाख्यानं प्रस्तौतीति विवाद । धनिकस्याप्युदाहरण तादृशमेवासमीचीनम् ।

**युक्तिः**

भरतस्य धनञ्जयस्य च युक्ते परिभाषा समानैव—

सम्प्रधारणमर्थानां युक्तिरिति ।

अत्रार्था भूतकालिकघटना. सन्ति। ता अधिकृत्य विचारणा युक्त भवति। युक्त्या प्रकाश्य-प्रकाशनं स्वभावतो भवति। नास्त्यत्र प्रयोजनस्य निर्बन्धो, यथा धनिको विवृणोति। युक्तिरन्येषु सन्धिष्वपि सम्भवति।

**प्राप्ति**

भरतो धनञ्जयश्च उभौ कस्यचिन्नायकस्य सुखार्थस्य प्राप्तिमेव प्राप्तिरिति मन्येते।

**समाधानम्**

बीजार्थस्योपगमनं समाधानमिति भरतधनञ्जययोर्मतम्। अभिनवगुप्तानुसारतोऽस्मिन् सन्ध्यङ्गे प्रधाननायको बीजार्थेन प्रत्यक्षतः समायुज्यते।[1]

**विधानम्**

विधाने नायकस्य कस्यचित् सुखं दु.खञ्चोभे भवत इति भरतधनञ्जययोः समानं मतम्। अस्मिन् सन्ध्यङ्गे इष्टार्थस्य रचना निगूहनेन भवति।[2] विधानमन्येषु सन्धिष्वपि युज्यते।[3]

**परिभावना**

भरतानुसारेण प्रथमं कुतूहलं तदनु आवेगो यस्मिन् कथांशे भवति स परिभावना। धनञ्जयानुसारेण तु अद्भुतादावेशो जायते, स एव परिभावना।

**उद्भेदः**

'बीजार्थस्य प्ररोहो य स उद्भेद इति स्मृत'

इति भरतस्य परिभाषा। तदनुसारेण बीज-सम्बन्धि घटनाया ईषद् विकास एवोद्भेद ।

---

१. यस्मिन् बीजं प्रधाननायकानुगतत्वेन सम्यगाहितं भवति। ना० शा० १९.७२ अधिकृत्य भारती।

२–३ ना० शा० १९.७४ अधिकृत्य भारती।

धनञ्जयस्योद्भेद-परिभाषा तु अन्यथैव । तद्यथा—

'उद्भेदो गूढभेदनम्'

अर्थात् निगूढतत्त्वस्य प्रकटीकरणमेवोद्भेद ।

**करणम्**

भरतधनञ्जयानुसारेण करणं तु फलानुवर्तिसमारम्भस्योपक्रम एव ।[1] अत्र प्रश्न· समुदेति—यदि मुखसन्धौ आरम्भ एव कार्यावस्थौत्सुक्यमात्रं समावेशयति, तर्हि सन्ध्यङ्गेऽस्मिन् कार्यारम्भ. कथं स्यात् । नैष कार्यारम्भ. । धनिकस्याभिनवगुप्तस्य चोदाहरणेषु करणं फलानुवर्तिनोऽग्रिमकार्यपदस्य यत्नस्य निश्चिते. प्रकटीकरणमेव ।

**भेदः**

भरतस्तु 'संघातभेदनार्थो भेद.' इति परिभाषते । अर्थात् भेदनामकेन सन्ध्यङ्गेन पात्राणि भिद्यन्ते । न खल्वस्मिन् संध्यङ्गे औत्सुक्यस्य लेशोऽपि दर्शनीय ।

दशरूपके तु 'भेद· प्रोत्साहना मतेत्यत्रापि मुख-सन्धेः प्रमुखं लक्षणमौत्सुक्य-परत्वं न दृश्यते । एतेषामुपक्षेप-परिकर-परिन्यास-युक्त्युद्भेद-समाधानानामवश्यं-भावितेति धनिक ।

## प्रतिमुख-सन्ध्यङ्गानि

प्रतिमुखसन्धिस्तु यत्नावस्थात्मकानि कार्याणि विवृणोति । भरतानु-सारेण तु—

> बीजस्योद्घाटन यत्र दृष्टनष्टमिव क्वचित् ।
> मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुख स्मृतम् ॥१६ ४०

तत्र यत्नावस्थानुसरणं भवति ।[2] तदनुसारेण मुखसन्धौ फलं प्रति व्यापारेणौत्सु-

---

1 प्रकृतार्थसमारम्भ करणं नाम तद् भवेत् । ना० शा० १६.७४
करण प्रकृतारम्भ । दश० १ २६

2 धनञ्जयानुसारं तु प्रतिमुखसन्धौ बिन्दोरनुसरणं स्यात् । तदसत् । यतो हि नाम सोऽपि भरतमनुसृत्य सर्वेषामङ्गाना पूर्वं बिन्दुमावश्यक मन्यते । तथा हि—
प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृत ।
अङ्को नानाप्रकारार्थ-संविधानरसाश्रय. ॥ ३ ३०-३१
तर्हि बहवो बिन्दवो नाटकादिषु सन्त्येव । अतएव तेषा प्रतिमुखसन्धौ नियमन चिन्त्यमेव ।

व्यगमनेन च भवितव्यम् । एते अनुसृत्य त्रयोदशाङ्गानि स्युः–विलास , परिसर्पः, विधूतम्, शर्म, नर्म, नर्मद्युतिः, प्रगमनम्, निरोधः, पर्युपासनम्, वज्रम्, पुष्पम्, उपन्यासः, वर्णसंहारश्चेति ।

विलासः

भरतो धनञ्जयश्च रतिभोगयोः समीहा विलास इति प्राहतु । अभिनवगुप्तो विलासस्यान्यमप्यभिप्रायं विशदीकुर्वन् आह—

इह च रतिग्रहणं पुमर्थोपयोगि, रसगतस्थायिभावोपलक्षणं तेन वीरप्रधानेषु रूपकेषु प्रतिमुख एव ह्यास्था रतिरूपेणोत्साह ।

परिसर्पः

भरतधनंजयानुसारेण परिसर्पनामके सन्ध्यङ्गे प्रकृतस्यार्थस्य दृष्टनष्टानुसर्पणं भवति । तत्र प्रकृतार्थस्य सिद्धौ तिस्रोऽवस्थाः कल्पिताः—'कार्यपद्धतिर्दृश्यते इति प्रथमा, पश्चात् कार्यपद्धति नश्यति न दृश्यते इति द्वितीया, अन्ततो गत्वा पुनरपि कार्यपद्धतिर्ध्रियते इति तृतीया ।' एतत् सर्वं नायकस्य कार्यान्तरव्यासंगात् सम्भवति । अन्यच्चासामवस्थानां झटिति प्रवर्तनं श्लोकेनैकेन दर्शयित्वा कविश्चमत्कारं विदधाति ।

विधूतम्

विलासवद् विधूतमपि सन्ध्यङ्गं शृङ्गारात्मके रूपके परिस्फुरति । तत्र भरतानुसारेण नायकस्यानुनयं नायिका प्रथमतो न परिगृह्णाति, पश्चात् स्वीकरोति च । धनञ्जयस्तु विधूतमरतिर्नायिकायाः' इति व्याख्याति । भरतस्य धनञ्जयस्य च परिभाषे विभिन्ने इति स्पष्टमेव ।

शमः

विधूतस्य पश्चात् दशरूपके शम इति सन्ध्यङ्गं वर्तते । भारतीये नाट्यशास्त्रे शमो नास्त्येव । अस्य स्थाने तत्र तापनमिति सन्ध्यङ्गं वर्णितम् । तापनं तु सागरनन्दिना विश्वनाथेन च वर्णित शमस्थाने । शारदातनयस्तावत् दशरूपकमनुसरति शम वर्णयति च ।

शमस्तु विधूतस्य शमनमेव ।

तापनं भरतानुसारेणापाय दर्शनमिति । अपायस्तावद् बाधास्ति ।

नर्म

भरतो धनञ्जयश्च नर्म परिहासो, हास्यं वेति व्याख्यातवन्तौ । इदं नर्म कैशिकीवृत्तेः प्रधानमङ्गमेव[1] । तद्यथा दशरूपके व्याख्यातम्—

---

१. दशरूपकेऽष्टादशधा नर्म कैशिकी-प्रकरणे विवृतम् ।

वैदग्ध्य क्रीडित नर्म प्रियोपच्छन्दनात्मकम् । २ ४८

कैशिकीवृत्ति शृङ्गारपरा भवति । अतएव वीररसात्मकरूपकेषु नर्मेति सन्ध्यङ्गस्य स्थानं न स्यात् ।

नर्मद्युतिः

नर्मद्युतेः परिभाषा भरतेन धनञ्जयेन च पृथक् पृथगेव परिकल्पिता । भरतानुसारेण तु नर्मद्युतिर्हास्यमेव यया कस्यचिन्नायकस्य दोषः प्रच्छाद्यते ।[१] तदनुसृत्याभिनवगुप्तो रत्नावल्या विदूषकोक्तिमुदाहरति —'चतुर्वेदी ब्राह्मण इव ऋच पठितुं प्रवृत्ता' अत्र हि मौर्ख्यदोष छादयितुं यद्विदूषकेणोच्यते तद्राज्ञो हास्यजननमिति नर्मेव द्योतितं भवति । तथा हि राजा—महाब्राह्मण कोऽन्य एवमृचामभिज्ञ ।

धनञ्जयस्तु नर्मणा या द्युति , धृति , प्रसन्नता वा जायते तामेव नर्मद्युतिरिति व्याकरोति ।[२]

प्रगमनम्

भरतो धनञ्जयश्चोत्तरोत्तरवाक्यं प्रगमनमिति परिभाषेते । नाट्यशास्त्रे प्रगमनस्यापरः पाठ प्रगयणमित्यपि विद्यते । अभिनगुप्तानुसारेण प्रगयणं रूढिशब्दो वा प्रागयणमेव वा प्राक्+अयनमिति विग्रहेण सिद्धम् । प्रागिति पूर्ववचनं ततोऽयनं प्राप्ति यस्योत्तरवचनस्येति ।

अत्र विकल्पो जायेत यन्नाट्ये सर्वत्रोत्तरोत्तरवाक्यं विलसति । तर्हि को विशेषः प्रगमनमिति सन्ध्यङ्गस्येति विसंवाद न केनापि नाट्याचार्येण विशदीकृत ।

प्रगमस्तु प्रेमपथस्य प्रवर्तनमिति प्रेम्णोऽभिनव कश्चिद्विकास एव प्रगमनं स्यादिति कल्प्यते । तत्सम्बन्धि-संवाद एव प्रगमनम् ।

निरोध

निरोधस्तु केषाञ्चित् परवर्ति-नाट्याचार्याणा विरोध एव । यथानाम निरोधेन प्रेमपथे बाधा समुपस्थाप्यते । भरतानुसारेण 'या तु व्यसन-सम्प्राप्ति स

---

१ दोषप्रच्छादनार्थं तु हास्यम् । ना० शा० १९ ७८

२ मानियर-विलियम्स महोदय, वी० एम० आप्टे महोदयश्च द्युतिः तर्जनमिति व्याख्यात । तत्र धनिकस्य द्युतेरुदाहरणं तौ प्रवर्तयति ।

निरोध —धनञ्जयस्तमेवानुहरति—हितरोधो निरोधनमिति परिभाषते च। अभिनवगुप्तस्तु 'निरोधो खदमात्रम्' इति व्याकरोति।[1]

**पर्युपासनम्**

भरतो धनञ्जयश्च कस्यचिन्नायकस्यानुनय एव पर्युपासनमिति परिभाषेते। नाट्यदर्पणे पर्युपासनस्यापरं नाम सान्त्वनमिति विद्यते।

**पुष्पम्**

भरतधनञ्जययो. परिभाषानुसारेण पुष्पं सविशेषवचनमिति प्रतिभाति। नेयं परिभाषा स्वात्मना पूर्णा वा स्पष्टा वा। अभिनवगुप्तेन शृङ्गारात्मक-प्रवृत्तीर्मनसि कृत्वा स्पष्टीकृतम्—यथा हि प्रेमविकासिपुष्पं भवत्येवमत्रापि राज्ञ उत्तरोत्तरानुरागविशेषसूचकं वचो विकासमस्यानुरागस्य दर्शयति। एतदेव-धनिकेन दर्शितं दशरूपकस्य परिभाषामनुसृत्य।

नाट्यदर्पणे रामचन्द्रो व्याख्याति—पूर्वं स्वयमन्येन वा केनचित् प्रयुक्तं वचनमपेक्ष्य यद् विशेषयुक्तं वचन प्रयुज्यते, तेनान्येन वा तत् पूर्वस्माद् विशेष-वत्। तच्च वाक्यं पुष्पमिव पुष्पम्। केशरचनाया· पुष्पमिव पूर्ववाक्य-स्यालंकारकारित्वात्। तदनुसारेण समर्थकत्वेन विशेषवदिति।[2]

**उपन्यासः**

भरतानुसारेणोपन्यासस्तु उपपत्तिकृतोऽर्थः स्यात्। तदनुसारमभि-नवगुप्तो व्याख्याति यत्कारणं कस्यचित् कार्यस्यानेनोपन्यस्यते।[3]

धनञ्जयस्तु—'उपन्यासस्तु सोपायम् (वाक्यम्) इति परिभाषते। तदनुसारमुपन्यासेनोपायः कश्चित् प्रकटीक्रियते।[4]

**वज्रम्**

भरत-धनञ्जयानुसारेण वज्रं नाम सन्ध्यंग प्रत्यक्षत निष्ठुरं रूक्षं च वाक्यं फलानुवर्ति-कार्य-प्रसङ्गे न प्रस्तौति।[5]

---

१. व्यसनमत्र खेदमात्रमभीष्टोपरोधान्निरोध। ना० शा० १६.७८ अधिकृत्य भारती।

२. नाट्यदर्पणे १.४८ अधिकृत्य विवृति।

३. अत्र मौखर्यात्मिकोपपत्तिरूपन्यस्ता। ना० शा० १६.८१ अधिकृत्य भारती।

४. धनिकेनावलोके दशरूपकस्य 'उपन्यासस्तुसोपायम्' इत्येतस्य विवृतिं न कृतवान्। तस्य विवृतिस्तु 'प्रसादनमुपन्यासः' इति भिन्नपाठमनुसृत्य प्रपञ्चिता।

५. प्रत्यक्षरूक्षं यद्वाक्यम्। ना० शा० १६.८०

**वर्णसंहार**

भरतस्य नाट्यशास्त्रे धनञ्जयस्य दशरूपके च 'चातुर्वर्ण्योपगमनमेव वर्णसंहार' इति सम्मतम्। अभिनवगुप्तस्तु चातुर्वर्ण्येन 'सर्वेषा पात्राणा समाहार.' इत्यौपचारिकमर्थं गृह्णाति।[1] धनिकस्तु ब्राह्मणादीना चतुर्वर्णाना संगतिमेव व्याख्याति। धनिकस्य व्याख्या रूपकेषु विरलमेव समञ्जसति। 'न तत्साधु' इति अभिनवगुप्तेन प्रतिपादितम्—यत्तु ब्राह्मणादिवर्णचतुष्टय-मेलनमिति तदफलत्वादनादृत्यमेव। अस्य सन्ध्यंगस्य त्रीणि प्रयोजनानि—प्रयोगस्य रागप्राप्ति, इष्टस्य रचना, प्रकाश्ये प्रकाशनमिति सन्तीत्यभिनवगुप्तो विवृणोति।

एतेषामङ्गाना परिसर्प, प्रशम, वज्रन्यास, पुष्प चावश्यकानि।

प्रतिमुखस्याधिकतराणि सन्ध्यङ्गानि शृङ्गारोचितानि प्रतिभान्ति कतिपय-सन्ध्यङ्गानि वीररसोपयोगीनि सन्ति। अन्येषा रसाना लघ्वी चर्चा एतै प्रवर्त्यते।

### गर्भ-सन्ध्यंगानि

भ॰तेन गर्भसन्धिरधोलिखितदिशा परिभाषिता—

> **उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा।**
> **पुनश्चान्वेषणं यत्र स गर्भ इति सज्ञित ।। ना० शा० १९ ४१**

अस्मिन् सन्धौ यत्नावस्थाया कार्याणि वर्ण्यन्ते। यथा,

> **ईषत्प्राप्तिर्यदा काचित् फलस्य परिकल्प्यते।**
> **भावमात्रेण तं प्राहुर्विधिज्ञाः प्राप्तिसम्भवम् ।। १९ ११**

सन्धेरवस्थायाश्च परिभाषयोर्विचारेणैवं प्रतिफलति यत् अस्मिन् विकासक्रमे (१) फलस्य स्थिति ईषत्प्राप्ति-रूपा स्यात्। अर्थात् नायिकाया प्राप्तिर्भवति नायकस्य, किन्तु न सा ऐकान्तिकी। (२) कार्यस्य स्थितिस्तु त्रिधा स्यात्—(क) (नायिका)-प्राप्तिकारिणी (ख) (नायिका)-अप्राप्ति-कारिणी तथा च (ग) (नायिकाया॰)-अन्वेषणम्।

गर्भसन्धे परिभाषाया इयं विवृति तु शृङ्गारात्मकरूपकेष्वेव सम्यग् युज्यते। वीररौद्रात्मकेषु रूपकेषु तस्या अन्यथाभाव. परिलक्ष्यते। तत्र (१) प्राप्तिस्तु नायक-विषया (२) अप्राप्ति प्रतिनायक-चरिते तथा च (३) अन्वेषणमुभयोरेव। अभिनवगुप्तानुसारेण

---

१ ना० शा० १९.८२ अधिकृत्य भारती।

गर्भसन्धौ बीजस्योद्भेद फलजननाभिमुख्यत्वमेव। फलस्यात्र गर्भीभावात् गर्भसन्धिरिति नाम सार्थकं भवति।[१]

गर्भसन्धे अभूताहरणम्, मार्ग, रूपम्, उदाहरणम्, क्रम सग्रह, अनुमानम्, तोटकम्, अधिबलम्, उद्वेग, सम्भ्रम, आक्षेप., इति द्वादशाङ्गानि सन्ति। प्रार्थना-नामकं भारतीयं सन्ध्यङ्ग धनञ्जयो नानुमनुते। धनञ्जयस्य संम्भ्रमो भरतस्य विद्रवस्य स्थाने कल्पनीय।

अभूताहरणम्

भरतानुसारेण कपटाश्रयं वाक्यं तु अभूताहरणं भवति। अत्र कपटभावेन सत्यं छादयितु मिथ्या-भाषणं प्रवर्त्यते। अतएव नाट्यदर्पण इदमसत्याहरणमिति संज्ञतम्।

धनञ्जयेनाभूताहरणं स्पष्टं परिभाषितं येन कपटभावो व्यज्यते—

'अभूताहरणं छद्म' इति।

मार्गः

'मार्गे तत्त्वार्थ प्रोच्यते' इति भरत-धनञ्जययोर्मतम्। तत्त्वार्थस्तु फलप्राप्तये कश्चिदभिनव किन्तु निश्चितो मार्ग एव। सैव मार्ग-सज्ञाया सार्थकतेति अभिनवगुप्त।

रूपम्

'रूपं तु तर्कवितर्कसमन्वितानि वचांसि। अत्र कस्यचिन्नायकस्य संशयनिर्भरचित्ते बहवो वितर्का सूच्यन्ते' इति भरत-धनञ्जययोर्मतम्।[२] अभिनवगुप्तानुसारेण विचित्रार्थाना समवाये सर्वविषये एव विरुद्धस्तर्क., इदं नोचितमिदं नोचितमिति प्रतियुक्तिपर्यन्त।

युक्तिरूपयोः सन्ध्यङ्गयोः साम्यवैषम्यं विवेचयन्नभिनवगुप्तः प्राह—युक्तिस्तु नियतप्रतिपत्ति-पर्यन्ता। रूपमिति चानियता आकृतिरुच्यत इति।

उदाहरणम्

उदाहरणस्य परिभाषा भरतधनञ्जययो समानार्थैव। तत्र सातिशयं

---

१. ना० शा० १९.४१ अधिकृत्य भारती। प्राप्तिसम्भवाख्ययावस्थया युक्तत्वेन फलस्य गर्भीभावात्।

२. चित्रार्थ-समवाये तु वितर्को रूपमिष्यते। ना० शा० १९.८३

रूपं वितर्कवद्वाक्यम्। दश० १.३९

सोत्कर्षं वा वाक्यं भवति। अभिनवगुप्तानुसारेण 'लोकप्रसिद्धवस्त्वपेक्षया यत् सातिशयमुच्यते' तदुदाहरणम्। उत्कर्षमाहरतीति उदाहरणम्।

**क्रमः**

भरतानुसारेण 'भावतत्त्वोपलब्धिरेव क्रमः।' क्रमेऽपरेषां भावाः कल्प्यन्ते। अभिनवगुप्तानुसारं भाव्यमानस्य वस्तुनः परमार्थोपलब्धिः क्रमः। क्रम इति नाम कथं समीचीनमिति विवृण्वन्नभिनवगुप्तः प्राह—बुद्धिर्हि तत्र क्रमते न प्रतिहन्यते।

धनञ्जयस्तु क्रममन्यविधं परिभाषते। क्रमः संचिन्त्यमानाप्तिरिति। तदनुसारं यस्यापेक्षा वर्तते स एव प्राप्यते इति क्रमः। स तु भारतीयं क्रमलक्षणमपि स्वीकरोति—

भावज्ञानमथापरे। दश० १ ३८

**संग्रहः**

सामदानादि वचनं संग्रहो भवतीति भरतधनंजययोर्मतं समानमेव।

**अनुमानम्**

भरतधनञ्जयानुसारेण तु अनुमानं तर्कशास्त्रीयमनुमानमेव काव्यप्रबन्धे रागाय युज्यते।

**अधिबलम्**

भरतधनञ्जयानुसारेण 'कपटेनातिसन्धानम्' अधिबलं स्यात्। धनञ्जयस्तु अपरविधमपि अधिबलमनुसन्धत्ते। तदनुसारं 'तोटकस्यान्यथाभावोऽधिबलं' भवति। तोटकं तावत् संरब्धवचनं स्यादिति अधोनिर्दिष्टम्।

**तोटकम्**

भरतधनञ्जयौ उभौ तोटकं संरब्धवचनमिति परिभाषेते। तोटकमावेगगर्भं वचनम्। स चावेगो हर्षात्, क्रोधात्, अन्यतोऽपि वेति अभिनवगुप्तो विशदयति। कथं तोटकमिति नाम व्युत्पन्नमिति प्रकाशयन् स प्रपञ्चयति —भिनत्ति यतो हृदयं ततस्तोटकमिति।[1] नैतत् सर्वथैवंविधमिति उदाहरणे स्पष्टम्।

**उद्वेगः**

'यथानामोद्वेगो नृपारिदस्यूत्थोद्वेगः' इति भरतधनञ्जययोः समाना

[1] ना० शा० १९ ८७ अधिकृत्य भारती।

**सम्फेट.**

रोषभाषणं सम्फेट इति धनञ्जयस्य परिभाषा। भरतस्य 'रोषग्रथित-वाक्यं तु सम्फेट परिकीर्तित' इति लक्षणं सोऽनुहरति। अत्र नायकाना क्रोधा-विष्टं भाषणं संवर्तते।

**विद्रवः**

भरतानुसारेण विद्रवो गर्भसन्धेरङ्गम्। तत्र

**शङ्काभयत्रासकृतो विद्रव ॥ १९ ८८**

धनञ्जयस्य विद्रव-लक्षणमन्यथैव वर्तते–

**विद्रवो वधबन्धादि.।**

**द्रव.**

द्रवस्य भारतीयं लक्षणं—'गुरुव्यतिक्रम.' इति धनञ्येन सरलीकृतमेवा-धोलिखितम्—

**'द्रवो गुरुतिरस्कृति' इति**

अत्र गुरुपदेन, वयस्कत्वेन वा कश्चित् पूज्यो जन।

**शक्ति**

भरतानुसारेण (शक्तौ) विरोधिन· प्रशम (प्रसादनम्) भवति। धनञ्जय-यस्तु विरोधस्य शमनं शक्तिरिति परिभाषते। तत्त्वत एतयो· परिभाषयो. साम्यमेव वर्तते। अत्र शक्तिस्तु बुद्धेर्विभवादेर्जायते इति अभिनवगुप्तस्य सम्मतम्।

**द्युति**

भरतस्य धनञ्जयस्य च द्युते परिभाषा समान तत्त्वं बोधयति। तत्र भरतानुसारेणाधर्षा भवति। धनञ्जयस्तु तर्जनोद्वेजने द्युतौ लक्षयति।

**प्रसङ्ग.**

गुरोश्चर्चा प्रसङ्ग स्यादितिभरतधनञ्जययोरुभयो. सम्मतम्।[1]

**छलनम्**

दशरूपके यच्छलनं तदेव भारतीये नाट्यशास्त्रे छादनमिति प्रोक्तम्। नाट्यशास्त्रानुसारेण तु

---

१ गुरूणा परिकीर्तनम्। ना० शा० १९ ९१
गुरुकीर्तन प्रसङ्गः। दश० १.४६

'अपमानकृतं कार्यार्थं छादनं भवेत्'

अस्या कारिकायां कृतमिति पदं बहुमानद्योतकमित्यभिनवगुप्तस्य सम्मतम्।[1] तदपमानकलङ्कापवारणाच्छादनमिति।[2]

धनञ्जयस्य छलनं तु अवमाननमिति न कथमपि व्युत्पत्ति-सम्पन्नम्। छल् धातोरवमाननस्य भावो न निष्पद्यते।

छलनस्य स्थाने नाट्यशास्त्रे छन्दनमिति पाठोऽपि वर्तते। नाट्यलक्षण-रत्नकोशे सादनमिति पाठोऽस्ति। नाट्यदर्पणानुसारेण छादनं तु मन्युमार्जनमेव।

नाट्याचार्याणां छादन-विषये बहुमतेन काचिदविज्ञाता त्रुटिः प्रतिभासते ग्रन्थानां पाठेषु।

व्यवसाय.

भरतस्य धनञ्जयस्य च व्यवसायस्य परिभाषे सर्वथा भिन्ने स्तः। भरतानुसारेण

व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः।

किन्तु धनञ्जयानुसारेण

व्यवसाय स्वशक्त्युक्ति। दश० १ ४७

अभिनवगुप्तो भारतीयलक्षणं स्पष्टयति—

प्रतिज्ञातस्याङ्गीकृतस्यार्थस्य हेतवो ये तेषां सम्भव प्राप्तिः व्यवसाय।

विरोधनम्

विरोधनं तु भरतानुसारेण कार्यात्ययोपगमनमस्ति। किन्तु धनञ्जयः 'सरब्धानां स्वशक्त्युक्तिम्' विरोधनं मन्यते।[3] तत्र भोजः शृङ्गारप्रकाशे विश्वनाथश्च साहित्यदर्पणे भरतमनुसरतः, किन्तु शारदातनयो भावप्रकाशने दशरूपकमनुसरति।

प्ररोचना

भरतधनञ्जययोः प्ररोचनायाः परिभाषे तत्त्वतः समाने एव। भरतानुसारेण—

---

१ करोतिः बहुमाने वर्तते। तेन दुष्टोऽप्यर्थोऽपमानेन बहुमतीकृतः।

२. ना० शा० १८ ८४ अधिकृत्य भारती।

३. ना० शा० १९ ८३, दश० १ ४७

प्ररोचना च विज्ञेया संहारार्थप्रदर्शिनी।

अर्थात् निर्वाह्यमाणस्यार्थस्य दर्शिका प्रकर्षेण रोचत इति प्ररोचना। धनञ्जयानुसारेण

सिद्धामन्त्रणतो भाविदर्शिका स्यात् प्ररोचना।

अर्थादाप्तपुरुषाणां संवादेन भाविकार्यार्थं सूच्यते प्ररोचनया।

**विचलनम्**

भारतीयनाट्यशास्त्रस्य कतिपयपाठेषु विचलनं नास्ति।[1] धनञ्जयानुसारेण 'विकत्थना विचलनम्' अस्ति।

**आदानम्**

भरतानुसारेणादानमस्ति—

'बीजकार्योपगमनम्'। ना० शा० १९ ९४

अभिनवगुप्तानुसारेणादानेन 'बीजफलस्य समीपताभवनं' प्रतीयते। धनञ्जयस्तु आदानमन्यथा परिभाषते। तदनुसारं—

"आदानं कार्य-संग्रह.'

कार्यं तु फलमेव। संग्रहस्तस्य चर्चास्ति।

भरतोऽवमर्शे पंचदश सन्ध्यङ्गानि वर्णयति। भरतेन निर्दिष्टानि खेद-निषेधन-व्यवहार-युक्तिनामकानि सन्ध्यङ्गानि दशरूपके न सन्ति। भरतस्य नाट्यशास्त्रेऽपि दशरूपके प्रोक्ते द्रवविचलने न स्त।[2]

भरतप्रोक्तानि अतिरिक्त-सन्ध्यङ्गानि अधोविधं वर्णितानि।

**खेदः**

भरतानुसारेण 'मनश्चेष्टाविनिष्पन्न श्रम खेदोस्ति।' अभिनवगुप्तानुसारेण न

---

१ प्रक्षिप्तपाठानुसारं नाट्यशास्त्रे
ज्ञेया विचलना तज्ज्ञैरवमानार्थ-सयुता॥ १९ ९६ इयं परिभाषा धनञ्जयेन नोरीकृता।

२ भरतस्तु सन्ध्यङ्गाना नाम-गणना-प्रसङ्गे यद् विद्रव कथयति, तदेव परिभाषा-प्रकरणे द्रवं संजानाति। ना० शा० १९ ६३, ९०। विचलनं तु नाट्यशास्त्रे प्रक्षिप्तपाठे वर्तते। १९ ९६

केवलं मानसिकोऽपि तु शारीरिकोऽपि खेदो बोधनीय ।[१] सागरनन्दी, रामचन्द्रो विश्वनाथश्च खेद इति सन्ध्यङ्गं स्वीकुर्वन्ति ।

**निषेधनम् (प्रतिषेधः)**

भरतानुसारेणेप्सितार्थस्य निषेध एव निषेधनमस्ति । सागरनन्दी, विश्वनाथश्च प्रतिषेधनामकं सन्ध्यङ्गं स्वीकुरुतः ।

**व्याहारः (व्यवहारः)**

भरतानुसारेण प्रत्यक्षवचनं व्याहारो भवति ।

**युक्तिः**

भरतानुसारेण सविच्छेदं वचो युक्तिर्भवति । धनिकानुसारेणावमर्शसन्धौ अपवाद-शक्ति-व्यवसाय-प्ररोचनादानानि प्रधानानि ।

उपर्युक्त-विवेचनेन स्पष्टं प्रतिभाति यत् धनञ्जयस्योपजीव्यं केवलं भारतीयं नाट्यशास्त्रमेव नासीत् । धनञ्जयो मुख-प्रतिमुख-गर्भसन्धी-नामङ्गानि प्रायशो भारतीयं क्रममनुसृत्य परिभाषते, किन्तु विमर्शसन्धेरंग-गणनाक्रमे भारतीयं क्रमं प्रायो नानुमनुते । केवलं त्रयोदशाङ्गानि वर्णयति, भारतीये नाट्यशास्त्रे पंचदशाङ्गानि सन्ति । तत्र धनञ्जयो भारतीयानि चत्वारि सन्ध्यङ्गानि विसृजति, द्वे सन्ध्यङ्गे च नवीने स्वीकरोति ।

अपरोपजीव्यनाट्यग्रन्थान् समीक्ष्यैवाभिनवगुप्तो भाषतेऽस्मिन् प्रसङ्गे—

अत्रोद्देशक्रमत्यागे यत्केषाञ्चिदङ्गानां लक्षणं तत् क्रमानियमसूचनार्थः । अनेन पाठविपर्यासेन यत्कैश्चिदुद्देशस्यान्यथापठनं तद्ग्रन्थकाराशया-परिज्ञानकृतम् । केचिदत्रान्यतममङ्गं नाधीयते । द्वादशाङ्गमेवैतत्सन्धिमाहुः । अन्ये तु त्रयोदशाङ्गत्वेऽप्यस्य निर्वहणसन्धावपि प्रसक्तेरिति वृत्तान्तभूतत्वेन गणनमन्याय्यमिति त्रयोदशाङ्गत्वात् चतुष्षष्टि-संख्यां समर्थयन्ते ।

## निर्वहण-सन्ध्यङ्गानि

अन्तिमोऽयं सन्धिर्निर्वहणं नाम । भरतो निर्वहणं परिभाषते—

समानयनमर्थानां मुखाद्यानां सबीजिनाम् ।
नानाभावोत्तराणां यद् भवेन्निर्वहणं तु तत् । १९. ४३

तत्तु अभिनवगुप्तेन व्याख्यातम्—

---

१. ना० शा० १९. ९२ अधिकृत्य भारती ।

मुखाद्यानां चतुर्णां सन्धीना येऽर्था· प्रारम्भाद्याः तेषां सहबीजिभिर्बीज-विकारैः क्रमेणावस्थाचतुष्टयेन भवद्भिरुत्पत्त्युद्घाटनोद्भेद-गर्भनिर्भेद लक्षणै· वर्त्तमानानां नानाविधै. सुख-दु·खात्मकै: हासशोक क्रोधादिभिर्भावैरुत्त-राणां चमत्कारास्पदत्वे जातोत्कर्षाणां यत्समानयनं यस्मिन्नर्थराशौ समानी-यन्ते फलनिष्पत्तौ योज्यन्ते, तन्निर्वहणं फलयोगावस्थया व्याप्तम्।

निर्वहण-सन्धौ यत्फलागमो भवति स भरतेन परिभाषितः

अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम्।
इतिवृत्ते भवेद्यस्मिन् फलयोग. प्रकीर्तितः।। १६. १३

धनञ्जयस्तु निर्वहण-सन्धिलक्षणे भरतं सम्यगनुसरति। दशरूपके तेन निर्वहणस्य द्वादशाङ्गानि निगदितानि—सन्धिः, विबोधः, ग्रथनम्, निर्णय, परिभाषणम्, प्रसादः, आनन्दः, समयः, कृति, भाषणम्, पूर्वभाव·, उपगूहनम्, काव्य-संहार., प्रशस्तिश्च।

सन्धिः

भरत-धनञ्जययो. सन्धेः परिभाषा समानैव—मुखबीजोपगमनमिति। मुखे-यदुक्तं तदिह निकटीभूतं सन्धानं सन्धिरिति।

निरोधः

निरोध इति सन्ध्यङ्गं दशरूपके विबोध इति प्राप्यते। निरोधस्तु पाठभेदो न साधु स्यात्। भरतानुसारेण 'कार्यस्यान्वेषणं युक्त्या निरोधः स्यात्। दशरूपकेऽपि विबोध. कार्यमार्गणमिति लक्षित.।

ग्रथनम्

ग्रथनं भरतानुसारेण कार्याणामुपक्षेप (चर्चा) वर्तते। धनञ्जयस्तदेवा-नुसरति।

निर्णय·

भरत-धनञ्जयौ उभौ अनुभूतेर्वर्णनं निर्णय इति परिभाषेते। अभिनव-गुप्तानुसारेणत्वनुभूतिस्तु प्रमाणसिद्धं वस्तु।

परिभाषणम्

भरतानुसारेण परिभाषणं तु परिवाद एवात्मनिन्दा स्यात्। अभिनव-गुप्तानुसारेण परिभाषणं स्यात्—उभयोरप्यन्योन्यापराधोद्घट्टनं वचनम्। उदाहरणैस्तत् सविशेषं स्पष्टीकृतम्। सागरनन्दी, रामचन्द्रः, विश्वनाथ, भोजश्चैवं मन्यन्ते। धनञ्जयस्तु परिभाषणमन्यथा परिभाषते—

'परिभाषा मिथोजल्प' इति ।

नैतत्साधु । यतो हि नाम रूपकेषु मिथोजल्पस्तु आद्यन्तं विद्यत एव । स तु परि=मिथ, भाषणम्=जल्प. इति कृत्वा परिभाषणं लक्षयति । तत्तु चिन्त्यमेव ।

**प्रसादः**

भरतानुसारेण प्रसादस्तु प्रीतिरेव । सा शुश्रूषादिना जायते । एतदेव धनञ्जयः 'प्रसाद. पर्युपासनमिति' लक्षयित्वा समर्थयति ।

**आनन्दः**

भरतधनञ्जयौ उभौ आनन्दमभीष्टार्थप्राप्तिं मन्येते ।

**समयः**

भरतो धनञ्जयश्च समयो दुःखस्य दूरीभवनमिति वदत· ।

**कृतिः**

नाट्यशास्त्रे 'द्युतिर्लब्धार्थस्य शमनं' भवति । सैव दशरूपके कृतिरिति-परिभाषिता । अभिनवगुप्तानुसारेण क्रोधादे प्रशमनमपि द्युतिः ।

**भाषणम्**

भरतो धनञ्जयश्च भाषणं समानमेव परिभाषेते ।[1] भरतानुसारेण गर्भसन्धौ संग्रहनामकेऽङ्गे सामदानादिर्भवत्येव । अतो निर्वहणेऽस्य ग्रहणं न समीचीनमिति संशयं दूरीकुर्वाणोऽभिनवगुप्तः प्राह—गर्भसन्धौ वैकल्पिकं स्यात् संग्रह· सामदानादिश्च, किन्तु निर्वहणे तु तस्यावश्यंभाविता ।[2]

**पूर्वभावः**

भरतस्य पूर्ववाक्यस्य स्थाने धनञ्जयेन दशरूपके पूर्वभावो वर्णित । पूर्ववाक्ये तु पूर्वं कथितस्यार्थस्य प्रत्यक्षीकरणम् । पूर्वभावस्तु दशरूपके केनापि समीहितकर्तव्यस्यान्येन केनचिदात्मसात्करणम् । पूर्वभावो रामचन्द्रेण, शारदातनयेन च स्वीकृत· । सागरनन्दिना, विश्वनाथेन च पूर्ववाक्यमिति स्वीकृतम् ।

---

१. सामदानादि-सम्पन्नम् । ना० शा० १९.१०२
मानाद्याप्तिश्च भाषणम् । दश० १.५३

२ ना० शा० १९. १०२ अधिकृत्य भारती ।

### उपगूहनम्

भरतो धनञ्जयश्चोपगूहनमद्भुतस्य प्राप्तिरिति मन्वाते। अद्भुतं दुस्साध्यमपि भवेदिति केचित्।

### काव्य-संहारः

भरत-धनञ्जयौ वरप्राप्ति काव्यसंहार इति परिभाषेते।

'काव्यसंहारस्तु वस्तुत सन्ध्यङ्गमेव नास्ति, यतो हि नाम नास्मिन् बीजफलानुवर्तिकथावयव ' इत्यस्माकं मतम्।

### प्रशस्तिः

भरतानुसारेण 'नृपदेशप्रशान्ति प्रशस्ति' स्यात्। धनञ्जयस्य प्रशस्ति-परिभाषा सम्यग् व्युत्पन्ना वर्तते—

'प्रशस्ति शुभशंसनम्' इति

प्रशस्तिर्वस्तुत सन्ध्यङ्गं नास्त्येव कथावयवविहीनत्वात्। प्रशस्ते पूर्वमेव कथा समाप्यते।

### सन्ध्यङ्ग-योजना-विशेषः

भरतमनुसृत्याभिनवगुप्तेन विशदीकृतं यदेकमपि सन्ध्यङ्गं तत्रैव सन्धौ द्विः त्रिर्वा निबन्धनीयम्। यथा रत्नावल्या प्रतिमुखे विलास, सागरिकाया राज्ञि वा सकृदुपनिबद्धः प्रधानं शृङ्गारमुद्दीपयति। वेणीसंहारे सम्फेट-विद्रवौ पुनः प्रदर्शितौ वीररौद्रोद्दीपनौ भवत.।[1] न च सर्वाणि सन्ध्यङ्गानि तत्र सन्धौ प्रयुज्यन्ते। रसभावादिकं समीक्ष्य यथोचितान्यङ्गानि विन्यस्यन्ते।

सन्ध्यङ्गाना क्रमो वैकल्पिक एव। कानिचित् सन्ध्यङ्गानि तु क्रमानुसारणैव प्रयुज्यन्ते। यथा उपक्षेप, परिकरः, परिन्यासश्च। नाट्याचार्यैः शास्त्रेषु सन्धीनां क्रमः पृथक्-पृथक् स्थापितः। अभिनवगुप्तानुसारेण 'न च क्रमेणानेनैव तानि प्रयोज्यानीति'।

सन्ध्यङ्गाना मध्ये सन्ध्यन्तराणा लास्याङ्गाना च विन्यासो दृश्यते। एतदपि सन्ध्यङ्गक्रमो वैकल्पिक इति स्पष्टयति।

एक एव कथांशः कतिपयसन्ध्यङ्गानामुदाहरणं भवितुमर्हति।

कतिपय-सन्ध्यङ्गानि न केवलं स्वकीये सन्धौ विधीयन्तेऽपितु अन्येष्वपि

---

1. ना० शा० १९. १०५ अधिकृत्य भारती।

सन्धिषु निधीयन्त इति अभिनवगुप्तेन विशदीकृतम्—तेन यदुद्भटप्रभृतयोऽङ्गानां सन्धौ क्रमे च नियममाहुस्तद्युक्त्यागमविरुद्धमेव ।

तथाहि—'सम्प्रधारणमर्थानां युक्तिरित्यभिधीयते' इति यन्मुखसन्धौ पंचममङ्गं वक्ष्यति तत्सर्वेषु सन्धिषु तावन्निबन्धनयोग्यमिति ।[1]

### सन्ध्यङ्ग-प्रयोजनानि

भरतानुसारेण सन्ध्यङ्गानां प्रयोजनानि सन्ति—

> इष्टार्थस्य रचना वृत्तान्तस्यानुपक्षयः ।
> रागप्राप्ति प्रयोगस्य गुह्यानां चैव गूहनम् ॥
> आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम् । १८. ५१-५२

**इष्टप्राप्तिः**

प्रथमं प्रयोजनं तु इष्टार्थस्य रचना वर्तते । तत्राभीष्टस्य प्रयोजनस्य रसास्वादकृता रचना विस्तारणा भवति[2] । एतत्तु सर्वेषु सन्ध्यङ्गेषु समानमेव ।

**वृत्तान्तस्यानुपक्षय.**

कथाशरीरस्य क्षयो न भवेदिति द्वितीयं प्रयोजन वृत्तान्तस्यानुपक्षयो नाम । एतत्प्रयोजनं सर्वसाधारणम् ।

**प्रयोगस्य रागप्राप्ति**

प्रयोगस्तावदितिवृत्तमेव । तस्य स्वयं परस्परस्यापि रागप्राप्तिः रञ्जनायोग्यत्वलाभो व्युत्पत्त्यवस्थायोगात् । पर्युपासन-नर्म-नर्मद्युतिरिति नामकानि सन्ध्यंगानि तत्रोदाहरणानि ।

**गुह्यानां गूहनम्**

एतत्प्रयोजन तु पुनरुक्ते निवर्तनार्थं भवति । तदर्थं गोपनीयाः कथांश. न प्रकटीक्रियन्ते ।[3]

**आश्चर्यवदभिख्यानम्**

पुनः पुनः श्रुतमपि यदभिख्यानम् (इतिवृत्तम्), तत एव नाश्चर्यकारि तदपि अङ्गयोजनायामपूर्वतामिव दधदद्भुततामेति ।[4]

---

१. ना० शा० १८.६८ अधिकृत्य भारती ।

२. ना० शा० १८ १०५ अधिकृत्य भारती सन्धीनां रसपारतन्त्र्यमुद्घाटयति ।

३. अभूताहरणं नाम सन्ध्यङ्गं गूहनस्योदाहरणम् ।

४ परिभावना चोपगूहनञ्चास्योदाहरणम् ।

प्रकाश्यानां प्रकाशनम्

यस्य कथांशस्य ज्ञानमतिशयोपयोगि स्यात्, तत एव प्रकाश्यम् । तस्य प्रकाशनं विस्तारणम् ।

पूर्वोक्तविवरणं भारतीयं नाट्यशास्त्रं तत्राभिनवभारती चानुहरति । धनञ्जयस्य दशरूपके तु सन्ध्यङ्ग-प्रयोजनानां संज्ञामात्रमेव वर्तते । यथा,

> इष्टार्थस्य रचना गोप्यगुप्तिः प्रकाशनम् ।
> रागः प्रयोगस्याश्चर्यं वृत्तान्तस्यानुपक्षय. ॥ १.५५

संक्षिप्ततरं विद्यत एतेषां धनिककृता व्याख्या । तथा हि—विवक्षितार्थ-निबन्धनम्, गोप्यार्थगोपनम्, प्रकाश्यार्थ-प्रकाशनम्, अभिनेयरागवृद्धिः, चमत्कारित्वम् च काव्यस्येतिवृत्तस्य विस्तर इत्यङ्गैः षट् प्रयोजनानि सम्पाद्यन्ते । प्रयोगस्य राग इति प्रयोजनं धनिकेन भिन्नतरं व्याख्यातम् । अभिनव-गुप्तानुसारं प्रयोग इतिवृत्तमेव । धनिकानुसारेण प्रयोगस्तावदभिनेयं तत्त्वं स्यादिति ।

---

## १०

# सूच्य-दृश्य-विवेकः

किं सूच्यं किं च दृश्यमिति साधारणतो नाम्नैव स्पष्टम्।[१] तथापि नाट्याभिनय-प्रसङ्गे एतद् द्वयं व्याख्येयम्।

### सूच्यम्

यदि काचिद् घटना पात्राणां संवादमात्रेणैव ज्ञायते, रङ्गपीठे तस्या साक्षाद् दर्शनमनुकरणेन न विधीयते, तर्हि सा घटना सूच्या भवति। तथा हि, स्वप्नवासवदत्ते प्रथमाङ्के लावाणकदाहस्य वृत्तं सूच्य, यतो हि नाम रंगपीठेऽग्निदाहो न प्रदर्श्यते न च तस्मिन् वासवदत्ताया यौगन्धरायणस्य वा दाहो दृश्यते। अतएव सूच्यमिदं वृत्तं स्वप्नवासवत्तस्य प्रथमाङ्के।

### दृश्यम्

यदि काचिद् घटनानुकरण-द्वारा रङ्गपीठे साक्षात् प्रदर्श्यते, तर्हि सा दृश्यं भवति। तथा हि स्वप्नवासवदत्तस्य तृतीयाङ्के वासवदत्ता मालां गुम्फति। अभिज्ञानशाकुन्तलस्य चतुर्थाङ्के शकुन्तला कण्वाश्रमात् प्रतिष्ठते।

दशरूपकानुसारेण तु सूच्ये नीरसोऽनुचितो वस्तुविस्तरः स्यात्। दृश्ये पुनः मधुरोदात्तरसभावनिरन्तरो वस्तुविस्तरो भवेत्।

अत्रानुचितो वस्तु-विस्तर इति सन्दिग्धमेव पदम्। काचिद् घटनानुचिता स्यात्, किन्तु तद्विषयक-वस्तु-विस्तरः कथं नामानुचितो भवितुमर्हतीति न बोधगम्यम्। विस्तरस्तु वर्णनमेव।

साधारणतो दृश्यमङ्के सूच्यं चार्थोपक्षेपकेषु निवेश्येते।[२]

---

१ कथावस्तुनो दृश्यसूच्यभेदोऽभारतीय इति डा० सिद्धेश्वरचट्टोपाध्यायेन गवेषितम्। Nāṭaka-Lakṣaṇaratnakoṣa P 190

२. अङ्कप्रवेशकाढ्य भवति हि तन्नाटकं नाम। ना० शा० १८.११
अत्र प्रवेशकस्तावदर्थोपक्षेपकस्थाने वर्तते।

## सूच्य-प्रतिपादनम्

दशरूपके तु सूच्य-प्रतिपादनाय पंचार्थोपक्षेपका. संज्ञिता. सन्ति—विष्कम्भक., प्रवेशकः, चूलिका, अङ्कास्यम् अङ्कावतारश्चेति। एतयो· प्रथमद्वयं भरत: प्रतिजानीते ।[१] सूच्यमभिनय-शून्य भवति। तस्य स्थानं प्रवेशकादिषु भवत्येव, किन्तु अङ्कभागेऽपि सूच्यं प्रचुरं भवति । यथा स्वप्नवासवदत्तस्य प्रथमाङ्के लावाणकदाह-वर्णनम् ।

### विष्कम्भक

दशरूपकानुसारं विष्कम्भकेऽतीताना भाविना च कथावयवाना ज्ञापनं भवति। तेषां वर्णनं संक्षिप्तं भवति । केवलं मध्यमकोटिक-भूमिका यदि भवति, तर्हि शुद्धो विष्कम्भकः स्यात् । यदि नीचमध्यमयोर्भूमिका भवति, तर्हि सङ्कीर्णो विष्कम्भकः स्यात् । अभिनवगुप्तानुसारेण विष्कम्भयत्युपस्तम्भयतीति विष्कम्भ ।

### प्रवेशक·

यदि केवलं नीचभूमिका स्यात्तर्हि प्रवेशको नाम सूच्यं भवति ।[२] इदं तु विष्कम्भकस्यापरं रूपमेव । नीचाना पात्राणामुक्तयोऽनुदात्ता स्युरिति धनञ्जयो नियमयति । अनुदात्ता उक्तयः प्राकृतभाषया भवन्ति ।[३]

अस्मिन् प्रकरणे तूत्तममध्यमाधमपात्राणा विवेचनमावश्यकम् । तेषां लक्षणं धनंजयेन न प्रोक्तम् । भारतीये नाट्यशास्त्रे तेषा व्यवस्था निम्नानुसारं विद्यते—

> जितेन्द्रियज्ञानवती नानाशिल्पविचक्षणा ।
> दक्षिणाथ महालक्ष्म्या भीतानां परिसान्त्वनी ।।
>
> नानाशास्त्रार्थसम्पन्ना गाम्भीर्यौदार्यशालिनी ।
> स्थैर्य-त्यागगुणोपेता ज्ञेया प्रकृतिरुत्तमा ।।
>
> लोकोपचारचतुरा शिल्पशास्त्र-विशारदा ।
> विज्ञान-माधुर्ययुता मध्यमा प्रकृतिः स्मृता ।।

---

१ मूलनाट्यशास्त्रे ऽर्थोपक्षेपक इति नाम चूलिका, अङ्कावतार., अङ्कास्यं चेति नामानि न सन्ति ।

२. अदृष्टमप्यर्थं हृदि प्रवेशयतीति प्रवेशक । ना० शा० १८.२६ अधिकृत्य भारती ।

३. उदात्तं संस्कृत वचन तस्य निषेध । ना० शा० १८.३४ अधिकृत्य भारती ।

रूक्षवाचोऽथ दु शीला: कुसत्त्वा: स्थूलबुद्धय. ।
क्रोधना घातकाश्चैव मित्रघ्नाश्छिद्रदर्शिन ॥

पिशुनास्तूद्धतैर्वाक्यैरकृतज्ञास्तथालसा. ।
मान्यामान्याविशेषज्ञाः स्त्रीलोला कलहप्रिया. ॥

सूचका· पापकर्माण: परद्रव्यापहारिण ।
एभिर्दोषैस्तु सम्पन्ना भवन्तीहाधमा नरा ॥ ना० शा० २४.२-७

भरतो नारीणामपि त्रिविधा प्रकृति वर्णयति । तद्यथा

मृदुभावा चाचपला स्मितभाषिण्यनिष्ठुरा ।
गुरूणां वचने दक्षा सलज्जा विनयान्विता ॥

रूपाभिजनमाधुर्यैर्गुणै स्वाभाविकैर्युता ।
गाम्भीर्य-धैर्य-सम्पन्ना विज्ञेया प्रमदोत्तमा ॥

नात्युत्कृष्टैरनिखिलैरेभिरेवान्विता गुणै ।
अल्पदोषानुविद्धा च मध्यमा प्रकृति स्मृता ॥

अधमा प्रकृतिर्या तु पुरुषाणां प्रकीर्तिता ।
विज्ञेया सैव नारीणामधमानां समासतः ॥ ना० शा० २४ ८-१२

भरत कतिपयप्रकृते नाम्नापि वर्गीकरणं स्पष्टयति । तथा हि—नपुंसकोऽधमः । तथैव प्रेष्यादय· शकार, विटश्च ।

इदं भेद-प्रकरणं तु प्रकृते स्वभावं परिलक्ष्य विशदीकृतम् । प्रवेशक-विष्कम्भकयोः भूमिका-निर्धारणं नैतेन सम्यग्भवितुमर्हति, यतो हि नाम तत्र पदत्वेनोत्तमताधमतादिगवेषणं समीचीनं स्यादिति, अत परमालोच्यते—

तत्र रत्नावल्या द्वितीय-तृतीय-चतुर्थाङ्केभ्य पूर्वं प्रवेशका. सन्ति । एतेषु क्रमश. सुसंगतानिपुणिकयो·, काञ्चनमाला-मदनिकयो, सुसङ्गता-वसन्तकयोश्च संवादा प्रपञ्चिता. । प्रवेशकत्वात् ते सर्वेऽधमाः स्यु । किन्तु भरतप्रतिपादित पूर्वोक्ताधमप्रकृतिलक्षणमीषदपि तेषु न घटते । अन्यच्चोत्तर-रामचरितस्य षष्ठाङ्कात् पूर्वं मिश्रविष्कम्भको विद्यते विद्याधरमिथुनस्य संवादः । मिश्रविष्कम्भकत्वेनात्र मध्यमाधमयोर्भूमिका स्यात् । एनयोः विद्याधरयोर्मध्यमाधमत्वनिर्धारणं भरतानुसारेण सुष्ठुतरं न प्रतिभाति ।

## चूलिका

धनञ्जयानुसारेण

'अन्तर्जवनिका-संस्थैश्चूलिकार्थस्य सूचना ॥ दश० १.६१

इयं चूलिका नेपथ्योक्तेर्भिन्नेति अग्रेऽनुसराम.। चूलिकाया वक्तारो मूलतः सूतमागधवन्दिन एवासन्। न ते पात्राणि सन्ति। चूलिकायां प्रायश. कालवर्णना, नायक-प्रशस्तिश्चाभूताम्।[१] नेपथ्योक्तौ कस्याश्चिदतीताया वर्तमानाया घटनाया वाचिकाभिनयपूर्वकं परिचयो वर्तते। चूलिकायाः स्थितिरङ्कस्यान्तिमभागे प्रायो भवति। तया पूर्वोत्तराङ्कयोर्योगो विधीयते इति कोहलः प्रतिपादयति। तद्यथा,

> त्रिधाङ्कोऽङ्कावतारेण चूडयाङ्कमुखेन वा
> अर्थोपक्षेपणं चूडा बह्वर्थ. सूतवन्दिभि।

अङ्कास्यम्

धनञ्जयानुसारेण

अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कस्यार्थसूचनात्॥ दश० १'६२

कस्यचिदङ्कस्यान्ते पात्राणि उत्तराङ्कस्य यो घटनाक्रमस्तं संकेतयन्ति। प्रथम तावदङ्कभागेऽर्थोपक्षेपका न स्युरिति।

'एभि. संसूचयेत् सूच्यं दृश्यमङ्कैः प्रदर्शयेत्' इति नियमस्यातिक्रमो भवति यदि नामाङ्कास्यमर्थोपक्षेपक इति मन्येत।

अन्योऽपि तत्र दुरतिक्रम सन्देहः। अर्थोपक्षेपकद्वारेण कश्चिदर्थो नीरसोऽनुचितश्च परिचीयेत। तत्राङ्कान्तभागेऽङ्कास्यरूपेण नीरसानुचितः कथार्थं उत्तराङ्के कथं सरसोचितो भवेदिति।

अङ्कावतारः

दशरूपकानुसारेण

अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः॥ १६'२

यत्र पूर्वाङ्कस्य कथोत्तराङ्केऽवतरति (crosses over) तत्राङ्कावतारः सा क्रमवद्धताया सूचना भवति।

अङ्कावतारोऽपि कथमप्यर्थोपक्षेपको भवितुं नार्हति, यतो हि नाम नात्र किञ्चिदप्यर्थोपक्षेपणं भवति। अङ्कावतारस्यार्थोपक्षेपणत्वं निघ्नता ह्रासेन सम्यक् प्रोक्तम्—

---

१. क्वचिदतीतघटनाना वर्णनमपि वन्दिन. प्रस्तुवन्ति। यथा महावीरचरिते तृतीयाङ्कस्यादौ।

The continuation scene (अङ्कावतार) does not seem to belong properly in the category of Intermediate scenes, according to the definition of these in the latter part of this section ; it is not clear how it informs the audience of matters that cannot be presened on the stage.

The Daśarūpa : A Treatise on Hindu Dramaturgy. P 36.

डा० सिद्धेश्वर-चट्टोपाध्याय. कोहलमनुसृत्य प्रतिपादयति यत् अङ्कावतारः, अङ्कमुखं, चूलिका चाङ्कारम्भमुद्भावयन्ति। तेषां प्रयोगेण त्रिविधा अङ्काः क्रमशो भवन्ति। प्रवेशको विष्कम्भकश्च मध्यवर्तिदृश्यमेव।[1] एतत्तु साधु प्रोक्त, किन्तु अङ्कावतारः, अङ्कमुखं कदाप्यर्थोपक्षेपणे न समर्थौ इति तेन न प्रकटितम्[2]। अस्माकं मतेनैतौ अर्थोपक्षेपकौ वस्तुतो न स्तः।

अङ्कावताराङ्कमुखेऽङ्कस्याभेद्याङ्गं स्त । अस्मादपि कारणात् तयोः सूच्यमिति दृश्यांशात् पृथक् स्थितिर्न भवितुमर्हति।

अभिनवगुप्तोऽपि अङ्कावताराङ्कमुख इति द्वयमदृष्टार्थस्य हृदि प्रवेशनिमित्तं मन्यते। तत् सर्वथा चिन्त्यमेव।[3] न तत्र कश्चिदर्थो निवेद्यते। केवलं ते विविधाङ्केषु वर्णिता कथां योजयतः, इति कोहलेनापि स्पष्टीकृतमधोलिखित कारिकायाम्

अङ्कान्तर एवाङ्को निपतति यस्मिन् प्रयोगमासाद्य।
नाट्यार्थकथायोगाद् विज्ञेयोऽङ्कावतारोऽसौ॥[4]

---

१. त्रिधाङ्कोऽङ्कावतारेण चूडयाङ्कमुखेन वा।
अर्थोपक्षेपणं चूडा वह्वर्थैः सूतवन्दिभिः॥
इति ना० शा० १८ १६ अधिकृत्य भारत्या कोहमतम्।

The orignial conception of Arthopakṣepaka, consisting of three types of Aṅkas (marked by Aṅkāvatāra, Aṅkamukha and Cūlikā) and two types of scenes, the Praveśaka and Viskambhaka, was totally lost

Nāṭakalakṣṇaratnakoṣa P 190

२. चट्टोपाध्यायेनापि साधु निगदितम्—Other three are not treated as scenes They denote mode of the beginning of Acts. किन्तु नैतेन तानि अर्थोक्षेपका भवन्ति।

३. अदृष्टमप्यर्थं हृदि प्रवेशयन्तीति प्रवेशका। चूलिकाङ्कावताराङ्कमुख-प्रवेशक-विष्कम्भा इहाभिप्रेता ना० शा० १८·२६ अधिकृत्य भारती।

४. ना० शा० १८·२८ अधिकृत्य भारत्यां कोहलमतमुद्धृतम्।

तदयमत्र निष्कर्षो यत् पूर्वोत्तराङ्कयो: कथायोगं विधातुं प्रवेशक-विष्कम्भक-चूलिकाङ्कावतारा-ङ्कमुखानामुपयोगो भवतीति निश्चप्रचम्। अनया दृष्ट्याङ्कयोरर्थ-सन्निधानेन सर्वेषामेककार्यता वर्तते। किन्तु अङ्कावता-रस्याङ्कमुखस्य चार्थोपक्षेपण सूच्यत्व वा वितथमेव।

प्रवेशकस्तु भारतीये नाट्यशास्त्रे प्रवेशकविष्कम्भक-चूलिकाङ्कावतारा-ङ्कमुखानां स्थानीय इत्यभिनवगुप्तस्य मतं न साधु।[1]

---

१. प्रवेशकशब्दश्च यहासामान्यवचन' पंचसु वृत्त । ना० शा० १८'२९ अधिकृत्य।

११

## प्रवेशक-विष्कम्भक-विमर्शः

प्रवेशक-विष्कम्भकौ तु लघु दृश्यमेव । तत्र न केवलं सूच्यमेव वर्ततेऽपितु दृश्यमपि भवितुमर्हति । सूच्यं तु बीजफलानुवर्तिकथांशानां प्रकाशनाय स्यात्, किन्तु तत्र दृश्यं बीजफलैरसम्बद्धकथांशानां विषये निर्बाधमेव भवति । अभिज्ञानशाकुन्तलस्य षष्ठाङ्कस्य पूर्वं प्रवेशके रक्षिभ्यां धीवरस्ताड्यते । नेदं दृश्यं फलानुवर्ति । अस्मिन्नाटके चतुर्थाङ्कात् पूर्वं विष्कम्भके प्रियंवदानुसूययो कुसुमावचयस्याभिनयः प्रदर्श्यते । अयमप्यभिनयो नास्ति फलानुवर्ती । अत एव प्रवेशक-विष्कम्भकयोरभिनयशून्यत्वं न प्रतिपादनीयम् । तत्र दृश्यमपि वर्तत एव ।

साधारणत प्रवेशकविष्कम्भकयो पात्राणि अपरेषां वृत्तान्येवोद्‌घाटयन्ति । किन्तु अपवादरूपेण ते स्वकीयमपि भूतकालिकं कार्यजातं क्वचिदुद्घाट्यते । रत्नावल्या प्रथमाङ्कात् पूर्वं विष्कम्भके यौगन्धरायण· कथयति—मयापि चैनां देवीहस्ते सगौरवं निक्षिपता युक्तमेवानुष्ठितम् ।[1]

रूपकेषु सर्वं सूच्यं च दृश्यं च वस्तुजातं प्रेक्षकैर्विज्ञेयं भवति । तत्र कथायाः कियानंश प्रत्यक्षमभिनय-द्वारेणाङ्केषु दर्शनीय·, कियांश्चाङ्केषु-वर्णनामात्रेण सविस्तरं विज्ञापनीय, कियांश्च दर्शनीयोऽदर्शनीयो वा विष्कम्भ-प्रवेशकयो संक्षेपेण परिचारकेभ्यः लघुपात्रेभ्योऽनुत्तमेभ्यो वा विज्ञापनीय इत्येतत् सर्वं कवि· कलासौष्ठवमापादयन् निर्धारयति, तदनुसारं तस्य विनिवेशनमङ्कादिषु विदधाति । नाटकीयकथा वस्तुतो नदीप्रवाह इव प्रवर्तते । यत्र सर्वोत्तमो भागो मध्ये वर्ततेऽङ्कोचित सन् । तेन संलग्ना इव नेपथ्योक्तिर्नितरां प्रभावपूर्णा भवति । तटासन्ना तु प्रवेशक-विष्कम्भक-कथाधारा नातिचटुलं प्रवहति किन्तु कथा-प्रसारापेक्षया सुदीर्घा भवत्येव । एते सर्वे समुदिताः कथाधाराया सम्यक्त्वं विदधति ।

---

१ नेद यौगन्धरायण-वृत्त विष्कम्भकोऽपि तु एकोक्तिरेव प्रथमाङ्कस्याङ्गमेवेति मतमस्माकम् ।

प्रवेशक-विष्कम्भकौ 'त्वङ्कार्थसन्धानाय भवतः' इति तयो परं प्रयोजनं स्पष्टीकृतमभिनवगुप्तेन ।

प्रवेशक-विष्कम्भकयोरपरं प्रयोजनं भवति—अदर्शनीयस्य वस्तुजातस्याङ्कानां प्रस्तावना-रूपेण प्रकटीकरणम् । तत्रादर्शनीयता तु विविधप्रकारा भवति । अङ्के एकाहवृत्तमेव निवेशनीयम् ।[1] नाटकेषु अधिकतमा अंका दश एव भवेयुः । तर्हि केवलं दशदिनानां तत्र कथा स्यात् । किन्तु नाटकेष्वनेकवर्षाणामपि कथा प्रवर्तते । सा दीर्घावधि-विस्तृता कथा प्रवेशकविष्कम्भकयोर्निवेश्यते । अत एव द्वयोरङ्कयो. कालगतावकाशे यद् घटित तत् वृत्तजातं प्रवेशकविष्कम्भकयोर्निवेश्यते ।[2]

अन्यविधा अदर्शनीयता लोकरुचि-प्रतिकूलतामाकल्प्य निर्धारिता । तस्या विवरणमङ्कलक्षणे वक्ष्यते ।

रंगपीठस्य क्षेत्रसीमा वर्तते । तत्र सीमितक्षेत्र एव घटितं कायजातं दृश्यं भवेत् । तस्माद् बहिर्घटितं कार्यजातं प्रायश. प्रवेशक-विष्कम्भकाभ्या सूचनीयम् । यदि कश्चित्पुरुषो दूरं गच्छति, तर्हि तस्य दूरयात्रा प्रवेशकविष्कम्भकाभ्यामेव सूचनीया ।[3] कतिपयरूपकेषु 'परिक्रम्य' इति नाटितकेन सूचयित्वा पात्रस्य दूरदेशगमनं कल्पयित्वा दूरंघटितं कार्यजातमपि दृश्यानुक्रमेणैकस्मिन्नेवाङ्के निवेश्यत । नेयं रीतिः साधु ।

---

१. एकदिवसप्रवृत्तं कार्यस्त्वङ्कोऽर्थबीजमधिकृत्य ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥ ना० शा० १८. २१
तेन पंचाङ्के नाटके पंचकार्यदिनानीति सक्षेप । दशाङ्के तु दशेत्यभिनवभारती १८ ३१ ।

२ तत्र भरतप्रतिपादितो नियम

अङ्कच्छेदं कृत्वा मासकृत वर्षसंचित वापि ।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ।। १८. ३१

इदमधिकृत्याभिनवगुप्तेन प्रोक्तम्—यस्मान्मासकृत वर्षसञ्चितं वा यच्च तत्कार्यं सामाजिकाना हृदयगतं तस्मात् प्रवेशक-विष्कम्भकौ कर्तव्यौ । परिमितं तु यदनुसन्धेयं तत्राङ्कमुखमल्पानुसन्धेये चूलिका, अल्पतमे अङ्कावतार. । नैतद्व्यवहारोपपन्नमिति चिन्त्यमेव ।

३. ना० शा० १८. ३२

भरतानुसारं प्रवेशकस्य बहूनि प्रयोजनानि सन्ति । तद्यथा,

**कालोत्थानगतिरसौ व्याख्या संरम्भकार्यविषयाणाम् ।**
**अर्थाभिधानयुक्तः प्रवेशकः स्यादनेकार्थः ॥ ना० शा० १८ ३५**

अभिनवगुप्तानुसारेण 'कालोदयस्य गतिरवगमो यतः कालोदयसूचकः कश्चित्प्रवेशकः । यथा—अज्ज वसन्दमहूसवे सबहुमाणमाहूय' इत्यादि रत्नावल्यां प्रथमाङ्कात् पूर्वं विष्कम्भके । केनचित् प्रवेशकेन गूढं व्याख्यायते । तथा तापसवत्सराजे अमात्य-प्रणिधि.—"मामिज्जई असवासएहि हालाहलस्स पमादसंकिदा ।" अत्रगूढं पदं व्याख्यातम् । संरम्भस्तु उपायान्वेषणादि तदभिधानयुक्तः प्रवेशकः । कार्यं तु यदाधिकारिकमित्यादि । तस्यार्थं पंचाङ्गस्यानुष्ठानम् ।

अर्थोपक्षेपकेषु पात्राणां निर्धारणं भरतेन विहितम्—

परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः । १८ २८

तत्र के ते सन्ति परिजना इति विशदयन्नभिनवगुप्तः स्पष्टयति—

परिजनकथानुबन्ध इति चतुर्णां लक्षणम्—सूतमागधादेश्चूलिकाङ्कस्य, स्त्रीपुरुषादेर्वाङ्कमुखोपकरणस्य, चेटीकंचुकीयादेर्वा प्रवेशकविष्कम्भोपयोगिनः । नैष नियमो व्यवहारोपपन्नः । तथा हि रत्नावल्यां यौगन्धरायणो महामन्त्री स्वयमेव विष्कम्भकः एकोक्ति प्रस्तावयति । अभिज्ञानशाकुन्तले षष्ठाङ्कात् पूर्वं तु प्रवेशके रक्षिणौ, धीवरश्च संवाद-परायणाः । मूलतश्चेटकंचुकीयादयो राजभृत्या नायकवृत्तान्तकोविदाः प्रवेशकविष्कम्भकयोः पात्राणि स्युर्नाम, किन्तु प्राप्येषु नाटकेषु नैष नियमोऽङ्गीकृतः कविवरैः ।

रूपकेषु कति प्रवेशकविष्कम्भकाः स्युरितिनियमयन् भरतः प्राह—

**अङ्कान्तरसन्धिषु च प्रवेशकास्तेषु तावन्तः । १८ २९**

इह तु मध्यसामान्ये प्रवेशकविष्कम्भकद्वयं वर्तत इति भरताभिप्रायं विवृणोत्यभिनवगुप्तः ।

प्रवेशकविष्कम्भकयोः स्थितिः कुत्र स्यादिति दशरूपके नियमितम्—'प्रवेशोऽङ्कद्वयस्यान्तः' इति अर्थात् द्वयोरङ्कयोर्मध्ये एव प्रवेशको निवेशनीयः ।[1]

---

1. आधुनिकयुगे प्रकाशितेषु रूपकेषु प्रवेशकविष्कम्भकौ उभौ अङ्कयोर्मध्ये न निवेश्येते अपि तु अङ्कस्य भाग एव प्रदर्श्येते । इयं त्रुटिः संशोधनीया । यतो हि नामाङ्कस्तु दृश्यवस्तु-निवेशनाय भवति, न तत्र सूच्यादिकं निवेशनीयम् । धनञ्जयेन स्पष्टमेव प्रोक्तम्—एभिः संसूचयेत् सूच्यं दृश्यमङ्कैः प्रदर्शयेत् । १ ६३ । अर्थात् दृश्यसूच्ययोरवस्थानं पृथक् पृथग्भवेत् । नानयोरेकत्रस्थितिः समीचीना ।

# १२

## चूलिका नेपथ्योक्तिश्च

'चूलिकैव नेपथ्योक्तिरिति बहूनां नाट्याचार्याणामभिमतं न साधु' इत्यस्माकं प्रतिपादनीयम्।

### चूलिका

चूलिकाया व्युत्पत्तिश्चूलाया भवति। इयं चूला राजप्रासादस्य चन्द्रशालेति तत्र शिखरस्थः कक्ष आसीत्।[1] तत्र सूत-मागध-वन्दिनः काले-काले राजप्रशंसामधिकृत्य श्लोकानगायन्, कालगतिमसूचयन्, राज्ञो विजयादीरुपलब्धीरवर्णयंश्च। तेषा गानमेव चूलिकेति प्रसिद्धमासीत्। मूलतो नाट्यशास्त्रीया चूलिकोपरिवर्णितैवासीत्। गायकास्तु मागधादय पात्राणि नासन्। ते केवलं सन्देशवाहका एव। पात्राणि तु फलानुवर्तिकार्य-घटका एव भवन्ति।

शिशुपालवधे वैतालिकानां (सूतमागध-वन्दिना) कलगिरो वर्णिता—

वैतालिक स्फुटपद-प्रकटार्थमुच्चै—
भोगावली कलगिरोऽवसरेषु पेठु ॥ ५.६७

इयं चूलिका रूपकेषु प्रायशोऽङ्कान्ते निवेश्यते, अपराङ्कस्य च कथावस्तु सङ्केतयति। अतएव चूलिकायाः प्रयोजनमङ्कानामनुसन्धानं प्रतीयते। तद्यथा भिनवगुप्तेन प्रतिपादितम्—

---

1. राजप्रासादाना गोपुरस्य द्विपार्श्वयोर्नाट्यशाले आस्ताम्। वर्धमानचरिते १८ ११
गोपुराणि नगरद्वाराणि बभूवु। मन्दरोपमैर्गोपुरैः नगरं रक्षितमिति महाभारते—
द्विपक्षगरुड-प्रख्यैर्द्वारैः सौधैश्च शोभितम्।
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमै । १ २०८-३१
मानियर-विलियम्स-महोदयस्य कोशानुसारेण चूल प्रासाद-शिखरकक्षः—A top-room of house अस्ति। अमरकोशानुसारेण चन्द्रशाला शिरोगृहम्। तत्र सगीतमासीदिति—वियद्गत पुष्पकचन्द्रशालाः क्षण प्रतिश्रुन्मुखरा करोति। रघु० १३·४० इत्यनेन प्रमाणितम्।

'अत्रार्थस्य कस्यचित् सम्यगन्यत एवानभिसन्धानपूर्विकाप्ति प्राप्तिरिति चूडा दर्शिता। तद्यथा रत्नावल्यां वैतालिकपाठाद् 'दशामुदयनस्य' इत्यन्त उपयोगी सम्यगर्थ. प्राप्तः। तत्प्रत्यभिज्ञामूलत्वात् सागरिकानुरागस्य चूलिकया यदोत्तराङ्कस्य कथा-सङ्केत स्यात् तदा सोऽङ्क चूलिकाङ्क इति कथ्यते।[1] इयं चूलिका नेपथ्योक्ते सर्वथा भिन्नैव। द्वयोः साम्यं त्वियन्मात्रमेव यदभिनयकर्मणि चूलोक्ति, नेपथ्योक्तिश्चोभये नेपथ्यस्थानादुच्येते। मूलतश्चूलिका चन्द्रशालाया. सूतमागधादिभि र्गीतेति प्रसिद्धि।

## नेपथ्योक्तिः

रगे तु सीमितक्षेत्रस्य कार्यजात दृश्यं विधीयते। तत्रस्था. कतिपय पुरुषा सीमितक्षेत्रस्य रञ्जकघटना अभिनयद्वारेण प्रेक्षकाणा समक्ष प्रदर्शयन्ति। तस्मात् क्षेत्राद्वहिर्घटितानामुपक्रमाणां रंगस्थपात्राणां प्रेक्षकाणां चोपरि प्रभावो यद्यासीत्तर्हि नेपथ्ये स्थितः पुरुष. पात्रं वा वागभिनयपूर्वकं स्वानुभूतं दृष्टं वा प्रकटीकरोति स्म।[2] अस्या नेपथ्योक्तेर्भृशं प्रभावोऽभवत्। नेपथ्योक्ते. पश्चात् रंगत पूर्वं प्रवर्तमाना कथा निरुध्यते, किंचिदभिनवं च कार्यम्, अभिनवा च स्फूर्ति. समुत्पद्यतेतराम्। तथा हि— अभिज्ञानशाकुन्तले दुष्यन्तः प्रसूति-विकलो मनस्तापं प्रकटयति। तस्मिन् काले नेपथ्योक्ति. श्रुता तेन—

अब्रह्मण्यम्, भो वयस्य, अविहा, अविहा एष मां कोऽपि प्रत्यवनत-शिरोधरमिक्षुमिव त्रिभङ्गं करोति। अस्मिन् प्रसंगे नेपथ्यं रंगस्य भाग इव वर्तते, यत्र स्थितो विदूषको दुष्यन्तेन संलपति। नेदं चूलिका वा सूच्यं वा। अस्मिन् संवादे वर्त्तमानघटनामधिकृत्य वागभिनयो वर्तते। सूच्ये वस्तुतोऽतीत-घटनाया विज्ञप्तिर्भवति।

उत्तररामचरिते तृतीयाङ्के रामस्य नेपथ्योक्तिरस्ति—

विमानराज, अत्रैव स्थीयताम्।

इयमुक्तिस्तु रामस्य भूमिकायां पात्रं वागभिनयपूर्वकं प्रस्तौति। अतएव सीता तां श्रुत्वा वक्ति 'अम्हहे, जलभरभरितमेघमन्थर-स्तनित-गम्भीर-मासल कुतो न्वेषभारती-निर्घोषो भ्रियमाणकर्णविवरां मामपि झटित्युत्सुकयति।

---

१. ना० शा० १८ १६ अधिकृत्य भारती।

२ अत्रेदं विचारणीय यत् चूलिकाया वक्ता पात्रं नाभवत्। स तु केवलं सूचकोऽभवत्। तस्य वागभिनयस्य महत्त्वं प्रेक्षकेभ्यो नासीत्। प्रागेव निर्दिष्टं यत् पात्रं नाम स भवति यस्य कर्तृत्वं साक्षादेव फलानुवर्ति। न खलु सूचकाः, सन्देशवाहका., दूता वा पात्राणि सन्ति।

अभिनयस्य तु चतुर्ष्वङ्गेष्वाङ्गिकाभिनयो वाचिकाभिनयश्च प्रधानौ। आङ्गिकाभिनयो नेत्रयोर्विषयभूतो वाचिकाभिनयश्च श्रवणयोर्विषयभूतो रञ्जयति। नेपथ्योक्तिस्तु श्रवणविषयभूता रञ्जयति। अतएव नेयं सूच्यं केवलं ज्ञान-विषयो वा, अपितु आनन्दविषयः श्रोत्रगोचरी,अभिनय-सम्पन्ना च दृश्यमिव रोचिष्णु.।

चूलिकाया वक्ता सूतमागधवन्द्यादयः सन्ति। अत्र राम प्रधाननायक एवनेपथ्योक्तेर्वक्ता। किं पुन. प्रधाननायकोऽपि चूलिकां प्रस्तौतीत्यन्या विप्रतिपत्ति स्यात् यदि चूलिका नेपथ्योक्तिश्च पर्याये मन्येते।[1]

नेपथ्योक्त्या यद्वृत्त प्रस्तूयते, तदाकस्मिकं भवति। तस्य पूर्वापराणि संविधानान्यूह्यानि भवन्ति। तद्यथा भीमस्य नेपथ्योक्तिर्विद्यते—

कृष्टा येन शिरोरुहे नृपशुना पाञ्चाल-राजात्मजा
येनास्याः परिधानमप्यपहृत राज्ञां गुरूणां पुर।
यस्योर स्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽय मद्भुजपजरे निपतितः संरक्ष्यतां पाण्डवा॰ ।।३ ४७

'दु शासनस्य भुजपंजरे ग्रहणात् प्राक् किमभवत् पश्चाच्च किमभवत्' इति प्रेक्षकाणामूह्यमेव। अतएव पूर्वापरासम्बद्धाकस्मिकी च नेपथ्योक्ति संक्षिप्ति-कौशलेन निर्वाह्यते। इयमेव तस्या विशेषता।

यत्तु नेपथ्योक्त्या पात्रं रङ्ग प्रविशति, नेपथ्ये च कलकलध्वनि श्रूयते— नैतत्सर्वं चूलिकां विदधाति। प्रथमा नेपथ्योक्ति तावत्पात्रप्रवेश-विधि। द्वितीया च बाह्यंजगतः प्रवृत्तिः पात्राणा विज्ञप्तयेऽभिनय एव। नेपथ्योक्तिस्तु सन्ध्यन्तर-मिति मातृगुप्तस्याभिमतम्। तदप्यस्याश्चूलिकाया विभेदं प्रकटयति।

## आकाशवाणी

आकाशवाण्या अपराणि नामानि आकाश-वचनम्, अशरीरिणी भारती, अमानुषी वाक् च सन्ति। सेयमाकाशवाणी नाट्यधर्मी वर्तते। नेपथ्योक्तिस्तु लोकधर्मी भवति। अन्यच्च तयोरन्तरमिदमेव स्पष्टं स्याद्यन्नेपथ्योक्तेर्वक्तान्यत्र नाटकीयं पात्रमावश्यकतानुसारि भवति। आकाशवाण्या वक्ता काचिद् देवता पात्रं भवितुं नार्हति क्वचिदप्यन्यत्र तस्मिन् रूपके। स एव पुरुषः पात्रत्वमर्ह-ति यस्य कार्याणि प्रत्यक्षतो गौणतो वा फलानुवर्तीनि। कार्याणां घटकत्वेन पात्रत्वं स्यात्।

आकाशवाण्याः परं प्रयोजनं तस्याः प्रामाणिकता स्यात्। इदमपि तस्या

१. 'चूलिकाया वक्ता सूतमागधादयो हीनकोटिकाः पुरुषा भवेयुः, न तु रामादयो महात्मानः' इति शास्त्र-सम्मतम्।

नेपथ्योक्ते वैशिष्ट्यम्। वेणीसंहारस्य तृतीयाङ्केऽश्वत्थामा दुःशासनं रक्षितुं जिगमिषति। तदाकाशवाणी बभूव—[1]

महात्मन्, भारद्वाजसूनो, न खलु सत्यवचनमनुल्लंघितपूर्वमुल्लंघयितु-मर्हसि।

सर्वं सर्वथा अज्ञात. सन्देश आकाशवाण्या विज्ञाप्यते नैतत्प्रयोजनं नेपथ्योक्ते। दूरमपि सद्योघटितस्य वृत्तस्योद्घाटनं नेपथ्योक्त्या सम्भवति।

---

१. वेणीसंहार इयमाकाशवाणी नेपथ्योक्तिरिति मुद्रिता। नैतत् साधु।

# १३

## श्रव्य-विधानं नाट्यधर्मश्च

कोऽयं नाट्यधर्म ? रंगपीठेऽभिनयस्य सौष्ठवाय सौकर्याय चालौकिक-विधानमपि स्वीक्रियते। तदेव नाट्यधर्म ।[१] स खलु नाट्य एव सम्भवति। तद्विविधं भवति—उक्ति-प्रत्युक्ति-विधाने वागभिनयप्रसङ्गेन, कर्म-विधाने-चाङ्गिकाभिनय-प्रसङ्गेन । नाट्यधर्मोऽलोकसामान्यो भवति, लोकधर्मश्च लोकसामान्यो भवति ।[२]

वाचिकाभिनय-प्रसङ्गेन नाट्यधर्मोऽभिनवगुप्तेन व्याख्यातः —

यत उक्तप्रत्युक्तमहिम्ना चाकाश-भाषितात्मकमप्यलौकिकरूपं स्वीकुर्वता तत्सहचरं स्वगत-जनान्तिकापवारितकाद्युपलक्षितम् । [३]

### प्रकाशम्

नाट्ये लोकसामान्य. प्रकाशाभिनयो भवति, येन रङ्गपीठे कस्यचित् पात्रस्योक्तिमन्यानि सर्वाणि पात्राणि शृण्वन्ति । दशरूपके इदं प्रकाशं नामोक्ति-प्रत्युक्ति-विधानं वर्णितम्—सर्वश्राव्यं प्रकाश स्यात् ।१ ६४

---

१ दशरूपके यो नाट्यधर्मश्चर्चितः १.६३-६७, स एव भारतीये नाट्यशास्त्रे चित्राभिनयः पञ्चविंशेऽध्याये प्रपचित । अभिनवगुप्त. स्पष्टयति—वाचिक-प्रसङ्गात् चित्राभिनयं वक्तु प्रतिजानीते—आकाशवचनानीत्यादि । ना० शा० २५.८५ अधिकृत्य भारती ।

२ एतद्विपरीतो लोकधर्मो लोकसाधारणं कर्म व्यनक्ति ।

स्वभावोपगतं शुद्ध तु विकृतं तथा
लोकवार्ता क्रियोपेतमङ्गलीला-विवर्जितम्
स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् ॥ ना० शा० १३ ७१-७२

यदि कश्चित् पुरुष वृक्ष-लता-पुष्पादीनि विनापि पुष्पावचयाभिनयं प्रस्तौति, जलं विना रंगे स्नाति, तदा नाट्यधर्मानुसारोऽभिनयो भवति ।

३. ना० शा० १६.१३६ अधिकृत्य भारती ।

## स्वगतम्

नाट्यधर्मविधानं प्रथमं तावत् स्वगतमिति सर्वस्याश्राव्यं भवति। स्वगतमेवात्मगतमिति भरतेन प्रोक्तम्—

> हृदयस्थ वचो यत्तु तदात्मगतमिष्यते।
> सवितर्कं च तद्योज्यं प्रायशो नाटकादिषु॥
> हृदयस्थं सविकल्पं भावस्थं चात्मगतमेव॥ २५ ८८-८०

एतत्सर्वं संक्षिप्तमेव दशरूपके निगदितम्—'अश्राव्य स्वगतं मतम्' इति।

स्वगतस्य योजनं रूपकेषु त्रिविधं वर्तते। (१) प्रकाशात्पूर्वम् (२) प्रकाशात्पश्चात् (३) स्वतन्त्रमेव प्रकाशं विना।[१] प्रायशः प्रकाशात् पश्चादेव स्वगतं दृश्यते।

इदं स्वगतमेव संस्कृतनाट्यशास्त्रे सिद्धान्ततो रूपकेषु च व्यवहारतः प्रचलति। एकोक्ति (soliloquy) स्थानेऽपि स्वगतमेव प्रयुज्यत इति न साधु। एकोक्तिस्तु वस्तुतः पृथगेवेति प्रतिपादयामः। एकोक्तौ प्रत्युक्तिर्नास्त्येवेति महत्त्वं भजते।

## एकोक्ति

एकोक्तिर्नाम रङ्गमञ्चे कस्यचित् पात्रस्य स्वकीयमनोदशाविज्ञापनमेव। इयमेकोक्तिरपरस्य कस्यचित्पात्रस्य प्रत्युत्तरं न भवति, न चान्यस्य कस्यचित्पात्रस्य प्रत्युत्तरमपेक्षते। अतएवैकोक्तिः संवादो (dialogue) न भवति। तथाहि भासस्याविमारके द्वितीयाङ्के चतुर्थाङ्के च प्रवेशकस्य पश्चात् रङ्गमञ्च एकाकी वर्ततेऽविमारकः। तस्यैकोक्ती अधोलिखिते स्त। द्वितीयाङ्क —

**अविमारकः—**

> अद्यापि हस्तिकरशीकरशीतलाङ्गीं
> बालां भयाकुलविलोलविषादनेत्राम्।
> स्वप्नेषु नित्यमुपलभ्य पुनर्विबोधे
> जातिस्मरः प्रथमजातिमिव स्मरामि॥ २·१

अहो बलमनङ्गस्य कुतः,—

> दृष्टिस्तदाप्रभृति नेच्छति रूपमन्यद्
> बुद्धिः प्रहृष्यति विषीदति च स्मरन्ती।
> पाण्डुत्वमेति वदनं तनुतां शरीरं
> शोकं व्रजामि दिवसेषु निशासु मोहम्॥२.२

---

१. स्वप्नवासवदत्ते ब्रह्मचारिणः 'अनाहारे तुल्य.' इत्यादि श्रुत्वा वासवदत्ता—(स्वगतम्) दिट्ठिआ सुणिक्खितो दाणी अय्यउत्तो।

अथवा अयुक्तमधृतित्वं पुरुषाणाम् । सङ्कल्प्यमानो हि विजृम्भते मदनः । तस्मादहमिदानीं न सङ्कल्पयामि । (स्मृत्वा) अहो तस्या रूपसम्पद्, रूपानुरूपं यौवनं, यौवनसदृशं सौकुमार्यम् ।

अत्र हि—

प्रतिच्छन्दं धात्रा युवतिवपुषां किन्नु रचितं
गता वा स्त्रीरूपं कथमपि च ताराधिपरुचि. ।
विहाय श्रीः कृष्णं जलशयनसुप्तं कृतभया
धृतान्यस्त्रीरूपं क्षितिपतिगृहे वा निवसति ॥२ ३

कथमहं पुनरारब्धाश्चिन्तयितुम् । किमिदानीं करिष्ये । मनश्च तावदस्मदिच्छया न प्रवर्तते । इह हि,

प्रतिषिद्धं प्रयत्नेन क्षणमात्रं न वीक्षते ।
चिराभ्यस्तपथं याति शास्त्रं दुर्गुणितं यथा ॥२.४

अथवा न शक्यं मनो जेतुम् । चिन्तयिष्याम्येनाम् । अहो सर्वेषां स्त्रीगुणानामेकत्र समवाय । (चिन्ताभिभूत उपविशति )

चतुर्थाङ्के च

( ततः प्रविशत्यविमारकः )

अविमारक ·—( सशोकम् )

कन्यापुरात् कथमपीह विनिर्गतं मे
भाग्यावशेषमवलम्ब्य शरीरमात्रम् ।
अद्यापि तन्मम मनो न तु मामुपैति
नावेक्षते मयि तया प्रिययावरुद्धम् ॥४.१

का नु खलु भवेदवस्था कुरंग्या ।

ह्रीता भवेत् प्रेष्यजनप्रवादैर्भीता च राज्ञा दृढसन्निरुद्धा ।
बाष्पाविला मामनवेक्षमाणा मोहं व्रजेद् रात्रिषु किं करिष्ये ॥४.२

हन्त दृष्ट. प्रतीकार. । तथापि तावदस्मदपेक्षया नापेक्षित आत्मा तस्मादहमपि तावत् तदर्थे प्राणान् परित्यजामि । ( परिक्रम्य ) कतिपयदिवसप्रोषितोऽहमस्मि । अद्य तु मानसं शारीरं च दु.खमसह्यमिव मे प्रतिभाति । इह हि,

निर्व्याजं परिचयवर्धमानरागां
रूपाढ्यामभिनवयौवनां मनोज्ञाम् ।
त्यक्त्वा तां क्षणमपि वञ्चितोऽस्मि ,जीवन्
कष्टोऽन्य· क इह भवेत् कृतघ्नभावः ॥४.३

सम्प्रति हि मदनेनान्तर्दह्यमानस्य क्षारीभवितुमारब्धो भगवान् सूर्यः सहस्ररश्मिः। (सर्वतो विलोक्य) अहो प्रतिभयता निदाघस्य। सम्प्रति हि,

अत्युष्णा ज्वरितेव भास्करकरैरापीतसारा मही
यक्ष्मार्ता इव पादपाः प्रमुषितच्छाया दवाग्न्याश्रयात्।
विक्रोशन्त्यवशादिवोच्छ्रितगुहाव्यात्ताननाः पर्वता
लोकोऽयं रविपाकनष्टहृदयः संयाति मूर्च्छामिव ॥४.४

किमिदानीं करिष्ये। न चास्म्यहं गन्तुं समर्थः। कुतः,

लिम्पन्ति रूक्षपवना सिकताग्नि-चूर्णैः
संस्वेदयन्ति च नगाः परुषैः पलाशैः।
दावैर्द्रवीकृततनुः स्रवतीव भास्वा—
नादित्यपाकचलितः फलतीव लोकः ॥४.५

हा प्रिये! हा सुन्दरि! देहि मे प्रतिवचनम्।
( मूर्च्छां नाटयति। पुनर्निःश्वस्य। ऊर्ध्वमवलोक्य )
रुद्धः खलु भगवान् सूर्यः सहस्ररश्मिः। अथवा,

किमत्र चित्रं विततां पयोदा
रुन्धन्ति सूर्यं ननु वातनीताः।
अन्तःस्थितं मे यदि वारयन्ति
कामं भवेद् विस्मयनीयमेतत् ॥६॥

किमनेन जीवन्मरणेन। विसर्जयिष्याम्यात्मानम्। (उत्थाय परिक्रामति) किन्नु खलु करिष्ये। भवतु दृष्टम्। अस्मिन्नारण्यतटाके विसर्जयिष्याम्यात्मानम्। धिगधर्मं खलु मे मरणमार्गं। अभिमानमोहान्महापथो विस्मृतः। अन्यथा प्रयतिष्ये ( विलोक्य ) भवतु दृष्टम्। अये अदूरे दृश्यते दवाग्निः। तस्मिन् प्राणाहुतिं करिष्यामि। ( उपगम्य प्रणम्य च ) भगवन् अग्ने!

इष्टं चेदेकचित्तानां यदग्निं साधयिष्यति।
परत्रापि च मे कान्ता सा भवेदेककीर्तनी ॥७॥

( अग्निं प्रविश्य सकुतूहलम् ) किमिदं वर्तते।

दग्धाः स्फुलिङ्गनिकरैर्निपतन्ति वृक्षा
ज्वालाश्च मे मलयचन्दनपङ्कशीताः।
अग्निर्दयां हि कुरुते मदनातुरेऽपि
पुत्रं पितेव च परिष्वजति प्रहृष्टः ॥८॥

भोः। किमतः परं विस्मयनीयम्। अग्निः खलु मां न दहति। अथवा

एतदप्यस्ति कारणम् । अन्यथा प्रयतिष्ये (परिक्रम्य) एष खलु महान् पर्वतः,

असितजलदवृन्दैर्मिश्रसन्दिग्धशृङ्गो
गगनचरकुलानां विश्रमस्थानभूत. ।
सुकविमतिविचित्रो मित्रसयोगहृद्यो
नरपतिरिव नीचो दृश्यते निष्फलाढ्यः ॥६॥

भवतु तावदस्मिञ्छैले प्राणान् परित्यजामि । मरुत्प्रपातो हि सर्वार्थ-साधक । यावदारोहामि । (आरुह्यावलोक्य) एतत् पानीयं गोत्रस्थं स्नात्वोप-स्पृश्य मन्त्रं जपामि । (तथा कृत्वा जपति) ॥

अभिज्ञानशाकुन्तले प्रथमाङ्कस्यान्तभागे रङ्गमञ्चे राजैवैकं पात्रमस्ति । तस्यैकोक्तिर्वर्तते—

राजा— मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान् समेत्य नातिदूरे तपोवनस्य निवेशयेयम् । न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम् । मम हि

गच्छति पुर शरीरं धावति पश्चादसंस्तुत चेत. ।
चीनाशुकमिव केतो प्रतिवात नीयमानस्य ॥ १ ३२

सस्कृतरूपकेषु प्राय· सर्वेष्वेकोक्तीना प्रयोगो वर्तते ।

**एकोक्ति· स्वगतं च**

एक क्त्या समं कर्त्वचित् स्वगतं प्रवेशकश्च भवत इति स्वगतप्रवेश-कयोरेकोक्ते वैशिष्ट्यं निर्वचनीयम् । प्रथमं तावत् स्वगतस्य प्रासगिकं विभेदकं लक्षणमवधेयम् ।

१ स्वगतं शनकैरुच्यते येन रंगमञ्चस्यान्यानि पात्राणि स्वगतभाषणं न शृणुयुः । एकोक्तिस्तारस्वरेण प्रोच्यते । यदि रंगमञ्चेऽन्यत्किञ्चित्पात्रं भवति तदपि श्रवणं करोति । कस्मादपि पात्रात् किंचिद् गोपनीयं रहस्य न निगद्यते ।

२ स्वगतं तु संवादांश एव । अतएव प्रत्युत्तरं भवति । एकोक्ति. संवादांशो नास्ति रङ्गमञ्चे एकपात्रत्वात् । नेयं प्रतिक्रियात्मकं प्रत्युत्तरं वा ।

३ एकोक्तौ एकमेव पात्रं मुख्यत. स्वकीयां मनोदशा विज्ञापयति । स्वगते नैष नियमः ।

४ एकोक्तिर्लोकधर्मी स्यात्, स्वगतं च नाट्यधर्मी ।

**एकोक्तिः विष्कम्भकादयश्च**

१ विष्कम्भकप्रवेशकयो प्रायश· संवादमुखेन कतिपयपात्राणिवृत्तवर्तिष्यमाणान् कथांशान् निदर्शयन्ति । वृत्तवर्तिष्यमाणकथानिदर्शनमेकोक्तौ नापेक्षितम् ।[1] विष्कम्भकप्रवेशकयो· क्वचिदेकमेव पात्रं भवति ।[2] तत्र सवादस्तु न भवति किन्तु कथांशसूचनं भवत्येव । विष्कम्भकप्रवेशकयो. कस्यचिदङ्कस्य कथात्मकभूमिका निर्दिश्यते । एकोक्तिस्तु क्वचिदागाम्यङ्कस्य कार्यव्यापारस्य मानसिकी भूमिका प्रस्तौति ।

२ एकोक्ति कस्यचिदङ्कस्यादौ मध्येऽन्ते वावश्यकतानुसार प्रयुज्यते । विष्कम्भकप्रवेशकावङ्कारम्भात् पूर्वमेव प्रयुज्येते ।

३ विष्कम्भकप्रवेशकयोर्मध्यमाधमान्येव पात्राणि भवन्ति । किन्तु एकोक्तेर्वक्तार प्राय उत्तमपात्राणि भवन्ति ।

**एकोक्तेः प्रयोजनम्**

मानसिकान्तर्द्वन्द्वस्य गोपनीयभावस्य च यादृशं प्रकरणमेकोक्तौ सम्भवति तादृशमन्यथा न स्यादिति सहृदयाना वेदनमेव । रसनिष्पत्तये च नायकादेर्मनोवृत्तीना विज्ञापना परमं साध्यमिति सिद्धान्तितमेव ।

कालिदासादय एकोक्ति-विधानं स्वीकुर्वन्ति । तथा हि अभिज्ञान-शाकुन्तलस्य षष्ठेऽङ्के —

द्वितीया—परभृतिके किमेकाकिनी मन्त्रयसे ?

रूप गोस्वामिनो विदग्धमाधवे पंचमेऽङ्के राधाया एकोक्तिमधिकृत्य ललिता—

हला राधिके, एकैव किं मन्त्रयसे ।

आङ्गल-भाषायामेकोक्ति. Soliloquy इति स्वगतं च Aside इति प्रथिते । तयोरन्तरमधोलिखितं स्पष्टमेव—

**Aside**.

The aside is an almost too easy de ice for revealing directly and immediately to the audience the discrepancy between what the character says and what he feels, between the appearance of courage and the actuality of cowardice, between the innocence of the announced intention and the malice of the actual purpose.

---

१ एकोक्तौ क्वचिदपवादरूपेण वक्तुर्भाविकार्यक्रमोऽपि निर्दिश्यते ।

२. एकानेककृत शुद्ध· संकीर्णो नीचमध्यमै ।

**Soliloquy**

Logically and practically, it is speaking aloud of the character's feelings and ideas, an objection of intimate and personal psychological material···It brings us as close to the heart of a character as it is possible.[1]

**प्रतिक्रियोक्ति**

स्वगतमिव प्रतिक्रियोक्तिरपि तस्माद् भिन्नैव भवति । नैषा नाट्यशास्त्रादिषु वर्णिता । प्रतिक्रियोक्तौ कस्यचिदेकस्य बहूनां वा प्रच्छन्नतया दृष्टाया घटनाया. श्रुताया उक्तेर्वा प्रसङ्गेन साश्चर्यमाकस्मिकं प्रतिवचनं भवति । तद्यथा मृच्छकटिके वसन्तसेना प्रच्छन्ना सती गवाक्षात् मदनिकाशर्विलकयोरुक्ति-प्रत्युक्ती श्रुत्वा स्वकीयां प्रतिक्रियोक्तिमधोविधं प्रकटयति—

वसन्तसेना—कथं मम सम्बन्धिनी कथा ?
तच्छोष्याम्यनेन गवाक्षेणापवारित शरीरा ।
मदनिका—अयि उपनय, अन्यथातिसाहसम् ।
वसन्तसेना—साधु मदनिके साधु, अभुजिष्ययेव मन्त्रितम् ।

प्रतिक्रियोक्तेरभिनेयोष्कर्षो रसपेशलता चोत्कर्षशालिनौ ।[2]

**जनान्तिकम्**

भरतेन जनान्तिकं परिभाषितम्—

कार्यवशादश्रवणं पार्श्वगतैर्यज्जनान्तिकम्
इति गूढार्थयुक्तानि वचनानीह नाटके ।
जनान्तिकानि कर्णे तु तानि योज्यानि योक्तृभि ।।

पूर्ववृत्तं तु यत्कार्यं भूय कथ्य तु कारणात्
कर्णप्रदेशे तद्वाच्यं मा गात् तत् पुनरुक्तताम् ।।

अव्यभिचारेण पठेदाकाशजनान्तिकात्स्वगतपाठ्यम्
प्रत्यक्ष-परोक्षकृतानात्मसमुत्थान् परकृतांश्चैव ।।

---

१ Bentley Millet. The Art of Drama P. 201 and 202

२ प्रतिक्रियोक्तेरपरविधमुदाहरण मुद्राराक्षसे चतुर्थाङ्के मलयकेतुभागुरायणयो. प्रच्छन्नतया राक्षस-करभकयोर्गोपनीय-वार्ताश्रवणेन प्रवर्तते । अनेन प्रतिक्रियोक्ति-सविधानेन मलयकेतोरभिनयस्य रमवैशद्यमनन्योपलब्धिरेव शोभते । न तत् प्रतिक्रियोक्तिं विहायान्यथा कल्पनीयम् ।

हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः ।[१]
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा ॥

ना० शा० २५.८१-८४

दशरूपके धनञ्जयस्तु संक्षेपेण जनान्तिकं परिभाषितवान्—

त्रिपताककरेणान्यानपवार्यान्तराकथाम् ।
अन्योऽन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥

दश० १.६५-६६

स तु जनान्तिकस्य वर्त्तनं कथाया मध्ये भवेदिति नियमयति । पुनश्च तत्रोक्तिप्रत्युक्ती द्वयो पात्रयोर्भवेतामिति वैशिष्ट्य-द्वय भरतेन न प्रकटितम् । भरतस्य कर्णप्रदेशे तद्वाच्यमिति दशरूपके जनान्त इति पदेन गृहीतम् ।

## अपवारितकम्

भरतानुसारेण तु

निगूढभावसयुक्तमपवारितकं स्मृतम् ।

अस्य व्याख्याभिनवगुप्तानुसारमधोलिखिता—

निगूढभावो निगूहनं सर्वेषा यन्निगुह्यते एक एव शृणुयादिति तदपवारितम् । अभिनवगुप्तोऽपवारितजनान्तिकयोरन्तरं स्पष्टयति अस्मिन् प्रसङ्गे । तद्धि जनान्तिकत्वमेकान्तिकत्वं चैकस्यैव निगुह्यते इति विशेष । नायं विशेषोऽन्यत्र व्याख्यातः ।

अपवारितकेऽपि भरतानुसारेण त्रिपताककरेणापवारणं भवति ।[२] तन्न धनञ्जयस्याभिमतम् । सोऽपवारणं परावृत्य' विधिना समर्थयति ।[३]

बहूना नाट्याचार्याणां मतेनापवारितजनान्तिकयोरन्तरं नास्त्येव । अभिनवगुप्तेन तेषा मतं चर्चितम् । तद्यथा अन्ये त्वाहु—उभयमित्येतज्जनान्तिकमेव । यावतो हि जनस्य तद्वक्तव्यं तावतोऽन्तिके सामीप्ये तदुच्यत इति ।

---

१ भरतानुसारेण त्रिपताकोऽधोविध भवति—
प्रसारिता. समाः सर्वा यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठ स पताक इति स्मृत ।
पताके तु यदा वक्रानामिकात्वङ्गुलिर्भवेत् ।
त्रिपताक· सविज्ञेय कर्म चास्य निबोधत ॥९.१८,२८

२. ना० शा० १९.९४

३. रहस्यं कथ्यतेऽन्यस्य परावृत्त्यापवारितम् । दश० १.६६

## आकाश भाषितम्

दशरूपकानुसारेणाकाशभाषित कस्यचिदेकस्यैव पात्रस्य केनापि कल्पितेना दृश्येनेव पात्रेण सहोक्तिप्रत्युक्ती भवति । तद्यथा—

किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाश-भाषितम् ॥

न खलु कल्पितपात्रं किंचिद् ब्रवीति । तस्य प्रत्युक्ती ंगस्थेन पात्रेण कल्प्यते ।

नाट्यशास्त्रे भाण-लक्षण-प्रसङ्ग आकाश-भाषितं व्याख्यातम् । तद्यथा—

परवचनमात्मसस्थ प्रतिवचनैरुत्तरोत्तरग्रथितैः ।
आकाशपुरुषकथितैरङ्गविकारैरभिनयैश्चैव ॥१८.१०८

अभिनवगुप्तानुसारेण तु स एवानुवदन् सामाजिकान् बोधयति । न केवलं परवचनमभिनयेत्, किन्तु प्रतिवचनैः स्वोक्तै सह । आकाशपुरुषस्तु नो पुरुष ।[1]

———

1 ना० शा० २२ ३२१

# नायक-विमर्शः

अस्मिन्नध्याये नायक-विमर्शः शृङ्गार-दृष्ट्या प्रस्तुत । तदधिकृत्या-भिनवगुप्तो व्याख्यातवान्—इह कामोपचार पूर्वं दर्शितः कामश्च स्त्रीपुरुषहेतुक इत्युक्तम् । कामोपचारश्च शृङ्गारपर्यवसायी नायक-विशेष एवेति नायकभेदा वक्तव्याः।[1]

नाट्यशास्त्रे नायकपदस्य त्रिविधोऽभिप्रायो निर्दिष्टः (१) प्रधाननायक. (२) प्रधाननायक, प्रतिनायक, नायिका, पताकानायकश्चेति मध्यमसामान्य-वचनम् तथा (३) कश्चिदपि कथा-पुरुष अमात्य, कंचुकी, विदूषकः, भृत्य चेटी, चेट इत्यादयः इति महासामान्य-वचनम् ।

## प्रधान-नायक

भरतेन प्रधाननायको लक्षितः —

> व्यसनी प्राप्य दु ख वा युज्यतेऽभ्युदयेन य. ।
> कथापुरुषमाहुस्तं प्रधानं नायकं बुधा ॥२४.२२

सोऽयं प्रधाननायको धनञ्जयेनाधिकारीति प्रोक्तः

> अधिकारः फलस्वाम्यमधिकारी च तत्प्रभु ।
> तन्निर्वर्त्यमभिव्यापि वृत्तं स्यादाधिकारिकम् ॥१.१२

प्रधाननायकोऽयं धीरोदात्त., धीरललित, धीरप्रशान्तः, धीरोद्धतश्च चतुर्विधो भवति ।[2] इमे विशेषा नायकस्य प्रकृतिं, गुणं, उपलब्धिं च समीक्ष्य निर्धारिताः ।

---

१ ना० शा० २४ १

२ ना० शा० २४.१७

नायकानामिदं चातुर्विध्यं परवर्तियोजनं प्रतिभाति । भरतस्तु मूलतो नायकाना विभाजनमुत्तममध्यमाधमकोटिषु समर्थयति । १८.३४ । नाटक उदात्तेन नायकेन भवितव्यम् । न तत्रापि धीरोदात्तस्य निर्देशनम् । अन्येषु रूपकविशेष्वपि धीरविशेष-पिननायका न निर्दिष्टास्तेन ।

भरतानुसारेण प्रकृतिस्त्रिविधा भवति—उत्तमा, मध्यमा, अधमा च। सेयं प्रकृतिर्नायिकादीनां शृङ्गारपरायणतामधिकृत्य परिभाषिता।[1] शृङ्गार एव रोचिष्णुतमो नायकानाम्। भरतस्तु आभ्यन्तरं कामोपभोगमेव नाटके सविशेषं समर्थयति।[2] सोऽयं कामोपभोगो राज्ञामेवोचितो नाटकेषु।[3]

पूर्वोक्तविवरणेन स्पष्टं प्रतीयते यत् भरतो राजानमेव नाटकस्य नायकं मत्वा तस्य लक्षणं विशदीकरोति—

बलवान् बुद्धि-सम्पन्न सत्यवादी जितेन्द्रियः।
दक्षः प्रगल्भो धृतिमान् विक्रान्तो मतिमाञ्छुचि ॥
दीर्घदर्शी महोत्साहः कृतज्ञ प्रियवाङ् मृदु.।
लोकपालव्रतधर कर्ममार्गविशारद ॥
उत्थितश्चाप्रमत्तश्च वृद्धसेव्यर्थशास्त्रवित्।
परभावेङ्गिताभिज्ञ शूरो रक्षा-समन्वितः॥
ऊहापोहविचारी च नानाशिल्पप्रयोजक।
नीतिशास्त्रार्थकुशलस्तथा चैवानुरागवान् ॥
धर्मज्ञोऽव्यसनी चैव गुणैरेतैर्भवेन्नृपः ॥

ना० शा० २४. ७६-८०

नृपस्यैतल्लक्षणं समाहृत्य धनञ्जयो नेतुर्लक्षणमाह—

नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः।
रक्तलोकः शुचिर्वाग्मी रूढवंश स्थिरो युवा॥
बुद्ध्युत्साह-स्मृति - प्रज्ञाकलामानसमन्वित.।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः॥ २ १-२

दशरूपक इत्थं विशेषितोऽयं नेता सामान्य-गुणलक्षित कथमपि तत्रैव वर्णितान् धीरोद्धतनायकगुणान्न समन्वयतीति स्पष्टं प्रतीयते।

---

१. य· स्त्रीपुरुषसंयोगो रतिसम्भोगकारक।
स शृङ्गार इति ज्ञेय उपचारकृतः शुभ.॥
भूयिष्ठमेव लोकोऽयं सुखमिच्छति सर्वदा।
सुखस्य हि स्त्रियो मूलं नानाशीलाश्च ता. पुन ॥ २२ ९८-९९

२ कामोपभोगो द्विविधो नाट्यधर्मेऽभिधीयते।
बाह्याभ्यन्तरतश्चैव नारीपुरुषसंश्रय ॥ २. १४९
आभ्यन्तरः पार्थिवाना स च कार्यस्तु नाटके।
बाह्यो वेश्यागतश्चैव स च प्रकरणे भवेत्॥ २२. १५०

३. तत्र राजोपभोगं तु व्याख्यास्याम्यनुपूर्वशः॥ २२. १५१

धनञ्जयस्योपर्युक्तसामान्यनेता तु वस्तुतो राजैव। स नेतुरीदृशं राजपरकमभिप्रायं न स्पष्टं प्रकटितवानिति त्रुटिरेव। रामचन्द्रगुणचन्द्रयोर्नाट्यदर्पणे नेतुर्नृपत्वमधोविधिना स्पष्टीकृतम्—

'अथ राजशब्दं व्याख्यातुं सामान्येन नेतु स्वरूपमाह—

उद्धतोदात्त-ललित-शान्ता धीरविशेषणा।
वर्ण्या स्वभावाश्चत्वार. नेतृणां मध्यमोत्तमाः॥ १. ६

धनञ्जयोऽपि नेतू राजत्वमधोलिखितेन श्लोकांशेन व्यञ्जयति—

एव नाट्ये विधातव्यो नायक सपरिच्छद। २. ४६

प्रसंगेऽस्मिन् परिच्छदस्तु नायिका-दूत-दूती-मन्त्रि-पुरोहितादयो राज्ञ एव कल्पनीयः।

नायकस्य सामान्यगुणास्तु भवन्ति नाम। तेषा परिगणनं भोजेनान्यविधेनैव निर्दशितम्। तद्यथा—उत्तमादिहेतवश्च नायकानां सामान्यगुणा जात्यादयश्चतुर्विंशति। यथा—जाति, अन्वय, अभिजन, निवास·, आस्पदम्, पदं, पितरौ, प्रभाव, प्रतिज्ञा, शास्त्रज्ञानम्, अदीनवाक्यता, वाग्मित्वम्, देशकालावबोध, इंगिताकारज्ञता, दाक्ष्यम्, कलावैदग्ध्यम्, चतुरता, रूपसम्पत्, सौभाग्यम्, त्याग·, सौहार्दम्, महारम्भता, शक्ति, शौर्य मिति।

भरतकोश पृष्ठम् ३२७

इमे सामान्यगुणा साधारणत सर्वविधानां रूपकाणां नायकेषु दृश्यन्ते।

नायका भरतादिभि. पौन.पुन्येन सम्यग्वर्गीकृता। प्रथमं तावत् प्रकृत्यनुसारेण नायका उत्तमाः, मध्यमाः, अधमाश्च भवन्तीति भरतेन प्रतिपादितम्।[1] तत्रोत्तममध्यमौ गुणान्वितौ, अधमश्च दोषपूर्णः स्यु।[2]

परतो भरतो नायक-प्रकारं नियमयन् प्राह

अत्र चत्वार एव स्युर्नायका परिकीर्तिता।
मध्यमोत्तमप्रकृतौ नानालक्षणलक्षिता॥[3]
धीरोद्धता धीरललिता धीरोदात्तास्तथैव च।
धीरप्रशान्तकाश्चैव नायका परिकीर्तिता॥

ना० शा० २४. १६-१७

---

१ ना० शा० २४ १, ७

२. ना० शा० २४ ३, ७

३. नैतत्साधु। धीरोद्धतस्तु नास्ति मध्यम उत्तमो वा।

न खल्वेतन्नियमनं व्यवहारे परिनिष्ठितम्। भाणप्रहसनयोर्नायिका उत्तम-मध्यमप्रकृतिका न सन्ति। भाणनायको धूर्त-विटस्तु 'अधम' भवति।[१] प्रहसनस्य नायकस्तु 'भगवत्तापसविप्रादयो' भवन्ति।[२] भगवत्तापसविप्रा यतिवानप्रस्थ-गृहस्था., अन्ये शाक्यादयस्तैरुपलक्षितम्। हास्य-प्रधानवचन-सम्बन्धशीलनादिना कुत्सितै पुरुषैरतएव प्रहस्यमानैः सामर्थ्यात्तैरेव भगवदादिभियु क्तम्।[३] एतादृशा भाणप्रहसननायका भरतधनञ्जयादीनान्नायक-चातुर्विध्ये न समायान्ति।[४] एतत्तु नाट्य-शास्त्र अभाव प्रतिभासते।

नाट्यदर्पणे रामचन्द्र-गुणचन्द्रौ धीरोदात्तादिभेदा नेतुः प्रकृतेरेव सन्तीति वर्णयत। तथाहि—

उद्धतोदात्तललितशान्ता धीरविशेषणाः।
वर्ण्याः स्वभावाश्चत्वारो नेतृणां मध्यमोत्तमाः॥ १. ६

स्वभावस्वभाविनोरभेदात् समानाधिकरण्यनिर्देशः।

भारतीये नाट्यशास्त्रे धीरोदात्तादीनामुदाहरणानि सन्ति—

देवा धीरोद्धता ज्ञेया स्युर्धीरललिता नृपा.।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ॥
धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा॥ २४ ४

इति न सर्वथा साधु। अभिनवगुप्तेनास्मिन्प्रकरणे व्याख्यातम्—इति वचने पर्यालोच्यमाने देवादीनां नाटकनायकत्वानुपपत्ते·। धीरललित एक एव नायक इति। तदसत्। न हि जनकप्रभृतीना रामादीनामपि वा धीरललितत्वम्।

---

१. शकारश्च विटश्चैव ये चान्येप्येवमादय।
सङ्कीर्णास्तेऽपि विज्ञेया ह्यधमा नाटके बुधै.॥ २४ १४

· रामचन्द्रगुणचन्द्रानुसारेण भाण प्रहसनयो, कस्याचिद् वीथ्या च नीचोऽपि नायक.। नाट्यदर्पणे ४.७।

२. भगवत्तापसविप्रैरन्यैरपि हास्यवाद-सम्बद्धम्।
कापुरुषसम्प्रयुक्त परिहासाभाषणप्रायम्॥
ना० शा० १८ १०३

३. ना० शा० १८.१०३ अधिकृत्य भारती।

४. भरतस्तु भाण-प्रहसनादीनामधमनायकान् न गणयति। अधोलिखितकारिकाया नायकाना चातुर्विध्य-नियमनमसाम्प्रतम्—
अत्र चत्वार एव स्युर्नायका परिकीर्तिता।
मध्यमोत्तमप्रकृतौ नानालक्षण-लक्षिता॥ २४ १६

यदाह—"धीरोदात्तं जयति चरितं रामनाम्नश्च विष्णो." इति। अभिनवगुप्तानुसारतस्तु पूर्वोक्तकारिकानुसारेण धीरललितत्वं राज्ञ एव वर्णनीयं नान्यस्य, सेनापत्यमात्ययोर्धीरोदात्तत्वमेव, देवानां धीरोद्धतत्वमेव, द्विजातीनां धीरप्रशान्तत्वमेव। 'अभिनवगुप्तस्य सशोधित-प्रपञ्चोऽपि न व्यावहारिक' इति वेणीसंहारोत्तररामचरितादिषु स्पष्ट प्रतिभाति।

नायिका-विषये नायकस्य वर्तनं परीक्ष्य प्रणयिनो नेतु पाञ्चविध्यं भरतेन प्रतिपादितम्—

चतुर, उत्तम, मध्य, नीच, प्रवृत्तकश्च।[1]

चतुरः

समदु खक्लेशसहः प्रणयक्रोधप्रसादने कुशल।
योऽर्थी नात्मचछन्दो दक्षश्चतुर स बोधव्य ॥ २३ ५४

उत्तमः

मधुरस्त्यागी रागं न याति मदनस्य चापि वशमेति।
अवमानितश्च नार्या विरज्यते चोत्तम स पुमान् ॥ २३ ५६

मध्यमः

सर्वार्थैर्मध्यस्थो भावग्रहणं करोति यो नार्या।
किञ्चिद्दोषं दृष्ट्वा विरज्यते मध्यम स भवेत् ॥ २३. ५७

नीचोऽधमः

अभिनवकृते व्यलीके प्रत्यक्षं रज्यते दृढतरं य।
मित्रैर्निवार्यमाणो विज्ञेयः सोऽधम पुरुष ॥ २३ ६०

प्रवृत्तकः

अवगणितभयामर्षो मूर्खप्रकृति प्रसक्तहासश्च
एकान्तदृढग्राही निर्लज्ज कामतन्त्रेषु
रतिकलहसम्प्रहारेष्वकर्कश क्रीडनायक स्त्रीणाम्।
एवंविधस्तु तज्ज्ञैर्विज्ञेयः सम्प्रवृत्तस्तु ॥ २३. ६२

एतेभ्यो व्यतिरिक्तं ज्येष्ठं नायकमप्यस्मिन् प्रसङ्गे भरतो विवृणोति। तद्यथा,

यो विप्रिय न कुरुते नार्या किंचिद्विराग-संजातम्।
अज्ञातेप्सितहृदय स्मृतिमान् धृतिमान् स तु ज्येष्ठ ॥
ना० शा० २३. ५५

---

१. स्त्रीसम्प्रयोगविषये ज्ञेया पुरुषास्त्वमी पंच। ना० शा० २३. ५३

इमे भारतीया नायका साधारणत एकनायिका. सन्ति। न तेषां वैविध्यं प्रपंचयितुं धनञ्जयो मतिं कुरुते। स तु पूर्वं प्रत्यन्यया हृतं नायकमेव युवजन-प्रीतये सविशेषं महत्त्वपूर्णं मन्यते, तेषां भेदं च दक्षिण, शठ, धृष्ट इति प्रस्तावयति। एतेषु धृष्टो वा शठो वा तावत् भरतस्याधमेन समान।[1]

अन्यत्र भरतः शठं परिभाषते—

वाचैव मधुरो यस्तु कर्मणा नोपपादक।

योषित. किञ्चिदप्यर्थं स शठ परिभाष्यते॥ २२ ३१५

धनञ्जयस्यानुकूलो दक्षिणश्च नायको भरतेन प्रिय·, कान्त., विनीतः, नाथ., स्वामी, जीवितम्, नन्दन इत्यादिभि. नामभि संकेतित।[2] धनञ्जयस्य शठो धृष्टो वा भारतीयनाट्यानुसारेण नायिकया दुःशील, दुराचारः, शठः, वाम, विकत्थन, निर्लज्ज, निष्ठुरश्चाभिधीयते।[3]

धनञ्जयस्तु दक्षिण, शठ, धृष्टः इति प्रकारत्रयमेव संक्षेपेण वर्णयति। भरतस्तावत् प्रत्येकस्य भेदानपि सूक्ष्मेक्षिकया सरसं विवृणोति। भरतानुसारेण दक्षिणादयो नायका अधोविधा सन्ति—

**दक्षिण·**

कुलीनो धृतिमान् दक्षो दक्षिणो वाग्विशारद.। २२ ३१०

**शठ·**

वाचैव मधुरो यस्तु कर्मणा नोपपादक।
योषित किञ्चिदप्यर्थं स शठ. परिभाष्यते॥ २२. ३१५

**निर्लज्जः**

भरतस्य निर्लज्ज एव धनञ्जयस्य धृष्ट·। तद्यथा

वार्यमाणो दृढतर यो नारीमुपसर्पति।
सचिह्नः सापराधश्च स निर्लज्ज इति स्मृत·॥ २२. ३१८

**प्रियः**

भरतस्य प्रिय एव धनञ्जयस्यानुकूलनायकः। तद्यथा

यो विप्रियं न कुरुते न चायुक्त प्रभाषते।
तथार्जवसमाचारः स प्रियस्त्वभिधीयते॥ २२. ३०५

---

१. व्यक्ताङ्गवैकृतो धृष्ट। गूढविप्रियकृच्छठ। दश० २. ७

२ ना० शा० २२. ३०५-३११

३. ना० शा० २२. ३१२-३१६

## पताका-नायक.

भारतीये नाट्यशास्त्रे केवलं नायकस्यैव चर्चा स्पष्टं विद्यते। पताका-नायको वोपनायको वानुनायको वा तत्र न संज्ञित। अभिनवगुप्तस्तावत् प्रधान-नायकेन सह पताकानायक-प्रकरीनायकयोराधिकारिकवस्तु-प्रयोगे स्थानं निर्दिशति।[1] भरतानुसारतस्तु प्राज्ञौ इति विशिष्टौ भवतः[2]। अपरञ्च पताका-वृत्तस्यनायक एव पताकानायक। सुग्रीव-विभीषणौ सुप्रसिद्धौ पताकानायकौ।

धनञ्जयानुसारेण पताकानायक. पीठमर्दो भवति। पीठमर्दस्तावत् पारिभाषिकं पदम्। न तत्र पीठं न च मर्दनं व्युत्पन्नम्। पीठमर्दस्तु नायकस्यानुचर., भक्त, गुणै. प्रधाननायकात् किञ्चिदूनो विचक्षण. स्यादिति धनञ्जयो दशरूपके निर्दिशति।[3]

शारदातनयानुसारेण पताकानायक एवोपनायको भवति। शारदातनयः पीठमर्द इति पदं व्युत्पन्नं मन्यते। तद्यथा,

> पीठमध्यास्य पुरत. प्रयोक्ता नायिकादिषु।
> स पीठमर्दो विश्वास्य कुपितस्त्री-प्रसादक॥

पीठमर्दस्तन्मतेन विदूषको भवति।[4] न हि खलु सुग्रीवादय पताका-नायका पीठमर्दा। पीठमर्दास्तु नायिकाप्राप्तौ एव नायकस्य सहाया.। नैतन्निर्दिष्टं धनञ्जयेन। स तु पताकानायकं पीठमर्दं च पर्यायं मन्यते इति चिन्त्यम्।

## प्रतिनायक

प्रतिनायकोऽपि भरतेन न सम्यक् लक्षित। अभिनवगुप्तस्तावत् प्रतिनायकं विशिष्टमेव मनुते।[5] प्रतिनायकस्य स्थिति. संस्कृत-नाट्य शास्त्रीयेषु सन्दर्भेषु सुविचारिता नास्त्येव। धनञ्जयानुसारेण तु—

> लुब्धो धीरोद्धत स्तब्धः पापकृद् व्यसनी रिपुः॥ २. ९

---

१ प्राज्ञैः प्रधाननायक पताकानायक-प्रकरीनायकैश्चेतनरूपै।

२. यदाधिकारिकं वस्तु मम्यक् प्राज्ञै. प्रयुज्यते। ना० शा० १९. २६
अत्र प्राज्ञा पताकानायकादयः सन्तीति मतमभिनवगुप्तस्य।

३. दश० २ ८

४. भावप्रकाशने पृष्ठं ८४

५. सा (निरूढि·) च नायकस्यामात्यस्य नायिकायाः प्रतिनायकस्य दैवस्य वा।
ना० शा० १८. ९ अधिकृत्य भारती।

न खलु बहवः सन्ति प्रतिनायकस्य समीक्षका नाट्याचार्याः। रामचन्द्र-गुणचन्द्रावपि धनञ्जयमेवानुहरतः। वयं तु रुद्रटस्य मतेन प्रतिनायकं वर्णयामः। स तु गुणी अभिजातश्च स्यात्। संस्कृतरूपकेषु प्रतिनायकानां स्थितिर्वैकल्पिकी वर्तते। साधारणतः प्रतिनायका लुब्धाः, धीरोद्धताः, स्तब्धाः पापकृत. व्यसनिनश्चापवादा एव सन्ति।

**नायकस्य सहायाः**

**विदूषक**

प्रणयात्मकेषु रूपकेषु नायकस्य प्रथमः सहायको विदूषक एव वर्तते। स विदूषको न केवलं राज्ञामेव हासकारकोऽपि तु देवानामपि। तद्यथा भरतो वर्णयति —

> लिंगी द्विजो राजजीवी शिष्यश्चेति यथाक्रमम्।
> देवक्षितिभृतामात्यब्राह्मणानां प्रयोजयेत्॥ २४. २०

अभिनवगुप्तानुसारेण देवानां विदूषकः लिङ्गी ऋषिर्भवति। राज्ञां विदूषकः कश्चिद् ब्राह्मणो नियुज्यते। अमात्यस्य विदूषको राजजीवी भवति। ब्राह्मणानां विदूषकः शिष्य एव नियोजनीयः। विशेषतो राज्ञो विदूषकस्य प्रमुखं स्थानमासीत् रूपकेषु। तद्यथा,

> विप्रलम्भसुहृदोऽमी संकथालाप-पेशला.॥ ना० शा० २४. २१

भरतो विदूषकस्य विशेषं वर्णयति—

> प्रत्युत्पन्नप्रतिभो नर्मकृतो नर्मगर्भ निर्भेदः।
> छेकविदूषितवचनो विदूषको नाम विज्ञेय.॥ ३५ २५

विदूषकस्तु कुरूपो वानररूपो वासीदिति रूपकेषु प्रायशो वर्णितम्।

अप्रणयात्मकेषु नाटकेषु क्वचिद् विदूषकस्य स्थानं नासीत्। उत्तररामचरिते, वेणीसंहारे, मुद्राराक्षसे च विदूषकाभाव. प्रमाणयति यत् गम्भीरार्थचिन्तनस्य वैदुष्यपूर्णप्रकृतौ विदूषकस्य हास्यादिकमवांछितमिति सुसम्मतम्। रामकाव्यात्मक-नाटकेषु विदूषकोऽपवाद एव।

विदूषकस्य विवरणं दशरूपकेऽतिन्यूनमेव वर्तते।

> हास्यकृच्च विदूषकः। २.६

**विट.**

विटस्तु नाट्यशास्त्रीयो वैशिक एव। भरत. शकारं विटं चाधमं

निर्दिशति। भरतानुसारेण वेश एव वेश्या। वेश्योपचारे साधु वैशिक।[1] भरतस्तस्य त्रयस्त्रिंशद् गुणान् निबोधयति। तद्यथा,

शास्त्रविच्छिल्प-सम्पन्नो,रूपवान्, प्रियदर्शन, विक्रान्त, धृतिमान्, वयोवेषकुलान्वितः, सुरभि, मधुर, त्यागी, सहिष्णु, अविकत्थनः, अशङ्कित, प्रियभाषी, चतुरः, शुभद, शुचि, कामोपचारकुशल, दक्षिण., देशकालवित्, अदीनवाक्य, स्मितवान्, वाग्मी, दक्षः, प्रियंवद, स्त्रीलुब्ध, संविभागी, श्रद्दधानः, दृढस्मृतिः, गम्यासु चाप्यविस्रम्भी, मानी च।[2]

शारदातनयस्य विट. पूर्वोक्तवैशिकेन समान एव। तद्यथा,

वेशोपचारकुशलो मधुरो दक्षिण कवि।
ऊहापोहक्षमो वाग्मी चतुरश्च विटो मत।
विटश्च कामसाचिव्यकरणे चोपयुज्यते।
माल्यभूषोज्ज्वल कुप्यत्यनिमित्त प्रसीदति।
विटः प्राकृतवादो च प्रायो बहुविकारवान्॥[3]

वैशिकस्य विटस्य वा पूर्णपरिचयश्चतुर्भाणीनामकेनोपरूपक-चतुष्टयेन प्रतिफलति। तत्र नायका अनायका वा विटा वेश्योपचारे सम्यक् प्रवर्तन्ते। ते तत्र राजकुमारा, ब्राह्मण-युवका, वणिज, शूद्रा वा सर्वे वेश्यानिरता एव स्वजीवनं सफलयन्ति। वृद्धोऽपि विटो स्वानुभवेन प्रवीण सन् कामुकान् वेश्याश्च परामर्शैर्बोधयति।

भाणनामके रूपके वैशिको वा विटो वानुत्तमोऽपि वेशोपचार-कर्मणि न विशेषमहत्वपूर्ण स्थानं भजते, यथा मृच्छकटिकादिषु प्रकरणेषु। अस्मिन् प्रकरण स शकारस्य मित्रमेव तस्य कामुकता सम्पूरयति।

ईदृशो महत्त्वपूर्णो विटो धनञ्जयेनातिसंक्षेपेण वर्णित —

एकविद्यो विटश्चान्य।

धनञ्जयस्तु प्रणयात्मकेषु रूपकेषूपयुक्त-पीठमर्दादीना योगं वर्णयति। स एतादृशेषु रूपकेषु मन्त्रिणा महत्त्वपूर्ण भूमिकां विस्मरति। तत्तु स्वप्न-वासवदत्त-रत्नावल्योर्यौगन्धरायणस्य योगदानेन प्रमाणितमेव। धनञ्जयो मन्त्रिणा साह्यं कार्यान्तरेषु वर्णयति। कार्यान्तराणि तु अन्त पुराद्वाह्यानि सन्ति।

---

१ वेशोपचारे साधुर्वा वैशिक परिकीर्तित। ना० शा० २३ १

२ ना० शा० २३. २-७

३. भावप्रकाशने पृष्ठ ८४. २६७, २८८

भरतानुसारेण (युव) राज., सेनापति, पुरोधा, मन्त्री, सचिव:, प्राड्विवाक, कुमाराधिकृतश्च नायकस्य सहाया. सन्ति। अन्येऽपि तत्र सहाया भवेयुरिति भरत आह—

एते चान्ये च बहवो मान्या ज्ञेया नृपस्य तु। २४ ७५

भरतनिर्दिष्ट-सहायेषु युवराज, सेनापतिः, सचिवः, प्राड्विवाकः, कुमाराधिकृतश्च धनञ्जयेन न संगृहीता। अस्मिन् प्रसङ्गे नायकस्य सहायो राजा भवेदिति भरत स्पष्टयति।[1] कथं नाम राजा स्वयमेव स्वकोय: सहाय स्यादिति सन्देहे समुत्पन्नेऽभिनवगुप्तो व्याख्याति—युवराजोऽत्र राजशब्देनोक्त। अत्र धनञ्जयस्याधोलिखित-कारिकाभिनवगुप्तं नानुसरन्ती सशयमेव जनयति—

मन्त्री स्वं वोभयं वापि सखा तस्यार्थ चिन्तने। दश० २ ४२

कथं कश्चिद् राजा नायक. स्वयमेव स्वकीय: सहाय: स्यादिति भ्रमोऽभिनवगुप्तस्य व्याख्यया दूरीकरणीया। अतएव धनञ्जस्य कारिका चिन्त्येव।

धनञ्जयेन तपस्वी, ब्रह्मवादी, सुहृत्, कुमारः, आटविकः, सामन्तः, सैनिक, वर्षवरः, किरात, मूकः, वामनः, म्लेच्छः, आभीर, शकार इति बहुजना नायकोपकारका: परिगणिता।[2]

सर्वे ते नायकस्य सहाया गुणानुसारं ज्येष्ठाः, मध्यमा, अधमाश्च भवन्ति।

## नायकगुणाः

नायकस्य मानसिकवृत्तिमधिकृत्य तस्याष्ट गुणा निर्धारिता. सन्ति। इमे तु सात्त्विकगुणा इति सत्त्वादेव तेषां प्रादुर्भावं व्यनक्ति। सत्त्वं नाम चित्त-वृत्तिरेव। नायकस्येमे सात्त्विकगुणाः पात्रेण सात्त्विकाभिनयद्वारा प्रेक्षकान् प्रति प्रकटीक्रियन्ते।[3] सात्त्विकाभिनयस्तु चतुर्षु अभिनयेषु रसभावापेक्षया प्राथम्यं भजते। अतएव सात्त्विकगुणा बहुमता सन्ति।

---

१ राजा सेनापतिश्चैव पुरोधा मन्त्रिणस्तथा।
सचिवाः प्राड्विवाकाश्च कुमाराधिकृतास्तथा।। २४. ७४

२. दशरूपके २. ४३-४४

३ चतुर्विधोऽभिनयो भवति—सात्त्विकः, वाचिक, आङ्गिक., आहार्यश्चेति। तत्र सात्त्विकाभिनये प्रकृतेः चित्तवृत्ते, वाचिकाभिनये वाण्या., आङ्गिकाभिनये शारीरिककार्याणाम्, आहार्याभिनये च तस्याः वस्त्रपरिधानादीनामनुकरणं पात्रै प्रस्तूयते।

अष्टगुणेषु शोभा, माधुर्यम्, स्थैर्यम्, गाम्भीर्यम्, औदार्यम् तेजश्च एडेव नायकस्य कार्येभ्य प्रेक्षकाणा बोधगम्यानि भवन्ति। शेषं द्वयं विलासो ललितञ्च प्रत्यक्षमेव प्रतिफलत.।

**शोभा**

भरतानुसारेण नायकस्य दाक्ष्यं, शौर्यम्, उत्साहो, हीनविषयेषु घृणा, उत्तमगुणेभ्यो रुचिश्च शोभाया उद्भव ।[1] धनञ्जय एतेषामुत्साहं न गणयति इति[2] तस्य त्रुटिरेव, यतो हि नाम इमे पौरुषा गुणा सन्ति। पौरुषगुणेषु वीररसोचितोत्साहस्तु वर्णनीय एव।

**विलास**

भरतानुसारेण विलासे नायकस्य गतिर्वृषभवत् महिमशालिनी भवति, दृष्टिश्च शनैः सञ्चरति। तदर्थ सल्लपनमीषद्हासपूर्वकं जायते। धनञ्जय-स्तत्त्वतो भारतीयं लक्षणमनुहरति।

**माधुर्यम्**

कथं नाम माधुर्यं नायकेन समिध्यत इति वर्णयन् भरत करणानाम् (इन्द्रियाणाम्) युद्ध-नियुद्ध-व्यायामादिष्वभ्यासमावश्यकं मनुते।[3] यस्यां स्थितौ साधारणजनाना महान् विकारो जायेत, तस्यामपि माधुर्यगुणोपेतस्य नायकस्य विकारो मधुर एव स्यात्। धनञ्जयो भरतं तत्त्वतोऽनुहरति।

**स्थैर्यम्**

भरतानुसारेण धर्मकामविषयकेभ्य संकल्पेभ्य. सदाग्रहो हि स्थैर्य नाम गुणः। नायको विघ्नोपहतोऽपि वैषम्यात् विचलितो न भवति। धनञ्जयो भरतं संक्षेपेणानुहरति।

**गाम्भीर्यम्**

भरतानुसारत

> यस्य प्रभावादाकारा हर्षक्रोधभयादिषु।
> भावेषु नोपलक्ष्यन्ते तद्गाम्भीर्यमितिस्मृतम् ॥ २२ ३८

अस्मिन् प्रसङ्गेऽभिनवगुप्त आकारं व्याख्याति—

---

१. दाक्ष्यं शौर्यमथोत्साहो नीचार्थेषु जुगुप्सनम्।
उत्तमैश्च गुणैः स्पर्धा यत. शोभेति सा स्मृता ॥ ना० शा० २२ ३४

२. नीचे घृणाधिके स्पर्धा शोभाया शौर्यदक्षते। २ ११

३. ना० शा० २२.३६ अधिकृत्य भारती।

आक्रियते चित्तवृत्तिरेभिरित्याकार मुखरागदृष्टिविकारादय । गाम्भीर्ये सति आकारा न प्रकटीभवन्ति । एतदेव लक्षणं धनञ्जयः संक्षिप्तं ब्रूते—

गाम्भीर्यं यत्प्रभावेण विकारो नोपलक्ष्यते । २ १२

यदा विकार ईषदुपलक्ष्यते तदा माधुर्यं भवतीति द्वयोरन्तरमिति धनिक ।

**तेजः**

भरतानुसारेण शत्रुप्रयुक्ताधिक्षेपावमानादेरसहनं तेजो भवति । तत्र नायको प्राणसंशयेऽपि अवमानादे प्रतिक्रियाया विरतो न भवति । अन्यासु स्थितिषु—नीत्यनुवर्तने, देशकालानुवर्तने चावमानसहनं न सापवादं भवतीति प्राणात्ययेऽपीति पदयोरौचित्यम् । परेणेति पदेन भरतस्य विज्ञापनीयं वर्तते यत् मित्रेण गुरुणा वा कृतमवमानं सहत एव नायकः । नैतत्तेजो-विरोधि ।

धनञ्जयो भरतमेव सक्षिप्तमनुहरति ।

**ललितम्**

भरतानुसारेण

अबुद्धिपूर्वकं यत्तु निर्विकारस्वभावजम् ।
शृङ्गाराकारचेष्टत्वं ललितं तदुदाहृतम् ॥ २२ ३८

यत्र विकाररहितं स्वभावत एव शृङ्गाराकारचेष्टा. सन्ति, तत्र ललितं नाम सात्त्विकगुणो भवति । भरतमेव धनञ्जयोऽनुहरति ।

**औदार्यम्**

औदार्यं तु नाम्नैव प्रतीतम् । धनञ्जयानुसारेण तु जीवनदानं पराकाष्ठा औदार्यस्य भवति । न केवलं दानमपितु अभ्युपपत्ति. (परित्राणायार्थिनो ग्रहणम्) प्रियभाषण च शत्रूणामपि विषये विलसत इति महिमौदार्यस्य । धनञ्जया-नुसारेण सज्जनानामात्मसात्करणमप्यौदार्यस्य लक्षणम् ।

---

# १५

## नायिका-लक्षणम्

भरतो धनञ्जयश्चोभौ शृङ्गारे कामोपभोगविलासे च परायणां प्रकृतिमेव प्रायोनिदर्शयत· । नायिका शृंगारवृत्तौ प्राधान्यं भजते ।

भरतानुसारेण कामोपभोगाय नायिका त्रिविधा भवन्ति—बाह्या., बाह्याभ्यन्तरा., आभ्यन्तराश्च ।[1] बाह्या नायिका वेश्या सन्ति प्रकरणे प्रयोज्या । आभ्यन्तरास्तु अन्तपुरे राजभोग्या नाटकोचिता भवन्ति। बाह्याभ्यन्तरा तु एकावरुद्धा वेश्या भवन्ति ।[2]

राज्ञो नायिका वेश्या न भवेत्, किन्तु दिव्यवेशाङ्गना नायिका भवितु-मर्हति, यथा विक्रमोर्वशीये । धनञ्जयस्य स्वीया साधारण-स्त्री च, भरतस्य कुलजा, बाह्या च स्त । बाह्याभ्यन्तरा धनञ्जयेन न दृष्टा ।

भरतोऽष्टविधनायिका अपश्यत् । तद्यथा, वासकसज्जिका, विरहोत्क-ण्ठिता, स्वाधीनभर्तृका, कलहान्तरिता, खण्डिता, विप्रलब्धा, प्रोषित-भर्तृका, अभिसारिका च । एता· सर्वा विवाहस्य पश्चाद्वर्तिन्यो नायिका । विवाहात्पूर्वमेव रूपकेषु कामसमुत्पत्तिर्नाम यदभीष्टतमो विषय· कवीना प्रेक्षकाणा च, स भरतेन सम्यक् पर्यालोचित , किन्तु धनञ्जयेनेषद्दत्ताप्रधानो-ऽयं प्रसङ्ग ।

भरतस्तावत् कविमार्गप्रदर्शयितुकामो नायिकाया पुरतो नायकादर्शं प्रस्तुतवान्—

> रूपगुणादिसमेतं कलादिविज्ञान - यौवनोपेतम् ।
> दृष्ट्वा पुरुषविशेष नारी मदनातुरा भवति ॥

---

१. बाह्या चाभ्यन्तरा चैव स्याद् बाह्याभ्यन्तरापरा ।
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गना स्मृता ।
कृतशौचा तु या नारी सा बाह्या भ्यन्तरा स्मृता ॥ ना० शा० २२ १५२-३

२. सा च वेश्या पुनर्भवा । ना० शा० २२.१५३ अधिकृत्य भारती

मदनातुराया वेश्याया कुलजायाश्च शरीरविकारा कीदृशो भवन्तीति भरतेन सम्यग्वर्णितम् । तद्यथा नायकसमक्षं नायिका-विकारा. —

**वेश्याविकाराः**

ललिता चलपक्ष्मा च तथा च मुकुलेक्षणा ।
स्रस्तोत्तरपुटा चैव काम्या दृष्टिर्भवेदिह ॥
ईषत्-सरक्तगण्डस्तु सस्वेदलवचित्रित. ।
प्रस्पन्दमानरोमाञ्चो मुखरागो भवेदिह ॥
काम्येनाङ्गविकारेण सकटाक्षनिरीक्षितैः ।
तथाभरण - संस्पर्शैं कर्ण - कण्डूयनैरपि ॥
अङ्गुष्ठाग्रविलिखनै स्तननाभिप्रदर्शनैः ।
नखनिस्तोदनाच्चैव केशसंयमनादपि ॥
ना० शा० २२ १६१-१६५

**कुलजा-विकाराः**

प्रहसन्ती च नेत्राभ्या प्रतत च निरीक्षते ।
स्मयते सा निगूढं च वाच चाधोमुखी वदेत् ॥
स्मितोत्तरा मन्दवाक्या स्वेदाकारनिगूहनी ।
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना ॥
ना० शा० २२.१६७-१६८

नायकसङ्गमलभमाना मदनातुरा नायिका दशस्थानगतं कामं प्रदर्शयति—अभिलाषः, चिन्तनम्, अनुस्मृतिः, गुणकीर्तनम्, उद्वेगः, विलापः, उन्मादः, व्याधि , जडता, मरणञ्च ।[१]

पूर्वोक्तमदनातुरा नायिका नायकं प्रति आत्मावस्थाप्रदर्शिनी दूती प्रेषयति ।[२]

**राज्ञां प्रच्छन्नकामिता**

भरतस्तावत् प्रच्छन्नकामितमेव शृङ्गारस्याभीष्टतमं प्रापणीयं मन्यते । तथा हि—

प्रच्छन्नकामितं राज्ञा कार्य परिजनं प्रति ।

---

१. ना० शा० २२ १७३-१८१

२. दूता अपि विसृज्यन्त एतदर्थमिति न क्वचिन्निर्दिष्टम् । बहुषु भाणेषु नायिकादूता विटा एव सन्ति ।

यद्वामाभिनिवेशित्वं यतश्च विनिवार्यते ।
दुर्लभत्वं च यन्नार्या सा कामस्य परा रतिः ॥

ना० शा० २२ २०७

अभिनवगुप्तानुसारेण राज्ञामियं प्रच्छन्नकामिता बहुव्यापिनी बभूव । तत्र ऊढा, पुनर्भू, अवरुद्ध-गणिका, कन्यका, प्रेष्या च राजकीय-प्रणयपाशेऽत्र-रुद्धा आसन् ।[1] अभिनवगुप्त स्पष्टयति—धर्मवृत्तिना राज्ञा परिचार्यो द्वेष्या-दुर्भगा अपि सेव्या इति । एतासु नायिकासु धनञ्जयः केवलं कन्यकामूढां च वर्णयति ।[2]

## अष्टविधा नायिका.

नायकप्रणयावद्धाना नायिकानामष्ट भेदा अवस्थापेक्षयाधोनिर्भिन्ना. —

**स्वाधीनपतिका**

भरतानुसारत

सुरतातिरसैर्बद्धो यस्या पार्श्वे तु नायक. ।
सान्द्रामोदगुणप्राप्ता भवेत् स्वाधीन-भर्तृका ॥ २२. २१५

धनञ्जयस्तु संक्षेपेणानुहरति भरतमस्मिन् प्रकरणे ।

**वासकसज्जा**

वासकं तु शयनगृहमस्ति । नायकस्य प्रणयमिलन-संभावनामपेक्ष्य वासकस्य सज्जां (मण्डनम्) नायिका विदधाति । एवं व्यापृता नायिका वासक-सज्जेत्यभिधीयते । भरतस्ता परिभाषते—

उचिते वासके या तु रतिसम्भोगलालसा ।
मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका ॥

ना० शा० २

धनञ्जयस्तु भरतं संक्षेपेणानुहरत्येव ।

---

१ इद प्रकरणं तात्कालिकी राजकीयप्रवृत्तिं प्रकटयति । आदर्शविमुखा एते राजान समाजस्य पतनाय बभूवु, यतो हि नाम समाजो राजानमेवानुवर्तते । यथा भरत आह—"यान् यान् प्रकुरुते राजा तान्स्तान् लोकोऽनुवर्तते ।" अत्र नेदं विस्मरणीयं यद् योरपीय-देशेषु राज्ञा नागरिकाणा च प्रणय-परिधिरतिवृहद् वभूवेति तत्रत्यनाट-कानामितिवृत्तं प्रसिद्धम् ।

२. दश० २ २० अन्यस्त्री कन्यकोढा च ।

**विरहोत्कण्ठिता**

भरतानुसारतः वासकसज्जाया नायको यदि यथासमयं नायाति तर्हि सा विरहोत्कण्ठिता भवति।

वासके नागतः प्रियः।

धनञ्जयो भरतमेवानुहरति।

**खण्डिता**

भरतधनञ्जयौ तां नायिकां खण्डितां वदतो यस्याः रमणोऽन्यनायिका-सक्त्या ता न संगच्छते।

**कलहान्तरिता**

पत्या कलहकारिणी नायिका कलहानन्तरं तस्माद्विदूरा भवति। सामर्षं च कुरुते। नायकस्तु ईर्ष्यावशीभूतस्तां न मिलति। ईदृशी नायिका कलहान्तरिता भवति। धनञ्जयस्तामनुशयभावापन्नामपि लक्षयते।

**विप्रलब्धा**

दूतद्वारेण संगमनार्थं प्रतिज्ञाय यदि नायको नागच्छेत् तर्हि नायिका विप्रलब्धा भवतीति भरतधनञ्जययोर्मतम्।

**प्रोषितप्रिया**

यस्या नायिकायाः प्रणयी प्रवासं करोति, सा यथानाम प्रोषितप्रिया भवति। भरतस्तस्या रूपं वर्णयति—

प्ररूढालककेशान्ता भवेत् प्रोषितभर्तृका। २२. २१८

**अभिसारिका**

धनञ्जयस्याभिसारिका तु संक्षेपेण वर्णिता—

कामार्ताभिसरेत्कान्तं सारयेद्वाभिसारिका। २.२७

भरतस्तावदभिसारिकाया विस्तृतं लक्षणं ब्रूते—

हित्वा लज्जां तु या श्लिष्टा मदेन मदनेन च।
अभिसारयते कान्तं सा भवेदभिसारिका॥

अभिनवगुप्तो व्याख्याति—अभिसरः सहायः। तस्य व्यापारेण प्रियतममाक्रामति।

अभिसारिका तु वेश्या वा कुलजा वा प्रेष्या वा भवेत्। अभिसरणकाले तासां भावविशेषा भरतेन वर्णिताः—

वेश्या

समदा मृदुचेष्टा च तथा परिजनावृता ।
नानाभरणचित्राङ्गी गच्छेद् वेश्याङ्गना शनैः ॥ २२, २२७

कुलजा

संलीना स्वेषु गात्रेषु त्रस्ता विनमितानना ।
अवगुण्ठनसवीता गच्छेत्तु कुलजाङ्गना ॥ २२ २२८

प्रेष्या

मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा गच्छेत् प्रेष्या समुद्धतम् ॥ २२. २२९

सुप्तं नायकं केन विधिना जागरयेदिति भरतेन प्रोक्तम्—

अलंकारेण कुलजा वेश्या गन्धैस्तु शीतलैः ।
प्रेष्या तु वस्त्रव्यजनैः कुर्वीत प्रतिबोधनम् ॥ ३२. २३१

भरतस्तु राजकीयनायिकानां परिगणनं समन्ततः प्रस्तौति । धनञ्जयस्तु तासामवहेलनामेव प्रदर्शयते । नाटकनाटिकादिषु महादेवी-प्रभृति-नायिकानां स्थानं महत्त्वपूर्णं वर्तते, किन्तु धनञ्जयस्ता न परिभाषत इति तस्य त्रुटिरेव । एतत्प्रकरणं तु भरतानुसारेणावधेयम् ।

नानाप्रकृतिलक्षणा नायिका धीरा, ललिता, उदात्ता, निभृता च राजकीया भवन्ति । एते भेदाश्चतुर्विधानां दिव्या-नृपपत्नी-कुलस्त्री-गणिकानां च भवन्ति । तत्र दिव्या राजाङ्गनाश्च गुणैर्युक्ता भवन्ति । कुलजाङ्गना उदात्ता, निभृताश्च भवन्ति । गणिका शिल्पकारिका च ललिते अभ्युदात्ते च स्तः ।[1]

अन्तःपुरचारिण्यस्त्रियः

भरतोऽन्तःपुरस्थनारीणां परिचयं सम्यक् प्रस्तौति । तद्यथा,

महादेवी तथा देव्यः स्वामिन्यः स्थापिता अपि ।
भोगिन्यः शिल्पकारिण्यो नाटकीया सनर्तकाः ॥
अनुचारिकाश्च विज्ञेयास्तथा च परिचारिकाः ।
तथा संचारिकाश्चैव तथा प्रेषणकारिकाः ॥
महत्तर्यः प्रतीहार्यः कुमार्यः स्थविरा अपि ।
आयुक्तिकाश्च नृपतेरयमन्तःपुरे जनः ॥ २४, ३०-३२

---

१ ना० शा० २४. २३-२६

एतासु महादेवी-प्रभृति शिल्पकारिणीपर्यन्तं नायिका भवन्ति। एतासां वर्णनमधोविधं नाट्यशास्त्रे विद्यते—

**महादेवी**

अत्र मूर्धाभिषिक्ता या कुलशील-समन्विता।
गुणैर्युक्ता वयस्या च मध्यस्था क्रोधना तथा॥
मुक्तेर्ष्या नृपशीलज्ञा सुखदुःखसहा समा।
शान्तिस्वस्त्ययनैर्भर्तुः सतत मंगलैषिणी॥
शान्ता पतिव्रता धीरा चाऽन्तःपुरहिते रता।
एभिर्गुणैस्तु संयुक्ता महादेवीत्युदाहृता॥ २४. ३३-३५

अभिनवगुप्तानुसारेण सर्वेषां मूर्ध्नि प्रधानस्थानेऽभिषिक्ता भवति महादेवी। सा मध्यस्थेति वयसि मध्यमे तिष्ठति। महादेवी तु शृङ्गारोचिता नातीव प्रतिभाति। सा महादेवी आभिमुख्यं नायकस्य प्रयाति।

**देवी**

एभिरेव गुणैर्युक्तास्तत्सत्कारविवर्जिता।
गर्विताश्चातिसौभाग्या. पतिसम्भोगतत्पराः॥
शुचिर्नित्योज्ज्वलाकारा प्रतिपक्षोऽभ्यसूयिका।
वयोरूपगुणाढ्या यास्ता देव्य इति भाषिता॥ २४ ३६-३७

तत्र बहवो देव्यो नायिका बभूवुः।

**स्वामिनी**

सेनापतेरमात्यानां भृत्यानामथवा पुन।
भवेयुस्तनया यास्तु प्रतिसम्मानवर्जिता॥
शीलरूपगुणैर्यास्तु सम्पन्ना नृपतेर्हिता।
स्वगुणैर्लब्धसम्माना स्वामिन्य इति ताः स्मृता॥
नाο शाο ३४. ३८-३९

**स्थापिता**

रूप-यौवनशालिन्य. कर्कशा विभ्रमान्विता।
रतिसम्भोग-कुशला. प्रतिपक्षाभ्यसूयिकाः॥
दक्षा सत्तुश्च चित्तज्ञा गन्धमाल्योज्ज्वला सदा।
नृपतेश्छन्दवर्तिन्यो न ह्रीर्ष्यामानगर्विताः॥
उत्थिताश्च प्रमत्ताश्च त्यक्तालस्या न निष्ठुराः।
मान्यामान्यविशेषज्ञा. स्थापिता इति ता स्मृता॥
नाο शाο ३४ ४०-४२

भोगिनी

कुलशीललब्धपूजा मृदवो नातिचोद्भटा ।
मध्यस्था निभृता क्षान्ता भोगिन्य इति ता स्मृता ॥
ना० शा० २४. ४३

शिल्पकारिका

नानाकला-विशेषज्ञा नानाशिल्पविचक्षणा. ।
गन्धपुष्पविभागज्ञा लेख्यालेख्य-विकल्पिका ।
शयनासनभागज्ञाश्चतुरा मधुरास्तथा ।
दक्षा सौम्याः स्फुटा श्लिष्टा निभृता. शिल्पकारिकाः ॥

राज्ञोऽन्त पुरेऽन्या बहवो नार्यो नियुक्ता आसन् । तथा हि—

नाटकीया नर्तकी च नाट्यनृत्याभिनयेन मनोरञ्जनार्थमासन् । अनुचारिका सतत राजानमनुचरतिस्म । शय्यापाली, छत्रधारी, व्यजन-धारिणी, संवाहिका, गन्धयोक्त्री, प्रसाधिका, आभरणयोक्त्री, माल्यसयोजिका च परिचारिका बभूवु । राजकीय-कक्षासु, उपवनेषु, मन्दिर-प्रासादेषु संचारिका वा यामकिनी वा रात्रौ रक्षार्थमभवत् । परिचारिका प्रेषण-कर्मणि नियुक्तासीत् । महत्तराया विशिष्टं स्थानमासीद् भरतानुसारेण—

सर्वान्त पुर-रक्षासु स्तुतिस्वस्त्ययनेन च ।
या वृद्धिमभिनन्दन्ति ता विज्ञेया महत्तराः ॥ २४.५६

प्रतीहारी नाटकेषु सुप्रसिद्धैव वर्तते । तस्या कार्याणि भरतेन वर्णितानि—

सन्धि-विग्रह-सम्बद्ध-नानाचार-समुत्थितम् ।
निवेदयन्ति याः कार्यं प्रतिहार्यस्तु ता' स्मृताः ॥ २४.६०

अन्त.पुरे वृद्धा पूर्वराजानां नीतिपथस्य व्याख्यानाय नियुक्ता आसन् । तद्यथा,

पूर्वराजनयज्ञा या पूर्वराजाभिपूजिता ।
पूर्व राजानुचरितास्ता वृद्धा इति सज्ञिताः ॥ २४ ६२

आयुक्तिकाना स्थानमन्त पुरचारिणीषु स्त्रीषु सविशेष वर्तते । तद्यथा—

भाण्डागारेष्वधिकृताश्च ायुधाधिकृतास्तथा ।
फलमूलौषधीना च तथा चैवान्ववेक्षिकी ॥
गन्धाभरणवस्त्राणां माल्यानां चैव चिन्तिका. ।
बह्वाश्रये तथा युक्ता ज्ञेया ह्यायुक्तिकास्तु ताः ॥ ना० शा० २४ ६२-६४

## नायिकानां स्वभावजा भेदा·

उत्तमा, मध्यमा, अधमा च नारीणां त्रिविधा प्रकृतिर्भवति। भरतस्तु नायिकादीनां भेदमुत्तमादिगुणे प्रस्तौति। तद्यथा,

> सर्वासामेव नारीणां त्रिविधा प्रकृतिः स्मृता।
> उत्तमा, मध्यमा, नीचा वेश्यानां तु स्वभावजा ॥

**उत्तमा**

> या विप्रियेऽपि तिष्ठन्तं प्रियं वदति नाप्रियम् ।
> न दीर्घरोषा च तथा कलासु च विचक्षणा ॥
> शीलशोभाकुलाधिक्यै पुरुषैर्या च काम्यते ।
> कुशला कामतन्त्रेषु दक्षिणा रूपशालिनी ॥
> गृह्णाति कारणाद् रोषं विगतेर्ष्या ब्रवीति च ।
> कार्यकाल-विशेषज्ञा सुरूपा सा स्मृतोत्तमा ॥ २३.३५-३८

न खलु कवयो नायिकानामेतान् गुणान् वर्णयितुं सदा समुत्सुका दृश्यन्ते इति महती त्रुटिस्तेषां निबन्धानामस्त्येव । नायिकानां कलासु वैचक्षण्यं, शीलं, कार्यकालविशेषज्ञत्वं च विरल-विरलमेव रूपकेषु परिस्फुरन्ति। प्रायशो नायिकाना रूपमेव नायकमाकर्षति। नैषा साधुरीति-र्लोकादर्शसमुपस्थापनापेक्षया।

**मध्यमा**

> पुरुषं काम्यते या तु तथा कामयते च तान् ।
> कामोपचारकुशला प्रतिपक्षाभ्यसूयिनी ॥
> ईर्ष्यातुरा त्वनिभृता क्षीणक्रोधातिगर्विता ।
> क्षणप्रसादा या चैव सा नारी मध्यमा स्मृता ॥ २३ ३९-४०

**अधमा**

> अस्थानकोपना या तु दुष्टशीलातिमानिनी ।
> चपला परुषा चैव दीर्घरोषाधमा स्मृता ॥ २३.४१

## यौवन-भेद

भरतो नारीणा विकासानुक्रमेण चतुरो यौवन-भेदान् वर्णयति। तत्र स प्रथमं नारीणा लावण्य-रूपादिकं वर्णयति, पश्चाच्च शृंगारं प्रति तासामुत्साहं चित्रयति। तद्यथा,

प्रथमयौवनम्

नेपथ्यरूपचेष्टागुणेन शृंगारमासाद्य
पीनोरुगण्डजघनाधरस्तनं कर्कशं रतिमनोज्ञम् ॥
शृगार-समुत्साहं प्रथमं तद्यौवनं ज्ञेयम् ॥ २३.४३
नात्यर्थं क्लेशसहा न कुप्यति न हृष्यति स्त्रीष्य ।
सौख्यगुणेष्ववसक्ता नारी नवयौवना ज्ञेया ॥ २३.४८

दशरूपके धनञ्जयस्य मुग्धा नायिका भरतस्य प्रथमयौवनवतीव प्रतिभाति । मुग्धा धनञ्जयानुसारेण—

नववय कामा रतौ वामा मृदु क्रुधि ॥ २.१६

प्रथमयौवनं मुग्धाया भवति ।

द्वितीय-यौवनम

भरतानुसारेण

गात्र पूर्णावयवं पीनौ च पयोधरौ नतं मध्यम् ।
कामस्य सारभूतं यौवनमेतद्द्वितीय त ॥

द्वितीय-यौवन-भेदे कीदृश' स्वभावो भवति—

किंचित्करोति मान किंचित् क्रोध च मत्सरं चैव ।
क्रोधे च भवति तूष्णी यौवन-भेदे द्वितीये तु ॥
ना० शा० २३.४४,४६

भरतस्य द्वितीयं यौवनं तु धनञ्जयस्य मध्याया स्यात् । तद्यथा,

मध्योद्यद्यौवनानङ्गा मोहान्तसुरत-क्षमा ॥ २.१६
धीरा सोत्प्रास-वक्रोक्त्या मध्या साधु कृतागसम् ।
खेदयेद्दयित कोपादधीरा परुषाक्षरम् ॥ २.१७

तृतीयं यौवनम्

भरतस्य तृतीयं यौवनं धनञ्जयस्य प्रगल्भाया अवस्था स्यात् । भरतानुसारेण तृतीयं यौवनं तु—

सर्वश्रीसयुक्त रतिकरणोत्पादनं रतिगुणाढ्यम् ।
कामाप्यायितशोभं यौवनमेतत् तृतीय तु ॥
रतिसम्भोगे दक्षा प्रतिपक्षासूयिनी रतिगुणाढ्या ।
अनिभृतगर्वितचेष्टा नारी ज्ञेया ततीये तु ॥ २३ ०५ ५

धनञ्जयस्येदृशी तु प्रगल्भा भवति—[1]

यौवनान्धा स्मरोन्मत्ता प्रगल्भा दयिताङ्कके।
विलीयमानेवानन्दाद् रतारम्भेऽप्यचेतना ॥ २.१८

चतुर्थ-यौवनम्

भरतस्य चतुर्थ-यौवनं शृंगारस्यान्तिमावस्था भवति। तद्यथा—

नवयौवने व्यतीते तथा द्वितीये तृतीयके वापि।
शृंगार-शत्रुभूतं यौवनमेतच्चतुर्थं तु॥
अम्लानगण्डजघनाधरस्तन किञ्चिदूनलावण्यम्।
काम प्रति नोच्छ्वासं यौवनमेतच्चतुर्थं तु॥
चित्तग्रहण-समर्था कामाभिज्ञा त्वमत्सरोपेता।
अविरहितमिच्छति सदा पुरुष नारी चतुर्थे तु॥

ना० शा० २३·४६,४७,५१

इदं चतुर्थं यौवनं धनञ्जयेन न संगृहीतम्।

धनञ्जयस्तु नायिकाविशेषान् सूक्ष्मतरं पर्यालोचयति। नायिकानां कृतागसं नायकं प्रति तर्जनं, ताडनं, परुषाक्षरप्रयोजनञ्च विरल-विरलमेव रूपकेषु प्रवर्तन्ते, किन्तु परवर्तिनाट्याचार्या सोत्साहं तान्यधिकृत्य नायिका-प्रभेदान् प्रस्तुवन्ति। धनञ्जयस्तु इदं क्रोधोद्भव वर्तनं नायिकाना सम्यग्वर्णयति। नैतत्सर्वं भारतीये नाट्यशास्त्रे प्रकाशितम्।

### अन्यस्त्री

धनञ्जयानुसारेण तु कन्यका ऊढा चान्यस्त्रीति वक्तव्यम्। कन्यकास्तु गान्धर्व-विवाहरीत्या स्वीक्रियन्ते। ऊढाः पुन भाणादिषु रूपकेषु नायिका दृश्यन्ते। अभिनवगुप्तानुसारेणान्त पुरस्य परिचारिका राज्ञः प्रच्छन्नकामितायाः प्रणयानुरागिण्यो नायिका अन्यस्त्रिय एव।[2]

### साधारणस्त्री

साधारणस्त्रियो गणिका सन्ति। ता द्विविधा भवन्ति—एकान्तावरुद्धाः, सर्वभोग्याश्च। एकान्तावरुद्धा तु राज्ञामपि प्रणयिनी भवितुमर्हतीति प्रच्छन्न-कामिता-प्रकरणे निर्दिष्टम्। सर्वभोग्या-विषये धनञ्जयो विशदयति—

---

१. प्रगल्भायाः कोपचेष्टां वर्णयन् धनञ्जय आह—
सावहित्थादरोदास्ते रतौ धीरेतरा क्रुधा।
सन्तर्ज्य ताडयेन्मध्या मध्या धीरेव तं वदेत् ॥ २ १९

२. इदं तु राज्ञा प्रच्छन्नकामिता-प्रकरणे सविस्तरं व्याख्यानम्।

छन्नकाम-सुखार्थाज्ञस्वतन्त्राह युषण्डकान् ।
रक्तेव रञ्जयेदाढ्यान्नि स्वान् माता विवासयेत् ॥
दश० २ २२

नायिकाया नायकस्य च परस्परं मिलनं कथं भवेदिति प्रकरणे नायिकाना सहाया धनञ्जयेन परिगणिता —दूती, दासी, सखी, कारु, धात्रेयी, प्रतिवेशिका, लिंगिनी, शिल्पिनी च ।

## योषिदलङ्कारा·

नायकस्य यथा सात्त्विकगुणा भवन्ति, तथैव नायिकाया विंशतिः अलङ्कारा सत्त्वजा सात्त्विका वा सन्ति। तेषु भावो हावश्च हेला च त्रय शरीरजा भवन्ति, शोभा, कान्ति, दीप्ति, माधुर्यम्, प्रगल्भता, औदार्यम्, धैर्यञ्च सप्त भावा अयत्नजा भवन्ति। लीला, विलासो, विच्छित्तिर्विभ्रम, किलकिञ्चितम्, मोट्टायितम्, कुट्टमितम्, विब्बोक, ललितम्, विहृतञ्च दशभावा स्वभावजाः सन्ति ।

एतेषां लक्षण-विषये भरतस्यानुसरणमेव धनञ्जयस्य साधारण-पद्धतिः ।

अभिनवगुप्तानुसारेणैषामलंकाराणा तावदेव महत्त्वं स्त्रीणा कृते भवति, यावद् ब्राह्मणाना कृत उपनयनस्य भवति ।[1] अन्यच्च भरतानुसारेण ।

अलंकारास्तु नाट्यज्ञैर्ज्ञेया भावरसाश्रया । ना० शा० २२. ४

अर्थादलंकाराणा सन्निवेशेन भावानां रसानाञ्च योऽतिशय समुत्पद्यते, तेन काव्यं रोचिष्णु जायते ।

---

१. तत्पर ब्राह्मणस्योपनयनमिव भविष्यत्समस्तपुरुषार्थसम्पीठबन्धत्वेन योषिता परमो ह्युत्सवो लोकोत्तरोऽलकारः सातिशयमानन्द-स्थानं परं पवित्रमित्युपश्रूयते । ना० शा० २२ ११ अधिकृत्य भारती ।

# १६

## वृत्तयः

सर्वेषामेव काव्यानां मातृका वृत्तय स्मृताः । ना० शा० १८ ४

सर्वो हि संसारो वृत्तिचतुष्केण व्याप्त.। वृत्त्यङ्गानि सर्वकाव्येषु सन्त्येव । व्यापारः पुमर्थसाधको वृत्तिः वा । वृत्तयस्तु नायकानां चेष्टा एवेति मतमभिनवगुप्तस्य ।[1] तद्वृत्तिचतुष्टयं भारती, सात्त्वती, कैशिकी, आरभटी च वेदेभ्यो विनि सृतम्—

ऋग्वेदाद् भारती क्षिप्ता यजुर्वेदाच्च सात्त्वती ।
कैशिकी सामवेदाच्च शेषा चाथर्वणादपि ॥

ना० शा० २०.२५

अभिनवगुप्तानुसारेण तु—'पाठ्यप्रधाना भारती, अभिनय-प्रधाना सात्त्वती, अनुभावाद्यावेशमयरस-प्रधानारभटी, गीतवाद्योपरंजकप्रधाना कैशिकीति ।

नैता वृत्तय एकान्तं विलसन्ति । अभिनवगुप्त एतदेव विशदयन् प्राह—

अथासा परस्परसङ्कीर्णतया लक्ष्ये (बहुरूपतां) वहन्तीना यत्र यत्प्राधान्येनान्यतमरूपावभासन तत्प्रदर्शयितुमुत्तरो ग्रन्थः । (वाङ्मन कायचेष्टांशेषु) नह्येकोऽपि कश्चिच्चेष्टांशोऽस्ति । कायचेष्टा अपि हि मानसीभि सूक्ष्माभिश्चेष्टाभिर्व्याप्यन्त एव ।...... अन्योऽन्य संवलिता वृत्तय. केवलं क्वचित् किञ्चिदधिकमिति प्राधान्येन व्यपदेशः परिवर्तते ।[2] करुणादावपि च मनोदेहव्यापारसम्भवेऽपि बाहुल्येन वाग्व्यापार-सम्भवात् भारतीवृत्तिरुच्यते ।[3]

---

१. 'द्वितीयभागे पृष्ठ ४५२ द्रष्टव्यम् । वृत्तयश्चेष्टा मातर इव' इत्यादि ना० शा० १८ १ अधिकृत्य भारती ।

२. ना० शा० २०.२६ अधिकृत्य भारती ।

३. ना० शा० २० १११ अधिकृत्य भारती ।

धनञ्जयानुसारेण तु नायकादीनां व्यापारमाश्रित्य वृत्तिर्भवति।[1] एतदेवाभिनवगुप्तेन प्रथितम् —

'व्यापार. पुमर्थसाधको वृत्ति'।

स च सर्वत्रैव वर्ण्यते इत्यतो वृत्तय काव्यस्य मातृका। न हि किञ्चिद् व्यापारशून्यं वर्णनीयमस्ति।[2]

## भारतीवृत्तिः

भरतो भारती परिभाषते—

> या वाक्प्रधाना पुरुष-प्रयोज्या
> स्त्रीवर्जिता संस्कृतपाठ्ययुक्ता।
> स्वनामधेयैर्भरतैः प्रयुक्ता
> सा भारती नाम भवेत्तु वृत्ति.॥ २० २६

इयं परिभाषा समाधानमर्हति। स्त्रीवर्जितेति किम्? अभिनवगुप्तो व्याख्याति—कैशिकीप्राधान्यावकाशं गमयति। अर्थात् स्त्रिय स्युर्नाम, किन्तु तासां वाचः प्राधान्यं न स्यात्, यतोहि नाम स्त्रीणां व्यापाराणा प्राधान्यं कैशिकीवृत्तौ दर्शनीयम्। तथैव संस्कृतपाठ्ययुक्तेति विवर्णनीयम्। प्राकृत-पाठ कैशिक्यां विलसतीति व्यङ्ग्यम्। प्राकृतभाषा भारत्यां भवेन्नाम, किन्तु तस्या. सर्वोत्तमोपयोग. स्त्रीणा प्राकृतभाषया कैशिक्यामेव विलसतीति। धनञ्जयेनास्मिन् विषये मौनं नावलम्बितम्। स लक्षयते—भारती संस्कृत-प्रायो वाग्व्यापार। धनिकोऽपि विवृणोति—पुरुषविशेषप्रयोज्य संस्कृतबहुल इत्यादि।[3]

भारत्याश्चत्वारो भेदाः — प्ररोचना, आमुखम्, वीथी, प्रहसनं च भवन्ति। अस्मिन् प्रकरणे भेदाः प्रकारा न सन्ति अपि तु अंशा एवेति अभिनवगुप्तेन व्याख्यातम्।

भरतानुसारेण तु

> भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागता॥ २०.२७

अंशभूता प्ररोचनादयोऽङ्गत्वं प्राप्ता.।

---

१ तद् व्यापारात्मिका वृत्तिः। दश० २.४७

२ ना शा० १८.११० अधिकृत्य भारती।

३ भाषा-प्रकृति-विषयकमेतन्नियमनमनावश्यकं प्रतिभातीति लन्दनमनम्।

**प्ररोचना**

भरत प्ररोचना परिभाषते—

**जयाभ्युदयिनी चैव मंगल्या विनयावहा ।**
**सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना ॥** २० २८

धनञ्जयस्तावत् प्ररोचनामन्यथा परिभाषते—

**उन्मुखीकरणं तत्र प्रशंसात प्ररोचना ।**३ ५

श्रोतारो रूपकाभिनयं प्रति रुचिपरायणा भवन्तु इत्युद्दिश्य रूपकस्य प्रशंसनं प्ररोचना भवति ।

**आमुखम्**

भरत आमुखं परिभाषते—

**नटी विदूषको वापि पारिपार्श्विक एव वा ।**
**सूत्रधारेण सहिता संलाप यत्तु कुर्वते ॥**
**चित्रं र्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि वा ।**
**आमुख तत्तु विज्ञेय बुधैं प्रस्तावनापि वा ॥**

अभिनवगुप्तानुसारेण 'चित्रैरिति भाविरूपकार्थानुकूलविषयानुसारिभिः' आमुखं भवति । आमुखमिति (१) मुखसन्धेर्निवर्तते यतः (२) आमुखमीषन्मुखं प्रस्ताव्यते अनया (३) कार्याभिमुखं नीयते पूर्वरङ्गविधि (४) तदभिमुखं वा कार्यारम्भः तन्नीयते। पूर्वरङ्ग प्रसङ्गेन या प्रस्तावना भवति, सा नास्ति भारतीभेद. ।

धनञ्जयो भरतानुसारेण प्रायश आमुखं परिभाषते । भरतमतेनामुखस्य पंच भेदा भवन्ति--कथोद्घातः, प्रवृत्तकम्, प्रयोगातिशय , उद्घात्यक', अवलगितञ्च ।[1] धनञ्जय केवलमङ्गत्रयं वितनुते । स उद्घात्यकमवलगितं च वीथ्यङ्गेषु निवेशयति, सर्वाणि वीथ्यङ्गानि चामुखे निवेशयति। भरतोऽपि सर्वाणि वीथ्यङ्गानि आमुखे निवेशयति । [2]

एतेषामामुखाङ्गानां विवरणं पूर्वरङ्गप्रसङ्गेऽभिधास्यते वीथ्यङ्गानां च वर्णनं वीथीकोटिक-रूपकस्य प्रकरणेऽभिधास्यते ।

अत्र कतिपय सन्दिग्धस्थलानि वर्तन्ते । प्रथमं तावत् यदि नाम वृत्तयो नायकव्यापारात्मिका सन्ति तर्हि कथं प्ररोचना भारतीवृत्तेरङ्गं भवेत् । तत्र नायकव्यापारो नास्ति । अन्यच्च प्रहसनं यदि तत्र स्यात्, तर्हि

---

१. उद्घात्यक' कथोद्घात , प्रयोगातिशयस्तथा ।
प्रवृत्तकावलगिते पञ्चाङ्गान्यामुखस्य तु ॥ २०.३३

२. ना० शा० २० ३७

भाणोऽपि कथं तत्र नावस्थीयेत । उभयोर्वाचिकाभिनयप्राधान्यत्वात् तत्र भारतीवृत्तेरवसरो वर्तते एव । अस्मिन् प्रसङ्गे रामचन्द्रगुणचन्द्रयोर्मतमुल्लेखनीयम्—

सर्वरसवीथी-प्रधान-शृंङ्गार-वीर-भाण-प्रधान-हास्य-प्रहसनानि स्वयमेव भारत्यामेव वृत्तौ नियन्त्रितानि ।[1] दशरूपकेऽपि भाणो भारती-प्रधान इति स्पष्टीकृतम् ।[2]

### कैशिकी

भरत कैशिकी वृत्ति परिभाषते[3]—

> या श्लक्ष्णनैपथ्यविशेषचित्रा
> स्त्रीसयुता या बहुनृत्तगीता ।
> कामोपभोगप्रभवोपचारा
> ता कैशिकी वृत्तिमुदाहरन्ति ॥ २०.५३

अभिनवगुप्तानुसारेण हृदयग्राहि वस्त्रमाल्यादिना चित्रा, गीतनृत्य-निर्भरा. शृङ्गार-व्यवहारमयी कैशिकी वृत्तिर्भवति । धनञ्जय गीत नृत्य-विलासाद्यै. शृंगारचेष्टितै कैशिकी मृदुर्भवतीति परिभाषते ।

**नर्म**

कैशिक्याश्चत्वारो भेदा सन्ति—नर्म, नर्मस्फिञ्जः, नर्मस्फोटः, नर्मगर्भश्च । नर्म तावत् भरतानुसारेणाधोविध लक्षितं भवति—(१) आस्थापित-शृङ्गारम् (२) विशुद्धकरणम् (३) निवृत्तवीररसं (४) हास्यवचनं च । एतदनुसारेण कैशिक्या शृङ्गारस्य प्रधानता, भावानां विशुद्धि, वीररसस्य चाभाव, हास्योक्तीनां प्रचुरता च द्योतिता । त्रिविध तु नर्म भवति (१) ईर्ष्याक्रोधप्रायम् (२) उपालम्भसूचनार्थं (३) परहृदयमाक्षेप्तुञ्च । भरतो नर्म सविप्रलम्भमिति प्रपञ्चयति ।[4] को विप्रलम्भो नाम ? विप्रलम्भस्तु कस्याश्चिन्नायिकाया अतिसन्धानम् । स तु वासवदत्ताया दृश्यते रत्नावल्याम् । तत ईर्ष्याक्रोधोपालम्भादीना प्रादुर्भाव ।

---

१. नाट्यदर्पणे ३.२ अधिकृत्य टीका च ।

२. भूयमा भारतीवृत्ति । दश० ३.५१

३ रामचन्द्रगुणचन्द्रानुसारेण कैशिका स्त्रिय एव । तासामियं कैशिकी । भरतस्तु स्त्री सयुतेति विशेषणेन तदेव व्यनक्ति ।

४. ना० शा० ५७-५८ तदधिकृत्याभिनवभारती च ।

धनञ्जयस्तु अष्टादशविधं नर्माकलयति । तच्च शुद्धहास्येन, सश्रृंगारहास्येन, सभयहास्येन च रचितं त्रिविधम् । एतेषु श्रृंगारहास्यं च त्रिधा भवति—आत्मोपक्षेप (स्वानुरागनिवेदनम्), सम्भोगेच्छाप्रकाशनम्, मानश्च । सभयहास्यं द्विविधं भवति—शुद्धभयात्मकम्, रसान्तराङ्गभूतभयात्मकञ्च । एतानि षट् प्रत्येकशः वाचा, वेषेण, चेष्टया चोपपन्नत्वात् त्रिधा भवन्ति । अतएव नर्म अष्टादशधा ।

न खलु भरतस्य नाट्यशास्त्र एतेषामष्टादशविधत्वस्य सङ्केत. । स त्रिविधं नर्म वर्णयति । षड्विधानां नर्मणा वाग्वेषचेष्टितैस्त्रिधाभूताना नर्मणामुदाहरणानि धनिकेन न लिखितानि । एतेषा कुतस्त्यं तु भरतस्याधोलिखित-कारिकायाः प्रतिज्ञायते—

> नवसंगमसम्भोगो रतिसमुदयवेषवाक्यसंयुक्त ।
> ज्ञेयो नर्मस्फुञ्जो ह्यवसानभयात्मकश्चैव ॥ २०५६

नर्मस्फिञ्जविषयकाणि रतिसमुदयवेषवाक्यानि नर्म-व्याख्या-प्रकरणे धनञ्जयेन गृहीतानि । नर्मस्फिञ्ज प्रकरणे तेन रतिसमुदयादयो न वर्णिता ।

**नर्मस्फिञ्जः**

स्फिञ्जस्य स्थाने स्फुञ्ज , स्फञ्ज·, स्पन्द. इति च पठ्यते । भरतानुसारेण नर्मस्फिञ्ज· नवसंगम-सम्भोगे प्रादुर्भवति । नायकयोरन्योन्यास्थाबन्धरूपाया रतेः समुदय·, तादृशेन वेषेण, वाक्येन वा संयुक्तो भवति । अस्थायि-सम्भोगस्यान्तो भयात्मको भवति । अभिनवगुप्तानुसारेण भयं पूर्वनायिकाकृतं स्यात् । स्फिञ्जस्तु विघ्न एव ।

धनञ्जयो भरतमेवानुहरति संक्षेपेणास्मिन् प्रकरणे ।

**नर्मस्फोट.**

अभिनवगुप्तानुसारेण स्फोटस्तु श्रृङ्गारस्य वैचित्र्यं चमत्कारोल्लासकृतस्फुटत्वम् । भरतानुसारेण विविधरसानां भावा आंशिकरूपेण न तु समग्रतयास्मिन् नर्मस्फोटे विलसन्ति । अतएव तदनु रसा भयानकहास्यरौद्रादयः केवलमाक्षिप्यन्ते एत्र । तत्र हासलव एव स्यान्नतु हास्यरस. ।

धनञ्जयो भरतं संक्षेपेणानुहरति ।

**नर्मगर्भः**

भरतानुसारेण नर्मगर्भस्तु—

> विज्ञानरूपशोभाधनादिभिर्नायको गुणैर्यत्र ।
> प्रच्छन्नं व्यवहरते कार्यवशान्नर्मगर्भोऽसौ ॥

अभिनवगुप्तो नर्मगर्भपदं व्युत्पादयति—नर्मोपयोगिनो विज्ञानाद्या गर्भीकृता इव प्रच्छन्नतया यत्रेति। यथा प्रच्छन्नरूपो नायकः संकेत-स्थानं गच्छति। एतत्सर्वं नवसङ्गमसिद्धये भवतीति कार्यवशात् पदस्य व्याख्या।

कैशिकीवृत्तिर्निर्हास्यापि भवतीति धनञ्जयवचनं चिन्त्यमेव।[1] नर्म तु हास्यमेव।[2] कैशिक्या हास्य-प्रधानताभिनवगुप्तेनापि विशदीकृता।

## सात्त्वती

भरतानुसारेण सात्त्वती भवति—

या सात्त्वतेनेह गुणेन युक्ता
न्यायेन वृत्तेन समन्विता च।
हर्षोत्कटा संहृतशोकभावा
सा सात्त्वती नाम भवेत्तु वृत्तिः॥

वागङ्गाभिनयवती सत्त्वोत्थान-वचनप्रकरणेषु
सत्त्वाधिकारयुक्ता विज्ञेया सात्वती वृत्तिः॥
वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुण-निर्वेदा
उद्धतपुरुषप्राया परस्पराधर्षण-कृता च॥

ना० शा० २०. ४१-४३

अभिनवगुप्तस्तु सात्त्वती व्युत्पादयति। सात्त्वतो गुणो मानसो व्यापारः। सत्त्वं प्रकाश तद्विद्यते यत्र तत् सत्त्वं मन। तस्मिन् भव सात्त्वतः। सत्त्वोत्थानस्य सत्त्वाधारस्य वचनं येषु प्रकरणेषु काव्यखण्डेषु इत्यादि। सात्त्विकाभिनयस्याधिकारे आधिक्यक्रियया सात्त्वती वृत्तिर्युक्ता।

धनञ्जयस्तु संक्षिप्ततरमेव सात्त्वतीं परिभाषते—

'विशोका सात्त्वती सत्त्वशौर्यत्यागदयार्जवैः।'

स केवलं वीरोचितामेव सात्त्वती परिकल्पयतीति तस्य परिभाषया स्फुटति, सत्त्वशौर्यत्यागदयार्जवादीनां गुणानां वीर एव समाहितत्वात्। किन्तु भरतेन तत्र रौद्राद्भुतयो रसयो, उद्धतपुरुषाणां परस्पराधर्षणस्य च वैशिष्ट्येन सत्त्वशौर्यत्यागदयार्जवादीनि व्युत्क्रान्तानि। अभिनवगुप्तोऽपि सत्त्वं प्रकाश इति समर्थयन् 'उद्धतपुरुषप्राया' इत्यादि न दृष्टम्। तर्हि सात्त्वतीवृत्तौ सत्त्वाद् बहिरपि किञ्चित्तत्त्व निर्भिद्यत एव।

---

१. अङ्कैः सहास्यनिर्हास्यैरेभिरेषात्र कैशिकी। दश० २ ५२

२. हास्यप्रवचनबहुलं नर्म। ना० शा० २० ५७

सात्त्वती चतुर्विधा भवति—उत्थापकः, परिवर्तक, संल्लापक, साघात्यकश्च ।

**संल्लापकः**

भरत संल्लापकं परिभाषते—

> साधर्षजो निराधर्षजोऽपि वा रागवचनसयुक्त. ।
> साधिक्षेपालापो ज्ञेय सल्लापक. सोऽपि ।। २० ४८

अर्थात् संल्लापके भावावेशपूर्ण वचनमधिक्षेपार्थाश्च स्युः । पूर्वसूरिभिरपेक्षितमाघर्षवचनं तत्र नावश्यकम् ।

धनञ्जयस्तावदन्यथा परिभाषते । तद्यथा,

> सलापको गभीरोक्तिर्नानाभावरसा मिथ ।

गभीरवचसा संलापो भवतीति नैकान्तिकं लक्षणम् ।

**उत्थापकः**

भरतस्तूत्थापकं वर्णयति—

> अहमप्युत्थास्यामि त्व तावद्दर्शयात्मनः शक्तिम् ।
> इति संघर्षसमुत्य तज्ज्ञ रुत्थापको ज्ञेय. ।। २२ ४५

धनञ्जयो भरतं तत्त्वतोऽनुहरति ।

**सांघात्यकः**

भरतधनञ्जययोः साघात्यकस्य परिभाषा समानैव वर्तते । मन्त्रशक्त्या, अर्थशक्तया, दैवशक्त्या शत्रूणा परस्परविघटनमेव साघात्यकः । विघटनं क्वचिदात्मदोषेण, वाचा वा सम्भाव्यत इति भरतस्याधिकं वाच्यम् ।

**परिवर्तक**

किमपि हस्तगतं कार्यं परित्यज्यान्यकार्यग्रहणमेव परिवर्तकः कार्यपरिवर्तनमेव । भरतधनञ्जययोर्द्वयोः समाना परिभाषा परिवर्तकस्य वर्तते ।

## आरभटी

भरतानुसारेणारभटी भवति—

> आरम्भटप्रायगुणा तथैव बहुकपटवञ्चनोपेता ।
> दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ।। २० ६४

आरभटास्तु क्रोधावेगादि-विशिष्टा जना साहसिका एव । तत्र क्रोधावेग-कपट-वञ्चना-दम्भानृतवचनानां समाहारो भवेत् ।

धनञ्जयस्तावद् भरतलक्षणात् विशिनष्टि तद्यथा,

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितै ।

भरतधनञ्जययोरारभटी-विषयकं वैषम्यं यत्र-तत्र संक्षिप्ति-सम्फेट-वस्तूत्थापनावपातानामारभट्या अङ्गानां लक्षणैरपि परिचीयते ।

**संक्षिप्तिः**

दशरूपकस्य संक्षिप्ति भारतीये नाट्यशास्त्रे संक्षिप्तक इति प्रोक्तम् । भरतानुसारेण—

अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थानचित्रनेपथ्यः ।
सक्षिप्तवस्तु-विषयो ज्ञेयः संक्षिप्तको नाम ॥ २०.६८

अर्थात् कुशलशिल्पिविरचिता अर्थाः तत्र भवन्ति । तत्र पुस्तस्योत्थानम्, विचित्रं नेपथ्यं (खड्गचर्मवर्मादि) च प्रस्तूयेते । अभिनवगुप्तस्तु संक्षिप्तं व्युत्पादयति—

संज्ञयाक्षिप्तानि वस्तूनि विषयोऽस्येति संक्षिप्तक । मायाशिरोनिक्षेपादि प्रस्तूयतेऽनया वृत्त्या ।

धनञ्जयस्य संक्षिप्तेः परिभाषा तत्त्वत· समानैव ।

सोऽपरां परिभाषामपि प्रस्तौति—

पूर्वनेतृनिवृत्त्यान्ये नेत्रन्तरपरिग्रह । २ ५७

**सम्फेटः**

भरतधनञ्जयौ सम्फेटं तत्त्वत. समानमेव परिभाषेते । तद्यथा,

सम्फेटस्तु समाघातः क्रुद्धसंरब्धयोर्द्वयो. । दश० २ ५८

भरतस्तु युद्धे कापटिकयोजनमभिप्रैति ।[1]

**वस्तूत्थापनम्**

भरतानुसारेण तु

सर्वरससमासकृतं सविद्रवाविद्रवाश्रयं वापि ।
नाट्यं विभाव्यते यत्तद् वस्तूत्थापनं ज्ञेयम् ॥ २०.७०

अभिनवगुप्तस्तूत्थापनं व्याख्याति—वस्तूनां बहूनामर्थानामुत्थापनं प्रसगागतनिबन्धनं यत्र कार्ये तत्तथोक्तम् ·। अत्र मायादेरीषदपि योगो नास्ति किन्तु धनञ्जयो मायया वस्तूत्थापनमभिप्रैति । तद्यथा,

---

१. बहुयुद्ध-नियुद्धकपट-निर्भेद. । ना० शा० २०.७१

मायाद्युत्थापितं वस्तु वस्तूत्थापनमिष्यते ॥ दश० २.५८

अवपात

भरतधनञ्जयो समानमेव लक्षणमवपातस्य प्रस्तुत ।

तत्र पात्राणां निष्क्रमणं (बहिर्गमनम्), प्रवेश, त्रासो. विद्रवश्च भवन्ति। भरतेन प्रोक्तमासीद्यत् भयेन हर्षेण वावपातो जायते । अभिनवगुप्तः स्पष्टयति—अवपतन्ति पात्राणि यस्मिन्निति अवपात ।

एतासु चतुर्वृत्तिषु भारती शाब्दी वृत्ति स्यात् । शेषाः तिस्र आर्थी वृत्तय. । उद्भटसम्प्रदाये काचित् पञ्चमी वृत्ति समर्थिता। न सा धनञ्जयस्याभिप्रेता ।

### रस-वृत्ति-संविन्यास·

कस्मिन् रस-प्रकरणे का वृत्तिर्बाहुल्येन समाश्रिता भवेदिति भरतो धनञ्जयश्च नियमयत । तयोर्विधाने साम्यं नास्तीति अधोलिखित-तालिकया स्पष्टीक्रियते ।[1]

| वृत्ति. | धनञ्जयमतेन रस | भरतमतेन रसः |
|---|---|---|
| कैशिकी | शृङ्गारः | हास्यः, शृङ्गारश्च |
| सात्वती | वीरः | वीरोऽद्भुतश्च |
| आरभटी | रौद्र., बीभत्स. | रौद्रो भयानकश्च |
| भारती | सर्वे रसा. | बीभत्सः करुणश्च |

न खलूपर्युक्तविधानं भरतस्य सार्वत्रिकम् । तथा हि, वीथी तु शृङ्गारप्रधाना कैशिकीवृत्तिमयी भवति। सा भारतीवृत्तेरङ्गभूतेति भरतस्याभिमतम् ।

भरतानुसारेण नाटके प्रकरणे च सर्वा वृत्तयो विलसन्तु। अवशिष्टेषु रूपकेषु कैशिकी वृत्तेरभावः स्यात् ।[2]

---

१. हास्यशृङ्गारबहुला कैशिकी परिचक्षिता ।
सात्त्वती चापि विज्ञेया वीराद्भुतसमाश्रया ॥
रौद्रे भयानके चैव विज्ञेयारभटी बुधै· ।
बीभत्से करुणे चैव भारती सम्प्रकीर्तिता ॥ ना० शा० २० ७३,७४

२ ना० शा० १८.७-९ । वीथी तु कैशिकी समाश्रिता भवतीति धनञ्जय· । दश० ३.६८

१७

# प्रवृत्तिः

वृत्तिस्तु धनञ्जयेन परिभाषिता—

'तद्व्यापारात्मिका वृत्तिः' इति

प्रवृत्तिरपि नायकादिव्यापार इति धनिकः।[1] भरतानुसारेण देशवेष-भाषाचारवार्ता प्रख्यापयतीति प्रवृत्तिः।[2] न खल्वेतासां सम्यग्वर्णनं सम्भाव्यत इति पश्यन्तः स्पष्टमेव धनञ्जयो निर्दिष्टवान्—

लोकादेवावगम्यैता यथौचित्यं प्रयोजयेत् ॥ दश० २.६३

तथापि प्रवृत्तीनां कतिपयतत्त्वानि भरतेन धनञ्जयेन च संग्रहीतान्येव। प्रथमं तावद् भाषा-विधानं वर्ण्यते।

### भाषाविधानम्

तत्र संस्कृतं प्राकृतं च चातुर्वर्ण्य-समाश्रयं प्रथितम्। धीरोदात्तादयश्चतुर्विधा नायकाः संस्कृतमवदन्। किन्तु कारणवशादपवादरूपेण तेषामपि भाषा प्राकृतं भवितुमर्हति। परिव्राजकः, मुनिः, श्रेष्ठक्षत्रियाः, शिष्टः, यतिः, राज्ञी, गणिका (वेश्या), शिल्पकारिका च संस्कृतं वदेयुः।[3] देवाः, अप्सरसश्च संस्कृतवादिनः। अन्यानि पात्राणि प्राकृतं वदेयुः। तद्यथा, प्राकृतं वदन्ति लिङ्गी, श्रमणः, तपस्वी, भिक्षुश्च, यदि ते सुसंस्कृताः न सन्ति। सर्वे शुद्धजातीया शौरसेनीमवदन् अथवा स्वदेशभाषामवदन्[4]। धनञ्जया-

---

१. दश० २.६३ अधिकृत्यावलोकः।

२. प्रवृत्तिर्देशविशेषगता वेषभाषासमाचारवैचित्र्य-प्रसिद्धिरुच्यते। ना० शा० १३.३७ अधिकृत्य भारती।

३. ना० शा० १७.२५-४८

४. मृच्छकटिके नायिका वसन्तसेना गणिका (वेश्या) अस्ति। सा तु प्राकृतं वदतीति नियमविरुद्धमेव। राज्ञी क्वचिदेव संस्कृतं वदति प्राचीन-रूपकेषु। नैतद् भारतीय-विधानानुरूपम्।

नुसारेणाधमानां पात्राणामपि भाषा शौरसेनी भवेत् । अत्यन्तनीचपात्राणि, पिशाचाश्च पैशाचं मागधं च वदन्तु । साधारणोऽयं नियमो दशरूपके—

> यद्देशं नीचपात्रं यत्तद्देशं तस्य भाषितम् ॥
> कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः ॥ दश० २ ६६

## सम्बोधनानि

रूपकेषु पात्राणां परस्परामन्त्रणं बहुविधं वर्तते । भरतानुसारेणामन्त्रणीया विविधैर्जनैः कथं सम्बोध्या इत्यधोलिखिततालिकया ज्ञायते—

| आमन्त्रणीयाः | सम्बोधनानि | वक्तार |
|---|---|---|
| महर्षिः | भगवन् | |
| महर्षि योषित | भगवति | |
| देव , लिङ्गी, श्रुतिधरः | भगवन् | |
| ब्राह्मणः | आर्य | |
| पार्थिव , भूपतिः | महाराज | |
| आचार्य· | उपाध्याय | |
| वृद्ध· | तात | |
| राजा | नाम्ना, राजन् | ब्राह्मण |
| सचिवः | सचिव, अमात्य | ,, |
| ,, | आर्य | शेषैर्जनै |
| उच्चतरसहयोगी | भाव, मार्ष, मार्षक | |
| रथी | आयुष्मन् | सूतः |
| अधम | वयस्य, हंहो, हण्डे | समान· |
| प्रशान्त· | तपस्विन्, साधो | |
| युवराज· | स्वामिन् | |
| भर्तृदारक· | कुमार | |
| अधमः | सौम्य, भद्रमुख | |
| शिष्य·, सुत. | वत्स, पुत्रक, तात | पिता, गुरु· |
| शाक्यः, निर्ग्रन्थः | भदन्त | |
| नृपति· | देव | भृत्य , प्रकृति |
| सार्वभौम | भट्ट | परिजनः |
| ,, | राजन् | ऋषि |
| महीपति. | वयस्य, राजन् | विदूषक |
| राज्ञी, चेटी | भवति | ,, |

| | | |
|---|---|---|
| विदूषक | नाम्ना, वयस्य | राजा |
| पति | आर्यपुत्र (यौवने) | |
| | आर्य (अन्यदा) | |
| पूर्वजभ्राता | आर्य | |
| अनुजः | वत्स, तात, पुत्रक | |
| तपस्विनी, देवता | भगवति | |
| गुरुभार्या | स्थानीये, भवति | |
| गम्या | भद्रे | |
| वृद्धा | अम्बे | |
| राजपत्नी | भट्टिनी, स्वामिन्, | |
| | देवि | परिजन |
| महिषी | देवि | |
| भोगिनी | स्वामिनि | |
| कुमारी | भर्तृदारिके | प्रेष्या |
| भगिनी यवीयसी | स्वस. | |
| ब्राह्मणी, लिङ्गस्था, व्रतिनी | आर्ये | |
| पत्नी | आर्ये, पितृनाम्ना, | |
| | सुतनाम्ना वा | |
| सखी | हला | समाना |
| प्रेष्या | हञ्जे | |
| वेश्या | अज्जुका | परिजनः |
| गणिकामाता | अत्ता | |
| भार्या (शृंङ्गारकाले) | प्रिये | |
| पुरोहितभार्या | आर्ये | |
| सार्थवाहभार्या | ,, | |

भरतमनुसृत्य धनञ्जयेन दशरूपके सम्बोधन-प्रकरणं संक्षेपेण सम्पादितम् ।

भरतेनौत्पत्तिकपात्राणा नामानि कीदृशानि स्युरित्यस्मिन् विषये नियमितम् । साधारणतो मनुविहितोपाधयस्तेन संगृहीता., किन्तु रूपक एव विशिष्टानां पात्राणां नाम्नश्चर्चोपादेयात्र । तद्यथा, कापालिकानां नामानि घण्टान्तानि स्युः। वेश्यानां नामानि दत्ता-मित्रा-सेनादीनि स्युः। प्रेष्यास्तु नानाकुसुम-नामानो भवेयु. । चेटानां नामानि मङ्गलार्थानि करणी-यानि । उत्तमपात्राणा नामानि गम्भीरार्थानि विधेयानि । धनञ्जयेन नामविषयकं किञ्चिदपि न प्रपञ्चितम् ।

---

# १८

## पूर्वरङ्गः

रूपकस्याभिनयात् प्रागेव रंगे यत्किञ्चित् क्रियते, स पूर्वरङ्ग ।[१] तथा हि भरतः —

> यस्माद् रङ्गे प्रयोगोऽयं पूर्वमेव प्रयुज्यते ।
> तस्मादयं पूर्वरङ्गो विज्ञेयो द्विजसत्तमा ॥ ५.७

रङ्गस्तु नाट्यमण्डपो नाट्यशाला वा भवति ।

पूर्वरङ्गस्याधिकांशभागस्य प्रयोगो यवनिकान्तरागतैर्नटैर्निष्पाद्यते ।[२]

पूर्वरङ्गस्य द्वाविंशत्यङ्गानि भवन्ति । तेषु प्रत्याहारोऽवतरणमारम्भाश्रावणा, वक्त्रपाणि, परिघट्टना, संघोटना, मार्गासारितमासारितं चेति-नवान्तर्यवनिकागतैर्वैणिकादिभिः प्रयोक्तृभि प्रयोज्यानि । पश्चात् यवनिका विघट्य प्रयोक्तारः गीतकं, वर्धमानकमुत्थापनं, परिवर्तनं, नान्दीं, शुष्कावकृष्टां, रंगद्वारं, चारीं, महाचारीं, त्रिगतं, प्ररोचना च सम्पादयन्ति ।

एतेष्वङ्गेषु नान्दी, रंगद्वारं, त्रिगतं प्ररोचना च सविशेषं वर्तन्ते ।

### नान्दी

भरतानुसारेण नान्दी—

> आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते ।
> देव-द्विज-नृपादीनां तस्मान्नान्दीति संज्ञिता ॥ ५.२४

---

१ पूर्वरंगस्य भावप्रकाशन उद्धृता परिभाषा सम्यग्युज्यते—

सभापति. सभा सभ्या गायका वादका अपि ।
नटी नटश्च मोदन्ते यत्रान्योन्यानुरंजनात् ।
अतो रग इति ज्ञेय पूर्वं यत् स प्रकल्प्यते
तस्मादयं पूर्वरंग इति विद्वद्भिरुच्यते ॥ पृ० १९४

शुभङ्करानुसारेण 'पूर्वरंग' सभापूजा । भरतकोशे पृ० ३७७

२ यवनिका रङ्गपीठ-तच्छिरसोर्मध्ये । ना० शा० ५. ७ अधिकृत्य भारती ।

सूत्रधार. पठेत्तत्र मध्यमं स्वरमाश्रित ।
नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृताम् ॥ ५.१०६

नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्य शुभ तथा ।
जितं सोमेन वै राज्ञा शिवं गोब्राह्मणाय च ॥ ५. १०७

ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ।
प्रशास्त्विमां महाराज पृथ्वीं च ससागराम् ॥ ५ १०८

राष्ट्रं प्रवर्धतां चैव रंगस्याशा समृद्ध्यतु ।
प्रेक्षाकर्तुर्महान् धर्मो भवतु ब्रह्मभाषितः ॥ ५.१०९

काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम् ।
इज्यया चानया नित्यं प्रीयन्तां देवता इति ॥ ५ ११०

## रंगद्वारम्

रंगद्वारादेवाभिनयः प्रारभ्यते । तथा हि भरत

यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥ ५.२६

रङ्गद्वारे कश्चित् श्लोक. पठ्यते, पश्चात् जर्जरो नाम्यते--

राज्ञो वा यत्र भक्ति स्यादथवा ब्रह्मणस्स्तवम् ।
गदित्वा जर्जरश्लोकं रङ्गद्वारे च यत्स्मृतम् ॥ ५ ११४

अभिनवगुप्तानुसारेणात्र रगस्य भाविनो रूपकस्य द्वारमिव उत्थापनाङ्ग नाट्यमुत्थापितम् ।

## त्रिगतम्

त्रय पुरुषाः सूत्रधार, पारिपार्श्वक, विदूषकश्च भविष्यन्नाटकादिविषयं संवदन्ति । अतएव त्रिगतमिति प्रोच्यते । त्रिगतं तु भारतीवृत्तेरङ्गम् ।[1] तत्र विदूषक कथानिकां प्रस्तौति । तद्यथा भरतः

विदूषक सूत्रधारस्तथा वै पारिपार्श्वकः ।
यत्र कुर्वन्ति सञ्जल्पं तच्चापि त्रिगतं मतम् ॥ ५ २८

तथा च भारतीभेदे त्रिगतं सम्प्रयोजयेत् ॥ ५.१३३

---

१ स एव काव्योपक्षेपस्त्रिषु ममायत्तत्वात् त्रिगतशब्देनोक्तः । ना० शा० ५ २८ अधिकृत्य भारती ।

विदूषकस्त्वेकपदां सूत्रधारस्मितावहाम् ।
असम्बद्धकथाप्रायां कुर्यात् कथानिकां तत. ॥ ५.१३४

**प्ररोचना**

प्ररोचनाया काव्यार्थस्योपक्षेप (सूचना) सिद्ध्योपलक्षितो भवतीति भरत आह—

उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया ।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥ ५.२९

प्ररोचना तु सामाजिकानामाकर्षणं वा रुचिसंवर्धनं वा नाटकविषये स्यात् । तथा

प्ररोचना हि कर्त्तव्या सिद्धेनोपनिमन्त्रणम् ।
रंगसिद्धौ पुन. कार्यं काव्यवस्तु-निरूपणम् ॥ ५.१३५

धनञ्जयस्तु पूर्वरंगविधौ प्ररोचनामेव प्रथमं विचित्य परिभाषते—

उन्मुखीकरण तत्र प्रशंसात प्ररोचना ॥ ३.६

नेय परिभाषा काव्योपक्षेपमावश्यकं निर्दिशतीति अभावश्चिन्त्य: ।

प्ररोचनाया: पात्राणि त्रिगतस्य पात्राण्येव । तानि सर्वाणि प्ररोचनाया अन्ते निष्क्रामन्ते । तद्यथा भरत·

सर्वमेव विधिं कृत्वा सूचीवेधकृतैरथ ।
पादैरनाविद्धगतैर्निष्क्रामेयु समं त्रय. ॥ ५ १३६

अभिनवगुप्तानुसारेण 'प्ररोचना प्रकृष्टरुचिहेतुभूतत्वात्' भवति ।[1]

**प्रस्तावना**

अभिनवगुप्तो भरतमनुसृत्य द्विविधा प्रस्तावनां व्याकरोति । तद्यथा,

द्विविधा प्रस्तावना भवति—पूर्वरङ्गस्याङ्गभूता, अन्यस्य वा । तत्र पूर्वरङ्गाङ्गेऽस्या: कविरुदासीन । स्थापक एव स्वतन्त्रो निर्माता त्वन्यो वा कविर्ध्रुवागानादावपि (पदम्) ।[2]

पूर्वरङ्गस्याङ्गभूता या प्रस्तावना भवति, सा भरतेनाधोविधं परिभाषिता—

---

१. ना० शा० ५ २९ अधिकृत्य भारती

२. ना० शा० ५ १६९ अधिकृत्य भारती ।

प्रस्तावनां ततः कुर्यात् काव्यप्रख्यापनाश्रयाम् ।
उद्घात्यकादि कर्तव्यं काव्योपक्षेपणाश्रयम् ॥ ५.१६६

मुखबीजानुसदृश नानामार्गसमाश्रयम् ।
नानाविधैरुपक्षेपै. काव्योपक्षेपणं भवेत् ॥ ५.१७८

तामेव प्रस्तावना विशदयन्नभिनवगुप्त प्राह—

मुखाङ्गे ह्युपक्षेपे तदेवोपक्षिप्यते । बीजे च तदेव स्वल्पमात्रम् । इह तु तत्समम् । तथा हि नटी-विदूषक-पारिपार्श्वकै. समन्तादिति विचित्रभेदेन स्वकार्यानिरूपणव्याजेन ये नानाविधा उपक्षेपा उपांशुछन्नत्वेन रूपकार्थबीजस्य सामाजिकहृदयभूमौ क्षेपास्तै काव्यं प्रस्ताव्य-प्रस्तावक-स्थापकादौ निष्क्रामेताम्[1] ।

अत. परं भारतीवृत्ते रङ्गभूता प्रस्तावना भरतानुसारेण विशिष्यते—

इयं प्रस्तावना 'आमुखम्' एव ।[2]

नटी विदूषको वापि पारिपार्श्वक एव वा ।
सूत्रधारेण सहिता संलापं यत्तु कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः वीथ्यङ्गैरन्यथापि वा ।
आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि वा ॥२० ३०७३१

चित्रैर्वाक्यैरितिपदयोर्व्याख्याभिनवगुप्तेन निष्पादिता—भाविरूपकार्यानुकूलविषयानुसारिभिरित्यादि ।

भरतानुसारेण पञ्चाङ्गान्यामुखस्य भवन्ति—उद्घात्यकः, कथोद्घात.,

---

१. ना० शा० ५·१६८ अधिकृत्य भारती ।
अस्योदाहरणं तु रत्नावल्यामवधेयम्—
नटी—निश्चिन्त इदानीमसि त्वम् । तत्किमिति न नृत्यसि । मम मन्दभाग्याया. पुनरेकैव दुहिता । सापि त्वया कस्मिंश्चिद्देशान्तरे दत्ता । कथमेवं दूरदेशस्थितेन जामात्रा सहास्या. पाणिग्रहणं भविष्यतीत्यनया चिन्तयात्मापि न मे प्रतिभाति । किं पुनर्नर्तितव्यम् । अत. पर भारतीवृत्त्यङ्गभूतमामुख कथोद्घात नेपथ्ये साधु भरतपुत्र साधु । एवमेतत् । क सन्देह इत्यादि प्रस्तावना ।

२ अभिनवगुप्त आमुखं व्युत्पादयति—आमुखमिति मुखसन्धेर्निवर्तते यत. । यदि वात्रामुखं प्रारम्भमीषन्मुखं वा प्रस्ताव्यतेऽनयेति (प्रस्तावना) ।
ना० शा० २०·३१ अधिकृत्य भारती ।
आमुखस्य कर्ता कवि कथं भवतीति—
एव च यदा स्थापकोऽपि सूत्रधारगुणाकारो रामादिवदेत्र प्रयुज्यते, तदेदं कविकृतमामुखं भवति । तत्रैव ।

प्रयोगातिशय , प्रवृत्तकम्, अवलगितं च ।[1] एतेषु उद्घात्यकोऽवलगित च वीथ्यङ्गेषु परिगणिते ।

तत्रोद्घात्यक.

पदानि त्वगतार्थानि ये नरा-पुनरादरात् ।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते ॥१८ ११६

अभिनवगुप्तानुसारेण 'प्रश्नप्रतिवचनयोरन्याभिप्रायरूपेण योगेन यद्वैचित्र्यं तद्वीथ्यङ्गम् । यदा प्रष्टैवप्रतिवचनवैचित्र्यमभिसन्धाय पृच्छति, प्रतिवक्तोचित-मभिधत्ते तदा तदुत्तरमुद्घात्यक । यथा,

का भूषा बलिनां क्षमा, परिभव कोऽयं स्वकुल्यैः कृत ।
किं दुःखं परसश्रयो, जगति कः श्लाघ्यो य आश्रीयते ॥ पाण्डवानन्दे

भरत एकविधमुद्घात्यकं मन्यते । धनञ्जयस्तावद् द्विविधं मन्यते । न केवलं प्रश्नोत्तरस्य वाक्यगत एवापितु गूढार्थपदपर्यायमालापि उद्घात्यकस्य लक्षण निर्माति । दशरूपकानुसारेण कस्यचिद्गूढपदस्यार्थ व्याख्यातुं नैकपर्याया. प्रस्तूयन्ते । इदमभिनवमनुसन्धान धनञ्जयस्य ।

अवलगितं तु भरतानुसारेण—

यत्रान्यस्मिन् समावेश्य कार्यमन्यत् प्रसाध्यते ॥१८·११६

अर्थात् यत्रोत्तरे दीयमानेऽनन्यानुसन्धानपूर्वकेऽप्यन्यत्कार्यं सिध्यति, तदान्यकार्यावलगनादवलगितम् । इदं स्वरूप त्ववलगितस्याविनाभावेन द्वयो कार्ययो प्रतिफलति । यदि नाम द्वयो. कार्ययोर्दैववशादेकपदे सिद्धि स्यात्तर्हि अपरविधमवलगितं भवतीति धनञ्जयेन परिभाषितम्—

प्रस्तुतेऽन्यत्र वान्यत् स्यात्तच्चावलगित द्विधा ॥३·१५

कथोद्घातनामक आमुखाङ्गे सूत्रधारस्य वाक्य वा वाक्यार्थ वा पुन-र्वदन् पात्रं रगपीठे प्रविशतीति भरत-धनञ्जययो समाना परिभाषा[2] । धनञ्जया नुसारेण पात्र सूत्रधारस्य वाक्यं स्वेतिवृत्तसमं मन्यत इति विशेषमनुसन्दधाति । अभिनवगुप्त कथोद्घातपदं व्याख्याति–कथा काव्यार्थरूपा ऊर्ध्वमेव हन्यते गम्यते तत्रेति कथोद्घात ।

यदा सूत्रधारस्य प्रस्तावना-प्रसङ्ग उक्तोऽर्थ नाट्यात्मकं वृत्तं संस्पृशति, पात्रप्रवेशञ्च संयोजयति तदा प्रयोगातिशयो भवति । अभिनवगुप्तः प्रयोगातिशयं

---

१ एतेषा पञ्चामुखाङ्गाना केवलमेकमेवैकस्मिन् रूपके पर्याप्तमिति भरतो नियम-यति—

एषामन्यतम श्लिष्ट योजयित्वार्थयुक्तिभिः । २०·३८

२ ना० शा० २० ३५, दश० ३·१०

व्याख्याति—सूत्रधार एव यत्र प्रयोगे प्रयोगं समुद्गककवाटयुगलवद् योजयति स प्रयोगद्वयश्लेषणात् प्रयोगातिशय ।[१] सूत्रधारस्य प्रयोग स्वक्षेत्रमतिशेते । अत एव प्रयोगातिशय इत्यभिधीयते ।

प्रवृत्तकमिति पञ्चममङ्गमामुखस्य । तस्य परिभाषा भारतीये नाट्य-शास्त्रे दशरूपके च तत्त्वत समानैव । तद्यथा भरत

कालप्रवृत्तिमाश्रित्य वर्णना या प्रयुज्यते ।
तदाश्रयाच्च पात्रस्य प्रवेशस्तत्प्रवृत्तकम् ॥ २०.३७

सूत्रधारेण कालप्रवृत्तिमवलम्ब्य किञ्चिद् वस्तु वर्ण्यते । तदाश्रयेण च पात्रस्य प्रवेश तत्कालप्रवृत्त्या स्वार्थोक्तत्वात् प्रवृत्तकम् । अत्र श्लिष्टपदाना प्रयोगेणोपमानीकृतनायक प्रायः रङ्ग प्रविशति ।

भरतानुसारेण तु आमुखस्य पूर्वोक्तानि पञ्चैवाङ्गानि सन्ति । तेषु द्वे वीथ्यङ्गे स्त. । अवशिष्टानि चैकादश वीथ्यङ्गानि आमुखे वाग्वैचित्र्यस्य प्रदर्शनाय सन्तु नाम. किन्तु तानि आमुखाङ्गानि न भवन्ति, यतो हि नामा-मुखाङ्गत्वाय भावि-रूपकार्थानुकूलविषयत्वमावश्यकमेव । एतत्तत्त्वं तु शेषभूतै-कादशवीथ्यङ्गेषु नास्त्येव । अतएव भरतेन तानि आमुखाङ्गानीति न प्रपञ्चितम् ।[२]

धनञ्जयस्तु वीथ्यङ्गान्यामुखाङ्गानीति प्रतिपादयति । नैतत्साधु प्रतिभाति ।[३]

---

१. ना० शा० २० ३६ अधिकृत्य भारती ।

२. एतदेवाभिनवगुप्तेन निर्दिष्टम् । तद्यथा, आमुख सामान्यलक्षणेऽप्युक्तं वीथ्यङ्गैरिति, तथापि उद्घात्यकोऽवलगितं च भाविकाव्यार्थप्रस्तावनेति । ना० शा० २०.३३ अधिकृत्य भारती । धनंजयोऽपि पात्राक्षेपणमर्थाक्षेपणं वामुखाङ्गानामावश्यकं प्रतिपादयति ३.२१ ।

३. दशरूपके ३.७ ।

## काव्यबन्धः

दर्शविधेषु रूपकेषु नाटकं प्रकरणं च प्राथम्यं भजेते। तयोरपि नाटकं प्रकरणादपि प्रधानं, कथावस्तुन प्रसिद्धत्वात्। प्रकरणे या कल्पनावस्तु-सम्भावना, सापि प्रसिद्ध्युपजीविनी भवति। अभिनवगुप्तानुसारेण नाटकस्योत्कर्ष इतिहासादिप्रमाण-वस्तुसिद्धप्रदर्शकत्वेन प्रतीतः।

### नाटकम्

भरतानुसारेण प्रख्यातवस्तु-विषयं नाटकं भवति। प्रख्यातं तु भारतादिकमिति अभिनवगुप्त.। अत्रादिशब्देन वैदिकसंहिता, ब्राह्मणारण्यकोपनिषदः पुराणोपपुराणानि आदिकाव्यं रामायणञ्च गृह्यन्ते। एतेषां स्वत प्रामाण्यम् इत्यस्माकं मतम्।

**नायकः**

नाटकस्य नायक उदात्त स्यादिति भारतीयं मतमभिनवगुप्तो विशदयति। तद्यथा—उदात्त इति वीररसयोग्य उक्त। तेन धीरललित-धीरप्रशान्त-धीरोद्धत-धीरोदात्ताश्चत्वारोऽपि गृह्यन्ते।[1] प्रसिद्धनाटकेषु न केवलं धीरोदात्ता एव नायका अपितु अपरविधा अपि सन्त्येव। स्वप्नवासवदत्तस्य नायक उदयनो मुद्राराक्षसस्य च चन्द्रगुप्तो धीरललितौ। धनञ्जयादयः परवर्तिनाट्याचार्या धीरोदात्तमेव नाटकस्य नायकं स्वीकुर्वन्तीति पूर्णमभिप्रायं न व्यनक्ति।[2]

भरतानुसारेण राजर्षि-वंशोत्पन्नो राजैव नाटकस्य नायको भवितुमर्हति।[3] अत्र राजर्षिस्तु राजान ऋषय इवेत्युपमित-समासेन निष्पद्यते।

केवलं राजान एव नायका भवितुमर्हन्ति, न देवा., न ऋषयो महात्मानो वेति महती विप्रतिपत्तिर्भरतेन समुपस्थापिता। तदनुसारेण तु शङ्कराचार्यो

---

१. ना० शा० १८ १० अधिकृत्य भारती। उदात्ता गणिकापि स्यात्। २३ ३४

२. अभिगम्यगुणैर्युक्तो धीरोदात्तः प्रतापवान्। दश० ३.२२।

३ राजर्षिवंशचरितम्। १८.१०

नायको न भविष्यति कस्यचिन्नाटकस्य। प्रबोधचन्द्रोदय. संकल्प-सूर्योदयोऽपि च राजर्षिवंश्य-चरितविहीनौ नाटकं न स्याताम्। नेद भारतीयं नियमनं परवर्ति-कविभिर्मनागपि स्वीकृतमिति नाटकेतिहासेन स्पष्टं प्रतीयते।

देवा अपि नायका भवितुं न योग्या इत्यभिनवगुप्तेन भारतीयमतमनुसृत्य प्रतिपादितम्।[1] स विशदयति—यदि मुख्यत्वेनैव देवचरितं वर्ण्यते, तत्तावद्विप्रलम्भकरुणाद्भुतभयानक-रसोचितं चेन्निबध्यते, तन्मानुषचरितमेव सम्पद्यते, प्रत्युत देवानामभिधयाधानं प्रसिद्धिविघातकम्। तत्र चोक्तो दोष.। विप्रलम्भाद्यभावे तु का तत्र विचित्रता रञ्जनाया एतत्प्रमाणत्वात्। अतएव हृदयसंवादोऽपि देवचरिते दुर्लभः। न च तेषां दु खमस्ति, यत्प्रतीकारोपाये व्युत्पादनं स्यात्। अभिनवगुप्तस्यायं प्रपञ्चस्तथ्यहीन एव। विप्रलम्भं विनापि मुद्राराक्षस-वेणीसंहारादीनि उत्तमानि नाटकानि सन्त्येव। देवानामपि दुःखं भवत्येव। इन्द्रवृत्रप्रकरणे तत्तु स्पष्टं खलु। असुरैः पराजिता देवा दु.खं नान्वभवन्निति असत्। धनञ्जयस्तु दिव्यं नायकं नाटकोचितं निर्धारयति। तद्यथा,

प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः[2]। ३.२३

वर्त्तमानराजापि नायको न स्यादिति निर्धारयन् अभिनवगुप्तो विशदयति—तत्र विपरीतप्रसिद्धिबाधयाध्यारोपस्याकिंचित्करत्वात्।

वृत्तम्

नृपतीना कीदृशं चरितं नाटके वर्णनीयमिति भरतः प्राह—

नानाविभूतिभिर्युक्तमृद्धिविलासादिभिर्गुणैश्चैव ॥१८.११

नृपतीनां यच्चरित नाना रसभावचेष्टितं बहुधा।
सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम ॥१८ १२

अत्र नृपतिचरिते सुखं दु.खं चोभे वर्णनीये इति महत्त्वपूर्णम्। नृपतीना चरितं प्रह्लीभावदायकं भवति। तथा हृदयानुप्रवेशरञ्जनोल्लासनया हृदयं चोपाय-व्युत्पत्तिपरिघट्टतया चेष्टया नर्तयति। अतएव नाटकनाम सार्थकम्।

पंचसन्धि-पंचावस्था-संवलितं नाटकीयं वृत्तं पताका-प्रकरीभिः संवर्धितं स्यात्।

---

१. दिव्याश्रयोपेतम् (नाटकम्) ना० शा० १८.१०
प्रकरणं तु लोकसंश्रयं भवति। दश० ३.३९

२. अत्र प्रख्यातग्रहणं प्रकर्षद्योतकमिति अभिनवगुप्तः।

नायकस्य रसस्य वानुचितं वृत्तं त्याज्यं वान्यथा वा प्रकल्पनीयम् । सर्वेषु नाटकेषूत्पाद्यकथांशो वैशिष्ट्यं भजते ।

अङ्कः

नाटकस्यारम्भ. प्रायशोऽङ्कादेव प्रवर्तते । नाटकीयं वृत्तमङ्केषु विभक्तमेव प्रदर्श्यते । तत्र कस्मिन्नङ्क एकदिवसपर्यन्तं वृत्त ग्रहणीयम् । यदि कस्यचिदेकस्य दिनस्य वृत्तमेकस्मिन्नंके न समायाति, तर्हि तदधिकं वृत्तं द्वितीयेऽङ्के वर्णनीयमथवा प्रवेशक-विष्कम्भकाभ्यां सूचनीयमिति भारतीयं विधानम् ।[1] साधारणत. प्रत्यवस्थमेकोऽङ्को भवेत् ।[2]

भरतोऽङ्कं परिभाषते—

यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहार ।१८ १६

अभिनवगुप्तोऽङ्कं स्पष्टतम परिभाषते । तद्यथा, अवान्तरवस्तु-समाप्तौ विश्रान्तये ये विच्छेदा अङ्का इति ।[3]

नाटकारम्भे यदि नीरसो वस्तुविस्तरोऽपेक्षितो भवेत्तर्हि स सूच्यं विधाय विष्कम्भकेण सन्निवेश्योऽन्यथाङ्को भवति प्रारम्भे । अङ्कस्य कथाया आक्षेप आमुखे भवति ।

दशरूपके यन्निगदितम्—

विन्दुव्याप्तिपुरस्कृतोऽङ्कः ।३ ३१

तत्तु विप्रतिपत्तिमेवानुसन्धत्ते, यतो हि नाम धनञ्जयो विन्दुं प्रतिमुख-सन्धावेव परिच्छिनत्ति । नैतत् साधु ।

अन्यच्च दशरूपके निगदितम् ।

'प्रत्यक्षनेतृचरितोऽङ्क' । ३.३०

एतत्तु भरतस्याधोलिखितकारिकाया अनुहरणमेव—

---

१. विष्कम्भकस्तु प्रथमाङ्कात् पूर्वमपि स्थापनीयः । प्रवेशकस्तावद्द्वयोरङ्कयोर्मध्य एव निवेशनीयः ।

२. इतिवृत्तस्य विन्दुसूत्रस्यूतस्य प्रारम्भाद्यवस्थापंचकचारिणो यदा प्रारम्भावस्था पूर्णत्वमेति तदाङ्कच्छेदो विन्दुद्वारानुसन्धीयमानद्वितीयाङ्काभिधेयरूपो विधेय । एवं प्रयत्नाद्यवस्थाचतुष्टयेऽपि वाच्यमिति पंच तावदङ्का इति मुख्य कल्प. । ना० शा० १८.१३ अधिकृत्य भारती ।

३. ना० शा० १८ ११ अधिकृत्य भारती ।

ये नायका निर्दिष्टास्तेषां प्रत्यक्षचरितसम्भोगः ।
नानावस्थोपेतः कार्यस्त्वङ्कोऽविकृष्टस्तु[1] ॥१८.१७

किं नामाङ्के नायकानां प्रत्यक्षमेव चरितं भवति, उताहो चरितं सूच्यमपि अङ्के स्यात् । नायक-चरितं सूच्यमपि नाटके वर्तत एवेत्यस्माकं मतम् । तथा हि—वेणीसंहारस्य चतुर्थाङ्के सुन्दरको दुर्योधनं सूचयति यत् वृषसेनार्जुनयोर्घोरं युद्धमभवत् । तत्र वृषसेनो मृत इति । मुद्राराक्षसे दूताश्चाणक्याय राक्षसाय चारिभिर्नायकैः कृतं कार्यजातमङ्कभागे सूचयन्ति । एवमेवान्येषु रूपकेष्वपि दृश्यते । भरतस्य धनंजयस्य चैतद् विधानं न सत् ।

भरतानुसारेणाङ्कान्ते कस्यचिदर्थस्य समाप्तिः स्यात्, तस्य बीजस्य च परिणतिर्जायेत । तत्रैव बिन्दुर्भवति, येनापराङ्कस्य कथा प्रवर्तते ।[2]

केषाञ्चिदङ्कानां नामानि तत्र नायकानामभिधानेन वस्तुनो वा संज्ञया प्रख्यापितानि, इति सागरनन्दिनोऽनुसन्धानम् । तद्यथा उत्तररामचरिते छायाङ्क इति ।

**अङ्के दर्शनीयमदर्शनीयञ्च**

अङ्के किं दर्शनीयं किं चादर्शनीयमिति वितर्कः । भरतानुसारेण तु अद्भुततत्त्वानि प्राथम्येन दर्शनीयानि । कानि च तानि तत्त्वानि—क्रोधप्रसादशोकाः, शापोत्सर्गः, विद्रवो विवाहश्च रंजकानि सन्ति । अभिनवगुप्तानुसारतोऽन्यान्यपि रंजकवस्तूनि तत्र स्युः ।

अदर्शनीयानि तु बहून्येव परिगणितानि । तद्यथा भारतीये नाट्यशास्त्रे—

युद्धं राज्यभ्रंशो मरणं नगरावरोधनं चैव ।
प्रत्यक्षाणि तु नाङ्के प्रवेशकैः संविधेयानि ॥ ना० शा० १८ ३८

युद्धं त्वभिनेयमिति भरतेनान्यत्र प्रतिपादितम् ।[3]

---

१ अङ्कस्तावत् कार्यस्य (Act) पर्याय एव संजातः । तद्यथा अभिनवगुप्तेन चर्चितम्—कार्यशब्देनाङ्क उच्यते । ना० शा० १८.८० अधिकृत्य भारती ।

२. यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्य ॥ १८ ३८

३. नानाप्रहरणमोक्षैः शिरःकबन्धभुजकर्तनैश्चैव ।
एभिश्चार्थविशेषैरस्याभिनयः प्रयोक्तव्यः ॥ ना० शा ६.६५
अथवा योगशिक्षाभिर्विद्या मायाकृतेन वा ।
शस्त्रमोक्षः प्रकर्तव्यो रंगमध्ये प्रयोक्तृभिः ॥ ना० शा० २१.२२५
नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः ।
न्यायाश्चैवात्र विज्ञेयाश्चत्वारः शस्त्रमोक्षणे ॥ ना० शा० १०.७१ अग्रेऽपि द्रष्टव्यम्

अभिनवगुप्तस्तावदपरेषां मतमुद्धरति यत् मरणं क्वचित् प्रयोज्यं भवति। किन्तु स स्पष्टतया व्याकरोति— मृतस्य कथं निष्क्रमणं, कथं वावस्थानं ततो नाट्योपयोगिसमस्तध्रुवा-गानादिक्रियाविलोपः, सामाजिकानां विरसता-प्रतिपत्तिरिति तु सर्वत्र मरणं समानम्। तस्माद् रङ्गे मरणमप्रयोज्यमेव।[1]

अन्यत्रापि भरतो मरणं वर्जनीयं दृश्यं न मन्यते।[2] धनञ्जयोऽपि मरण-दृश्यं न वर्जयति। साहित्यदर्पणे विश्वनाथोऽङ्के मरणं वर्जयति।

अभिनवगुप्तस्य पूर्वोक्तं मतं न साधुसम्मतमित्यस्माकं समीक्षा, यतो हि नाम स्वयमेव भरतेन रंगे मरणाभिनयस्य निर्देशाः स्पष्टीकृताः। तद्यथा—

नानाभावोपगतं मरणाभिनये बहुकीर्तितं तु।
विक्षिप्तहस्तपादैर्निभृतैः सन्नैस्तथा कार्यम्॥
व्याधिप्लुते च मरणं विषण्णगात्रैस्तु सम्प्रयोक्तव्यम्।
हिक्काश्वासोपेतं तथा पराधीन-संचारम्॥
विषपीतेऽपि च मरणं कार्यं विक्षिप्तगात्रकरचरणम्।
विषवेगसम्प्रयुक्तं विस्फुरिताङ्गक्रियोपेतम्॥ २५.१००-१०२

भासनाटकादिषु मरणदृश्यं प्राप्यत एव।

भरतानुसारेणान्यानि कानिचिद् रंगवर्ज्यानि अङ्के अदर्शनीयानि स्युः।[3] तथा हि—

न कार्यं शयनं रंगे नाट्यधर्मं विजानता।
केनचिद् वचनार्थेन अङ्कच्छेदो विधीयते॥ २२.२८५
यद्वा शयीतार्थवशादेकाकी सहितोऽपि वा।
चुम्बनालिंगनं चैव तथा गुह्यं च यद् भवेत्॥ २२.२८६
दन्तच्छेद्यं नखच्छेद्यं नीवीस्रंसनमेव च।
स्तनान्तरविमर्दं च रंगमध्ये न कारयेत्। २२.२८७
भोजनं सलिलक्रीडा तथा लज्जाकरं च यत्।
एवंविधं भवेद्यद्यत्तत्तदङ्के न कारयेत्॥ २२.२८८

---

१. ना० शा० १८.३८ अधिकृत्य भारती।

२. ना० शा० ७.८६-९०।

३ आवश्यकतानुसारं भाणादिषु प्रायः विट एव प्रविष्टपात्रं भवति। स 'इदमिदं मया दृश्यत' इति ब्रूयात्। एवं परस्थं वा यदा व्याख्यायते च प्रत्यक्षत्वेनैतदुप-युज्यते।

ना० शा० २२.२८३ अधिकृत्य भारतीमतम्।

पितापुत्रस्नुषाश्वश्रू-दृश्यं यस्मात्तु नाटकम्।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नत.॥ २२.२६६

नैतानि वर्ज्यानि कविभिर्नाटकादिषु सर्वथा परित्यक्तानि।[1]

भारतीये नाट्यशास्त्र एव कामशास्त्र-प्रकरणमिवाधोविधं वर्णनं विद्यते—

गृहीतयाथ केशान्ते हस्ते वस्त्रेऽथवा पुन.।
हुं मुञ्चेत्युपसर्पन्त्या वाच्यः स्पर्शालसं प्रियः॥ २२.२८४
अमुच्यमाने केशान्ते संजातस्वेदलेशया।
हं हु मुंचापसर्पेति वाच्य. स्पर्शालसाङ्गया॥ २२.२८६
अक्ष्णोः संवरणे कार्यं पृष्ठतश्चोपगूहनम्।
नार्यास्त्वपहृते वस्त्रे दीपच्छादनमेव च॥ २२.२८६
उत्थाप्यालिङ्गयेच्चैव नायिका नायकं ततः।
रतिभोगगता दृष्ट्वा शयनाभिमुखी व्रजेत्॥ २२.२६१
एतद्गीतविधानेन सुकुमारेण योजयेत्।
यदा शृङ्गारसंयुक्तं रतिसम्भोगकारणम्॥ २२.२६२

इदं मतं तु प्राचीनतरं प्रतिभाति। तत् तु नाट्यशास्त्रे संगृहीतम्। एतेषां वर्जनं तु परवर्तिभि. सुसंस्कृतैः सुरुचिपरायणैश्च ऋषिकल्पैराचार्यैः समर्थितम्।

भरतेन महाजनपरिवारमित्यादिवर्ज्यं निर्दिष्टवान्। तद्यथा,

न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा।
ये तत्र कार्यपुरुषास्चत्वारः पञ्च वा ते स्युः॥ १८.४१

एषां कारिकाभिनवगुप्तेन व्याख्याता—यद्यदप्रयोज्यं प्रत्यक्षेण तस्य सामान्यद्वारकं संग्रहं दर्शयितुमाह—बहुतरपुरुषसाध्यं यत्किंचित् तद्यथा समुद्रे सेतुबन्धनमित्यादि। तत्सर्वं प्रत्यक्षेण न प्रदर्शनीयम्। तथा महतो जनस्य पितापुत्रश्वश्रूस्नुषागुरुशिष्यादेः परितो व्रण व्रीडातङ्कादियोगेन यत्र जायते वैरस्यं वा महाजनस्य सभ्यस्य च यत्र परिवरणं चित्तसंकोचः तत्सर्वं परिचुम्बनाद्यपि न प्रत्यक्षप्रयोज्यम्।

---

१. कौमुदी-महोत्सवस्य पंचमाङ्के नायको नायिका परिष्वजते। तापसवत्सराजस्य षष्ठाङ्के विदूषको दासी काचनमालामालिङ्गते। तपतीसंवरणस्य षष्ठाङ्के राजा नायिकामालिंगते। पारिजातमञ्जर्याः प्रथमाङ्के राजा नायिकां पारिजातमञ्जरी च परिष्वजते। प्रद्युम्नाभ्युदयस्य तृतीयाङ्के नायकयोः परिष्वजनं दृश्यम्।

भरतमेवाशतोऽनुसरन् धनञ्जयो रंगे वर्ज्यानि वर्णितवान्—

दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् ।
संरोधं भोजनं स्नानं सुरतं चानुलेपनम् ।
अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।। दश० ३. ३४.३५

दूरयात्रा-प्रकरणेऽङ्को विच्छेद्य इति भरत ।[१]

स तु 'नाधिकारिवध'मित्यादि अदर्शनीयं गणयति । एतत्तु नापेक्षितम्, यतो हि नाम यदि कश्चिन्नायको म्रियते, तर्हि कथं सोऽधिकारी भविष्यति । भरतेनापि सङ्केतितमासीत्—

न वधः कर्तव्यः स्याद्योऽभ्युदयी नायक ख्यातः ।

एतदपि नापेक्षितमासीत् । अधिकारि-नायकस्तु फलवान् भवत्येव । फलवत्ता हि जीवनान्तं न सहते । कार्यनायको यदि म्रियेत तर्हि को दोषः ।

**अङ्के पात्र-संख्या**

अभिनवगुप्तो नाटकस्याङ्के पात्रसंख्यां विवेचयति । तद्यथा—यदि च प्रत्यक्षप्रयोज्यं तत्र पञ्चकार्यपुरुषाः । यदि वा चत्वारः प्रकरीपताकादिरूपा. तेषां च परिवारस्वभावात्तावन्त एवेति । यदि प्रकर्षस्तदा दशाष्टौ वा रङ्गे प्रविष्टा भवन्ति । ततोऽधिकेषु त्वभिनयचतुष्टयं सम्यगविभावनीयं स्यात् देवयात्रा परिदृश्यमानजनसमाजवत् इति भरतस्याधोलिखितकारिकाया व्याख्या—

ये तत्र कार्यपुरुषाश्चत्वार पञ्च वा ते स्युः । १८ ४१

अङ्के तावत् त्रीणि चत्वारि वा पात्राणि भवेयुरिति धनञ्जय निर्देशः । तद्यथा, 'पात्रैस्त्रिचतुरैरङ्कम्' इत्यादि ।[२]

**अङ्कस्यान्यविशेषाः**

नाटकेऽङ्कानां स्वल्पतमा संख्या पंचाधिकतमा च दश स्यात् । महानाटके दशभ्योऽप्यधिका अङ्का स्युरिति परवर्तिनाट्याचार्याणां सम्मतम् ।

अङ्कस्तु आसन्ननायको भवेदिति धनञ्जयमतम् ।[३]

---

१. धनञ्जयस्य दूराध्वानमिति पदं नाट्यशास्त्राधोलिखित-कारिकात. गृहीतम्—
य. कश्चित् कार्यवशाद् गच्छति पुरुष· प्रकृष्टमध्वानम् ।
तत्राप्यङ्कच्छेद· कर्तव्य पूर्वतत्त्वज्ञैः ।। १८ ३२

२. दश० ३.३७

३ एतत्तु भरतस्याधोलिखित कारिकामनुहरति—
ये नायका निगदितास्तेषा प्रत्यक्षचरितसम्भोग· ।
नानावस्थोपेतः कार्यस्त्वङ्कोऽविप्रकृष्टस्तु ।। १८.१७

अत्र नायक इति मध्यम-सामान्य वचनम् । नायकेन प्रधाननायकः, पताकानायकः, प्रतिनायकाः, नायिका वा ग्रहणीया । भरतानुसारेण तु

नायकदेवीगुरजनपुरोहितामात्यसार्थवाहानाम् ।
नैकरसान्तरविहितो ह्यङ्क इति स वेदितव्यः ॥ १८.१८

एतां कारिकां विशदयन्नभिनवगुप्तो व्याख्याति—नायका मुख्याः पताकाद्यो देव्यो महादेवी-भोगिनीप्रभृतयः, गुरुजनो मातृपितृभ्रात्राचार्यादिः, सार्थवाहोऽत्र सेनापतिः । इतिवृत्तवशाद् वणिगेव वा । एषा सम्बन्धी अङ्कः एतदर्थाभिधायकः ।

नाटकारम्भे क्वचिदेतान् विहाय केवलमन्ये कथापुरुषाः कंचित्कालं भवन्तु नाम, किन्तु साधारणतोऽङ्कस्याधिकांशभागे नायको रंगमध्ये वर्तत एव, यतो हि नाम तेषामेव कथा सभ्यानामाकर्षणं विदध्यात् ।

अङ्कस्य केन्द्रीभूतनायकोऽङ्कस्य मध्ये रंगान्न निष्क्रामेत् अनायका एवान्यानि साधारणपात्राणि प्रविशन्ति निष्क्रामन्ति च कार्यापेक्षया, किन्तु नायकस्यायमेव महिमा यत् रंगाद् बहिस्तस्य कार्यं साम्प्रतिकं न विद्यते[१] ।

अङ्कान्ते सर्वाणि पात्राणि यवनिकातिरोधानेन निष्क्रामन्ति ।[२]

### अङ्के कार्य-सातत्यम्

अङ्के कार्यसातत्यमपेक्षितमेव । एकस्य दिनस्य व्यच्छिन्नकार्यमव्यवधानेन विरामेण विना प्रचरति । परम्परानुवर्तिनाटकेषु दृश्य-विभाजनं तत्राङ्कानां नास्त्येव । यदि दृश्य-विभाजनमिवाप्यत्काप्रियोजना स्यात्तर्हि कार्यसातत्यं विघटेत । क्वचिदनिर्दिष्टमेव दृश्यविभाजनमङ्कानामस्ति । तत्र व्यवधानं स्यादेव ।

### रसयोजना

भरतस्तु नाटकेऽङ्को नैकरसान्तरविहितो भवेदिति निर्दिशति ।[३]

---

१. अनायकपुरुषस्त्वविच्छिन्न एवाङ्के निष्क्रामति । ना० शा० १८.३२ अधिकृत्य भारती ।

२. ना० शा० १८.२३ अधिकृत्य भारती ।

३. ना० शा० १८.१८

अर्थादङ्के बहवो रसा भवेयु.। तत्रैवाभिनवगुप्तो व्याख्याति—देवीयोगे शृंगारो नायके वीर इत्येवमन्यदुत्प्रेक्ष्यम्। अन्यत्र भरतः समर्थयति—

अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान्। १८.१४
नृपतीनां यच्चरितं नानारसभावचेष्टित बहुधा॥ १८.१२

सर्वेषु रूपकेषु निर्वहणेऽद्भुतरसो भवेत्।[१]

अभिनवगुप्तानुसारेण शृंगार-वीर-रौद्रैः स्त्रीरत्न-पृथ्वीलाभ-शत्रुक्षया., करुणादिभिस्तन्निवृत्तिरितीयता क्रमेण लोकोत्तर-संभाव्यमनोरथ-प्राप्तौ भवितव्यमद्भुतेन।[२]

'नाटके वीररसः प्रधानः' इति समीक्षतेऽभिनवगुप्तः। 'तथा हि सर्वरसयोग्यतायामपि नाटके प्रकरणे च धर्मार्थादिवीर एव प्रधान परमार्थत सर्वेषु नायक-भेदेषु वीरत्वानुगमदर्शनात्।

अङ्गी रसस्तु काव्य आद्यन्तं व्याप्तो भवति। स तु प्रधानरस एव स्यात्। अपर एव फलानुवर्ती रसः। नाटकान्ते यत्फलं नायकेन लभ्यते, तदनुसृत्य फलानुवर्ती रसो जायते। तद्यथा, उत्तररामचरिते करुणस्तु प्रधानो वाङ्गी वा रस स्यात्, किन्तु तत्र फलानुवर्ती रसस्तु शृंगार एव। अङ्गी रसस्तावत् वीर· शृंगारश्चैव भवत इति धनञ्जयस्य मतं न सर्वथा पूर्णम्। रौद्र. करुणश्चाङ्गिनौ रसौ क्रमशः वेणीसंहारे उत्तररामचरिते च विलसत इति सम्यगवधेयम्।

वस्तुरसयो सामञ्जस्यं सम्यग् निदिष्टं धनञ्जयेन।

न चातिरसतो वस्तु दूर विच्छिन्नतां नयेद्॥
रसं वा न तिरोदध्यात् वस्त्वलंकारलक्षणं॥ ३.३३,३४

**वृत्तिः**

नाटके प्रकरणे च सर्वा वृत्तय. सन्तीति भरतस्य मतम्—

ज्ञेयं प्रकरणं चैव तथा नाटकमेव च।
सर्ववृत्तिविनिष्पन्नं नानाबन्धसमाश्रयम्॥ १८.७

## प्रकरणम्

नाटक-प्रकरणयोरंशत· साम्यविषयेऽधोलिखितं भरतस्य वचनं

यन्नाटके मयोक्तं वस्तु-शरीरं च वृत्तिभेदाश्च।
तत्प्रकरणेऽपि योज्यं सलक्षणं सर्वसन्धिषु तु॥ १८.४७

१ ना० शा० १८.४३
२ ना० शा० १८.४३ अधिकृत्य भारती

एतत्तु व्याख्यातमभिनवगुप्तेन—नानाविभूतियुक्तमृद्धि-विलासादिभि-रित्यादिनायकफलवस्त्वमुक्तं तत्। वस्तु - शरीरमिति—अङ्कप्रवेशकाढ्यम्।[1] वृत्तिभेदाश्चेति नानारसभावचेष्टितैर्बहुधा, सुख-दु:खकृतमिति। सलक्षणमिति, अङ्कप्रवेशकयोर्लक्षणयुक्तमिति।

वस्तु

प्रकरणे वस्तुशरीरं च कविनोत्पत्तिकमात्मशक्त्या इति भरतस्य प्रथम-वचनम्। तत्र वस्तु साध्यफलं शरीरमिति तदुपाय इति मतमभिनवगुप्तस्य।[2]

वस्तु वा नायको वौत्पत्तिको भवतु, किन्तु न ते सर्वेषु प्रकरणेषु सर्वथो-त्पाद्ये इति सन्धारणीयम्। कविस्तु प्रकरण-निमित्तमनार्षमाहार्यं चापि वस्तु क्वचित् प्रचिनोति। तस्यैतादृशं प्रचयनमेव प्रकरणनाम्नः सार्थकतां विदधाति।

अभिनवगुप्तानुसारेण वस्तुनि 'योऽनुत्पाद्योंऽशः न कुत्रस्थो ग्राह्यः'। अनुत्पाद्योंऽश आहार्यो भवेदनार्षो वा। अनार्षमिति पुराणादि-व्यतिरिक्त-बृहत्कथाद्युपनिषद्युपनिबद्धं मूलचरितादि। आहार्यमिति पूर्वकविकाव्याद्धाहर-णीयं समुद्रदत्तचेष्टितादि। अनार्षमाहार्यं च वस्तु संचित्य तदेव प्रसिद्धैर्गुणै-र्युक्तं प्रकरोति कविः।[3] अतएव प्रकरणं नाम। प्रकरोति तदिति तस्माद्धेतो-रेतदपि प्रकरणम्। पुनरपि अभिनवगुप्तो विस्पष्टयति—तेन बृहत्कथादिसिद्धस्य मूलदेवादेरधिकावापं कविशक्तिर्यदा विधत्ते तदा प्रकरणम्। एवं पूर्वकवि-समुत्प्रेक्षित-समुद्रदत्त-चेष्टितादिवर्णनेऽपि अधिकावापं विदधत्कविः प्रकरणं कुर्यादिति तात्पर्यम्।[4]

अभिनववस्तु—योजनायाः कावश्यकतेति विशदयन् अभिनवगुप्तः प्राह—

विनेयोऽभिनववस्तुवृत्तकौतुकपरतन्त्र इति समुत्पाद्यवस्तुना प्रकरणेन विनीयते।[5]

---

१. विष्कम्भकप्रचुरं प्रकरणं स्यादिति मतमभिनवगुप्तस्य।

२. ना० शा० १८.४५ अधिकृत्य भारती।

३. यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम्
उत्पन्न-बीज-वस्तुप्रकरणमिति तदपि विज्ञेयम्॥
ना० शा० १८.४६ एतदधिकृत्य भारती।

४ तत्रैव

५. ना० शा० १८ ७ अधिकृत्य भारती। पाश्चात्त्या अपि तथैव मन्यन्ते—To the poet the highest value lies in his own invention, and out of fondness for this, he at his own convenience, changes the actual incident —European Theories of the Drama p. 357

प्रकरणे नायकादीनां चरितं नैकविधं स्यादिति अनेकरसोत्सः तद् भवेदिति मतमभिनवगुप्तस्य।[१]

दशरूपके धनञ्जयो वृत्तमुत्पाद्यमेव मन्यते। नैतत् सर्वांशतः साधु। तत्राहार्यानार्षवस्तुनोर्निषेधः। अन्यच्च वस्तु लोकसंश्रयं स्यादिति विशेषद्योतकं लक्षणं तेन सुष्ठु प्रपञ्चितम्।[२]

**नायकादयः**

प्रकरणे विप्रः, वणिक्, सचिवः, पुरोहितः, अमात्यः, सार्थवाहो (पण्यानामाहर्त्ता) नायका भवन्ति। प्रख्यातोदात्तनायकस्तत्र नास्त्येव। न च देवा न राजानो नायका भवन्ति।[३] नायको वैशिकोऽपि भवति—वेश्याकामुकः, वेश्योपचारे निपुणः।[४]

नाटकेषु प्रायशोऽन्तःपुरीया प्रकृतिः स्यात्, किन्तु प्रकरणे तद्विपरीतं बाह्यजनाः सन्ति—दासः, विटः, श्रेष्ठीत्यादयः। अभिनवगुप्तानुसारेण तु पात्रविधानं नाटकापेक्षयाधोविधं वर्तते—

| नाटकपात्राणि | तस्य स्थाने | प्रकरण-पात्राणि |
|---|---|---|
| कञ्चुकिन् | ,, | दासः |
| विदूषक | ,, | विटः |
| अमात्य | ,, | श्रेष्ठी |

भरतानुसारेण विदूषकस्य स्थानं प्रकरणे नास्ति, किन्तु मृच्छकटिके देवीचन्द्रगुप्ते च विदूषकोऽपि वर्तते।

प्रकरणे द्विविधे नायिके स्तः। प्रथमं तावदूढा पत्नी स्यात्। तस्याश्चेष्टितं स्वल्पमेव वर्तते। न सा नाटकवद् महादेवीव राज्ञो नित्यनवनायिकाव्यवहारे बाधां समुपस्थापयति। अतएव भरतेन प्रोक्तम्—

---

१. ना० शा० १८.४८ अधिकृत्य भारती।

२. नोदात्तनायककृतं न दिव्यचरितं न राजसम्भोगम्। इति प्रकरणवृत्तस्य विशेषणानि (ना० शा० १८ ४८) लोकसंश्रयं दश० ३.३९ व्यञ्जन्ति।

३. देवीचन्द्रगुप्तमिति प्रकरणमपवाद एव। तत्र नायकश्चन्द्रगुप्तो राजा उदात्त एव।

४. वैशिकस्य लक्षणानि ना० शा० २३ २-७। तद्यथा

यो हि सर्वकलोपेतः सर्वशिल्प-विचक्षणः।
स्त्रीचित्तग्रहणाभिज्ञो वैशिकः स भवेत् पुमान्॥

तस्य त्रयस्त्रिंशत् गुणाः तत्रैव परिगणिताः। ना० शा० २३ ४-७

मन्दकुलस्त्रीचरितम्,'[1] इति । १८.५०

वेश्या तु प्रधाननायिका वर्तते क्वचित् प्रकरणे। अत एव वेश्योपचार-सम्बन्धि आधिकारिकवृत्तं तत्र भवति। वेश्याया लक्षणानि सविस्तरमेव भरतो वर्णयति। ता, लुब्धाः, पण्डिताः, चतुराः, मानिन्यो, बाला, भीरवः, गर्विताः, उदात्ताश्च भवन्ति।[2] अन्येऽपि भेदा वेश्यानां स्वभावजा —उत्तमा, मध्यमा, नीचा च भरतेन निरूपिताः। तद्यथा,

> या विप्रियेऽपि तिष्ठन्त प्रियं वदति नाप्रियम् ।
> न दीर्घरोषा च तथा कलासु च विचक्षणा ॥ २३.३६
> शीलशोभाकुलाधिक्यं. पुरुषैर्या च काम्यते ।
> कुशला कामतन्त्रेषु दक्षिणा रूपशालिनी ॥ २३.३७
> गृह्णाति कारणाद्रोषं विगतेर्ष्या ब्रवीति च ।
> कार्यकालविशेषज्ञा सुरूपा सा स्मृतोत्तमा ॥ २३.३८
> पुरुषैः काम्यते या तु तथा कामयते च तान् ।
> कामोपचारकुशला प्रतिपक्षाभ्यसूयिनी ॥ २३.३९
> ईर्ष्यातुरा त्वनिभृता क्षीणक्रोधातिगर्विता ।
> क्षणप्रसादा या चैव सा नारी मध्यमा स्मृता ॥ २०.४०
> अस्थानकोपना या तु दुष्टशीलातिमानिनी ।
> चपला परुषा चैव दीर्घरोषाधमा स्मृता ॥ २०.४१

वेश्या कुलाङ्गना च परस्परं न मिलतः। अत एव तयोः पारस्परिकः संघर्षो न परिलक्ष्यते।

भरतधनञ्जयानुसारेण वेश्यां विनापि प्रकरणवृत्तं स्यादिति साधु सम्मतम्। प्रधानत्वेन भरतो नियमयति—

> दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ॥ ना० शा० १८.४६

भाषा तत्र कुलस्त्रियाः शौरसेनी, वेश्यायाः संस्कृतं च स्याताम्। किन्तु मृच्छकटिकादिषु वेश्याः प्राकृतं वदन्तीति वैषम्यम्। आचारः कुलस्त्रियां, विनयप्रधान, अन्यस्यां तद्विपरीत इति।

**सूच्यम्**

भरतानुसारेण विष्कम्भः प्रकरणे विशिष्ट एव। अभिनवगुप्तः प्रकरणे

---

१. 'मन्द-कुलस्त्री-चरितम्' इत्यन्यथापि व्याख्यातम् । तद्यथा मन्दकुलानां स्त्रीणां चरितं यत्रेत्याहुः । तेन कुलाङ्गनापि तत्र मन्दकुलैवेति दर्शितं भवति । १८.५० अधिकृत्य भारती ।

२. ना० शा० २३.३२, ३४

विष्कम्भकस्य बाहुल्यं निगदति । विष्कम्भकस्य वस्तु कीदृशं स्यादिति विशदयति अभिनवगुप्तः—सन्धीनां य. संक्षेपो युद्ध-राज्यभ्रंशादीनां चार्थाना यः संक्षेपः तमभिसन्धाय अङ्कस्य अङ्कयोर्वान्तराले मध्ये विष्कम्भको योज्यः ।[1]

**रस**

धनञ्जयानुसारेण प्रकरणे रसस्य स्थितिर्नाटकवत् स्यात् । नाटके धनञ्जयानुसारतस्तु वीरशृंगारौ इति रसद्वयं वर्तते ।

**प्रकरण-वैविध्यम्**

सप्तविधनायकानुसारं सप्तविधं प्रकरणं भवति ।[2] तत्र त्रिविध-नायिकास्थितिमनुसृत्य त्रिविध. प्रत्येकस्य भेदः स्यात् । प्रथमं तावत् सचिवा-दीना सम्बन्धिनी यत्र गार्हस्थ्योचिता वार्ता पुरुषार्थत्रयसाधकमितिवृत्तं न तत्र वेश्याङ्गना नायिकात्वेन निबन्धनीया । विटादीनां तु नायकत्वेन कृतानां गार्हस्थ्य-चिन्तायां वेश्यापि निबन्धनीया । यदि गृहस्थचिन्तावर्णनं न भवति श्रेष्ठिसार्थवाहादीनां च विप्रादिवदविरुद्धो वेश्यायोग इति सापि प्रदर्शनीयेति लब्धमर्थात् । तत्र न तु कुलस्त्रीसगम. कर्तव्य । एवं श्रेष्ठिसचिवादि-विषयं शुद्धभेदद्वयमुक्तम् । विटादिविषयस्तु संकीर्ण एव वेश्याकुलजाभ्यां भवति ।

धनञ्जयः केवलं त्रिविधमेव प्रकरण नायिकाभेदान्मन्यते—कुलजा, वेश्या, उभयमिति त्रेधा प्रकरणे वृत्तम् ।[3]

**नाटकप्रकरणयोः पुरुषार्थयोजना**

अभिनवगुप्तेन पुरुषार्थविषयिणी समीक्षा नाटक-प्रकरणयो प्रस्ताविता । तद्यथा, सकल पुरुषार्थविषया व्युत्पत्ति. नाटकेन प्रधानस्य राजप्रायस्य क्रियते, प्रकरणेन च मध्यमप्रायस्य । अपूर्व-कौतूहलवतस्तत्रापि चैकविशकस्याभि-धानात् चित्रव्युत्पत्ति ।

१. प्रवेशका विष्कम्भको वाङ्कयोर्मध्ये भवेदिति स्पष्टीकृतमभिनवगुप्तेन । अधुना विष्कम्भकादयोऽङ्कस्य भागा इव नाटकेषु प्रायशो मुद्रिता इति न साधु रीति ।

कथं न प्रवेशको योज्यः प्रथमाङ्कात् प्रागिति विशदयन् अभिनवगुप्तः प्राह—बीजं बिन्दुश्च प्रथममुपक्षिप्येते । तत्र च पृथग्जनस्य लब्धनिवेशत्वात् सचिवादिगोचरत्वाच्च तदुपक्षेपे विष्कम्भकस्यैवावसर इति । ना० शा० १८.५५ अधिकृत्य भारती ।

२. ना० शा० १८.५१ अधिकृत्य भारती ।

३ आभिः प्रकरणं त्रेधा संकीर्णं धूर्तसंकुलम् । दश० ३.४२

## नाटिका

नाटकप्रकरणयोर्योगात् नाटिका सम्भवात। तत्र नायको नृपतिः। नायिकान्त:पुरकन्या, संगीतशाला-कन्या वा प्राप्तव्या भवेत्। वस्तु उत्पाद्यं स्यात्। तत्र स्त्रीणा बहुलता प्रवर्तते। अर्थात् स्त्रीणा कार्याणि प्रचुराणि सन्ति। चतुरङ्का नाटिका ललिताभिनयात्मिका भवति। अर्थात् तत्र कैशिकीवृत्तिः प्रधानेति मतमभिनवगुप्तस्य। सा तत्र चतुर्भिरंकैः सम्यक् विलसति।

अपरञ्च भरतानुसारेण सेयं नाटिका

> बहुनृत्तगीतपाठ्या रतिसम्भोगात्मिका चैव।
> राजोपचारयुक्ता प्रसादनक्रोधदम्भसयुक्ता
> नायकदेवीदूतीसपरिजना नाटिका ज्ञेया ॥ १८.५९,६०

अत्र सम्भोगो राज्यप्राप्तिमपि द्योतयति। अभिनवगुप्तः प्रसादन-क्रोधदम्भं विशदयन् व्याख्याति—तत्पूर्व-नायिकागते क्रोधप्रसादवञ्चनैरवश्यं भाव्यम्।

नायकः

धनञ्जयानुसारेण नाटिकाया नायको धीरललितो नृपतिः स्यात्। तत्र अङ्गी रस स्वभावत श्रृंगारः स्यादेव

पूर्वनायिका तु महादेवी एव नवनायिकायाः प्रणय-पथे बाधं समुपस्थापयति। सा धनञ्जयेन परिभाषिता—

> देवी तत्र भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा।
> गम्भीरा मानिनी कृच्छ्रात्तद्वशान्नेतृसगम. ॥ ३.४५

प्राप्या नायिका तु

> नायिका तादृशी मुग्धा दिव्या चातिमनोहरा। ३.४६

वृत्तम्

दशरूपकानुसारेण तु

> अन्त.पुरादिसम्बन्धादासन्ना श्रुतिदर्शनैः।
> अनुरागो नवावस्थो नेतुस्तस्यां यथोत्तरम् ॥ ३.४७
> नेता तत्र प्रवर्तेत देवीत्रासेन शङ्कितः ॥

नाटिकावृत्ते यत् प्रच्छन्नकामितं सविशेषं वर्तते, तत्तु भरतेन स्पष्टीकृतमधोविधिना—

बहुमानेन देवीनां वल्लभाना भयेन च ।
प्रच्छन्नकामित राज्ञा कार्यं परिजनं प्रति ॥
यद्यप्यस्ति नरेन्द्राणां कामतन्त्रमनेकधा ।
प्रच्छन्नकामितं यत्तु तद्धि रतिकरं भवेत् ॥
यद् वामाभिनिवेशित्वं यतश्च विनिवार्यते ।
दुर्लभत्वं च यन्नार्याः सा कामस्य परा रतिः ॥

ना० शा० २२.२०५-२०७

नैतत् खलु धनञ्जयेन दृष्टं निर्दिष्टं वा ।

## भाणः

दशरूपकेषु भरतानुसारेण भाणो नवमं स्थान भजते, धनञ्जयमतेन च तृतीय स्थानं भजते। वस्तुतो भाणो दृश्यकाव्यस्य प्रशस्तोद्देश्यानि सम्यङ् न निर्वर्तयति। रूपकाणा क्रमस्य निर्धारणमभिनवगुप्तानुसारेणाङ्क-संख्यादृष्ट्या त्रिवर्गोपायत्वप्राधान्यापेक्षया च भरतेन कृतम्। अभिनवगुप्तो निर्दिशति यत् नाटकप्रकरणनाटिका विहायान्यरूपकाणां तु त्रिवर्गोपायत्वं नास्ति एकाङ्कत्वात्। डिमस्तु चतुरङ्कोऽपि पश्चान्निर्दिष्ट इत्यत्र तल्लक्षणे कारणं वक्ष्याम ।[1] भरतमतेन समवकारस्तृतीयं स्थानं भजते ।

अभिनवगुप्तो भाणं व्युत्पादयति--

एकमुखेनैव भाण्यन्ते उक्तिमन्तः क्रियन्ते अप्रविष्टा अपि पात्रविशेषा यत्रेति भाणः।[2]

**कथावस्तु**

हास्यरसोचितविटधूर्ताद्यनुप्रवेशेन समानयोगक्षेमो भाण इत्यभिनवगुप्तवचनम्। तत्र एक एव रंगे प्रविष्ट पात्रविशेष आत्मानुभूतं वा शंसति, परगत वा वर्णयति। भाणो बहुचेष्टो भवति। अर्थात् भाणे सामान्यपृथग्गतोपयोग्यस्तु लोकव्यवहारो वेश्याविटादिवृत्तान्तात्मा निरूप्यते।

भाणो विविधाश्रयो भवतीति भरतवचनं तत्रार्थानां तत्सम्बद्ध-लोकानां च वैविध्यमनुसन्दधाति। धनञ्जयो भाणे शौर्यसौभाग्य-सत्त्वं विशेषयति। एतदपि सन्दिग्धमेव वच इति प्रकृतिदर्शनात् प्रतिभाति।

अपरं च भूयसा भारतीवृत्तिरेकाङ्कं वस्तु कल्पितमिति भाणं परिभाषते धनञ्जयः। तत्र सन्धिद्वयं मुखं निर्वहणं च विलसति।

---

१. ना० शा० १८ ६२ अधिकृत्य भारती ।

२. ना० शा० १८ १०७ अधिकृत्य भारती ।

**रसः**

'भाणे वीरश्रृङ्गारौ सूचनीयौ' इति धनञ्जयवचनं साधु न प्रतिभाति। उभयो रसयोः कृत उदात्तप्रकृतिरपेक्ष्यते। तस्या अभाव एव भाणे प्रत्यक्षमेव। भाणेतु विस्मय एव प्रधान इति वदत्यभिनवगुप्त.।[1] श्रृंगाराभास. स्यादेव।

**अभिनयविधानम्**

अभिनवगुप्तानुसारेण भाणे वाचिक आङ्गिकश्चाभिनयो भवति। परसम्बिवचनं स्वयमङ्गविकारैः पात्रविशेषोऽभिनयति। आकाशे शून्ये यानि पुरुषकथितानि स तान्येवानुवदन् सामाजिकान् बोधयति। अभिनयार्थं कार्य-नैरन्तर्यमपेक्ष्यते।

**उपयोगः**

अभिनवगुप्तोऽपि भाणस्य हीनप्रवृत्तिं परिलक्ष्यैवेतस्य समर्थनहेतुं लिखितवान्—बाहुल्येन पृथग्जनव्युत्पत्ति-योनिरूपकमिदं राजपुत्रादीनामपि शम्भलीवृत्तान्तो ज्ञेय एवावञ्चनार्थमिति।

भाणे लास्याङ्गानां स्थितिर्महत्त्वपूर्णेति तेषां विवरणं प्रस्तूयते। अपरविधेष्वपि रूपकेषु लास्याङ्गानां नियोजनं भवत्येव।

## लास्याङ्गानि

रूपकेषु सन्ध्यङ्गवत्, वीथ्यङ्गवद् वा लास्याङ्गानि योज्यानीति भरतेन अभिनवगुप्तेन च प्रतिपादितम्।[2] तद्यथा अन्यान्यपि लास्यविधावङ्गानि तु नाट्योपयोगीनि। लास्यं खलूपरूपकविशेषो वीथीवद् वर्तते।[3] यथा वीथ्यङ्गानि सन्ति तथैव लास्याङ्गानि प्रवर्तन्ते।

धनञ्जयो लास्याङ्गानि परिगणयति—

> गेयं पदं स्थितं पाठ्यमासीनं पुष्पगण्डिका।
> प्रच्छेदकस्त्रिगूढं च सैन्धवाख्यं द्विगूढकम्॥
> उत्तमोत्तमकं चैव उक्तप्रत्युक्तमेव च॥ ३.५२,५३

---

1. उत्सृष्टिकाङ्क-प्रहसनभाणास्तु करुणहास्य-विस्मय-प्रधानत्वात् रंजकरसप्रधानाः। ना० शा० १८.११० अधिकृत्य भारती।
2. अन्यथा सन्ध्यन्तरालानि सामादीनि मदान्तान्येक-विंशतिः लास्याङ्गानि गेयपदादीनि दश यानि वक्ष्यन्ते, तेषां (नाटके) कुत्र निवेशः स्यात्। ना० शा० १९.६९ अधिकृत्य भारती।
3. भाणवच्चैकहार्यं स्याद्बृह्यवस्तु तथा भवेत्। ना० शा० ३१.३३२

स एतेषां विवरणं न प्रस्तौति । भरतेन लास्याङ्गानि परिभाषितानि । तद्यथा,

> आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपबृंहितम् ।
> गायनैर्गीयते शुष्कं तद् गेयपदमुच्यते ॥ १९ १२१

शुष्कमित्यनुकरणीयतया शून्यम् । गायनैरिति न तु पात्रैः । आसनोपविष्टैरिति न तु नेपथ्ये गीयते ।

> प्राकृतं यद्वियुक्ता तु पठेदात्तरस स्थिता ।
> मदनानलतप्ताङ्गी स्थितपाठ्यं तदुच्यते ॥ १९.१२३

आत्तरसमिति रसोपयोगि ।

> आसनमास्यते यत्र सर्वातोद्यविवर्जितम् ।
> अप्रसारितगात्रं च चिन्ताशोकसमन्वितम् ॥ १९ ११५

आसीनं पाठ्यं शोकस्य सहचरम् ।

'तत्र सुकुमारकाकलीप्रायप्रमदागीतमात्रावशेष.' इति अभिनवगुप्त. ।

> नृत्तानि विविधानि स्युर्गेयं गाने च संश्रितम् ।
> चेष्टाभिश्चाश्रय पुंसां यत्र सा पुष्पगण्डिका ॥ १९.१२६

पुरुषाणां कृते स्त्रीपात्राणां पुष्पगण्डिकोक्तेति अभिनवगुप्त ।

अत्र गाननृत्तगीतगतवैचित्र्ययोगात् मालासादृश्यात् पुष्पगण्डिका । तत्र स्त्री पुरुषमाश्रयते स्वचेष्टाभि ।

> प्रच्छेदक स विज्ञेयो यत्र चन्द्रातपाहता ।
> स्त्रिय प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु ॥ १९ १२९

चन्द्रातप इति ज्योत्स्ना तस्या छाया सादृश्यकान्तस्य प्रहर्षार्थविभूषितमिति । ज्योत्स्नेति उपलक्षणम् । मदिरायां वा दर्पणे सलिलेऽथवा नायकस्य छाया दृष्ट्वा विस्मृतव्यलीकाः सन्ति नायिकाः ।[1]

> अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलंकृतम् ।
> नाट्यं पुरुषभावाढ्यं त्रिमूढकमिति स्मृतम् ॥ १९.१३०

त्रिमूढके कोमल-कान्त-पदावली शोभनवृत्तमलंकारनिष्ठताच्च त्रीणि वाग्वैशिष्ट्यानि सन्ति । तत्र काचिन्मुग्धा नायिका पुरुषवन्नटति ।

> पात्र विभ्रष्टसंकेतं सुव्यक्तकरणान्वितम् ।
> प्राकृतैर्वचनैर्युक्तं विदु. सैन्धवकं बुधा ॥ १९ १३१

---

१. ना० शा० १९.१२१ अधिकृत्य भारती ।

सैन्धवके सैन्धवप्राकृतभाषया नायिका गायति, यदा नायक. संकेत-स्थले न संगच्छते। करणमिति वीणावाद्यादि।

मुखप्रतिमुखोपेतं चतुरश्रपदक्रमम्।
श्लिष्टभावरसोपेत वैचित्र्यार्थं द्विमूढके ॥ १९.१३३
न पाठ्यं स्वल्पमप्यत्र प्रकुर्वीत विचक्षणः।
मुखप्रतिमुखोपेत तथा चाचपुटाश्रयम् ॥ ३१.३६०

द्विमूढके द्वयोर्नायकस्य नायिकायाश्च नायिकयोर्वा मोहो व्यावर्ण्यते। अत्र च मनागपि पाठ्यं न कार्यम्। नाभिनयप्रधानम्, अपि तु परिवृत्ति-प्रधानमिति। तत् त्रिमूढकमेव हि तालकाव्यवशात् स्वल्प-शरीरं द्विमूढकमिति अभिनवगुप्त।

उत्तमोत्तमक विद्यादनेकरससश्रयम्।
विचित्रैः श्लोकबन्धैश्च हेलाहावविचित्रितम् ॥ १९ १३४
उत्तमोत्तमके त्वादौ नर्कुटं सम्प्रयोजयेत्। ३१.३६२
श्लोकं विचित्रार्थपदं तथा चैवोपपादयेत्।
ततश्च वस्तुक कार्यमपरान्तकशाखया ॥ ३१.३६३
उत्तमोत्तमकं प्रोक्तं हेलावृत्तिविभूषितम् ॥ ३१.३६४

अभिनवगुप्तानुसारेणोत्तमानि तावल्लास्याङ्गानि, तेषामपादमुत्तमम्।[२] स्थायिनां बहुत्वनूतनत्वाद् घटनादिविचित्रमुक्तम्।[३]

कोपप्रसादजनितं साधिक्षेपपदाश्रयम्।
उक्तप्रत्युक्तमेवं स्याच्चित्रगीतार्थयोजितम् ॥ १९ १३५
यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम्।
मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते ॥ १९.१३६
दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता।
करोति विविधान् भावांस्तद्वै भाविकमुच्यते ॥ १९ १३७

सर्वविधरूपकेषु लास्याङ्गानामुपयोग इति विशदयन्नभिनवगुप्तः प्राह—

अलौकिककैशिक्युपयोगिरसांशे सर्वथोपकारि यद् वैचित्र्यं तल्लास्याङ्ग-द्वारेण। स्वकार्यं तच्च सर्वं दशभिरेव संगृहीतम्। तथा हि—प्रधाने चित्त-वृत्त्यंशे वा वैचित्र्यं विभावाद्यंशे वा उपरञ्जकभावे वा। तत्र विभावांशगतं तु वैचित्र्यं सैन्धवकात् काव्याद्यंशे, स्थितपाठ्याल्लक्षणगुणाद्यंशे, त्रिमूढकादनु-

१. ना० शा० १९.३६०-३६२ अधिकृत्य भारतीमनुसृत्य।

२. ना० शा० १९ १३४ अधिकृत्य भारती।

३. तत्रैव।

वृत्तांशे, पुष्पगण्डिकात आहार्ये, उपरञ्जकगीतातोद्ययोजने च, सात्त्विके आसीनपाठ्यात्, उपरञ्जकभावेऽपि निःशब्दाद्, ध्रुवागानभागे सर्वातोद्ययोगे च गेयपदात्, गीतार्थस्य पात्रे करुणार्थाभिनये उक्तप्रत्युक्ताद्वाचिकस्य, स्वरतालानुसरणात् द्विमूढकात्। तत एवाङ्गिकवैचित्र्यमपि व्यभिचार्यंशे तु वैचित्र्यमुत्तमोत्तमकात्।[१]

लास्याङ्गानि तु नाट्योपयोगीनि, न तु नाट्याङ्गानीति अभिनवगुप्तेन सम्यग् व्याख्यातम्।[२]

## प्रहसनम्

प्रहसनं तु वस्तुतो रञ्जना-प्रधानं हास्यप्रायं भवति। तत्तु द्विविधम्—शुद्धम्, संकीर्णञ्च।

### शुद्धं प्रहसनम्

भगवत्तापसविप्रैरन्यैरपि हास्यवादसम्बद्धम्।
कापुरुषसम्प्रयुक्तं परिहासाभाषणप्रायम्॥
अविकृतभाषाचारं विशेषभावोपपन्नचरितपदम्।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु॥ १८.१०३-१०४

भगवत्तापसविप्रा यतिवानप्रस्थगृहस्थाः, अन्ये शाक्यादयस्तैरुपलक्षितम्। एते तत्र कथापुरुषा न सात्त्विका, अपितु कुत्सिता एव सन्ति।

भरतानुसारेण प्रहसने शुद्धे सति तत्र पात्राणां भाषा आचारश्च नासत्याश्लीलरूपौ।

कथाखण्डानि (पदानि) तत्र व्यभिचारैरुपपन्नानि भवेयुः। परिहासभाषणानि प्रहसने भवन्ति। अभिनवगुप्तानुसारेणैकस्यैव कस्यचिच्चरितं दुष्टत्वात् प्राधान्येन प्रहस्यते।

### सङ्कीर्णं प्रहसनम्

यस्मिन् प्रहसने वेश्या, चेट, नपुंसकः, विटः, धूर्त बन्धकी च भगवत्तापसादिभिः सह पात्राणि भवन्ति, तत् संकीर्णं प्रहसनं भवति। हास्यास्पदमेव तेषां वेषपरिच्छद-चेष्टित-करणादीनि।[३] धूर्तानां तत्र विवादः स्यात्। वीथ्यङ्गानि प्रहसने सम्यग् विलसन्ति।

---

१. ना० शा० १९.१३७ अधिकृत्य भारती।

२. ना० शा० १९.११७ अधिकृत्य भारती।

३. अत्युल्वण चाकल्पादि। ना० शा० १८.१०५ अधिकृत्य भारती।

**अङ्कसंख्या**

भरतेन प्रहसनेऽङ्कसंख्या न निर्धारिता। अभिनवगुप्तः शुद्धं प्रहसनमेकाङ्कं भवति, संकीर्णमनेकाङ्कमित्यन्येषां मतमुद्धरति। प्रायशः प्रहसनानि एकाङ्कानि सन्ति। लटकमेलके हास्य-चूडामणौ चाङ्कद्वयमस्ति।

धनञ्जयस्तावद् भारतीयं शास्त्रं न सर्वथा समर्थयति प्रहसन-विषये। तदनुसारेण तु प्रहसनं त्रिविधं भवति—शुद्धं, विकृतं, संकीर्णञ्च।

धनञ्जयस्य शुद्धं प्रहसनमस्ति—

पाखण्डिविप्रप्रभृति चेट-चेटी - विटाकुलम् ।
चेष्टितं वेषभाषाभिः शुद्धं हास्यवचोऽन्वितम् ॥

दश० ३ ५४,५५

इदं शुद्धं प्रहसनं तु भरतस्य संकीर्णप्रहसनेन समम्। धनञ्जयस्य विकृतं प्रहसनं तावत् विशिष्टमेव—

कामुकादिवचोवेषैः षण्ढकंचुकितापसैः। ३.५५

नैतन्मतं भरतस्येति प्रागेव निर्दिष्टम्। स तु विकृतं नाम प्रहसनं न प्रतिजानीते।

धनञ्जयस्य संकीर्णं प्रहसनं तु विकृतमेव वीथ्यङ्गैः संकीर्णत्वाद् भवति।[1] एतन्मतं सर्वथा निराधारमेव, यतो हि नाम वीथ्यङ्गानि तु सर्वविधेषु प्रहसनेषु विलसन्त्येवेति भरतेन स्पष्टमेव प्रोक्तम्—

वीथ्यङ्गैः संयुक्तं कर्तव्यं प्रहसनं यथायोगम्। १८.१०

**वृत्ति**

वाग्व्यापारस्य प्रधानत्वात् प्रहसने भारतीवृत्तिः भृशं विलसति।

धनञ्जयः प्रहसनं भाणवन्मन्यते।

### डिमः

अभिनवगुप्तानुसारेण डिमो डिम्बो विद्रव इति पर्यायाः। तद्योगादयं डिमः। नाटकतुल्यं सर्वमन्यत् केवलं सन्धीनां रसानां चासमग्रता। भरतो डिमं परिभाषते—

प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव।
षड्रसलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ॥

---

१. धनञ्जयः प्रकरणस्य संकीर्णता धूर्तपात्राणां योगेन मन्यते—आभिः प्रकरणं त्रेधा संकीर्णं धूर्तसंकुलम् दश० ३.४२। अत्रापि प्रहसनसंकीर्णता धूर्तपात्राणां योगेन मन्तव्यासीत्, यथा भरतेन निर्णीतम्।

शृङ्गार-हास्यवर्जः शेषैः सर्वैं रसैः समायुक्तः ।
दीप्तरसकाव्ययोनिः नानाभावोपसम्पन्नः ॥
निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः ।
युद्धनियुद्धाधर्षण-सम्फेटकृतश्च कर्तव्यः ॥
मायेन्द्रजालबहुलो बहुपुस्तोत्थानयोगयुक्तश्च ।
देवभुजगेन्द्र - राक्षसयक्षपिशाचावकीर्णश्च ॥
षोडशनायकबहुलः सात्वत्यारभटी-वृत्तिसम्पन्नः ।
कार्यो डिमः प्रयत्नान्नानाश्रयभावसम्पन्नः ॥ १८.८८

अभिनवगुप्तानुसारेण 'नानाश्रय-भाव-सम्पन्न' इत्यनेन सर्वभावयुक्तत्वादितिवृत्तवैचित्र्यमाह ।'

डिमे प्रवेशकविष्कम्भकयोर्निषेध, किन्तु चूलिकाङ्कावताराङ्कमुखानामुपयोगो वर्तते ।

धनञ्जयेन नायकस्यौदात्त्यं न चर्चितम्, यथा भरतेन कृतम् । यदि नाम धीरोदात्तो नायकस्तर्हि वीरस्यैवाङ्गित्वं प्रतिपादनीयम् । धनञ्जयो रौद्ररसमेवाङ्गिनं मन्यते । अभिनवगुप्तस्तु डिमे वीररौद्रयोः प्राधान्यं व्याकरोति ।[1]

## व्यायोगः

अभिनवगुप्तानुसारेण व्यायोगस्तु डिमस्यैव शेषभूतः । नायकस्तु उदात्तो राजादिः, अमात्यः, सेनापतिः दीप्तरसस्य योग्याः न देवा ऋषयो वा । भरतानुसारेण व्यायोगे—

बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे । १८.९१

अर्थात् द्वादश कथापुरुषा भवन्ति ।

भरतो व्यायोगं परिभाषते—

व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः ।
अल्पस्त्रीजन - युक्तस्त्वेकाहकृतस्तथा चैव ॥
बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा समवकारे ।
न च तत्प्रमाणयुक्तः कार्यस्त्वेकाङ्क एवायम् ॥

---

१. समवकारे तु यद्यपि हि शृंगारादित्वमुक्तं तथापि वीर एव प्रधानो रौद्रो वा । डिमव्यायोगयोरप्येवम् । ना० शा० १८.११० अधिकृत्य भारती ।

न च दिव्यनायककृत कार्यो राजर्षिनायकनिबद्ध ।
युद्ध-नियुद्धाधर्षण-संघर्षकृतश्च कर्तव्य ॥
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ॥ १८ ९०-९१

नियुद्धं बाहुयुद्धम् । संघर्षं शौर्य-विद्याकुलरूपादिकृता स्पर्धा ।

भरतमननुसृत्य धनञ्जयो धीरोद्धतमेव नायक व्यायोगस्य मन्यते ।[1]

### समवकारः

त्रिवर्गोपाय-प्रस्तुतिमपेक्ष्य भरतो रूपकेषु नाटकप्रकरणयोरनन्तरं समवकारं तृतीयमिति स्थापयति । न तावद् धनञ्जय एवं प्रतिष्ठापयति समवकारम् । सम्बद्धोऽवकीर्णश्च यत्रार्थः समवकार इति नाम सार्थकम् ।

#### नायक·

समवकारे प्रख्यातो नायको देवः स्यात् ।[2] स तु धीरोदात्तो भवति ।[3] तत्र कथापुरुषा त्रिषु अङ्केषु द्वादश स्युः, प्रत्येकशश्चत्वारो वा सर्वे मिलिताः संघाता द्वादश वा । असुरस्तु प्रतिनायकः ।

#### कथावस्तु

अप्रतिसम्बद्धकथावस्तु अङ्कत्रये विभक्तं स्यात् ।[4] तत्र कपटत्रयं विद्रवत्रयं च स्याताम् । घटनावधिस्तु अष्टादशनाडिकाः कथाया वर्तते ।[5] बीजेऽङ्कत्रयार्थं उपक्षेप्तव्य । अर्थ. प्रत्येकस्मिन्नङ्के पूर्णोऽपि असम्बद्ध सन्नपि- तृतीयेऽङ्के फलानुवर्ती ।[6]

#### अङ्के नाडी-विधानम्

प्रथमेऽङ्के कामशृंगार· प्रयोज्य. । तत्र कार्य द्वादशनाडिकाविहितं स्यात् । तत्र कार्यविधौ प्रहसनकपट-विद्रवाणा वैशिष्ट्यं भवति । वीथ्यङ्गानि तत्र भवेयु. ।

---

१ ख्यातोद्धतनराश्रयः । दश० ३.६०

२. देवासुरा अपि चाप्रख्याता बृहत्कथादौ श्रूयन्ते, स्वय वा केनचिदूह्यन्ते इति तन्निरासार्थं प्रख्यातपदम् । ना० शा० १८.६३ अधिकृत्य भारती ।

३. स्वभावतस्तु देवा मनुष्यापेक्षया धीरोद्धतास्तथापि स्वापेक्षया गाम्भीर्यप्रधानतयोदात्ता उच्यन्ते ।

४. अप्रतिसम्बद्धमिति किञ्चित् सम्बद्धम्, न तु पूर्णतयासम्बद्धमिति अभिनवगुप्त ।

५ नाडिका मुहूर्तार्धं भवति । अहोरात्रे ३० मुहूर्ता भवन्ति ।

६. न त्वङ्कोऽङ्क· परस्परम् । १८.६६

द्वितीयेऽङ्के घटिकाचतुष्टयगामिभिः कपटादिभिरुपायै कार्यं प्रवर्तते।

तृतीयाङ्के द्विघटिकान्तरसम्पाद्यैरुपायै. कार्यं समाप्यते।

**विद्रवः**

समवकारे त्रिविधो विद्रवो भवति—अचेतनकृत, चेतनकृत, चेतनाचेतनकृत इति।[1] अचेतनकृतो जलवाय्वादिनोत्पद्यते, चेतनकृतो विद्रवः सिंहगजेन्द्राभ्याम्, चेतनाचेतनाभ्यां कृतो विद्रवो नगरोपरोधयुद्धाग्निभि र्भवति।

**कपट**

त्रिविध कपटोऽङ्कत्रये क्रमशो भवति। अपराधविहीनो यदि कपटन दण्ड्यते स प्रथमविधो वस्तुस्वभावेन बुद्ध्या वा जनित कपट। यदि कपटवञ्चित सापराधस्तर्हि द्वितीयविध कपट परप्रयुक्त। तृतीय कपटः दैवकृत.। तत्र कश्चिन्नायकोऽपचयेनापरश्चोपचयेन युज्यत इति।

**शृङ्गार**

समवकारे त्रिविध शृङ्गार—धर्मे, अर्थे च कामे च विलसति। कामशृंगाराय परस्त्री नायिकात्वेनाभिप्रेता। यथा शक्रस्याहल्या। धर्मार्थे शिवस्य पार्वती अभीप्सिता। अर्थार्थे तु पद्मावती स्यादुदयनस्य नायिका।

**छन्दांसि**

उष्णिग्, गायत्री, अपराणि च विषमार्धसमानि वृत्तानि समवकारोचितानि सन्ति।

धनञ्जयस्तु समवकारस्य परिभाषायां कतिपय-विशेषान् प्रपञ्चयति। तथा हि, समवकारस्य नाटकवदामुखं भवति। तत्र कैशिकीवृत्तिर्न भवति।[2] वीररसस्य तत्र प्राधान्यमस्ति। प्रथमेऽङ्के सन्धिद्वयमस्ति। बिन्दुप्रवेशकौ समवकारे न स्त.। यथा प्रहसने तथा समवकारेऽपि वीथ्यङ्गानि स्युः।

अभिनवगुप्तानुसारेण समवकारे बहूनां लोकानां स्वभावत रञ्जनं भवति। तद्यथा—एवं श्रद्धालवो देवताभक्ता. तद्देवयात्रादावनेन प्रयोगेणानुगृह्यन्ते, निरनुसन्धानहृदया स्त्रीबालमूर्खाश्च विद्रवादिनाहृतहृदया क्रियन्ते।

---

१ यस्माद् विद्रवन्ति जना स विद्रव. इति अभिनवगुप्त।

२ यदि नाम शृंगारत्रयं समव ारेऽस्ति, तर्हि कथ कैशिकीवृत्तिर्न स्यादिति समाधेयम्। अभिनवगुप्तानुसारेण तत्र नर्माद्यङ्गचतुष्कतद्रूपरञ्जकगीतनृत्यवाद्याद्यभावाद् कैशिक्या हीना अत्र वृत्तय सन्ति।

## वीथी

अभिनवगुप्तानुसारं तु वीथ्या माहात्म्यं सविशेषमेव । तत्र किं-कारणम्—सर्वरसमयत्वात्, अविततस्वभावत्वाच्च संक्षेपेण व्युत्पत्तिदायिनीत्वेन प्रधानभूतत्वात्तदङ्गाना च नाटिकादि-भाणान्त-समस्त-रूपकोपजीव्यत्वाद् वीथी महत्त्वपूर्णास्ति ।

**नेता**

भाणवद् वीथी एकहार्या, आकाशपुरुषभाषितैर्भवेत् । अपरो भेदो वीथ्या द्विहार्य इति उक्ति-प्रत्युक्ति वैचित्र्येण निष्पद्यते ।

**वृत्तिः रसादय**

वीथ्यां कैशिकीवृत्तिर्यथानाम विलसति । फलतः शृङ्गार प्रधानो रसः सूच्य एव । तत्र वीथ्यङ्गानि आत्मनीनान्येव विलसन्ति ।

**वीथ्यङ्गानि**

वीथ्या अङ्गानि त्रयोदश सन्ति—उद्घात्यम्, अवलगितम्, प्रपञ्चः, त्रिगतम्, छलनम्, वाक्केली, अधिबलम्, गण्ड., अवस्यन्दितम्, नालिका, असत्प्रलाप, व्याहार., मृदवम् । एतेषु प्रथमद्वयमामुखाङ्गत्वादामुख-प्रकरणे वर्णितम् । शेषभूतानि वीथ्यङ्गानि लक्ष्यन्ते ।

**प्रपञ्च**

यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परं यत्तु ।
एकस्य चार्थहेतोः स हास्यजनन प्रपञ्च स्यात् ॥

**त्रिगतम्**

वीथ्यङ्गस्य त्रिगतं पूर्वरंगस्य त्रिगताद् भिन्नमेव । अत्र त्रिगतं तु—

श्रुति-सारूप्याद्यस्मिन् बहवोऽर्था युक्तिभिर्नियुज्यन्ते ।
यद् हास्यमहास्यं वा तत् त्रिगतं नाम विज्ञेयम् ॥

**छलनम्**

अन्यार्थमेव वाक्यं छलनमभिसन्धानरोषकरम् ।

**वाक्केली**

एकद्विप्रतिवचना वाक्केली स्यात् प्रयोगेऽस्मिन् ।

**अधिबलम्**

भरतो धनञ्जयश्चोभौ परस्परमहमहमिकया विशेषवचनप्रस्तावोऽधिबलमिति मन्येते ।[1] अधिबलं भिन्नमेव—अभिसन्धिरितिगर्भसन्धेरङ्गात् ।

---

१. अन्योऽन्यार्थविशेषकमधिबलमिति तद्बुधैर्ज्ञेयम् । ना० शा० १८.१२३
अन्योन्याधिक्योक्तिः स्पर्धयाधिबलं भवेत् । दश० ३ १८

**गण्ड:**

भरतो गण्डं विस्तरेण परिभाषते—

> संरम्भसम्भ्रमयुतं विवादयुक्तं तथापवादकृतम् ।
> बहुवचनाक्षेपकृतं गण्डं प्रवदन्ति तत्त्वज्ञा ॥ १८.१२६

तत्र गण्डवचनस्य चत्वारि विशेषणानि सन्ति—संरम्भ-संभ्रमयुतम्, अपवादकृतम्, विवादयुक्तम् बहुवचनाक्षेपकृतमिति। अस्मिन् प्रकरणेऽपवादस्तु पूर्वोक्तवस्तुनोऽपवदनमेव । बहुवचनाक्षेपस्तावत् पूर्ववचनस्यासमाप्तिकारणाद् सम्भवति।

धनञ्जयः संक्षेपेण गण्डं परिभाषते। तद्यथा

> गण्ड प्रस्तुतसम्बन्धि भिन्नार्थं सहसोदितम् ॥ ३ १८

अत्र भरतेनोदितानि विशेषणानि न लक्षितानि । गण्डे तु पूर्व-विश्रान्तमपिवाक्यमुत्तरवाक्येन संश्लिष्यते । तदेव संश्लेषणं कमपि अदृष्टपूर्वमर्थं भाविनमपि दर्शयति। इदमेव गण्डत्वम्। गण्डस्तु साधारणतो-ऽनर्थमेव द्योतयति।[1] अतएव गण्डनाम सार्थकम्।

गण्डस्य वक्ता तदर्थमेव रंगं सहसा प्रविशति।

**अवस्यन्दितम्**

अभिनवगुप्तानुसारेणाबुद्धिपूर्वकं कुत्रचिदर्थे आक्षिप्तेऽपि कौशला-त्तत्प्रच्छादनेच्छया यत्रोत्तरोऽन्योऽर्थ उच्यते तदवस्यन्दितम् । तत्र भरतस्य कारिकाधोलिता—

> आक्षिप्तेऽर्थे तु कस्मिंश्चिच्छुभाशुभसमुत्थिते ।
> कौशलादुच्यतेऽन्योऽर्थस्तदवस्यन्दितं भवेत् ॥

एतदेव धनञ्जय संक्षेपेण परिभाषते—

> रसोक्तस्यान्यथा व्याख्या यत्रावस्यन्दितं भवेदिति।

कस्यापि प्रयुक्तपदस्य वस्तुत पूर्वमनभिप्रेतमुत्तरवाक्येषु व्याख्यायते इति अवस्यन्दनं भवति।

**नालिका**

प्रहेलिकैव नालिका भवति, यदि नाम सा हास्यार्थं प्रयुज्यते । तत्र नर्मादि-क्रीडाभावस्यावश्यम्भावित्वम् । धनञ्जयो नालिकाया नवं विशेषणं निगूढार्था इति योजयति। तत्तु व्यर्थमेव। निगूढता प्रहेलिकायां भवत्येव।

---

१ यथा उत्तररामचरिते परममह्यस्तु विरह उपस्थितः।

**असत्प्रलापः**

भरतानुसारेणासत्प्रलापस्तु मूर्खैर्विदुषां हितवचनस्याग्रहणं स्यात् । तद्यथा,

> मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान्
> न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ ।। १८ ११८

अभिनवगुप्तस्तु असत्प्रलापे श्लेषेण द्विविधं तत्त्वमावश्यकं मन्यते हितं प्रियं च । तत्र मूर्खं प्रियं गृह्णाति हितं च न गृह्णातीति । असतोऽसाधुभूतस्य वस्तुन प्रलपनमस्मिन्निति असत्प्रलापः ।[1]

धनञ्जयस्तु भिन्नमेव परिभाषते—

> असम्बद्धकथाप्रायोऽसत्प्रलापो यथोत्तरः । ३.२०

एतत्तु व्याख्यातं धनिकेन—उत्स्वप्नायित-मदोन्माद-शैशवादीनामसम्बद्धप्रलापितैव विभाव ।

**व्याहारः**

भरतानुसारेण व्याहारस्तु हास्यलेशार्थं प्रत्यक्षवृत्तिरेव कस्यचिदुक्ते । अभिनवगुप्त एतद् व्याख्याति - प्रत्यक्षशब्देन भावी प्रत्यक्ष उच्यते । तदयमर्थ. - भाविनि प्रत्यक्षेऽर्थे दैववशात् वृत्तिर्यस्य स व्याहार. । विविधोऽर्थोऽभिनीयते येन । यथा, उद्दामोत्कलिका" इत्यादि ।[2] तत्र हास्यस्य मात्रा स्वल्पैव ।

धनञ्जयस्तावदन्यथा परिभाषते व्याहारम् । तद्यथा,

> अन्यार्थमेव व्याहारो हास्यलोभकरं वच । ३.२०

अर्थात् किमप्यनुक्तमुद्दिश्य व्याहार-वचनं भवति, येन हास्यं लोभश्च प्रथमत. प्रकटीभवत ।

**मृदवम्**

भरतानुसारेण—

> यत्कारणाद्गुणानां दोषीकरणं भवेद् विवादकृतम् ।
> दोषगुणीकरणे वा तन्मृदवं नाम विज्ञेयम् ।।

अत्र विवादप्रसङ्ग आवश्यक इति भरतो मनुते । नैतन्मतं धनञ्जयस्य । तदनुसारेण केवलं 'दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ।'

---

१. सर्वथा योऽक्षविजयी सुरासेवनतत्परः ।
तस्यार्थाना सुखाना च समृद्धि. करगामिनी । इत्युदाहरणम्

२. रत्नावली २.४

अभिनवगुप्तस्तु मृदवस्य व्युत्पत्तिमनुसृत्य व्याख्याति—मृदवमितिमर्दनं-मृत्परपक्षमर्दनेन स्वपक्षमवति रक्षतीति। नैतद्वच उदाहरणमनुधावति।

**नायक**

वीथ्यां सर्वे रसा भवितुमर्हन्ति। रसाना प्राधान्यादुत्तमो, मध्यमोऽधमो वा नायको भवत्येव। तथा च कोहल·—

उत्तमाधममध्याभिर्युक्ता प्रकृतिभिस्तथा।
एकहार्या द्विहार्या वा सा वीथीत्यभिसञ्ज्ञिता॥

## उत्सृष्टिकाङ्क

उत्सृष्टिकाङ्कस्यापरं नाम अङ्क एव। अभिनवगुप्तानुसारेणोत्क्रमणीया सृष्टिर्जीवितं प्राणा यासां ता उत्सृष्टिकाः शोचन्त्य स्त्रियस्ताभिरङ्कित इति।

**कथावस्तु**

'अङ्के कथावस्तु प्रख्यातमप्रख्यातं वा विकल्पेन भवति' इति भरतः। अत्र धनञ्जयस्य वैषम्यं वर्तते। तदनुसारेण केवलं प्रख्यातमेवाङ्कस्य वस्तु भवितुमर्हति।[1] भरतानुसारेणाङ्कस्य कथा युद्धवृत्तस्य पश्चात् प्रारभ्यते। नैतदपि धनञ्जयेन गृहीतम्। विपरीतमेव स लक्षयते यत्।

वाचा युद्धं विधातव्य तथा जयपराजयौ। ३.७२

भरतानुसारेण तु युद्ध-समारम्भस्तत्र न सम्भवेत्। जयपराजयस्य तत्र का कथा।

अभिनवगुप्त स्पष्टयति—भारतादियुद्धे यत्करुणबहुलं चेष्टितं वर्ण्यते, तत्ख्यातं स्त्रीपर्ववृत्तान्तवत्।

स्त्रीणा परिदेवना, अन्येषा च निर्वेदभाषणं स्याताम्। व्याकुलचेष्टा. सन्तु नाम।

**नायक**

अंके देवा नायका न स्यु।[2] धनञ्जय केवलं प्राकृतं नरमेव नायकं निर्दिशतीति विपरीतमेव।[3]

**वृत्तिः**

अंके केवलं भारती वृत्तिरेव स्यात्। तद्यथा भाणे भवति। धनञ्जयानुसारेणाङ्के भाणवत् सन्धि-वृत्त्यङ्गानि सन्ति।

---

१ प्रख्यातवस्तु विषयस्त्वप्रख्यात. कदाचिदेव स्यात्। ना० शा० १८.८४
उत्सृष्टिकाङ्के प्रख्यातं वृत्त बुद्ध्या प्रपञ्चयेत्। ३ ७

२ दिव्यपुरुषैर्युक्तः। ना० शा० १८ ८४

३ नेतार. प्राकृता नराः। दश० ३ ७१

रसः

करुणरसः स्थायी स्यादंके।

### ईहामृगः

ईहामृगस्य व्युत्पत्तिमभिनवगुप्त आह—ईहा चेष्टा मृगस्येव स्त्रीमात्रार्था यत्र, स ईहामृगः।

कथावस्तु

ईहामृगे दिव्यस्त्रीकारणोपगतं युद्धं भवति। तत्र वस्तु सुविहितं (सुश्लिष्टम्) सुसमाहितं च स्यात्।[1] काव्यबन्धश्च विप्रत्ययकारकः (विश्वास-हेतु-रहित) स्यात्। संक्षोभ, विद्रव., सम्फेटश्च सन्ध्यङ्गानि योज्यानि। स्त्रीभेदनप्रहरणावमर्दनेषु श्रृंगाररस प्रवर्तते। न तत्र संघर्षे युद्धं भवेत्। युद्धं तु केनापि व्याजेन शमयितव्यमेव।

धनञ्जयस्तु मिश्रं वस्तु ईहामृगे लक्षयते। तत्तु प्रथमपदेऽभारतीयमेव। अन्यच्च मिश्रं नाम वस्तु न भवत्येवेति प्रागेव प्रतिपादितम्। धनञ्जय ईहामृगे त्रयश्चत्वारो वाङ्का भवेयुरिति नियमयति। भरत ईहामृगमेकाङ्कं मन्यते।

नायकः

ईहामृगे नायको देव एव स्यात्। बहव उद्धत-पुरुषा अपि कार्येषु नियुक्ता. सन्ति। तेषां रोषः स्त्रीनिमित्तक एव स्यात्। नायिका तु दिव्यस्त्री प्रागेव प्रतिपादिता। नायकाना संख्या व्यायोग-समवकारवद् द्वादश भवति। भरतो-विस्पष्टयति।

यद् व्यायोगे कार्यं ये पुरुषा वृत्तयो रसाश्चैव।
ईहामृगेऽपि ते स्युः केवलममरस्त्रियायोगः॥१८.८१

भरत-धनञ्जययोर्भेदः

भरतानुसारेण नायक केवलं दिव्यः पुरुष एव स्यात्। धनञ्जयस्तु नरो वा दिव्यो वा नायको भवेदिति भरतं न सम्यगनुसरति।[2]

---

१. अभिनवगुप्तो व्याख्याति—सुविहित इति समवकारवत् असम्बद्धार्थता तत्र न भवेदिति। पुनश्च स कथयति—सुसमाहित काव्यबन्ध इत्यनेन वीथ्यङ्गानि अत्र योज्यानीति।

२. नरदिव्यावनियमान्नायक-प्रतिनायकौ। ३.७३

भरतानुसारेणाङ्क एक एव तत्र स्यात्, किन्तु धनञ्जयोऽङ्काश्चत्वारो-भवेयुरिति नियमयति ।[1]

सन्धि-विषयेऽपि धनञ्जयस्य वैषम्यं वर्तते । स सन्धित्रयं समर्थयति । चतुरंकेषु सन्धित्रयं सम्भवेत्, किन्तु भरतानुसारेणैकस्मिन्नङ्के सन्धिद्वयमेव कल्पनीयम् ।

## रूपकेषु रस-योजना

अभिनवगुप्तो विविधरूपकेषु को रसो विलसतीति सम्यग् व्याख्यात-वान् ।[2] तथा हि—सर्वरस-योग्यतायामपि नाटके प्रकरणे च धर्मार्थादिवीर एव प्रधान, परमार्थतः सर्वेषु नायकभेदेषु वीरत्वानुगमदर्शनात् ।[3] समवकारे तु यद्यपि शृङ्गारा-दित्वमुक्तं तथापि वीर एव प्रधानः रौद्रो वा । डिमव्यायोगयोरप्येवम् । ईहामृगेऽपि रौद्रप्राधान्यमेव । नाटिकाया तु शृङ्गार एव प्रधानः । एवं तावद् वीररौद्रशृङ्गारा यथास्वं पुमर्थत्रयप्राणभूतत्वेन वर्तमाना, एतेषु प्रयोगेषु शान्तबीभत्सरसौ तु चरमपुमर्थयोगात्तत्र च सर्वस्य नाधिकारोऽपि कस्यचिद-पश्चिमजन्मनोऽधिकाराान्नाटके यद्यपि तत्फल-प्रधानतया प्राधान्यमवलम्बेयातां, तथापि नासौ प्रचुरप्रयोग इति तयो पुरुषार्थप्रवरप्राणितयोरपि वीरादिरसान्तरा-द्यावापेनावस्थापनम् ।

उत्सृष्टिकाङ्कप्रहसनभाणास्तु करुणहास्यविस्मय-प्रधानत्वाद् रञ्जकरस-प्रधाना. । तत एव स्त्री बालमूर्खादिरधिकारी ।

सर्वान्ते सर्वरसमयत्वादविततस्वभावत्वाच्च वीथी लक्षयति ।

---

१. मिश्रमीहामृगे वृत्तं चतुरङ्कम् । दश० ३.७२ । कार्यशब्देनाङ्क उच्यते । तेनैक एवाङ्कः । ना० शा०-१८. ८१ अधिकृत्य भारती

२ ना० शा० अष्टादशाध्याये पृ० ४५१ गा० ओ० सी० ।

३. इदं लक्षणं तु विलक्षणमेव, यतो हि नामानेन च स्वप्नवासवदत्ताविमारकाभिज्ञान शाकुन्तल-मृच्छकटिकादिषु वीररसो विलसतीति कश्चिदभिनव एव रसाधिकार ।

## रस-स्वरूपम्

दृष्टपूर्वा अपि ह्यर्था काव्ये रस-परिग्रहात् ।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥ध्वन्यालोके ४·४

भरत आदौ प्रोक्तवान्—

तत्र विभावानुभावव्यभिचारिसंयोगाद् रस-निष्पत्ति ।[1] नेयं परिभाषा रसस्यापि तु कथं नाम रसो जायते इत्यत्र व्याख्यातम्। रसस्य परिभाषा-पथेऽग्रेसरो भरतः प्राह—रस इति क. पदार्थ.। उच्यते—आस्वाद्यत्वात्। कथमास्वाद्यते रसः ?

यथा हि नाना व्यञ्जन-संस्कृतमन्न भुञ्जाना रसानास्वादयन्ति, सुमनस पुरुषा हर्षादींश्चाधिगच्छन्ति, तथा नानाभावाभिनय-व्यञ्जितान् वागङ्ग सत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनस प्रेक्षका हर्षादींश्चाधिगच्छन्ति। तस्मान्नाट्यरसा इत्यभिव्याख्यातम्।[2]

अत एवेदं स्फुटति यत् स्थायी भाव एवास्वाद्यमानो रस स्यादिति भरतमतम्।[3]

---

१. अत्राह—यथा हि नानाव्यञ्जनौषधिद्रव्यसयोगाद् रस-निष्पत्ति., तथा नानाभावोपगमाद् रस-निष्पत्ति । यथा हि गुडादिभिर्द्रव्यैर्व्यञ्जनैरौषधिभिश्च षाडवादयो रसा निर्वर्त्यन्ते तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्तीति ।
ना० शा० षष्ठाध्याये पृ० २८७-२८८ गा० ओ० सी०

२. ना० शा० षष्ठाध्याये पृ० २८९ गा० ओ० सी०

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जना ॥
भावाभिनय-सम्बद्धान् स्थायिभावास्तथा बुधा. ।
आस्वादयन्ति मनसा तस्मान्नाट्यरसा स्मृताः ॥

ना० शा० ६ ३२-३३

३ तथा विभावानुभावव्यभिचारिपरिवृत स्थायीभावो रसनाम लभते। सप्तमाध्याये पृ० ३४९ । गा० ओ० सी०

धनञ्जय इममेवाभिप्रायं स्पष्टयति—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभि ।
आनीयमान: स्वाद्यत्वं स्थायी भावो रस स्मृत. ॥४·१

पण्डितराजो जगन्नाथो रसं परिभाषते—समुचित-ललित-सन्निवेश-चारुणा काव्येन समर्पितै. सहृदय-हृदयं प्रविष्टै तदीयसहृदयता-सहकृतेन भावना-विशेषमहिम्ना विगलित-दुष्यन्त-रमणीत्वादिभिरलौकिकविभावानुभाव-व्यभिचारि-व्यपदेश्यै शकुन्तलादिभिरालम्बनकारणैश्चन्द्रिकादिभिरुद्दीपनकारणैरश्रुपातादिभि कार्यैश्चिन्तादिभि. सहकारिभिश्च सम्भूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्काल-निवर्तितानन्दाशावरणाज्ञानेनात एव प्रमृष्टपरिमित-प्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निज-स्वरूपानन्देन सह गोचरीक्रियमाण प्राग्विनिविष्टवासनारूपो रत्यादिरेव रस.।

पूर्वोक्तपरिभाषासु विभावोऽनुभावो, व्यभिचारिभाव., स्थायी भावश्च सम्यक् परिचेया । तान् लक्षयाम. ।

## विभावः

भरतानुसारेण विभावो विज्ञानार्थं. । विभाव. कारणं निमित्तं हेतुरिति पर्यायाः । विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इत्यतो विभावः । यथा विभावितं विज्ञातमित्यनर्थान्तरम् ।[१]

तदेतदभिनवगुप्तो विशदयति—चित्तवृत्त्युद्भवहेतुर्विषयो विभावशब्द-स्यार्थ. ।[२] वागादयोऽभिनया येषां स्थायि-व्यभिचारिणा ते (स्थायि-व्यभिचारिण·) वागाद्यभिनय-सहिता विभाव्यन्ते विशिष्टतया ज्ञायन्ते यै., ते विभावा. ।

एतदेव भूय. स्पष्टीकृतं पण्डितराजेन—

एवमेषां स्थायिभावानां लोके तत्तन्नायकगताना यान्यालम्बनतयोद्दीपनतया वा कारणत्वेन प्रसिद्धानि, तान्येषु काव्यनाट्ययोर्व्यज्यमानेषु विभावशब्देन व्यपदिश्यन्ते । विभावयन्तीति व्युत्पत्ते ।

---

१. बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रया. ।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥७ ४
विभावोऽपि भाव इति भरतस्य मतम् । एवं ते विभावानुभावसंयुक्ता भावा इति ।

२. चित्तवृत्तिस्तु रतिः प्रेम, उत्साहस्यौन्नत्यम्, हासस्य विकास इत्यादयः ।
यस्याश्चित्तवृत्तेर्यो विषय· स तस्यालम्बनम् । रसगङ्गाधरे प्रथमानने रसभेद-प्रकरणात् ।

धनञ्जयस्तु विभावो भावपोषकृदिति किञ्चिन्नवीनं तत्त्वं लक्षयति। तत्तु सत्यमेव। सोऽयं विभावो द्विविध —आलम्बनविभाव, उद्दीपनविभावश्च। नायकादय आलम्बन-विभावा, तेषा चेष्टादयो देशकालादयश्चोद्दीपन-विभावा। यस्याश्चित्तवृत्तेर्यो विषय·, स तस्या आलम्बनम्। निमित्तानि चोद्दीपकानि।[1]

## अनुभाव:

अनुभावस्तु भरतानुसारेण—

अनुभाव्यतेऽनेन वागङ्गसत्त्वकृतोऽभिनय इति। अत्र श्लोक·

वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते।
शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्तत· स्मृतः॥ ७ ५

तत्र विभावानुभावौ लोकप्रसिद्धौ। भवति चात्र श्लोक

लोकस्वभावससिद्धा लोकयात्रानुगामिन·।
अनुभावा विभावाश्च ज्ञेयास्त्वभिनये बुधै ॥७ ६

धनञ्जयोऽनुभावं परिभाषते—

अनुभावो विकारस्तु भावससूचनात्मकः॥४.३

अर्थात् कश्चिदाश्रय स्थायिभाव-प्रपन्न· संचारिभाव-प्रपन्नश्चेति ज्ञानं तस्य शारीरिकैर्विकारैर्भवति। ते विकारा अनुभावा।

धनञ्जयो भरतमनुसृत्य संवदति—

हेतुकार्यात्मनो सिद्धिस्तयो संव्यवहारत॥४.३

अर्थात् विभावो लौकिकभावं प्रति हेतुरनुभावश्च कार्यमेव।

एतदेव पण्डितराजेन स्पष्टीकृतम्—

यानि च कार्यतया तान्यनुभावशब्देन। अनु पश्चात् भाव उत्पत्तिर्येषाम्। अनुभावयन्तीति वा व्युत्पत्तेः।

विभावानुभावसंचारिणो मम्मटेन भूय स्पष्टीकृता अधोलिखित-कारिकायाम्—

---

1 विश्वनाथ· साहित्यदर्पण आलम्बनोद्दीपनयोर्व्युत्पत्तिं स्पष्टयति—
आलम्बनो नायकादिस्तमालम्ब्य रसोद्गमात्। ६.२९
उद्दीपन-विभावास्ते रसमुद्दीपयन्ति ये।
आलम्बनस्य चेष्टाद्या देशकालादयस्तथा॥ ६.१३२

कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययो ॥
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिण ।
व्यक्त स तैर्विभावाद्यैः स्थायी भावो रसः स्मृत ॥४ २७

सात्त्विकभावास्तु वस्तुतोऽनुभावा एव सन्ति, किन्तु तेषामुत्पत्तिः सत्त्वाद् भवति । अतएव विशिष्टा एव ते पृथग्गणिता ।[1] सत्त्वमन्त करणं तत उत्पन्नत्वात् ते सात्त्विका भावाः । अपरेषु अनुभावेषु आङ्गिकविकारा दृश्यन्ते। सात्त्विक-भावेषु आङ्गिकविकाराः केवलमन्तःकरण-भावनं स्तम्भादिषूपलक्ष्यन्ते ।[2] अभिनवगुप्तानुसारेण 'इह चित्तवृत्तिरेव संवेदनभूमौ संक्रान्ता देहमपि व्याप्नोति' ।[3]

## व्यभिचारिभावा

भरतानुसारेण विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः । वागङ्गसत्त्वोपेता प्रयोगे रसान्नयन्तीति व्यभिचारिणः ।[4]

दशरूपके तूपमाद्वारेण संचारि-स्थायिनोः सामञ्जस्यं प्रकटीकृतम्—

विशेषादाभिमुख्येन चरन्तो व्यभिचारिण ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ॥ ४ ७

संचारिभावा कारणवशादेवाविर्भवन्ति, स्थायिनश्च शाश्वतं मानसे वसन्ति ।

तत्र ३३ भावा संचारिण सन्ति। तेषां प्रत्येकशो विभावा अनुभावाश्च अधोविधक्रमेण निर्वचनीया :—

---

१. स्तम्भप्रलयरोमाञ्च. स्वेदो वैवर्ण्य-वेपथू ।
अश्रु वैस्वर्यमित्यष्टौ स्तम्भोऽस्मिन्निष्क्रियाङ्गता ।
प्रलयो नष्टसंज्ञत्व शेषा सुव्यक्तलक्षणा ॥४.५-६

२. भरत आह —किमन्ये भावाः सत्त्वेन विनाभिनीयन्ते । यस्मादुच्यन्ते—एते सात्त्विका इति । अत्रोच्यते—इह हि सत्त्वं नाम मन. प्रभवम् । तच्च समाहितमनस्त्वादुच्यते। मनस. समाधौ सत्त्वनिष्पत्तिर्भवति । इत्यादि । सप्तमाध्याये पृ० ३७५-६ गा० ओ० सी० ।

३. ना० शा० अध्याय २२ पृष्ठं १५२ गा० ओ० सी०

४. काये विशेषेणाभितो रत्यादीना सञ्चारणं व्यभिचारणम् ।

| संचारिभावा | विभावा | अनुभावा. |
|---|---|---|
| निर्वेद | दारिद्र्यम्, व्याधि, अवमाननम् अधिक्षेप, आक्रोश, ताडनम् इष्टजनवियोगः, तत्त्वज्ञानम् आपत्तिः, ईर्ष्या | रुदितम्, निःश्वसितम्, उच्छ्वसितम्, सम्प्रधारणम्, चिन्ता, अश्रु, वैवर्ण्यम्, दीनता, योगिन इव, ध्यानपरता |
| ग्लानि | वमनम्, विरेचनम्, व्याधि., तप, नियम., उपवास, मनस्ताप, मदनम्, मद्यसेवनम्, व्यायाम., अध्वगमनम्, क्षुधा, पिपासा, अनिद्रा, जरा, आयास. | वाणी-नयन - कपोलोदराणां क्षीणता, मन्दपदोत्क्षेपणम्, वेपनम्, अनुत्साह, तनुगात्रम्, वैवर्ण्यम्, स्वरभेद । |
| शङ्का | चौर्यम्, अपराध, पापम्, परक्रौर्यम्. स्वदुर्नय | मुहुर्मुहुरवलोकनम्, अवगुण्ठनम्, मुखशोषणम्-जिह्वा-परिलेहनम्, मुखवैवर्ण्यम्, स्वरभेदः, वेपथुः, शुष्कोष्ठः, शुष्ककण्ठ, अधोमुखी दृष्टिः, मुखकार्ष्ण्यम् । |
| श्रम | अध्वा, व्यायाम, सेवना नृत्तम्, रति, बहुतर-शरीरव्यापार | गात्रपरिमर्दनम्, संवाहनम्, निःश्वसितम्, विजृम्भितम्, मंदपदोत्क्षेपणम्, नयनवदन विकूणनम्, सीत्कार, स्वेद. निद्रा |
| धृति | शौर्यम्, विज्ञानम्, श्रुतिः, विभव, शौचाचार, गुरुभक्ति, अधिकमनोरथ, अर्थलाभः, क्रीडा | उपभोगः, अव्यग्रता, चापलाद्युपशम. |

| | | |
|---|---|---|
| जडता | इष्टानिष्ट श्रवणदर्शनम्, व्याधि | मौनम्, अप्रतिभा, अनिमेषनिरीक्षणम्, परवशता |
| हर्षः | मनोरथलाभ, इष्टजनसमागमः, मन.परितोषः, गुरुराजभर्तृ-प्रसाद, भोजनाच्छादनलाभोपभोगादय, उत्सवः | नयन-वदनप्रसाद, प्रियभाषणम्, आलिङ्गनम्, रोमाञ्चः, अश्रुस्वेदादयः गद्गदवाणी । |
| दैन्यम् | दौर्गत्यम्, मनस्तापः चिन्ता, औत्सुक्यम् दु.खम्, अपराधः | अधृतिः, शिरोरोग, गात्रगौरवम्, अन्यमनस्कता, स्वच्छता-परिहार, कार्ष्ण्यम्, स्वापकर्षणभाषणम् |
| औग्र्यम् | चौर्यम्, अपराध, असत्प्रलाप | वध, बन्धनम्, ताडनम्, निर्भर्त्सनम्, स्वेद, शिरःकम्प |
| चिन्ता | ऐश्वर्य-भ्रंश, इष्टनाश, दारिद्र्यम्, इष्टानाप्तिः | निःश्वसितम्, उच्छ्वसितम्, सन्ताप, ध्यानम्, अधोमुखचिन्तनम्, तनुकार्श्यम्, हृदय-वितर्कः, शून्यता |
| त्रास | विद्युदुल्काशनिपात., निर्घात., मेघगर्जनम्, हिंस्र-पशु- गर्जनम्, महाभैरवनाद, घोरसत्त्वदर्शनम्, | अङ्ग-संकोचनम्, कंपनम्, वेपथु, स्तंभ, रोमाञ्च, गद्गदवाणी, इन्द्रियशैथिल्यम्, क्षोभ |
| असूया | अपराध, द्वेष., परोत्कर्षः, गर्व, दौर्जन्यम्, मन्यु[1] | परिषदि दोषप्रख्यापनम्, गुणोपघात, ईर्ष्या, अधोमुखता, भ्रूकुटी, क्रियावज्ञानम् कुत्सनम्, अवज्ञा.. क्रोधेङ्गितम्, |

१ अत्र मन्युर्विभावश्चानुभावश्चोभौ भवति ।

| | | |
|---|---|---|
| अमर्षः | अधिक्षेप, अपमान, अवज्ञा, अपराध | स्वेद, शिरःकम्प, तर्जनम्, ताडनम् |
| गर्वः | ऐश्वर्यम्, कुलम्, रूपम्, यौवनम्, बलम्, धनम्, लाभ, विद्यावाप्तिः | असूया, अवज्ञा, आधर्षणम्, अनुत्तरदान-सम्भाषणम्, अङ्गावलोकनम्, विभ्रमः अपहसनम् वाक्पारुष्यम्, गुरु-व्यतिक्रमणम्, अधिक्षेपः, आत्मोत्कर्षज्ञानम्, परावहेलनम् |
| स्मृति | स्वास्थ्यम्, श्रुति समान-दर्शनम्, उदाहरणम्, अभ्यास, चिन्ता | शिरःकम्पः, अवलोकनम्, भ्रूसमुन्नमनम् |
| मरणम्[1] | व्याधिः, अभिघात | विषण्णगात्रता, व्यायताङ्गत्वम्, निमीलितनयनम्, हिक्का, अबोध |
| मद | मद्योपयोग | गायनम्, रोदनम्, हसनम्, परुषवचनम्, स्वपनम्, स्खलितम्, घूर्णितनयनम्, स्रस्तता, आकुलता, बाहुविक्षेपः, कुटिलगति, नष्टस्मृतिः, हतगति, वमनम्, हिक्का, कफ, निष्ठीवनम् |
| सुप्तम् | निद्रा, अभिभव, विषयोपगमनम्, मोहनम्, क्षितितलशयनम्, प्रसारणम्, अनुकर्षणम् | अक्षिनिमीलनम्, उच्छ्वसनम्, निःश्वासः, सर्वेन्द्रियसम्मोहनः, उत्स्वप्नायितम् |

१. न चात्र प्राण-वियोगात्मकं मुख्यं मरणं ग्रहीतुम्। चित्तवृत्त्यात्मकेषु भावेषु तस्याप्रसक्तेः। भावेषु च सर्वेषु कार्यसहवर्तितया शरीरप्राणसंयोगस्य हेतुत्वात्। रसगगाधरे प्रथमाननतः। धनञ्जयोऽन्यथा मन्यत इत्यत्रोवचनेन प्रमाण्यते—मरणं सुप्रसिद्धत्वादनर्थत्वाच्च नोच्यते। दश० ४.२१ इति चिन्त्यम्।

| | | |
|---|---|---|
| निद्रा | दौर्बल्यम्, श्रमः, क्लम , मद., आलस्यम्, चिन्ता, अत्याहारः, रात्रौ जागरणम्. | वदनगौरवशरीरालोकनम्, नेत्रघूर्णनम्, गात्रविजृम्भणम्, मान्द्यम्, उच्छ्वसितम्, सन्नगात्रता, अक्षिनिमीलनम्, अङ्ग-भङ्गः, उत्स्वप्नादय. |
| विबोधः | आहार-परिणाम , निद्राच्छेदः, स्वप्नान्ते तीव्र-शब्द-स्पर्श-श्रवणादि· | जृम्भणम्, अक्षिपरिमर्दनम्, शयनोत्थानम् । |
| व्रीडा | गुरुव्यतिक्रमणावज्ञाने, प्रतिज्ञातस्य अनिर्वहणम्, पश्चात्तापः, दुराचारः | निगूढवदनम्, अधोमुखचिन्तनम्, उर्वी-लेखनम्, वस्त्राङ्गुलीयकस्पर्शनम्, नखनिकृन्तनम् । |
| अपस्मारः | देवादिभिर्ग्रहणम्, अनुस्मरणम्, शून्यागारसेवनम्, व्याधिः | स्फुरितम्, नि श्वसितम्, उत्कम्पितम्, धावनम्, पतनम्, स्वेद . स्तम्भः वदन-फेनमोक्ष., जिह्वा-परिलेहनम् |
| मोह | दैवोपघातः, व्यसनम्, व्याधिः, आवेग·, पूर्ववैरानुस्मरणम्, वियोग , भीतिः, दु.खावेश | निश्चैतन्यम्, भ्रमणम्, पतनम्, घूर्णनम्, अदर्शनम् |
| मति | नानाशास्त्र-विचिन्तनम्, ऊहापोह· | शिष्योपदेश·, अर्थविकल्पनम्, संशयच्छेदः । |
| आलस्यम् | खेदः, व्याधिः, गर्भ , श्रम·, सौहित्यम् । | सर्वकर्मविरति., शयनम्, अ.सनम्, निद्रा, तन्द्रा जृम्भा |

| | | |
|---|---|---|
| आवेगः | उत्पातः, वातः, वर्षा, अग्निः, कुञ्जरोद्भ्रमणं, प्रियाप्रिय-श्रवणम्, व्यसनाभिघात । | अङ्गस्रस्तता, वैमनस्यम्, मुखवैवर्ण्यम्, विषाद, विस्मय, अवकुण्ठनम्, अक्षि-परिमार्जनम्, वस्त्र-संग्रहणम्, त्वरितगमनम्, प्रधावनम्, छन्नाश्रय-मार्गणम्, धूमाकुलनेत्रता, अङ्गसंकोचनम्, विधूननम्, भय-स्तम्भ, वेपथु, पश्चादवलोकनम्, अभ्युत्थानम्, आलिङ्गनम्, वस्त्राभरण-प्रदानम्, अश्रुः, रोमाञ्चः, भूमिपतनम्, विषम-विवर्तनम्, परिधावनम्, विलाप, आक्रन्दनम्, शस्त्रवर्म - चर्मधारणम्, गजतुरगरथा - रोहणम्, सम्प्रधारणम् । |
| वितर्क. | सन्देह-विमर्श-विप्रतिपत्तय. | प्रश्न-सम्प्रधारणम्, मन्त्र., संगूहनम्, अंगुलिनर्तनम् भ्रूनर्तनम्, शिरोनर्तनम् |
| अवहित्थम् | लज्जा-भयापजय- गौरव-जैह्यादीनि | अन्यथा-कथनम्, कथा-भङ्ग, कृतकधैर्यम् |
| व्याधि. | ज्वरादयो रोगा., विरह | गात्रकम्पः, गात्रशैथिल्यम्, मुखविकूणनम्, नि श्वसनम्, |
| उन्मादः | सन्निपात, ग्रह., विप्रलम्भ, महापत्ति, परमानन्द | रुदितम् गीतम्, हास, आसितम्, असम्बद्धोक्ति. |
| विषादः | कार्यासिद्धि, राजगुर्वाद्यपराध स्वापकर्ष., परोत्कर्ष । | नि श्वासोच्छ्वास - हृत्ताप-सहायान्वेषणादीनि, जीवित-निर्याणाशंसा, वदननमनम् । |

| | | |
|---|---|---|
| औत्सुक्यम् | रम्येच्छारतिसम्भ्रमा: इष्टविरहादि·, प्रिय-सस्मृति. । | उच्छ्वास-नि श्वास-हृत्ताप - स्वेद - विभ्रमा:, त्वरा-चिन्तादय , निद्रा, तन्द्रा, गात्रगौरवम्, |
| चापलम् | मात्सर्यम्, द्वेष , राग·, अमर्ष । | भर्त्सनम्, पारुष्यम् स्वच्छन्दाचरणादय आत्मवधेच्छा । |

इमास्त्रयस्त्रिंशत् सचारिभावा सन्ति। अन्येऽपि संचारिभावा· सन्ति स्थायिन एव, यदा ते स्तोकं विभावैरुत्पन्ना. स्यु ।[१] एवं च वीररसे प्रधाने क्रोधो, रौद्रे चोत्साह , शृङ्गारे च हासो व्यभिचारी भवति नान्तरीयकश्च।

आभि. सहाष्टौ सात्त्विकभावान् संयोज्य भावाना संख्या एकोनपंचाशत् निर्णीयते ।

### स्थायिभाव

भरत· स्थायिनां भावाना रसीभवनयोग्यता प्रतिपादयन् तेषामुत्कृ-टतां प्रमाणयति । तद्यथा—यदि काव्यार्थसंश्रितैर्विभावानुभा:व्यञ्जितैरेकोन-पञ्चाशद्भावै सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसास्तत्कथं स्थायिन एव भावा रसत्वमाप्नुवन्ति । उच्यते—यथा हि समानलक्षणास्तुल्यपाणि-पादोदरशरीरा: समानाङ्गप्रत्यङ्गा अपि पुरुषाः कुलशीलविद्याकर्म-शिल्पविचक्षणत्वाद् राजत्वमाप्नुवन्ति, तत्रैव चान्येऽल्पबुद्धयस्तेषामनुचरा भवन्ति, तथा विभावानुभावव्यभिचारिण स्थायिभावानुपाश्रिता भवन्ति। बह्वाश्रयत्वात् स्वामिभूता स्थायिनो भावा. । तद्वत् स्थानीयपुरुषगुणभूता: अन्ये भावास्तान् गुणतयाश्रयन्ते। स्थायिभावा रसत्वमाप्नुवन्ति परिजनभूत-व्यभिचारिणो भावा । अत्राह—को दृष्टान्त इति। यथा नरेन्द्रा बहुजन-परिवारोऽपि स एव नाम लभते, नान्य. सुमहानपि पुरुष "तथा विभावानुभावव्यभिचारिपरिवृत:" स्थायीभावो रसनाम लभते।

---

१. रत्यादय. स्थायिभावा स्युर्भूयिष्ठविभावजा ।
स्तोक विभावैरुत्पन्नास्त एव व्यभिचारिण. ॥
रसगंगाधरस्य प्रथमानने संगीतरत्नाकरादुद्धृतम् ।

भवति चात्र श्लोक —

यथा नराणां नृपति. शिष्याणां च यथा गुरु ।
एवं हि सर्वभावानां भाव स्थायी महानिह ॥ ना० शा० ७.८

भरतस्येदमेव वचनं धनञ्जयो दशरूपके समर्थयति—

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥ ४ ३४

इयं कारिका पूर्वोक्तामधोलिखितां कारिकामनुसरति—

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभि ।
आनीयमान स्वाद्यत्वं स्थायी भावो रस स्मृत ॥ ४.१

भरतमनुसृत्य धनञ्जयो नाट्ये केवलमष्ट स्थायिनस्तेषां रसांश्च विवृणोति ।

रत्युत्साहजुगुप्सा. क्रोधो हास स्मयो भयं शोक ।
शममपि केचित्प्राहु. पुष्टिर्नाट्येषु नैतस्य ॥ ४ ३५

भरतोऽपि नाट्य केवलमष्टरसानामेव पुष्टिं मन्यते[1] इति स्थायी भावो निर्वेदो न सम्मतस्तस्य। तत्र किं कारणम्।

धनञ्जयो ब्रूते—

निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम् ।
वैरस्यायैव तत्पोषस्तेनाष्टौ स्थायिनो मता ॥ दश० ४ ३६

अर्थात् निर्वेदो विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते, अन्यान् भावानात्मभावं न नयति। अतएव स स्थायी भावो नास्ति। फलत शान्तो रसो न भवतीति।

शान्तो रसोऽस्ति नास्ति वेति प्रश्नो भरतस्य नाट्यशास्त्रादेव समुदेति। तेन स्पष्टमेव प्रोक्तम्—

शृंगारहास्यकरुणा रौद्रवीरभयानका ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसा स्मृताः ॥ ना० शा० ६ १५

एषा कारिका धनञ्जयेन समर्थिता। तद्यथा

शृंगार-वीरबीभत्सरौद्रेषु मनस. क्रमात् ।
हास्याद्भुतभयोत्कर्षकरुणानां त एव हि ॥
अतस्तज्जन्यता तेषामत एवावधारणम् ॥

भरतानुसारेण नाट्येऽष्टौ रसा सन्ति, किन्तु काव्ये नव रसाः शान्तरस संयोज्य भवेयुर्नवेत्यस्मिन् विषये तेन किमपि न प्रोक्तम्।

भरतानन्तरं भूरिश आचार्या शान्तं रसं प्रतिपादयन्ति । तत्र प्रथमस्तावदानन्दवर्धनाचार्येण निर्दिष्टम्—

महाभारतेऽपि मोक्षलक्षण· पुरुषार्थं शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचित ।[1]

अपरतो भट्टनायको निर्णयति—

विश्वमिदमसत्यनामरूपप्रपञ्चात्मकमथ च श्रवणमननादिवशेन परमपुमर्थप्रापकमिति लोकोत्तर-परमपुरुषार्थसूचनेन शान्तरसोपक्षेपोऽयं भविष्यति ।[2]

तदनन्तरमभिनवगुप्तो विशदयति—

तेन प्रथमं रसाः। ते च नव। शान्तापलापिनस्त्वष्टाविति तत्र पठन्ति। "ततस्त्रिवर्गात्मकप्रवृत्ति-धर्मविपरीतनिवृत्तिधर्मात्मको मोक्षफल शान्त। तत्र स्वात्मावेशेन रसचर्वणेत्युक्तम्।[3]

अन्यत्रापि स शान्तं रसं नाट्येऽङ्गाङ्गिभूतं निर्णयति।

एतेषु प्रयोगेषु शान्तबीभत्सरसौ तु चरमपुमर्थ-योगात्तत्र च सर्वस्य नाधिकारोऽपि तु कस्यचिदपश्चिमजन्मनोऽधिकारान्नाटके यद्यपि तत्फलप्रधानतया प्राधान्यमवलम्बेयातां, तथापि नासौ प्रचुरप्रयोग इति तयो पुरुषार्थ-प्रवरप्राणि-तयोरपि वीरादिरसान्तराध्यावापेनावस्थापनम्।[4] शान्तस्तु प्रधानत्वेन न प्रयोगार्ह इत्युक्तप्रायः।[5] अनेन शान्तरसस्य नाट्येऽङ्गत्वं स्वीकृतम्।

यद्यपि धनञ्जयो न मन्यते शमस्य स्थायिभावत्वं,[6] किन्तु तस्य

---

१. ध्वन्यालोके ४.५ अधिकृत्य विवृतिः ।

२. ना० सा० १.१ अधिकृत्य भारत्यामुद्धृतम् ।

३. ना० शा० ६.१६ अधिकृत्य भारती ।

४. ना० शा० अष्टादशाध्याये पृ० ४५१ गा० ओ० सी०

५ ना० शा० २२ अध्याये अभिनवभारती पृष्ठ ५३ गा० ओ० सी० । ना० शा० द्वादशाध्याये अभिनव-भारती पृष्ठं १४८ अग्रे च अथ शान्तरसे गतिर्वक्तव्या । म च प्राधान्येन तथा प्रयोगसौन्दर्यमावहति । अतोऽन्त संस्काररूपता येषा वणिक् प्रभृतीनामस्ति "वीर-प्रशान्ता वणिज" इति वचनात् यतिप्रभृतयोऽपि च शान्तरस-प्रधाना· ।

६ मम्मट· काव्यप्रकाशेऽष्टौ नाट्ये रसा. स्मृता. ४.२९ इति प्रमाणयति ।

समकालिको धनिकस्तस्य दशरूपकस्यावलोककार एव शान्तं रस शमं च प्रमाणयत्येवाधोलिखितवचनेन —

ननु शान्तरसस्यानभिनेयत्वाद्यद्यपि नाट्येऽनुप्रवेशो नास्ति, तथापि सूक्ष्मातीतादिवस्तूनां सर्वेषामपि शब्दप्रतिपाद्यतया विद्यमानत्वात् काव्यविषयत्व न नि-वार्यते ।

शान्तरसविषयका सर्वेऽपलापाः पण्डितराजेन सम्यक् समाहिता । तद्यथा,

केचित्तु —

शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात् ।
अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते ॥

इत्याहु ।

तच्चापरे न क्षमन्ते । तथा हि—नटे शमाभावादिति हेतुरसंगत । नटे रसाभिव्यक्तेरस्वीकारात् । सामाजिकाना शमवत्त्वेन तत्र रसोद्बोधे बाधकाभावात् । न च नटस्य शमाभावात्तदभिनय-प्रकाशकत्वानुपपत्तिरिति वाच्यम् । तस्य भयक्रोधादेरप्यभावेन तदभिनयप्रकाशकताया अप्यसंगत्यापत्तेः । यदि च नटस्य क्रोधादेरभावेन वास्तवतत्कार्याणां वधबन्धादीनामुत्पत्त्यसम्भवेऽपि कृत्रिमतत्कार्याणां शिक्षाभ्यासादित उत्पत्तौ नास्ति बाधकमिति निरीक्ष्यते, तदा प्रकृतेऽपि तुल्यम् ।

अथ नाट्ये गीतवाद्यादीनां विरोधिना सत्त्वात् सामाजिकेष्वपि विषयवैमुख्यात्मनः शान्तस्य कथमुद्रेक इति चेत्. नाट्ये शान्तरसमभ्युपगच्छद्भि फलबलात् तद्गीतवाद्यादेस्तस्मिन् विरोधिताया अकल्पनात् । विषयचिन्तासामान्यस्य तत्र विरोधित्वस्वीकारे तदीयालम्बनस्य ससारानित्यत्वस्य तदुद्दीपनस्य पुराणश्रवणसत्सङ्गपुण्यवनतीर्थावलोकनादेरपि विषयत्वेन विरोधित्वापत्ते । अत एव चरमाध्याये संगीत-रत्नाकरे

अष्टावेव रसा नाट्येष्विति केचिदचूचुदन् ।
तदचारु यतः कंचिन्न रसं स्वदते नट ॥

इत्यादिना नाट्येऽपि शान्तो रसोऽस्तीति व्यवस्थापितम् । यैरपि नाट्ये शान्तो रसो नास्तीत्यभ्युपगम्यते तैरपि बाधकाभावान्महाभारतादिप्रबन्धानां शान्तरस-प्रधानतया अखिललोकानुभवसिद्धत्वाच्च काव्ये सोऽवश्यं स्वीकार्यः । अत एव 'अष्टौ नाट्ये रसा. स्मृता.' इत्युपक्रम्य 'शान्तोऽपि नवमो रस' इति मम्मट-भट्टा अप्युपसमहार्षु.।[1]

---

१ रसगंगाधरे प्रथमानने रसलक्षणम् ।

## रस-निष्पत्तिः

लोके कस्यचित् पुरुषस्यालम्बनविभावोद्दीपनविभावयोर्दर्शनेन तस्य कोऽपि स्थायी भाव स्वभावत एवोद्बुद्धो भवति चर्व्यते च। तदनु तस्यानुभाव-सचारिणोर्भावना स्यात्। एवमेव काव्यकलादिषु आलम्बनोद्दीपनानुभाव-संचारिणां संज्ञानेन सहृदयस्य सुमनस स्वभावत एव कश्चित् स्थायी भाव समुदेति आस्वाद्यते च। अयमेव स्थायिभावास्वादो रसनम्। अस्यां स्थिता-वास्वाद्यमान. स्थायिभाव एव रसो भवति। इयं प्रक्रिया रसनिष्पत्तिः। भरतानुसारेणापि विभावानुभावव्यभिचारि-परिवृत स्थायी भावो रसनाम लभते।[1] नाना भावोपगता स्थायिनो भावा रसत्वमाप्नुवन्ति।[2] शृङ्गारप्रकाशे भोजोऽपीममभिप्रायं विशदयति।[3]

अभिनवगुप्तानुसारेण आश्रये रत्यादयः स्थायिभावा उद्बुध्यन्ते। सामाजिका हृदय-संवाद-प्रक्रिययाश्रयेण तन्मयीभूता. तस्यैव रत्यादीना-स्वादयन्ते।[4]

स्वत एव स्वाभाविकतया रसो जायते स्थायिनो विभावानुभाव-संचारिणा योगेनेति भरतस्य मतं परिनिष्ठितम् यथोपरिष्टात् निर्दिष्टं, भरतस्य पूर्वोक्तं रससूत्रं स्पष्टमेव। तथापि प्रमाण-मीमांसाप्रपञ्चधर्मिणो व्याख्याकारा आचार्यश्चास्मिन् विषये प्रचुरं चर्चितवन्तः। आनन्दवर्धनादयोऽस्मिन् विषये बहु व्याख्यातवन्तः।[5]

पण्डितराजेन कतिपयाचार्याणां भारतीय-रससूत्रस्य व्याख्या सक्षेपेण समुद्धृता। तद्यथा

विभावानुभावव्यभिचारिभिः संयोगाद् व्यञ्जनाद् रसस्य चिदानन्द-विशिष्टस्थाय्यात्मन स्थाय्युपहित चिदानन्दात्मनो वा निष्पत्ति· स्वरूपेण प्रकाशनमित्याद्ये। अभिनवगुप्तस्य मतम्।

विभावानुभाव-व्यभिचारिणा सम्यक् साधारणात्मतया योगाद् भावकत्व-

---

१. नाट्यशास्त्रे सप्तमाध्याये पृष्ठ ३४९ गा० ओ० सी०

२. तत्रैव पृष्ठं २८८ षष्ठाध्याये।

३. एकादश-प्रकाशे पृष्ठं ४४४ अग्रे च।

४. हृदय-संवाद एवास्वाद। ना० शा० षष्ठाध्यायेऽभिनवभारती पृष्ठं ३२३ गा० ओ० सी०।

५. व्यंग्य-व्यंजकभावेऽस्मिन् विविधे सम्भवत्यपि।
रसादिमय एकस्मिन् कवि स्यादवधानवान्॥ ध्वन्यालोकः ४.५

व्यापारेण भावनाद् रसस्य स्थ।व्युपहितसत्त्वोद्रेकप्रकाशितस्वात्मानन्द-रूपस्य निष्पत्तिर्भोगाख्येन साक्षात्कारेण विषयीकृत.। इति द्वितीये। भट्टनायकमतम्।

विभावानुभावव्यभिचारिणां संयोगाद् भावनाविशेषरूपाद्दोषाद् रसस्यानिर्वचनीयदुष्यन्तरत्याद्यात्मनो निष्पत्तिरुत्पत्ति इति तृतीये।

विभावादीना संयोगाद् ज्ञानाद् रसस्य ज्ञानविशेषात्मनो निष्पत्ति-रुत्पत्तिः इति चतुर्थे।

विभावादीनां सम्बन्धाद् 'रसस्य रत्यादेर्निष्पत्तिरारोप.' इति पञ्चमे। भट्टलोल्लटस्य मतम्।

विभावादिभि. कृत्रिमैरप्यकृत्रिमतया गृहीतै. संयोगादनुमानाद् रसस्य रत्यादेर्निष्पत्तिरनुमितिर्नटादौ पक्ष इति शेष.' इति षष्ठे। शङ्कुकस्य मतम्।

विभावादीनां त्रयाणा संयोगात् समुदयाद् रसनिष्पत्ती रसपदव्यवहार' इति सप्तमे।

विभावादिषु सम्यग्योगाच्चमत्कारात्' इत्यष्टमे।

अपरतस्तावद् धनञ्जयस्य रसनिष्पत्ति-व्याख्या वर्तते—

> वाच्या प्रकरणादिभ्य बुद्धिस्था वा यथा क्रिया।
> वाक्यार्थ. कारकैर्युक्ता स्थायी भावस्तथेतरै:॥ दश० ४.३७

अत्र वाक्यार्थ. स्थायी भावः। स एव रस.।

परतो धनञ्जयेन साधु प्रतिपादितम्—

> धीरोदात्ताद्यवस्थानां रामादि· प्रतिपादक।
> विभावयति रत्यादीन् स्वदन्ते रसिकस्य ते॥ ४.४०

त एव च परित्यक्तविशेषा रसहेतवः॥

> क्रीडतां मृण्मयैर्यद्वद्बालाना द्विरदादिभि।
> स्वोत्साहः स्वदते तद्वच्छ्रोतॄणामर्जुनादिभि.॥ दश० ४ ४२

पण्डितराजेन साधु निर्णीतम्—नाना जातीयाभि. शेमुषीभिर्नानारूप-तयावसितोऽपि मनीषिभि. परमाह्लादाविनाभावितया प्रतीयमान. प्रपञ्चेऽस्मिन् रसो रमणीयतामावहतीति निर्विवादम्।

### रसस्यास्वादका

धनञ्जयानुसारेण नर्तकोऽपि रसमास्वदते।[1] नैतत् समीचीनं प्रति-भाति। अभिनवगुप्त पात्रं रसं नास्वदत इति प्रमाणीकरोति। तद्यथा—अतएव च नटे न रस। विस्मृतिशीलो न बोध्यते। उक्तं हि—देशकालप्रमातृ-

---

१. काव्यार्थ-भावनास्वादो नर्तकस्य न वार्यते। दश० ४ ४२

भेदान्नियन्त्रितो रस इति। केयमाशङ्का। नटे तर्हि किम् ? आस्वादनोपाय·। अत एव च पात्रमित्युच्यते। न हि पात्रे मद्यास्वाद। अपितु तदुपायक। तेन प्रमुखपात्रे नटोपयोग.।[1] अभिनवगुप्तानुसारेणास्वादस्तु हृदय-संवाद एव। सुमनसः सामाजिका एव तन्मयीभूता स्थायिभावानास्वादयन्ति।[2] अतएव नापि सर्वे सामाजिका सर्वेषां रसानामास्वादका। तथा हि—क्रोधे च हृदय-संवादस्तामसप्रकृतीनामेव सामाजिकानामिति दानवादिसदृशास्तन्मयीभूता एवान्यायकारि विषयं क्रोधमास्वादयन्तीति।

## रसाद् रस-जन्यता

धनञ्जयानुसारेण विकासादिचित्तभूमीना साम्यत्वाद् बीभत्साद् भयं, रौद्राच्च करुणं, शृङ्गाराद् हास्यं, वीरादद्भुतं च जायन्ते। चतुर्युगमस्य क्रमश. क्षोभात्, विक्षेपात्, विकासात्, विस्ताराच्चोत्पत्ति· स्यात्।

तदेतद् भरतानुसारेणैव प्रोक्तम्।[3]

तत्रैष क्रमो रसाना तेषां स्थायिनामाश्रयाणां तत्सम्बन्धिनां चित्तवृत्ति-विशेषाणां च—

| रसः | स्थायीभावः | आश्रय | चित्तवृत्तिविशेषः |
|---|---|---|---|
| शृंगारः | रति | उत्तमयुवप्रकृति | प्रेम |
| वीर.[4] | उत्साह | उत्तमप्रकृति. धीरोदात्त एव | औन्नत्यम् |
| हास्य· | हासः | उत्तममध्यमाधमा. | विकासः |
| रौद्र | क्रोध | रक्षोदानवोद्धतमनुष्याः | प्रज्वलनम् |
| करुण. | शोकः | उत्तममध्यमाधमा | वैक्लव्यम् |
| शान्तः | निर्वेदः | उत्तमप्रकृति. | विषय-विरागः |
| अद्भुतः | विस्मय. | उत्तममध्यमनीचा | आश्चर्यम् |
| भयानकः | भयम् | स्त्री-नीच-बालादि. | वैक्लव्यम् |
| बीभत्सः | जुगुप्सा | उत्तम-मध्यम-नीचा | विचिकित्सा |

---

१ ना० शा० ६.३३ अधिकृत्य भारती।

२. ना० शा० ६.६४ अधिकृत्य भारती।

३. नैतत्सर्वथा साध्विति भोजेन सम्यक् प्रदर्शितम्। तद्यथा शृङ्गारादन्यतोऽपि हास्य उत्पाद्यमानो दृश्यते। शृङ्गारादपि न दृश्यते। रौद्रादन्यतोऽपि करुणो दृश्यते। रौद्रादपि न दृश्यते। इत्येते विषया. शृङ्गारप्रकाशस्यैकादशे प्रकाशे पृष्ठं ४४३ प्रपञ्चिताः।

४. यदीयं तु चरितमुपदेशार्हं तेषामुचित एवावसर उत्साहाभिव्यक्ति। ना० शा० ६.६६ अधिकृत्य भारती।

## रसतत्त्वानां सामञ्जस्यम्

रसनिष्पादक-तत्त्वाना क्रमश. साहचर्यमधोदिशा प्रवर्तनीयम् –

| रस | आलम्बन | उद्दीपन | अनुभावः | सञ्चारिभावः |
|---|---|---|---|---|
| शृङ्गार | स्त्री-पुंसौ<br>परस्परम्,<br>उत्तमयुव-<br>प्रकृति | ऋतु , माल्यम्,<br>अनुलेपनम्,<br>अलङ्कार.,<br>इष्टजन-विषय.,<br>वरभवनोपभोगः<br>उपवनगमनम्,<br>अनुभवन-श्रवण-<br>दर्शन-क्रीडालीला-<br>दि., रह.स्थानम्,<br>नायकगुणा | नयनचातुर्यम्,<br>भ्रूक्षेप., कटाक्ष ,<br>संचार , ललित-<br>मधुराङ्गहार-<br>वाक्यादि.,<br>अष्टौ सात्त्विक-<br>भावा , गुण-<br>श्रवणम्,<br>कीर्तनम्,<br>नि.श्वास ,<br>चाञ्चल्यम् | आलस्यौग्र्य-<br>जुगुप्सा-वर्ज्याः<br>सर्वे संचारि-<br>भावा. |
| वीर | विजेतव्य<br>याचमान<br>दयापात्रम्<br>धर्म-विषय | रणदर्शनम्,<br>असम्मोह , अध्य-<br>वसाय , नय.,<br>विनय , बलम्,<br>पराक्रम , शक्ति ,<br>प्रताप , प्रभाव<br>आक्षेपवचनम्,<br>स्तुति ,<br>याचककर्तृक-<br>मन्दनिरीक्षणम<br>शरणार्थिनो<br>व्याकुलीभवनम् | शत्रोरवज्ञा<br>स्थैर्यम्, धैर्यम्<br>शौर्यम्, त्याग.<br>वैशारद्यम्,<br>उत्साहनम्,<br>दानम्<br>रोमाञ्च ,<br>सर्वस्व-समर्पणम् | धृति . मति,<br>गर्व , आवेगः,<br>अमर्ष , स्मृति.<br>प्रहर्ष. |
| रौद्र | अपराधी,<br>रक्षोदानवो-<br>द्धतमनुष्या . | अपराध.,<br>क्रोधाधर्षणम्,<br>अधिक्षेप .<br>अनृतवचनम्.<br>उपघात , | परुषोक्ति<br>नेत्रारुण्यम्,<br>दन्तपीडनम्.<br>शस्त्रप्रहरणम्.<br>ताडन-पीडन- | गर्व औग्र्यम्,<br>अमर्ष , आवेग ,<br>चापलम्<br>असम्मोह ,<br>उन्माद |

वाक्पारुष्यम्,
अभिद्रोह ,
मात्सर्यम्
सम्प्रहार –
रुधिरा-कर्षणादि
रोमाञ्चः, स्वेद.
वेपथु
अधरदंश , क्षोभ ,
भ्रु कुटि
आस्यराग
विकत्थनम्
अंस-धरणीघात
प्रतिज्ञा

छेदन-भेदन-
प्रहरणाहरण-
शस्त्र-सम्पाता.

मदः, स्मृति ,
असूया

हास्यः विदूषक ,
दम्भी कपटी,
धर्मध्वजी,
वैडालव्रत ,
छद्म-तापस ,
व्यंग ,
विकृताकार ,
परचेष्टा-
नुकारी
अज्ञ

विकृतवेषा —
लकारा.
धाष्टर्यम्,
लौल्यम्,
कुहकम्,
असत्प्रलाप ,
व्यंगता

ओष्ठ-नासा-
कपोल-
स्पन्दनम्
दृष्टि-
व्याकोशा-
कुंचने, स्वेद ,
आस्यराग.,
पार्श्वग्रहणादि
रदन-प्रकाश ,
शिर कम्प ,
मधुरस्वरम्,
साश्रु नयनम्
विक्षिप्ताङ्गम्

अवहित्था,
आलस्यम्
तन्द्रा, निद्रा,
स्वप्न , प्रबोध ,
असूया, श्रम ,
ग्लानिः मूर्च्छा

शान्त अनित्यत्वेन
ज्ञातं
जगत्,
परमा-
त्मस्वरूपम्
सर्वोपि प्रपञ्च ,
विषयगण

वेदान्त श्रवणम्,
तपोवन-
तापस-
दर्शनादिः,
तीर्थ-
रम्यवनं-महा-
पुरुष-संगम.

विषयारुचि.,
शत्रु-
मित्राद्यौदा-
सीन्यम्,
चेष्टाहानि ,
नासाग्रदृष्टि
रोमाञ्च.
साम्यम्
नयननिमीलनम्

हर्षोन्मादः
स्मृति ,
मति ,
निर्वेद.,
धृति

| | | | | |
|---|---|---|---|---|
| करुण | वन्धुनाश, विभव-नाशः, वध, बन्ध., विप्रिय-वचन-श्रवणम्, दु·ख-रोग-दारिद्र्योपहतय | तत्सम्बन्धि-गृहतुरगाभरण-दर्शनादय, तत्कथाश्रवणादयः | गात्रक्षेपा-श्रु पातादय., परिदेवनम्, मुखशोषणम्, वैवर्ण्यम्, स्रस्तगात्रता, नि.श्वास-स्मृति लोपादि, स्तम्भ·, वेपथु, वैवर्ण्यम्। | ग्लानि., क्षय मोह., विषाद. चिन्ता, औत्सुक्यम् दीनता, जडता, निर्वेद, आवेग, श्रम, शंका, भयम्, व्याधि., त्रास·, अपस्मार, उन्मादः, आलस्यम् मरणम्। |
| भयानक | भयकारका सत्त्वा·, महारण्य प्रविष्टा लोका, महासंग्राम-चारिण., गुरुनृपापराधिन | विकृतरव-सत्त्वदर्शनम्, शिवोलूकत्रास शून्यागारारण्य-गमनम्, स्वजन-वध-वन्ध-दर्शन श्रुतिकथादि. गुरुनृपयोरपराध | प्रवेपितकर-चरण-नयनानि चपल-पुलक-मुखवैवर्ण्य-स्वरभेदादि हृदयप्रकम्प, शुष्कौष्ठतालु-कण्ठा, अश्रुपातः | चिन्ता, शंका, मोह, दैन्यम् आवेग, चापलम्, जडता, त्रास, अपस्मार·, मरणादि |
| अद्‌भुतः | वाक्यं, शिल्पं च कर्मरूपं वा अलौकिक वस्तु, दिव्यजन दर्शनम्, ईप्सितमनो- | अलौकिकवस्तु-महिमा | नयन-विस्तार अनिमेष-प्रेक्षणम्, रोमाञ्च., | आवेग, संभ्रमः, जडता. |

| | | | | |
|---|---|---|---|---|
| | रथावाप्ति, उपवन-देवकुलादि दर्शनम्, सभाविमान मायेन्द्रजाल सम्भावनादिः, विचित्रा कृति वेषः, विचित्राचार-विभ्रम, माया लीलाविलासी | | अश्रु पात., हर्ष, साधुवाद, हाहाकार, बाहु-वदन चेलाङ्गुलिभ्रमणम्, स्तम्भ, गद्गद | त्रास., प्रलयः |
| बीभत्स | शव, दुर्गन्ध, मांस रुधिर मेदांसि, निन्दिताकृति-वेषा. निन्द्या-चार, रोगिण पिशाचादयः | आन्त्र विदारणम्, अहृद्याप्रियाचोष्या निष्टश्रवण-दर्शन कीर्तनादि· | रोमाञ्च. सर्वाङ्गसंहार·, मुखविकूणनम्, निष्ठीवनम्, उत्त`जनादि. नासा प्रच्छादनम् मुखावनमनम्, अव्यक्तपाद पतनम् | अपस्मार, उद्वेग, आवेग·, मोह व्याधि, मरणादयः |

## शृङ्गारस्य भेदाः

भरतानुसारेण शृङ्गारो द्विविधो भवति—सम्भोगो विप्रलम्भश्च। उत्तरकालिका आचार्या नैतेन परितुष्टा अयोगं शृङ्गारं तत्र योजयन्ति। स च धनञ्जयानुसारेण—

> तत्रायोगोऽनुरागोऽपि नवयोरेकचित्तयो ।
> पारतन्त्र्येण दैवाद्वा वि.कर्षादसगम. ॥ ४ ५१

तत्र गौरी शिवयोरसमागम उदाहरणम्।

अन्ये केचिदयोगो विप्रलम्भस्यैव भेद इत्यामनन्ति। वस्तुतोऽयोगो विप्रलम्भाद् भिन्न एव, यतो हि नाम विप्रलम्भस्तु वियोग एव प्रथमं योगो भवति, पश्चाद् वियोग स्यात्। नायिकाया लाभात् पश्चादेव विप्रलम्भोऽवधारणीय. ।[1]

---

१. प्राप्तयोरप्राप्तिर्विप्रयोगः (विप्रलम्भः)। इति धनिकः दश० ३.५६ अधिकृत भारती।

धनञ्जयोऽयोगस्य दशावस्था. कल्पते—अभिलाषः, चिन्तनम्, स्मृतिः, गुणकथा, उद्वेग· प्रलापः, उन्माद , सज्वर·, जड़ता, मरणञ्चेति ।

मम्मटादय श्रृङ्गारस्य द्वौ भेदौ—सम्भोगो विप्रलम्भश्चेति मन्यन्ते । तेऽपि तयोर्बहुभेदान् कल्पन्ते । मम्मटानुसारेण तत्राद्यः परस्परावलोकनालिंगना-धर·पानपरिचुम्बनाद्यानन्तभेदत्वादपरिच्छेद्य इत्येक एव गण्यते। अपरस्तु अभिलाष-विरहेर्ष्या-प्रवास-शापहेतुक इति पञ्चविध. । पण्डितराजो रसगङ्गाधरे स्पष्टयति—ते च प्रवासाभिलाषविरहेर्ष्या शापानां विशेषानुपलम्भान्नास्माभि प्रपञ्चिता ।[१]

विप्रलम्भे सति नायिकाया पुन प्रीत्यर्थ सामादय षडुपाया प्रयुज्यन्ते ।[२]

**वीर-रौद्रयोर्वैशिष्ट्यम्**

वीरस्तावत् भरतेनैकविधो युद्धवीर एव[३], धनञ्जयेन त्रिविधो दय.वीर , युद्धवीर , दानवीरश्च, पण्डितराजेन प्राचा मतेन चतुर्विधो दानवीरः, दयावीर , युद्धवीर. धर्मवीरश्च संकल्पितः[४] ।

वीर-रौद्रयो किञ्चित् साम्यं दृश्यत एव । तत्तु केवलं युद्धवीरं समाश्रित्यैव विकल्पनीयम् । युद्धवीरस्य रौद्रस्य चालम्बन-विभावोऽरि , उद्दीपन-विभाव आक्षेपकृत-वाक्यम्, सञ्चारिभावश्च-अमर्ष·, आवेगः, औग्र्य च क्वचित् समाना स्यु । तथापि आश्रयस्य वैभिन्न्यात्तयोर्द्वयोर्वैभिन्न्यं तु प्रतीतमेव । वीरस्याश्रय उत्तमप्रकृतिर्भवति, रौद्रस्य च रक्षोदानवोद्धत-मनुष्या एवाश्रया भवन्ति ।[५] आश्रयस्यानुभावं समाश्रित्य वीररौद्रयोरन्तरमभिनवगुप्तेन प्रदर्शितम् —रौद्रे ऽमर्ष-प्राधान्यं नानाप्रहरणेन दर्शयति, शिर कर्तनादि मृतशरीरस्यापि क्रोधातिशयं सूचयन् वीराद् भेदमाह । युद्धवीरेऽपि हि तन्नास्ति ।[६]

---

१ प्रथमानने रसभेद. ।

२. साम-भेद-दान-नत्युपेक्षा-रसान्तराणीति षडुपायाः सन्ति ।

३ भरतस्त्यागोऽपि वीररसानुभाव इति वर्णयति । तेन त्यागवीरोऽपि कल्पित इति सम्भाव्यते । अन्यत्र दानवीरं धर्मवीरं युद्धवीरमथैव च इति ६.७९ कारिकायां नाट्यशास्त्रे त्रिविधोवीर. सम्मत ।

४. पण्डितराजानुसारेण वस्तुतस्तु वीररसस्य बहवो भेदा -सत्यवीरः, पाण्डित्यवीरः, क्षमावीरः, बलवीरश्च सन्ति ।

५ अथ वीरो नामोत्तम-प्रकृतिरुत्साहात्मक । ना० शा० षष्ठाध्याये पृष्ठं ३२४ गा० ओ० सी० । एतदधिकृत्याभिनवगुप्तो व्याख्याति—उत्तमवर्णाना हि सर्वत्रोत्साह आस्वाद्यो भवति । यदीयं तु चरितमुपदेशार्हं, तेषामुचित एवावसरे ।

६ ना० शा० ६ ६५ अधिकृत्य भारती ।

अत्र प्रश्नः समुदेति—किं नाम वेणीसंहारे वीरो रस, उताहो रौद्रो रस ? धीरोद्धतौ तत्र भीमदुर्योधनौ, आश्रय, अनुभावाश्च भीमस्य दुःशासन-रक्तपानं, दुर्योधन-रुधिरेण चाङ्गानां निषेक । न च तत्र वीरोचिता विभावानुभावसंचारिण उत्साहं परिपोषयन्ति। अतएव वेणीसंहारे रौद्र एव कल्पनीयो न वीर·।[1]

## शृङ्गार एव रसः

शृङ्गारप्रकाशे भोजस्य तावदभिनवपथो रस-विषये प्रवर्तते। तदनुसारेण—

नन्वष्टौ स्थायिनोऽष्टौ सात्त्विका, त्रयस्त्रिंशद् व्यभिचारिण इति ब्रुवते। न तत् साधु। यतोऽमीषामन्यतमस्यैतेनैव परस्परं निर्वर्त्यमानत्वात्। कश्चित् कदाचित् स्थायी कदाचित्तु व्यभिचारी। अतोऽवस्थावशात् सर्वेऽप्यमी व्यभिचारिण, सर्वेऽपि च स्थायिनः, सात्त्विका अपि सर्व एव, मन प्रभवत्वात्। अनुपहतं हि मनस्सत्त्वमित्युच्यते। शृङ्गार एवैको रस ।[2]न हि बहवो रसा । अपि त्वेक एव शृङ्गारो रस इति।[3]

## छन्दोरस-सामञ्जस्यम्

भोजस्तु रसानुरूपं छन्दोविनियोगं प्रस्तावयति। तद्यथा—शृङ्गारे द्रुतविलम्बितादयो, वीरे वसन्तादय., करुणे वैतालीयादयः, रौद्रे स्रग्धरादय·, सर्वत्र शार्दूलविक्रीडितादयो निबन्धनीयाः।[4]

## रसभङ्ग

रूपकेषु रसभङ्गो न स्यादित्येतस्य प्रकरणस्य परं प्रयोजनम्। आनन्दवर्धनेन रससौष्ठवार्थमौचित्यं समीहितमेवेति निर्दिष्टम्। तद्यथा—

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा॥

ध्वन्यालोके ३.१४ अधिकृत्य

---

१. सामान्यत प्राचामाधुनिकाना चेदमेव सम्मतं यत् वेणीसंहारे वीरो विलसति। तच्चिन्त्यमेव। मया विषयोऽयं स्वकीये नाटकेतिहासे वेणीसहार-प्रकरणे स्पष्टीकृतः।

२. शृङ्गारप्रकाशे पृष्ठ ४३० भाग २ मैसूर प्रकाशनम् १९६३।

३. तत्रैव पृष्ठं ४४२

४. शृङ्गारप्रकाश एकादश-प्रकाशे पृष्ठं ४७२।

अत एव च भरते प्रख्यातवस्तु-विषयत्वं प्रख्यातो दात्तनायकत्वं च नाटकस्यावश्यकर्तव्यतयोपन्यस्तम् । तेन हि नायकौचित्यानौचित्यविषये कविर्न व्यामुह्यति । यस्तूत्पाद्यवस्तु-नाटकादि कुर्यात्, तस्याप्रसिद्धानुचितनायक-स्वभाव-वर्णने महान् प्रमाद ।

आनन्दवर्धनेन तत्र सिद्धान्तितम्—

(१) अधमप्रकृत्यौचित्येनोत्तमप्रकृते शृंगारोपनिबन्धन उपहास्यता स्यात् ।

(२) राजादिषु ग्राम्यशृंगारोपनिबन्धनं न कुर्यात् । सम्भोग-शृंगारस्याभिनय परिहरणीय. । अभिनेयार्थेऽनभिनेयार्थे वा काव्ये यदुत्तमप्रकृते राजादेरुत्तमप्रकृतिभिर्नायिकादिभि सह ग्राम्यसम्भोग-वर्णन, तत् पित्रो. सम्भोग-वर्णनमिव सुतरामसभ्यम् । तथैवोत्तम देवता-विषयम् ।

(३) इतिहासादिषु कथासु रसवतीषु विविधासु सतीष्वपि यत्तत्र विभावाद्यौचित्यवत् कथाशरीरं तदेव ग्राह्यम् ।

अन्यच्च—

सन्ति सिद्धरसप्रख्या ये च रामायणादय. ।
कथाश्रया न तैर्योज्या स्वेच्छा रस विरोधिनी ॥

(४) कविना काव्यमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम् । तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत् तदेमां भङ्क्त्वापि स्वतन्त्रतया-रसानुगुणं कथान्तरमुत्पादयेत् ।

(५) सन्धयस्तेषामङ्गानि च रसाभिव्यक्त्यपेक्षया घटनीयानि । न तत्र किञ्चिदपि प्रकृतरसाननुगुणं भवेत् ।

(६) रसस्य क्रमश उद्दीपन-प्रशमने कुर्यात् ।

(७) क्वचिदप्यलङ्कारो रसं न तिरोदध्यात् ।

(८) फलावाप्ति प्रकरणेऽङ्गिरसस्य व्याप्तिर्भवेदेव ।

रसानां परस्परविरोध. तस्य परिहारश्च ।

रसाना परस्पर मैत्रीभावो विरोधो वा भवत्येव । तदेतत् पण्डितराजेना-शेषविधं विशदीकृतम्—तत्र वीर-शृङ्गारयोः, शृङ्गार-हास्ययो , वीराद्भुतयो वीर-रौद्रयो , शृङ्गाराद्भुतयोश्चाविरोधः । शृङ्गारबीभत्सयो , शृङ्गार-करुणयो , वीर-भयानकयोः, शान्त रौद्रयोश्च विरोध. ।

अत्र कविना प्रकृतरसं परिपोष्टुकामेन तदभिव्यञ्जके काव्ये तद्विरुद्ध-रसाङ्गानां निबन्धनं न कार्यम् । अन्यथोभयोरुपहतिः स्यात् ।

यदि तु विरुद्धयोरपि रसयोरेकत्र समावेश इष्यते, तदा विरोधं परिहृत्य विधेय. ।

विरोधस्तावद् द्विविध —स्थितिविरोधो ज्ञानविरोधश्च । यदि नाम विरुद्धरसयोराश्रय. समान एव स्यात्, तर्हि स्थितिविरोध स्यात् । अस्य परिहार आश्रय-वैभिन्न्येन भवति । यथा नायकगतत्वेन वीररसे वर्णनीये प्रतिनायके भयानकस्य ।[1]

एकस्मिन्नाश्रयेऽपि विरुद्धरसयोर्मध्ये उभयोरविरुद्धरस—स्थापनेन ज्ञानविरोधो नाम, रसविरोध परिहरणीय । तथा हि शान्तशृंगारयोर्मध्येऽद्भुतस्यान्तरवस्थापनेन ।

## अङ्गी रस

प्रबन्धे चाङ्गीरस एक एवोपनिबध्यमानोऽर्थविशेषलाभं छायातिशयं च पुष्णाति ।[2] यथा रामायणे करुणो रसो महाभारते च शान्त । ध्वन्यालोके अपरस्तश्च निर्दिष्टमानन्दवर्धनेन—

> प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने ।
> एको रसोऽङ्गीकर्तव्यःस्तेषामुत्कर्षमिच्छता ॥ ३.२१
>
> कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते ।
> तथा रसस्यापि विधौ विरोधो नैव विद्यते ॥ ३.२२

आद्यन्तव्यापी सोऽयमङ्गीरसः 'प्रबन्धेषु प्रथमतरं प्रस्तुत सन् पुनः पुनरनुसन्धीयमानत्वेन स्थायी भवति । तस्मिन्नेव प्रबन्धे ऽन्तरालवर्तिना रसान्तराणां समावेशो भवेन्नाम । तेन समावेशेन स्थायिरसस्याङ्गिता नोपहन्यते ।[3] तथाहि उत्तररामचरिते करुणो व्याप्नोति । तत्र नाटकान्ते नायकयो. संगमनेन शृंगार-फलरस. स्यादेव । फलरसस्तु क्वचिदङ्गी रसोऽपि भवेदिति ।

---

१ रसपदेनात्र प्रकरणे तदुपाधिः स्थायिभावो गृह्यते । रसस्य सामाजिकवृत्तित्वेन नायकाद्यवृत्तित्वात् ।

२. ध्वन्यालोके ४ ५ अधिकृत्य विवृतिः ।

३ ध्वन्यालोके ३.२२ कारिकाया विवृतिमधिकृत्य ।

## २३

# यायावरीयं नाट्यवृत्तम्

डॉ० राधावल्लभ त्रिपाठी

ख्रीष्टस्य दशमशतके यायावरीयो राजशेखरः कर्पूरमंजरी-बालरामायण-बालभारत-विद्धशालभंजिका-काव्यमीमांसाप्रभृतिग्रन्थानामप्रतिमकर्तृत्वेन कामपि ख्यातिं लेभे। काव्यलक्षणदृशा कवित्वदृशा चास्य कर्तृत्वं पण्डितसमाजे बहुशो विचारितचरमपि नाट्यप्रयोगदृशा न सम्यगुन्मीलितपूर्वम्। कान्यकुब्जनरेश-महेन्द्रपालस्य संसदि उपाध्यायपदमलंकुर्वाणोऽयं यायावरीयो विप्रो नाट्यप्रयोग-निरताना भरतानां भवभूतिरिव प्रत्यक्षं सम्पर्कं प्राप्तवानिति एतत्कृतरूपकाणां प्रस्तावनाभि. सुनिश्चितमेव। तेन च भारतीयनाट्यक्षेत्रेऽस्यावदानं विशिष्टं स्यादिति कृत्वा रंगपीठदृष्ट्या राजशेखरोऽत्र परामृश्यते।

**नाट्यप्रयोगेऽस्यावगतिः अभिरुचिश्च**

राजशेखरो न केवलं कवित्वाभिव्यंजनार्थे रूपकाणि रचयति स्म। वस्तुत प्रयोगविज्ञानेनास्य परिचयः तस्मिंश्चोदात्ता रुचि परिस्फुटा एव। नाट्यं प्रयुंजतां मार्गे पदे पदे कथं बाधा परापतन्ति, कथं च प्रयोगस्य साधुत्व-मसाधुत्वं द्यूतस्येव न प्राग्गोचरं कर्तुं शक्य इति सर्वं विज्ञाय तेनावादि—

> शैलूषं कितवैरनेककपटश्रेणी महानाटकं।
> द्यूत यत्किल तत्र कौरवपति प्रस्तावनायां स्थित ॥
>
> —प्रचण्डपाण्डवे। २।८३

तथैव प्रयोगात् प्राक् नेपथ्ये भरता कथं नाट्यप्रस्तुत्यै प्रसाधयन्ति स्वात्मानं कथं च सज्जीभवन्ति ते इत्यपि सर्वं प्रत्यक्षमिव दृष्ट्वा तेन चित्रितम् —

कि पुण णट्टअपअट्टो विअ अम्ह कुसीलवाण पवच्चो। जदो-एक्का पओचिआइं सिचआइं उच्चिनोति, अअरा कुसुमावलीओ गुम्फेदि। अन्या पतिसीसआइं पसारेदि। कावि–हु पट्टुए वण्णि-आओ वण्णेदि। एस वंसो ठविदो ठाणे। इअं वीणा पडिसारी आदि। इम्मे तिण्णि-वि मुअंगा सज्जि-अन्ति। एस कंसतालाणं पक्खा उज्जाण हलबोलो। एवं ध्रुवागीदं आलवीअदि।'

—कर्पूरमंजरी, मनमोहनघोषसंपादिता, द्वि० सं०, पृ० ८०

रूपकरचनाकाले नटा. कुशीलवाः प्रयोगविधयश्च सदैव तस्य मानसे निहिता आसन् अत एव सन्दर्भेष्वनेकत्र तेन ते प्रसंगान्तरैरुल्लिखिता । यथा—

सच्चकं तए विदे णडे विठ्ठे मुंडिदे उवविठ्ठो पई मुंडिदोत्ति ।

विद्ध०, पृ० १८ (कलिकातासंस्करणम्)

रंगगणं लदाणच्चकीण —तत्रैव पृ० २४

चंदमुहीए मअणरंगण गेंदुअकेलिताण्डवं । —तत्रैव पृ० २७

अहो से किपि कवडणाडअवइत्तणं बम्हणस्स । —तत्रैव पृ० ८३

तेन तेऽमऽभिनीतास्या शिर.खण्डननाटिका ' —बालरामायणे, ७/७८

केनापि तौर्यत्रिकसूत्रधारेण तदनुवर्तिभिश्चास्य सम्बन्धोऽपि निश्चप्रचं सूच्यत एव, यतो हि नृत्तगीतादिष्वबाह्या तद्भार्या अवन्तिसुन्दरी कमपि नाट्याचार्यं कर्पूरमञ्जरीप्रयोगार्थं विनियुक्तवती इति स सूत्रधारत्वेन स्वयमूरीकरोति—

चाहुआणकुलमउलिमालिआ राअसेहरकइंदगेहिणी ।
भत्तुणो किमवंतिसुंदरी सा पउंजइउमेअमिच्छइ ॥

—कर्पूरमंजर्याम् १।१०

अनया भूमिकया रंगप्रयोगेषु राजशेखरस्य भूमिका ज्ञातुं शक्यते । तथाहि—रंगपीठं मनसि निधाय तेन स्वरूपकेषु कालिदासादिभिरस्पृष्टा नवीनाः केचन संदर्भा. संयोजिता, तथैव रंगप्रयोगाणां प्रत्यक्षज्ञानमपि तस्य कृतिषु यत्र तत्र परिस्फुरत् भारतीय नाट्यानुसन्धातॄणां कृते नितरामुपादेयतामावहतीति निःशंकम् ।

रूपकेषु केचन अभिप्राया राजशेखरेणैव इदम्प्रथमतया समुपकल्पिता. । तत्कल्पनासु अस्य रंगप्रयोगविमर्शः प्रेरक आसीदिति सम्भाव्यते । तथाहि—

## (१) पुरुषच्छद्मना नायिकाया अवस्थानम्

विद्धशालभंजिकाया नायिका मृगांकावती पुरुषवेषेणैव रंगेऽवतरति, मन्त्रिणं विहाय न कोऽपि तस्या वास्तविकता जानाति । अथ च तस्याः स्त्रीभावमविज्ञाय राजानमुपहसितुकामा तां वारं वारं स्त्रीवेषेणोपस्थाप्य राजमहिषी स्वयमेव अन्तत उपहासपदं भवति । यद्यपि पुराणेषु महाभारतादिषु च स्त्रिय पुरुषत्वेन पुरुषस्य च स्त्रीत्वेन छद्मना अवस्थितिः अनेकासु कथासु घटते एव, परन्तु रूपकसन्दर्भे राजशेखरस्यैवेयं प्रथमतया अवतारणा इति मन्यामहे । सा च प्रयोगकर्तॄणा सौकर्य वीक्ष्यैव कृता स्यात् । नटानामनुमति

विना पुरुष-स्त्री-वेष-विपर्यय-प्रसगं नाट्यकार प्रयोक्तुं नार्हति, अन्यथा तस्य रचनां ते प्रयोगाय न स्वीकुर्यु । प्रयोगाभिमुखी आसीद् राजशेखरस्य दृष्टि, स्वरूपकाणां स्वजीवन एवासकृत् प्रयोगानसौ द्रष्टुमैच्छत्, तदर्थं च नटादिभिस्तस्य सम्बन्धा अपि पल्लविता । अत एव युज्यत एव मन्तुमेतद् यत् तेषा नटानामेव सौकर्यं सम्मर्ति च वीक्ष्य तेन नायिकाया पुरुषच्छद्मना स्थितेश्चावतारणा विहिता । कीदृशं सौकर्यमिति चेदुच्यते । उक्तमेव भरतेन यत् क्वचिन्नारीणां भूमिका पुरुषा रंगप्रयोगेपु निर्वहन्त्विति—

पुरुषः स्त्रीगत भावं यत्र प्रकुरुते पुन. ।
रूपानुरूपा सा ज्ञेया प्रयोगे प्रकृतिस्तया ॥ ना० शा० २६.४

यदि राजशेखरस्य समये एषा परिपाटी प्रचलिता स्यात्, तर्हि नायिकाया पुरुषच्छद्मना नाटिकायां स्थितिस्तत्र न केवलं नटस्यकृते सौकर्यं, सामाजिकानां कृते चमत्कृतिमपि तनुयात् । आङ्ग्लदेशे विक्टोरियनयुगे सुकुमारा कुमारा रंगे नायिकाभूमिकायामवतरन्ति इति वस्तुस्थिर्ति समीक्ष्य शेक्सपीयरेण 'एज यू लाइक इट' इति नाटिकाया नायिकाया पुरुषवेषे स्थिर्ति निरूप्य कौतूहल विस्मयानन्दनिर्भरमावर्जनं किमपि रचितम् । राजशेखरे' ऽप्येतादृशी स्थिति शक्यसम्भवा । तत्प्राग्भवो भवभूतिस्तु मालतीमाधवे सूत्रधारस्य कामन्दक्या., मारिपस्य च अवलोकिताया भूमिकानिर्वाहो निरूपितवानेव । तद्यथा—

सूत्रधार —एपोऽस्मि कामन्दकी संवृत्त ।
मारिषः— अहमप्यवलोकिता ।
(मालतीमाधवे, चौखम्भा सं० पृ० १७)

### (२) रंगे विवाहविधिसम्पादनम्

राजशेखरस्य वालरामायणे, कर्पूरमंजर्या विद्धशालभंजिकाया च विवाहविधय प्रत्यक्षमेव सामाजिकाना समक्षं प्रदर्श्यन्ते । इदमपि विधानं सस्कृतरूपकेपु प्रथमतया राजशेखरेणैव प्रयुक्तमिति मन्यामहे । अन्यच्च वामनभट्ट वाणकृत-पार्वतीपरिणयमपहाय विरलान्येव तादृशरूपकाणि संस्कृते येपु नायकयोर्विवाह. प्रेक्षकाणा पुरत एव लाजाहोम-भ्रामर्यादि-विधिविधानसहितं सम्पाद्य स्यात् । अयमपि अभिप्राय नटमण्डलस्याभि-प्रायमविज्ञाय तदनुमर्ति वा अप्राप्य प्रयोक्तुमशक्य एव । कालिद सप्रभृति-कवीना नाट्यकृतिषु प्राय विवाहप्रसंगा समायान्ति, परं न तेषां रंगे प्रदर्शनं प्रेक्षकाणामग्रे जातु कुत्रचित् सूचितम् । अथ च तादृशप्रदर्शनस्य

पुरातननाट्यकारै परिहार एव कृत । तद्यथा भवभूतेर्महावीरचरिते सीतारामयोर्विवाह. आधिकारिकवस्तुनोंऽशभूतोऽपि परशुरामप्रसंगमुपन्यस्य कविना नेपथ्य प्रापित. । राजशेखरे तु विवाहप्रसंगा न नेपथ्ये अपितु रंग-पीठे एव सोत्सव विधीयन्ते इति तत्र महद् वैशिष्ट्यम् । (सागरिकाया· ११।२ अंके प्रकाशितं राजशेखरवर्णितो विवाहविधि' रिति लेखेऽस्माभिरे-तादृश-राजशेखरप्रस्तुतविवाहानां विशदानुशीलनं कृतम् ।) यदि कापि भर्तृमती ललना कुमारी वा नायिकामभिनयति, तर्हि रंगे सविधिसंपादितः कृत्रिमोऽपि विवाहो दुरुपपाद एव । अत एवोक्तम् प्रयोगचरे प्रत्यक्षपरिचयं विना न राजशेखरेण विवाहप्रसंगानां संयोजनं कृतं स्यात्, नायिकायाः पुरुषच्छद्मना अवस्थानस्य प्रसङ्गवत् । यदि पुरुषो नटो नायिकाभिनयति, तर्हि यथा पुरुषच्छद्मप्रसगे सौकर्यं तथैव विधि-विधान-सहित-विवाह प्रसंगेऽपि ।

(३) स्वयंवर-प्रसङ्ग

स्वयंवरप्रसङ्गस्यापि सयोजनं संस्कृतरूपकेषु इदम्प्रथमतया राजशेख-रेणैव कृतमिति प्रतीयते । स्वयंवरसंयोजने तु रंगपीठे पात्राणां महान् सम्मर्दः स्यात् । एतत् खलु नाट्यशास्त्रविरोधि एव । तथाहि—प्रचण्डपाण्डवस्य प्रथमांके द्रौपदीस्वयंवर प्रदर्श्यते । तथैव बालरामायणस्य तृतीयांकगत-गर्भांकेऽपि सीतास्वयंवरदृश्यं संयोजितम् ।

(४) उत्स्वप्नायितम्

विद्धशालभंजिकायां विदूषकपत्न्या उत्स्वप्नायितं सम्पूर्णेऽपि तृतीयांक-प्रवेशके विस्तरेण निरूपितम् । एतदपि राजशेखरस्य वैशिष्ट्यम् । यद्यपि भास-भवभूत्योरप्युत्स्वप्नायितं विद्यते, किन्तु भासस्य स्वप्नवासवदत्ते उदयनस्य द्वित्रेषु वाक्यखण्डेषु, उत्तररामचरिते च सीतायाः 'अज्जउत कहिंसि' 'हा सोह्म अज्जउत्त कहिंसि' इत्यनेनैव वाक्येन उत्स्वप्नायितं समाप्यते । राजशेखरे तु अत्यन्तदीर्घे उत्स्वप्नायिते सूच्यवस्तुनः अनेके कथांशा संयोजिता इत्यस्ति तत्र वैशिष्ट्यम् । समग्रे सुदीर्घे प्रवेशके शयाना नायिका एकाकिन्येव स्वप्ने प्रलपति इत्येतादृशप्रसंगविषये नास्ति नाट्यशास्त्रे कोऽपि निर्देश. ।

(५) युद्धम्

प्रचण्डपाण्डवे राजशेखरेण द्रौपदीस्वयंवरमनु पाण्डवाना स्वयंवरार्थि-भिर्युद्धमपि प्रत्यक्षमेव दर्शनीयं निरूपितम् । एतदपि परम्पराविरुद्धम् ।

एतादृशतत्त्वानां रूपकेषु समावेशो रंगपीठपरामर्शं विना न संभव

इति राजशेखरस्य समकालिकरंगपीठेन नाट्यप्रयोगविचक्षणैश्च सुदृढः परिचयः निश्चीयते। अत एव प्रयोगदृशा नाट्यस्य तास्ता पद्धतयः अपि तदीयरूपकेभ्यः ज्ञातुं शक्यते। तत्र नाट्यप्रयोगेषूपयुक्तानामधोलिखित-तत्त्वाना ज्ञानं राजशेखरेण प्रकटितम्—(१) ध्रुवा (२) चर्चरी (३) आहार्याभिनयसाधनानि प्रतिशार्षकादीनि (४) मत्तवारणी (५) भूमिकानां नटेषु विभाजनम् (६) पुत्तलिकानाट्यं च।

(१) ध्रुवा

नाट्यप्रयोगोपक्रमे ध्रुवाया माहात्म्यं सर्वोपरि परिकीर्तितं राजशेखरेण। उक्तं हि प्रचण्डपाण्डवे तेन 'ध्रुवा हि नाट्यस्य प्रथमे प्राणाः।' —तथा च

प्रथयति पात्रविशेषान् सामाजिकमनांसि रंजयति।
अनुसन्दधाति च रसान्नाट्यविधाने ध्रुवा गीति ॥
(प्र० पा० १।१४)

ध्रुवा नाम नाट्यप्रयोगेषु नेपथ्यान्तरतो गीयते स्म इत्यपि नाटकेऽस्मिन् सूत्रधारमुखात् राजशेखर सूचयति—(नेपथ्ये गीयते)

सूत्रधारः (आकर्ण्य)- कथम्, उपक्रान्तं भरतपुत्रैः। यद्वाल्मीकि-व्यासयो. प्रावेशिकी ध्रुवा गीयते।

—(प्र० पा० पृ० ८)

भरतेन पञ्चविधा ध्रुवा प्रकीर्तिता.। राजशेखरस्तु तासु प्रावेशिकी ध्रुवामेवोल्लिखति। प्रचण्डपाण्डवे वाल्मीकि-व्यासयोः प्रवेशावसरे प्रावेशिकी ध्रुवा गीयते। अस्मिन् रूपके ध्रुवया न केवल निर्देश एव कविना कृत, तस्या प्रयोग पाठ्याशश्चापि लिखितौ। बालरामायणेऽपि प्रावेशिक्या ध्रुवायाः प्रयोगविधिः पाठ्याशश्च निर्दिष्टौ। तद्यथा— (नेपथ्ये)

मुक्कहरिणांकमडलपासप्पसरो बुधो विधुहवग्गो।
ओच्छरिअ राहुविधुर पलिणोणाहं समुल्लिहइ ॥ १।१६

सूत्रधार—कुशीलवैरुपक्रान्तमेव यदियं शुन शेपस्य प्रावेशिकी ध्रुवा। (विमृश्य) ध्रुवा नाम नाट्यस्य प्रथमे प्राणा। तथाहि—

प्रथयति पात्रविशेषान्०—इत्यादि। १।२०

२. चर्चरी

नाट्यशास्त्रादिषु चर्चरी बहुशः चर्चिता। किन्त्वस्याः प्रायोगिक स्वरूपे राजशेखर एव प्रमाणम्। कालिदासीये विक्रमोर्वशीयेऽपि चर्चरी

उल्लिखिता, किन्तु कथमस्याः प्रयोग इति न कालिदासस्तत्र सूचयति। राजशेखरस्य कर्पूरमञ्जर्या चतुर्थाङ्के 'ततः प्रविशति चर्चरी' ति निर्देशपूर्वकं चर्चर्या प्रवेश भवति, प्रयोगश्चास्या अनुष्ठीयते। विदूषक एनां वर्णयति—

मुत्ताहलिल्लाहरणोच्चआओ लासावसाणे तलिणंसुआओ।
सिञ्चन्ति अण्णोण्णमिमीओ पेच्छ जन्तजलेण मणिभाइणेहिं ॥
परिब्भमन्तीओ विचित्तबन्धं इमाओ दोसोलह णच्चणीओ।
खेलन्ति तालाणुगदप्पआओ तुहङ्गणे दीसदि दण्डरासो ॥
समससीसा समबाहुहत्था रेहाविसुद्धा अवराओ देन्ति।
पतीहिं दोहिं लअतालबन्धं परोप्परं साहिमुहो चलन्ति।
मोत्तूण अण्णा मणि वारआइं जन्तेहिं धारासलिल खिवंति ॥
पडन्ति ताओ सहिआणमङ्गे मणोभुवो वारुणबाणचङ्गा।
इमा मसीकज्जलकालकाआ तिकण्डचावाओ विलासिणीओ।
पुलिन्दरूवेण जणस्स हास समोरपिच्छाहरणा कुणंति ॥
हत्थे महामंसबलीधराओ हुंकारफेक्काररवा रउद्दा।
णिसाअरीण पडिसीसएहिं अण्णा मसाणाभिणअं कुणंति ॥
का-वि वाइदकरालहुडुक्का मन्दमछललएण मिअच्छि।
दोल्लदाहिं परिवाडिचलाहिं चल्लिकम्मकरणम्मि पअट्टा ॥
किंकिणिक्वरणज्झणसद्द कंठगीदिलअजन्तिदताल।
जोइणीवलअणच्चकेलिं तालणेउररवा विरअन्ति ॥
कोवुहल्लवसजगमवेसा वेणुवादनपरा अवरवओ।
कालवेसवसमामिअलोआ ओसरन्ति पणमन्ति हसन्ति ॥

—कर्पूरमंजर्या, चतुर्थजवनिकान्तरे—४.१७

'तत प्रविशति चर्चरी' ति संकेतेन नर्तकीना समूहोऽपि चर्चरीति संज्ञप्त इति सकेतितम्। अस्मिन् समूहे युगपद् नाना नृत्यानि प्रचरन्ति स्म इति विदूषकवर्णनेन सुस्पष्टमेव। सर्वेषामेतेषा नृत्याना समूहोऽपि चर्चरीति कथ्यते। नर्तकीषु काश्चन अन्योन्यं मणिभाजनैर्यन्त्रजलेन लासावसाने सिञ्चन्ति स्म। अपराश्च पुलिन्दवेषे पुलिन्दनृत्तम्, काश्चन निशाचरीणां वेषे श्मशानाभिनयमकुर्वन्। एका नर्तकी चल्लिकं नाम नाट्यमभिनिनाय। इदं नाट्य छलित छलितकं छल्ली वाप्यभिधीयते। मालविकाग्निमित्रे मालविका इदमेव नाट्यमग्निमित्रसमक्षं कृतवती। काश्चन कण्ठगीतिं प्रस्तुतवत्य., अन्याश्च वेणुवादनम्।

इत्थं चर्चर्यां विविधवेषा योषितो विविधं नृत्यन्ति। समराइच्चकहेति प्राकृतकाव्येऽपि चर्चर्या इत्थमेव उल्लेखः कृतः।

'पवत्तमयणमहूसवे निग्गयासु विचित्तवेसासु चच्चरीसु ...'

(समराइच्चकहा, जाकोबी - सं०, पृ० ४२)

चर्चर्या सह कानि कानि गीतान्यगीयन्त इति न राजशेखरेण विशदीकृतम् । केवलं योगिनीनृत्तेन सह कण्ठगीतिरप्यभवदित्येव स उल्लिखति । एतेन चर्चर्या सह पाठ्यं न अनिवार्यमिति प्रतीयते । एच० डी० वेलणकर महाभागस्याप्ययं निष्कर्ष.—

…"Sometimes carcarī was unaccompanied by any pāthya or geya stanza and that instrumental music might alone have accompanied it therefore main attraction of carcarī lies in dance and accompaniment of instrumental music."

(विक्रमोर्वशीयस्य साहित्याकदमीसंस्करणे वेलणकरकृता भूमिका, पृ० ३१)

इत्थं चर्चरी नाम नृत्तविशेष इति सिद्ध्यति, यत्र ताल-लय-प्राधान्यमभवत् । समूहे क्रियमाणत्वादिदं नृत्त रासेन रासकेन वा साम्यमावहति । अत्र केवलं छलितनृत्यमेव एकाकिन्या नर्तक्याभिनीयते, अन्यानि तु नृत्तानि युगपत् वह्वीभिरनुष्ठीयन्ते । नाट्याचार्येषु वेमेन वेदेन च चर्चर्या निरूपणे रासकेनास्याविशेषत्वं विवृतम् । तद्यथा—

यद् रासकक्रमेणैव नर्तक्यो विनिवेशिता ।
वर्णतालान्विते वाद्ये वाद्यमानेऽथ वादके ॥
प्रविश्य युग्मशो रंगं गायन्त्यश्चर्चरी मुहुः ।
द्विपदीमथवा गात्रवत्तूचितपदोत्तराम् ॥
श्रृ गारवर्णनोपेतां , वसन्तसमयोत्सवे ।
कुर्वन्ति नर्तनं सैवा चर्चरीति निगद्यते ॥

(वेम , भरतकोशे, पृ० २०४)

३. आहार्याभिनयप्रकाराः

कर्पूरमञ्जर्या. प्रस्तावनाया रंगावतरणात् प्राक् नटा. कथमात्मानं प्रसाधयन्तीति सम्यक् विवेचितम् । तद्यथा—एका नटी सिचयानि उच्चिनोति स्म, अपरा कुसुमावलीर्गुम्फति स्म । अन्या प्रतिशीर्षकाणि प्रसारयति स्म, कापि च पट्टके वर्णिका. पिनष्टि स्म । रंगावतरणपूर्वं नटैः वंशः स्थाने स्थापित ।

नटा. स्व-स्व-भूमिकापेक्षया कृष्ण-गौर-रक्तादि-वर्णैर्लिप्तांगा अभूवन् ।

तेन च सूत्रधारस्तद्भार्या च विशिष्टा: गुरुतराश्च भूमिका जगृहतुरिति सिद्ध्यति ।

विदूषकभूमिकाधारी नट संगीते निपुण स्यादिति विचित्रमेव वस्तु राजशेखर सूचयति । विद्धशालभंजिकायां विदूषक सत्यमेव स्वात्मानं गान्धर्ववेदविचक्षणं विवृणुते (विद्ध० पृ० ८३,८८) । तेन नाट्यकर्ता स्वयमेव एकस्मिन् स्थले गायन् निर्दिष्ट (तत्रैव पृ० ८८) ।

६. पुत्तलिका-नाट्यम्

पुत्तलिका-नाट्यस्योल्लेखो राजशेखरेण बालरामायणे कृतः । तत्र रावण सीताया पुत्तलिकां निर्माप्य रामस्याग्रे ता निदधाति, तस्या शिरश्च कृन्तति । ततश्च मूर्च्छित रामं प्रबोधयति सारिका—

सूत्रधारचलद्दारुगात्रेयं यन्त्रजानकी ।
कण्ठस्थशारिकालापा कृता लंकेशकेलये ।
तच्छिरस्थैव निर्याता सा चाहं राम शारिका ।
सच्चरित्ररसप्रीत्या त्वां बोधयितुमास्थिता ॥
तेन तेऽग्रेऽभिनीतास्या: शिरखण्डननाटिका ।
मृता सीतेति येन स्व गृहम् प्रति निवर्तसे ॥
(बाल० ७.७७ ७८)

संवादादस्मात् ज्ञायते यत् पुत्तलिकानाट्ये पुत्तलिकाना चालकः सूत्रधार इति निगदित. । पुत्तलिकाना कण्ठेषु क्वचित् प्रशिक्षितां शारिकां निधापिता येन ता आलपन्त्य इव प्रतीयन्ते स्म । इमा. पुत्तलिका दारुमय्योऽभूवन् । इत्थं च—

नाट्यप्रयोगविषये लुप्तप्राया. परम्परा. ।
काले याते तमश्छन्ना प्रकाशं नयते स्फुटम् ॥
रंगराज्यस्य राजेव राजते राजशेखर. ।
कृत्स्न रंगविधि जानन्नतस्वासौ महीयते ॥

———

# सागरविश्वविद्यालयस्य संस्कृतपरिषदः प्राप्यपुस्तकानि

●

| ● डॉ० रामजी उपाध्यायेन रचितानि-सम्पादितानि | | मूल्यम् |
|---|---|---|
| १. | संस्कृत साहित्य का आलोचनात्मक इतिहास (प्रथमो भाग.) | रु० १२.०० |
| २. | संस्कृत साहित्य का आलोचनात्मक इतिहास (द्वितीयो भागः) | रु० १०.०० |
| ३. | प्राचीन संस्कृत नाटक | |
| ४. | मध्यकालीन संस्कृत नाटक, पृ० सं० ५२०, | रु० २५.०० |
| ५. | आधुनिक संस्कृत नाटक (हिन्दी)—भागद्वयस्य, | " ५०.०० |
| ६. | प्राचीन भारतीय साहित्य की सास्कृतिक भूमिका, | रु०१०० ०० |
| ७. | Sanskrit & Prakrit Mahākavyas | रु० १५.०० |
| ८. | महाकविः कालिदासः (संस्कृतम्), पृ० स०, १६०, | रु० १०.०० |
| ९. | भारतस्य सास्कृतिकनिधि.—(सस्कृतम्) पृ० सं० ४११, | रु० १५.०० |
| १०. | दशरूपक-तत्त्वदर्शनम् पृ० २०० रु० २५.०० विद्यार्थिसस्करणम्, | रु० १०.०० |
| ११. | आधुनिक-संस्कृत-साहित्यानुशीलनम्—पृ० सं० ३००, | रु० ७.०० |
| १२. | सागरिका —१-१७ खण्डाः वस्त्रपटावृताः, | रु०२५०.०० |
| १३. | विंशताब्दिक सस्कृतनाटकम् पृ० स० २२५, | रु० १५.०० |

| ● डॉ० वनमाला भवालकर-रचितानि | | |
|---|---|---|
| १. | महाभारत में नारी—(हिन्दी) शोध प्रबन्धः, पृ० सं० ५२५, | रु० ४०.०० |
| २. | पाददण्डम् (संस्कृतम्) रूपकम्, | रु० २.०० |
| ३. | रामवनगमनम् (संस्कृतम्) संगीतिका, | रु० १.०० |
| ४. | पार्वतीपरमेश्वरीयम् (संस्कृतम्)—संगीतिका, | रु० १.५० |
| ५. | पंचमहाकाव्येषु चन्द्रः (निबन्धः), | रु० २.०० |

| ● अन्यानि | | |
|---|---|---|
| १. | सिन्धुसभ्यतालिपे रहस्योद्घाटनम्—डॉ फतेहसिंहः (सचित्रम्), | रु० १५.०० |
| २ | सिद्धान्तसम्राट्—सं० मुरलीधर चतुर्वेदी, | रु० १५.०० |
| ३. | संस्कृत कवियों के व्यक्तित्व का विकास—डॉ० राधावल्लभः त्रिपाठी, शोधग्रन्थ., | रु० २५.०० |
| ४. | सुसहतभारतम्—(नाटकम्) पुल्लेलरामचन्द्र., | रु० ८ ०० |
| ५ | साहित्यसन्दर्शः—डा० रेवा प्रसाद द्विवेदी | रु० ३.०० |
| ६. | रसार्णवसुधाकरः —सिंहभूपालः, सम्पादक-डा० रेवा प्रसाद द्विवेदी | रु० ८.०० |

प्राप्तिस्थानम्

## संस्कृत-परिषद्

विश्वविद्यालय, सागर (म० प्र०)

# सागरिका

षोडशवर्षे चतुर्थोऽङ्कः

२०३५ विक्रमसंवत्सरे



सम्पादकः
डॉ० रामजी उपाध्यायः
सागरविश्वविद्यालये
संस्कृतविभागस्य प्राध्यापकाध्यक्षः



प्रकाशकः
सागरिका-समितिः, सागरविश्वविद्यालयः
सागरम् ( म० प्र० )
फोन : २७०९

# सागरिका

षोडशवर्षे चतुर्थोऽङ्कः

२०३५ विक्रमसंवत्सरे

सम्पादकः

डॉ० रामजी उपाध्यायः

सागरविश्वविद्यालये

संस्कृतविभागस्य प्राध्यापकाध्यक्षः

प्रकाशकः

सागरिका-समितिः, सागरविश्वविद्यालयः

सागरम् ( म० प्र० )

फोन : २७०१

# गोमेधः

डॉ० श्रीकृष्ण देवः

## गोशब्दः पृथिवीवाचकः

वेदेषु गोशब्दः पृथिवीवाचको दरीदृश्यते। निघण्टुनामके वैदिक-शब्दकोषे आदौ "गौः" इति पदम् एकविंशतिकृत्वः पृथिवीनामधेयेषु पठितम्। अस्य पृथिवीवाचकगोशब्दस्य प्रयोगः "अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे" इत्यस्यामृचि सम्बद्धो वर्तते। तथैव सङ्गमात्मकमेधृ धातोर्मेधशब्दो व्युत्पन्नः। तस्य शब्दार्थः सुस्पष्ट एव। अतो गोमेध इति शब्दोच्चारिते सति पृथिवी-संस्पर्श इत्यर्थः स्फुटो भवति।

## पशुवाचको गोशब्दः

गोशब्दः पशुवाचकोऽपि वेदे श्रूयते। तस्य मन्त्रो यथा—"आगावो अग्मन्नुत भद्रमक्रन् सीदन्तु गोष्ठे रणयन्त्वस्मे" अस्मिन् अर्धर्चे प्रतीकात्मके ऋग्वेदीय-गोसूक्ते गवां महिमा, तासां देवतात्वं पूज्यत्वं मातृत्वं गव्यरूपेण याज्ञियत्वञ्चोपवर्णितम्।

## देवतावाचको गोशब्दः

"माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः। प्रनुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट" अनया ऋचा गोर्बहुदेवतासम्बन्धः, अमृतस्य स्रोतोरूपत्वम् अवध्यत्वं च सुस्पष्टमेव परिलक्ष्यते।

## गोर्वाग्रूपत्वम्

ऋग्वेदस्य प्रसिद्धतमेऽस्य वामीयसूक्ते "उपह्वये सुदुघां धेनुमेतां" इत्यारभ्य पञ्चसु ऋक्षु गोर्वाग्रूपत्वं लक्षणया सुस्थापितं परिष्कृतञ्च वर्तते।

## धनुर्ज्यावाचको गोशब्दः

ज्या( धनुषः प्रत्यञ्चा )वाचको गोशब्दश्चेन्द्रसूक्ते प्रयुक्तः। यथा "वृक्षे वृक्षे नियतामीमयद्गौस्ततो वयः प्रपतान्पूरुषादः" अत्र वृक्षशब्दो धनुर्वाचकः, गोशब्दो ज्यावाचकत्वेन च श्रूयते। निरुक्तकर्त्रा महर्षिणा यास्केनापि मन्त्रार्थोऽयमित्थं व्याख्यातः। अथ चेन्नगव्या गमयतीषूनिति। अत्रापि, गोमेधशब्दस्य धनुषि ज्यासङ्गम इत्येवार्थो बोधितः।

## अन्यत्रापि गोशब्दः

आयुर्वेदे शरीरस्था धमनी गोशब्देन प्रतिपादिता। बादरायणेनापि "पृष्ठे ब्रह्मा गले विष्णुर्मुखे रुद्रः प्रतिष्ठितः" इत्यादि-श्लोकत्रये गोर्वैश्वदेवत्वं प्रतिष्ठापितम्।

## मेधृधातोर्हिंसावाचकत्वम्

यथा मेधृधातोः सङ्गम इत्यर्थः, तथैव धातूनामनेकार्थत्वात् तस्य कुत्रचित् हिंसावाचकत्वमपि परिलक्ष्यते। यथा व्यवहारेऽपि श्रूयते यत् विगते जागतिके युद्धे वृहद्रूपेण नरमेधः सञ्जातः। वधशालायां पशुमेधश्च भवतीति। परञ्च नास्ति वेदे मेधशब्दो वधवाचकः कुत्रचित्। अतएव मेधृधातोर्हिंसावाचकत्वं व्यवहारे एव दृश्यते, न तु वेदे। तत्र तु सङ्गमार्थत्वमेव। यथा—मेध्या आपः, अमेध्या वैमाषा इत्यादि।

## श्रौतयागेषु मेधशब्दः

अग्निष्टोमादिसोमसंस्थासु पशुयागः, सोमयागः, पुरोडाशयागश्च प्राधान्येन भवन्ति परञ्च वैदिकी हिंसा हिंसा न भवतीति मीमांसा-शास्त्रे बुद्धिसङ्गत्या तर्कशुद्धभूमिकया च सम्यक् प्रतिपादितं वर्तते एव पूर्वाचार्यैः। अत एव यज्ञः अध्वर इति नाम्ना व्यवह्रियते। तस्य प्रधानः अध्वर्युरिति शब्देन ज्ञायते। ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधो निपात इति यास्कः। तस्यायं सुस्पष्टार्थः—हिंसारहितं कर्म, अध्वरम्। तस्य कर्ता अध्वर्युः = अहिंसकः। अथ च "नृमेध पुरुमेधौ" ( इति आ. श्रौ. सू. ) अत्र नृमेध शब्देन पुरु–मेध शब्देनोभयोर्वधस्तु न विहितः। अपि तूभयोः सङ्गम एव विहितः।

## सोमसंस्थासु पशुयाजकस्थानीयः

यज्ञकर्मणि सर्वोत्कृष्टद्रव्येण यजनं विहितम्। तत्र सर्वे जीवधारिणः स्वशरीरमेव सर्वोत्कृष्टं मन्यन्ते। तद्रक्षणाय च सर्वदा प्रयतन्ते। वर्तमानश्चिकित्सकापि मानवशरीररक्षणाय बहुजीवानां हानिं कुर्वन्तीति तत्र परमेश्वर एव प्रमाणम्। तथैव सोमयागादीनां कर्ता स्वदेहरक्षणाय तत्प्रतिनिधिरूपो भक्ष्यः पशुर्हवीरूपेण समर्प्यते चेत्किं हानिकरं भवति? यदि कर्ता सर्वोत्कृष्टरूपेण मत्वा स्वं देहमेवालभते चेत् यज्ञान्त एव न स्यात्। का वा यज्ञफलभागपि स्यात्? इमां महतीमापत्तिं ज्ञात्वैव विधिभागे मानवप्रतिनिधिरूपेण विविधासु सोमसंस्थासु केचन याज्ञीयाः पशवः सर्वथा निरापदा यज्ञसंस्था-संरक्षणाय वेदेषु प्रतिपादिताः।

## यज्ञियाः पशवः

आश्वलायनसूत्रे पंक्तिरियं सुप्रसिद्धा एत्र पशुविषये "उस्रो गौर्मेषोऽविको ह्ययोश्वोन्वादेशे" एते षट् संख्याका एव यज्ञियाः पशव इति चिकित्सा-विज्ञान-शास्त्रानुसारमेव पूर्वाचार्यैर्मन्त्र-द्रष्टृभिः प्रतिपादिताः। ते एव विविधासु सोमसंस्थासु यथा सूत्रमालभन्ते। तेषां विषये प्राचीनार्वाचीनानां विचारकाणां वादोऽपि नास्ति।

## पशुरूपे गोशब्दे विवादः

केवलं तत्र गोशब्द एव विवादास्पदम्। गोशब्देन सास्नायुक्ता गौर्ग्राह्या उत गवयो ग्राह्यः? उभयोरभावे किं कर्तव्यमिति प्रश्नः। भारते विदेशमुद्रार्जनार्थं यूरोपादिपाश्चात्त्यदेशाद्‌दुच्छिष्टरूपेण गृहीतं जिह्वा-लौल्यपूर्त्यर्थं च गोमांसं (बीफ) केचनेच्छन्ति। तदर्थमेव तेषां वेदाभ्यासो वृथा कोलाहलश्चेदानीं दृश्यते। ते इदमपि न जानन्ति यत् पाश्चात्त्यदेशेषु सास्नादिमती गौर्नैवोपलभ्यते। भारते एव गोः प्राधान्यं पूज्यत्वञ्च। अतएव भारतीया गोवधं सर्वथा नेच्छन्ति। परञ्च स्वार्थान्धा गोवधार्थमेव प्रयतन्ते। अभिशापरूपोऽयं गोवधो भारतवर्षे। वस्तुतस्तु गोशब्दे विवादस्य कारणमेव नास्ति। गोशब्दोऽत्र गवयवाचकः सन् लक्षणया गोशब्देन व्यवह्रियते। तस्य

शब्दस्य गोपशोरालम्भनमित्यर्थो नैव भवितुं शक्यते। यदि चेत्तर्हि पितृमेध-नृमेध-पुरुमेध-मेध्या आप इत्यादिनां शब्दानां का वा व्यवस्था ? तेषां पशूनामङ्गेषु वंक्रीसंख्या समानाऽस्ति। यथा—षड्विंशतिः षड्विंशतिरेषां वंक्रय इत्याश्वलायनसूत्रेऽप्युक्तम्। परञ्च राजसूये क्रतौ तु अश्वः पशुर्विहितः। तस्य वंक्रीसंख्या चतुस्त्रिंशतिः। सा ऋग्वेदे मन्त्रे एव प्रोक्ता। यथा—"चतुस्त्रिंशद्वाजिनो देवबन्धोर्वंक्रीरश्वस्य स्वधितिः समेति" इयमन्येषामष्टाभिरधिका। तथैव पशुचिकित्साशास्त्रे गोपशोरपि वंक्री संख्या चतुस्त्रिंशदेव प्रोक्ता वर्तते। परञ्च श्रौतशास्त्रे गोरूपस्य पशोर्वंक्रीणामुल्लेख एव न। अपितु गवयस्य (याक) षड्विंशतिरेव वंक्रीणां संख्या भवति।

अतएव गोशब्देन लक्षणया गवयरूपः पशुरेव निर्विवादः।

## गव्यद्रव्याणां यागाः

यागेषु गोरूपः पशुर्नास्ति। अपि तु गव्यद्रव्याणां यागा विहिताः। यथा—धर्मयागे गोदुग्धस्य गव्याख्यस्य च, वैश्वदेवयागे आमिक्षा (छेना) द्रव्यस्य, वाजिनयागे वाजिन-(छेने का पानी) द्रव्यस्य च प्रतिपत्तिः सर्वेषु श्रौतसूत्रेषु प्रसिद्धा। संज्ञपनक्रियायामपि गोपशोरुल्लेखः कुत्रापि नोपलभ्यते। यदुच्यते कैश्चित् यत्पुराकाले गोरूपः पशुर्भवति स्म। तन्नूनं प्रमाणाभावाच्चिन्त्यम्।

## अर्थवादप्रामाण्यम्

ऐतरेयब्राह्मणे पुत्रप्राप्ति निमित्तीकृत्यार्थवादरूपेण हरिश्चन्द्रोपाख्यानं वरीवर्ति। तत्र रोहिताख्यः स्वपुत्र एव पशुस्थाने राज्ञा सङ्कल्पितः। रोहितेन स्वस्थाने अजीगर्तेः पुत्रः शुनःशेपः शतनिष्कैः क्रीत्वानीतो यूपे बद्धश्च। तेन दृष्टैर्मन्त्रैर्देवान्संप्रार्थ्य तदाज्ञया पाशैर्मुक्तः। राजापि यज्ञफलं लब्धवान्। पुत्रप्राप्तेर्महिमा ज्ञापनार्थमेवेयं हरिश्चन्द्रगाथार्थवादरूपेण गीता। अनया गाथया नरमेधो नरपशुर्वा श्रौतसंस्थासु विहितो न भवति। अप्रवृत्तप्रवर्तनमर्थवादः न तु तत्प्रत्यक्षम्। अन्यदपि वर्तते—सर्वाः सत्रमासत, वनस्पतयः सत्रमासतेत्यादि। तत्र सरीसृपाः, जडरूपा वनस्पतयश्च कथं सत्रमनुष्ठेयुः ? अयमेवार्थवादः।

## गोर्लक्षणम्

सास्नादिमत्वं गोर्लक्षणं शास्त्रे प्रसिद्धमेव। सास्नायुक्तो गोपशुर्भार-तस्य सर्वेषु भागेषु समुपलभ्यते। तथैव गोसदृशो गवयः पशुः (याक) हिमालयीय—नेपाल-त्रिविष्टप (तिब्बत)-भूतस्थान (भूटान)-शाक्य-मुनिस्थान (सिक्किम) उर्वश्यादि (नेफा) प्रान्तेषूपलभ्यते बाहुल्येन। स एव गो नाम्ना प्रसिद्धो यज्ञियः पशुः भक्ष्यश्च। गवयेषु सास्नादिमत्वं नास्ति। अथ च पुराकालदेव ते यज्ञियाः पशव इति तेषु देशेष्वपि गवयानां प्रसिद्धिः।

## प्रात्यक्षिकम्

पञ्चविंशतिवर्षात्पूर्वं पदमार्गेण नेपालदेशस्थ-तानसेननगरं प्रति मित्रेणैकेन सह गच्छता विश्रान्तिग्रहणायैकस्यां ग्रामटिकायामावां स्थितौ। तत्रैको गवयश्चरति स्म। तदानीमेवैका वृद्धा नयपालीया ब्राह्मणी कुटीराद् बहिरागत्य "खुकरी" नामकेन नयपालीयतीक्ष्ण-शस्त्रेण गवयं कण्ठदेशादधो भागे कृन्तितवती। ततो निर्गतां रुधिर-धारामेकस्मिन्मृद्भाण्डे धारितवती। पूरिते भाण्डे करस्थं वानस्पत्य-कल्कं घातस्थाने प्रपूर्य लेपं कृतवती। पञ्चदश क्षणानन्तरमेव स पशुः पुनरुत्थाय चरणार्थं गतः। तदाश्चर्येण मया तस्याः पतिः पृष्टः। किं भो गोरक्षकेऽस्मिन्नयपालदेशे गोहत्या कथं भवति? तेन तस्य निषेधः कृतः। सोऽपि विप्रः श्रौतधर्मपरायणो वेदाभ्यास-कश्चासीत्। तेनोक्तं यत् तद्रुधिरं प्रसूतिकायाः कृते परममृतरूप-मौषधम्। ब्राह्मण्याः स्नुषायाः कृते तद् गृहीतम्। कुटिकायां सा प्रसूता वर्तते। भक्ष्यो यज्ञियश्चायं पशुरिति। तदैव मया रहस्यमिदं ज्ञातं यत् श्रौतपशुषु गोशब्दो लक्षणया गवयवाचकः, न तु प्रत्यक्षो गोपशुरिति। प्रत्यक्षा गौस्तु पूज्या अघ्न्या चेति।

## द्वादशाहाख्ये सत्रे गौर्वै देवता

सत्राणां द्वादशाहः प्रकृतिरूपः। तस्मिन् द्वादशस्वहः सुप्रत्यहमेकैका प्रधानदेवता ब्राह्मणेषु प्रतिपादिता। यथा—अग्निर्वै देवता प्रथममहर्वहति। द्वितीयस्याह्न इन्द्रो देवता। तृतीयस्य विश्वेदेवाः। चतुर्थस्य वाग्देवता।

गौर्वै देवता पञ्चममहर्वहति। तथैव षष्ठादिषु। अत्र गोर्देवतात्वं प्रत्यक्षं श्रुतिचोदितं दृश्यते। पूर्वोक्ते आगा वो० इति सूक्तेऽपि गोर्देवतात्वमेव मन्त्रैः प्रतिपादितमस्ति। "धाम्नोधाम्नोराजन्०" इति वारुणमन्त्रेऽपि सा अघ्न्या इति सुस्पष्टमुद्घोषिता। मन्त्रेऽस्मिन् ज्ञाताज्ञातरूपेण गोस्ताडनादिव्यवहारो यदा कदा भवति। तस्मादपि दोषात् हे वरुण नो मुञ्चेति वरुणाय सम्प्रार्थ्यते।

**अघ्न्या मेध्या च गौः**

अतः प्रमाणैरेभिः सत्तर्कैश्च सुसिद्धं भवति यद् गोमेधशब्दो वधवाचको नास्ति। अपि तु सङ्गमात्मकः—गोपालनरूपः सेवात्मको देवतावाचकश्चेति। हन्तुमयोग्याया एव गोरघ्न्या इति श्रुतिनाम सार्थकं भवति। गावो विश्वस्य मातरः। गावो विश्वस्य प्रतिष्ठेति दिक्।



# काशीस्था श्रौतयज्ञपरम्परा

डॉ० श्रीकृष्णदेवः

सुविदितमेव यदिदं काशीक्षेत्रं श्रीमद्भगवतो विश्वनाथस्य ज्योतिर्लिङ्गस्वरूपम्। ज्योतिस्तु यज्ञरूपा। अतएवात्र पंचक्रोशी-यात्रया वह्नित्रयात्मकस्यैव श्रीमद्भगवतो यज्ञनारायणस्य प्रदक्षिणा सृष्टिकालादारभ्याधुनाऽपि प्रवर्तते। अतएव साक्षाद्यज्ञभूमिरूपेऽस्मिन् काशीक्षेत्रे श्रौतस्मार्तयज्ञपरम्परापि तथैव सनातनरूपा, यथा काशीक्षेत्रं सनातनम्। उत्पत्ति-नाशरहितत्वं सनातनत्वम्।

## दशाश्वमेधयागक्षेत्रम्

अत्रैव सृष्ट्यारम्भकालानन्तरं वर्णाश्रमधर्मस्थापनव्यवस्थायां कृतायां सत्यां राजर्षिणा वैवस्वतमनुना दश-दश वारं चासुरविजयं कृत्वा स्वस्य चक्रवर्तित्वमुद्घोष्य प्रतिवारमेकैकं क्रमेण दशाश्वमेधयागाः समनुष्ठिताः। तदेव स्थानमद्यापि "दशाश्वमेध" नाम्ना तथाचाश्वबन्धनयूपस्थानं "घोड़ाघाट" नाम्ना प्रसिद्धमस्ति। यत्रोत्तरवेदिरासीत् स शीतलभागः शीतलघट्ट नाम्ना प्रसिद्धः। यस्मात् जलाशयात् वसतीवर्यादीनां घटानां पूरणं जातं तत् रुद्रसरोवरतीर्थमद्यापि यथाकथमपि सुरक्षितं वर्तते एव।

## असीनदीक्षेत्रम्

पश्चात् महेन्द्रपदग्रहणलिप्सया वर्तमानेन शतक्रतुना इन्द्रेण स्वकीयोऽसीतितमोऽश्वमेधो विश्वनाथनगर्या दक्षिणसीमायां प्रवाहिण्याः क्षुद्रनद्यास्तीरे समनुष्ठितः। तेन सा नदी 'असी' ति नाम्ना लोके प्रसिद्धिं प्राप्ता। अधुनाऽपि 'अस्सीघाट' नाम्ना तत्स्थानं विश्रुतमेव वरीवर्ति। तदानीं गङ्गायाः प्राकट्यं नासीत्।

## वरुणा नदीक्षेत्रम्

यस्या नद्याः कूले वारणकाष्ठानां वनमासीत्, यैर्वारणकाष्ठैर्यज्ञ-

पात्राणि निर्मीयन्ते सा नदी कालान्तरेण वरुणा नाम्ना प्रसिद्धिं याताद्यापि नगरस्योत्तरसीमारूपेण विराजते प्रवहति च। असीवरुणयोर्मध्ये वर्तमानं क्षेत्रं 'वाराणसी' इति विश्रुतमस्ति।

## नहुषकुण्डम्

श्रीमच्चक्रवर्तिना नहुषेण राज्ञा शतक्रतुना सङ्कल्पे केचनाश्वमेधक्रतवः स्वयमेवोत्खनिते नहुषतडागक्षेत्रे सम्पादिताः। यत्स्थानं पञ्चक्रोशी यात्रायामद्यापि तस्य कीर्तिमुद्घोषयति।

## अन्येषां यागानां क्षेत्रम्

एवमेव बहुभिर्ब्रह्मर्षिभी राजर्षिभिश्च बहवो विभिन्नाः क्रतवः श्रौताः स्मार्ताः काम्याः शाक्ता आभिचारिकाश्च काश्यां समनुष्ठिताः।

## यज्ञनारायणस्याद्या वसतिः

प्रथमं तावदत्र लोकानां निवासार्थं विश्वासोत्पादनाय, पिशाचप्रमुखस्योद्धाराय च भगवान् यज्ञस्वरूपो विष्णुः 'यज्ञो वै विष्णुरिति श्रुतेः' मानुषरूपेणात्र वसतिं चकार। तदनु देवानां ब्रह्मर्षीणां राजर्षीणां लोकानाञ्च वसतिरुभयोर्नदीकूले प्रसृताद्यापि वरीवर्ति। यत्र यज्ञनारायणः प्रथमं श्रीपदं स्थापितवान् तत्स्थानमधुनाऽपि 'आदि केशव' नाम्ना सुप्रसिद्धं वर्तते।

## काशिराजस्थानम्

कालान्तरेत्वनेके काशिराजनाम्ना प्रसिद्धिं प्राप्ता राजानोऽत्र स्वं स्वं दुर्गं संस्थाप्य कचित् दक्षिणस्यां कचिदुत्तरस्यां कचित्पूर्वस्यां दिशि (व्यासकाश्यां वा) सुशासनं चक्रुः। तेषु शासनेषु तैस्तैराजभिरनेकविधा विद्वांसो ब्राह्मणाः काश्यां निमन्त्र्य निमन्त्र्य ब्रह्मपुरीषु प्रतिष्ठापिताः। परञ्चेयं महाश्मशानभूमिरिति मत्वा तेऽत्र परिग्रहादिकं न स्वीचक्रुः। तदानीं काश्यां कर्माणि सम्पाद्य प्रदक्षिणाया बहिर्गङ्गाया अपरे तटे व्यासाश्रमे (वर्तमाने रामनगरे) परिग्रहादिकं कुर्वन्तिस्म। श्मशानभूमौ परिग्रहो निषिद्धः।

## काश्यां राज्ञः कर्णस्य भूमिदानम्

दानशूरेण राज्ञा कर्णेन बहवो ब्रह्मपुर्यो निर्माय स्वकीयैर्दानपत्रै-

रुत्कीर्णलेखसहितैस्तासां समुत्सर्गो विदुषां निवासाय कृतः। तत्र बहवोऽग्निहोत्रिणः षोडशी-कर्मकर्तारो यात्राविधिं यथाशास्त्रं सम्पादनायात्र निमन्त्रिता स्थापिताश्च। ते सर्वेऽपि मगधदेशादत्र समागता दक्षिणापथस्थाः पञ्चद्राविडा आसन्निति लोकश्रुतिः। तत्र कारणमिदं यदत्रत्या औत्तरीयाः पञ्चगौडाः स्वान् प्रतिग्रहदोषनिवृत्तिं कर्तुमसमर्थं मन्यमानाः सन्तो भूमिपरिग्रहात्परावृत्ताः। अस्मिन्विषये यत्र तत्र समुपलब्धानि कर्णस्य दानपत्राणि प्रस्तरेषूत्कीर्णानि त्रिसहस्र-वर्षपर्यन्तं दृश्यमानान्यासन्। ततः परं शक-हूण-बार्बरीक-यवनादिकानां म्लेच्छानां पुनः पुनः क्रियमाणैराक्रमणैः क्षेत्रविडम्बनक्रियादिभिः ब्राह्मणानां सामूहिकवधेन धर्मान्तरणेन ब्रह्मपुरीणां नाशेन च सम्प्रति विलोपितानि।

## दाक्षिणात्यानां वसतिः

पाटलिपुत्रनगरे मगधदेशस्य राजधान्यां राज्ञः समुद्रगुप्तस्य राजसूये क्रतौ पुनस्तावदखिलभारतीया विद्वांसो द्वाविंशतिसहस्रसंख्याका यज्ञसम्पादनाय समाहूताः। यज्ञान्ते गुप्तशिरोमणिना सम्राट्-पदवीकेन राज्ञा समुद्रगुप्तेन सुवर्णराशयस्तेभ्यः प्रदत्ताः। सुवर्णेन सह परावृत्ताः प्रमुदितचेतारः सर्वे दाक्षिणात्या मार्गे काशीनगरं दृष्ट्वा तत्रत्यं वनं समुत्पाट्य भूमिञ्च परिष्कृत्य गृहे सुवर्णविभागभिया काश्या-मेव सामूहिकरूपेण वसतिं चक्रुः। तेषां "वनकटे काशीकर" इति भाषायां लोके प्रसिद्धिः। ततः, प्रभृति दाक्षिणात्यानां समाज-बाहुल्येनात्र वसतिरखण्डिता वर्तते। ते तीर्थपौरोहित्येन षोडश-संस्कारैः स्मार्तयागैः सोमादिश्रौतक्रतुभिश्च पारिवारिकं जीवनयापनं कुर्वन्ति।

## अनङ्गपालस्य दानपत्रम्

विक्रमाब्दे ११११ गते वर्षे भारतभूमौ विभ्राजमानपालवंश-दीपकश्चक्रवर्ति सम्राट् महाराजाधिराजः श्री ५ विभूषितः इन्द्रप्रस्थ-राजधान्यां राज्यशासनकर्ता "अनङ्गपाल" आसीत्। तेन काश्यां सम्पादिते राजसूये क्रतौ स्वकीयाध्वर्यवे पाठकोपनाम्ने माध्यन्दिन-

शाखाध्यायिने ताम्रपत्रद्वयं प्रदत्तम् । तत्रैकस्मिन् त्रिस्थली ( काशी-प्रयाग-गया ) पौरोहित्याधिकारः, द्वितीये-षोडशसंस्काराधिकाराश्चोत्कीर्णाः सन्ति । तमनुसृत्याद्यापि काश्यां तीर्थपौरोहित्याधिकारः, षोडशसंस्कार-कर्माधिकारः, श्रौत-स्मार्तयागार्त्विज्याधिकारश्च पञ्चद्राविडब्राह्मणेषु परम्परया सुरक्षितः प्रचलितश्च वर्ततेऽधुनाऽपि ।

एतदधिकारेण प्राप्तं श्रौतार्त्विज्यरूपं स्वयमपि दीक्षां गृहीत्वा सोमयागादीनां यजमानरूपं च कर्तव्यं शतत्रयवर्षेभ्यः प्रागारभ्य वर्तमानं २०३३ वैक्रमाब्दं यावत् काशीस्थैः पञ्चद्राविडैः पञ्चगौडैश्च कथमाचरितमिति यथाप्राप्तजनश्रुतिरूपेणाप्तवाक्यप्रमाणेन वर्ण्यते ।

## श्रौतयागानां विवरणम्

( १ ) विक्रमाब्दे १७०१ तमे वर्षे वेदशास्त्रसम्पन्नैराहिताग्नि श्री श्यामदीक्षितपाठकैर्जयपुराधिपतेर्मानसिंहस्य राजसूययागः तस्यैव राजधान्यां स्वकीयेनाध्वर्यवेन सुसम्पादितः । तस्मिन्मखे अध्वर्यु प्रति-प्रस्थातारौ महाराष्ट्रियौ, होता मैत्रावरुणौ नागरगुर्जरौ, उद्गातृगणश्च महाराष्ट्रियः अन्ये जयपुरीया गौडाश्च ऋत्विज आसन् । काशीस्थः सरयूपारीणः सदस्यश्चासीत् । एते श्यामदीक्षिताः कात्यायनसूत्रीयाः शुक्लयजुर्वेदिनश्चासन् । एतेषां प्रभवावसाने काश्यामेवाभवताम् ।

( २ ) आहिताग्निः वामनदीक्षितपाठकः अगस्तकुण्डवासी काश्यामेव सोमाधानं गृहीत्वा ज्योतिष्टोमादि वाजपेयान्तैः श्रौतक्रतुभिर्भगवन्तं वेदपुरुषमियाज । वाजपेयी पदवीमलञ्चकार ।

( ३ ) आहिताग्निर्नमस्कारे इत्युपनाम्ना काशीक्षेत्राभिजनः काश्यामेव कूष्माण्डा-दुर्गा-देव्यास्तडागसमीपे श्रीरेणुका-देव्याः प्राङ्गणे प्रथम-मग्निष्टोमं सम्पाद्य द्वितीये एवाब्दे साग्निचित्य सर्वपृष्ठाप्तोर्याम-नामक महाक्रतुमनुष्ठितवान् । यागोऽयं १८२१ तमे विक्रमाब्दे सम्पन्नः । अस्य च्चयन-यागस्यैवेष्टकाभिर्मन्दिरभित्तिः स्मारकरूपेण निर्मिता । सा नगर-विकासयोजनायां विनष्टा ।

( ४ ) परम्परया काशीवास्तव्यः श्रौत-स्मार्त-वेदशास्त्रनिपुणः श्री आहिताग्निर्हरदीक्षित काले नाम्ना, आश्वलायनसूत्रीयो बह्वृचः शाकलः

काश्यां चैतन्यवटसमीपवर्ति "बङ्गाली बाडा" नामके स्थले स्वार्जित-द्रव्येण ज्योतिष्टोमं चकार।

( ५ ) महाराष्ट्रस्य रत्नागिरिजनपदादागतश्चिरकालात्काशीवास्तव्यो भट्टोपनामा ऋग्वेदीय आहिताग्निः श्रीपांडुरंगदीक्षितः १६४५ विक्रमाब्दे शीतलाघट्टोपरि बूंदीराजप्रासादस्थितराममन्दिरे सोमयागं कृतवान्। अस्मिन् क्रतौ श्रीबापूदीक्षित-गोडसे महोदयेनाध्वर्यवं, श्रीविनायकभट्ट-गोडबोले वैदिकोत्तमेन होत्रं च सुसम्पादितम्। ममैव देवकुलजा औद्गात्रगणार्त्विज्यं च सम्पादयामासुः। कालान्तरे एभिः सहैव साग्निचित्य-सर्वपृष्ठाप्तोर्यामक्रतुरपि सम्यगनुष्ठितः।

( ६ ) ग्वालियरनगरवास्तव्यो राजचिकित्सक आहिताग्निः श्रीविनायक-शास्त्री गाडगीलोपनामा शाकलशाखीयः काशीमागत्य काल-भैरवमन्दिरसमीपे भैरववापी ( बावली ) स्थाने १६४८ विक्रमाब्दे स्वोपार्जितद्रव्येणैव सोमाधानं गृहीत्वा साग्निचित्य-सर्वपृष्ठाप्तोर्यामयागं समनुष्ठितवान्। अस्यां श्रौतोपासनायां वेदमूर्तिश्रीकृष्णपुराणिके-नाध्वर्यवं, बापटोपाह्व-श्रीव्यङ्कटेशदीक्षितेन च हौत्रं, श्रीबालशास्त्रि रानडे ( बालसरस्वती ) महोदयेन चौद्गात्रं सम्यगनुष्ठितम्।

( ७ ) अयमेव रानडे इत्युपनामा आहिताग्निर्बालशास्त्री वेदशास्त्र-निष्णातः काशीवास्तव्यः, श्रीकाशीनरेशेनाहूतायां विद्वत्सभायाम् आर्यसमाजसंस्थापकस्य श्रीमद्दयानन्दस्वामिनः पराभवकर्ता श्रौत-कार्यकुशलो मीमांसकश्चासीत्। अस्य प्रभावोत्पादकं सम्पूर्णं चरित्रं तु तस्य शिष्योत्तमो म० म० गङ्गाधर-शास्त्रि-तैलङ्गः सी० आई० ई० पदवी भूषितः "संस्कृत के विद्वान्" नामके हिन्दीग्रन्थे प्रथयामास। दशमे वर्षे एवानेनास्खलितया सुमधुरया च गिरा हौत्रं सम्पाद्य तत्कालीना विद्वांसो विस्मापिताः। दारपरिग्रहेण सहैवाधानमाधाय स्वपराक्रमेण भूमिं सम्प्राप्य ब्रह्मघट्टे यज्ञशालां निर्माय ज्योति-ष्टोमाग्निष्टोमसोमयागाः समनुष्ठिताः। १६५० तमे वैक्रमाब्देऽस्य सोमयागकालः। यागेऽस्मिन् श्रीधारपगुरुजीनामा श्रौतकुशलोऽ-ध्वर्यवं चकार। आहिताग्निः श्री भिकू दीक्षितलेले प्रतिप्रस्थाता, वेदमूर्तिः श्री भैय्यादीक्षित-जोशी होता प्रभृतयः सप्तदशर्त्विजः सोमयागमलञ्चक्रुः।

हिरण्यकेशी-शाखाध्यायी सत्याषाढसूत्रीयश्चासौ काश्यां स्वपाण्डित्य-प्रभावेण याजुषहौत्रपरिग्रही तत्प्रचारकश्चासीत्। कार्यस्यास्य विरोधोऽप्यासीदेव। अल्पीयसि काले एव बहूनि कार्याणि सम्पाद्य ग्रन्थान् ग्रथित्वा पठकान्पाठयित्वा श्रौतपरम्परां पूरयित्वा चत्वारिंशत्तमेऽल्पे वयस्येवावसितोऽयं विभ्राट् सरस्वतीबालः।

( ८ ) कात्यायनसूत्रीयो माध्यन्दिनशाखीयः परम्परया काशी-वास्तव्यः श्रीसदाशिव-दीक्षित-जावजी-भट्टः १९६० तमे विक्रमाब्दे सती चौथरा-( स्मारक ) वीथी भागे ज्योतिष्टोमाग्निष्टोमयागं चकार। अस्याध्वर्युः श्रीसोमनाथपाठकः, होता, श्रीरघुनाथ गणोरकरः, उद्गाता—श्रीशङ्करगुरुभुसारीचासीत्।

( ९ ) आहिताग्निः श्री शिरोमणि-शास्त्री नयपालदेशीयो विप्रः काष्ठमण्टप( काठमाण्डौ )वास्तव्यः काशीमागत्य १९५५ तमे विक्रमाब्दे ज्योतिष्टोमाग्निष्टोमं तथा १९५८ तमे वैक्रमीये साग्निचित्य-सर्वपृष्ठाप्तोर्यामयागं समनुष्ठितवान्। तदुभयोः क्रत्वोर्व्यययोर्गोलक्षद्वय-रूप्यकात्मको बभूव। यागयोरनयोर्निष्क्रयरूपं गोर्मानं विंशतिरूप्यपरि-मितमासीत्। काशीस्थः प्रसिद्धः श्रौतज्ञो वेद-वेदार्थ-शास्त्रार्थनिष्णातः ऋक्शाखीयो वामनाचार्यः, यजमानस्य कात्यायनपरिग्रहरक्षणाय कात्यायन-श्रौतसूत्रानुसारमुभयोः क्रत्वोराध्वर्यवं सम्यक् कृतवान्। असौ वामनाचार्यः सर्वोपलब्धसूत्रानुसारं श्रौतप्रयोगान्विधातुं सर्वदा समर्थः सिद्धहस्तश्चासीत्। अनेन याजमान्यादि सदस्यन्ताष्टादशप्रयोगाः स्वायत्तीकृताः। अग्निष्टोमस्थानं चैतन्यवटसमीपे वङ्गवाटिकायामासीत्। चयनयागस्थानं तु वर्तमानसंस्कृतविश्वविद्यालयनिकटे रामसरसः कूले ( रामकटोरा ) धूपचण्डीपीठसन्निधौ चासीत्। आद्ये क्रतौ क्रमेणाध्वर्युः श्रीआत्मारामभट्ट-वाजपेयी, होता—श्रीसीतारामदीक्षितः पुरोहितः प्रस्तरवीथी ( पत्थर गली ) वास्तव्यः ब्रह्मा—श्रीनारायण दीक्षित-जोशी, उद्गाता—श्री भिकूदीक्षित लेले तथा चान्येऽपि वेद-विद्यापारङ्गताः श्रोत्रिया विद्वांसश्चासन्। अपरे चयनयागे—अध्वर्युः श्रीगंगाधरभट्ट-वाजपेयी, ब्रह्मा श्रीगणेशभट्ट गोडसे, होता—उद्गा-तारौ पूर्ववर्तिनावेव चास्ताम्। अस्मिन्नपरे चयनक्रतौ श्रीसीताराम-

दीक्षितः पुरोहितः पादसेटकप्रमाणं शाम्भवी-पानं कृत्वा विरोधक—निन्दकादिभिः परिवेष्टिते श्रौतसदसि निर्भ्रान्तमस्खलितञ्चाश्विनशस्त्रं शशंस। यजमानः शिरोमणिदीक्षितोऽपि श्रौतनिपुण एवासीत्। अस्य यज्ञस्य स्मृतिर्विंशति वर्षात्प्रागपि वृद्धानां मुखेन श्रूयते स्म।

( १० ) काशीवास्तव्यो वैदिकप्रवरः काले इत्युपाह्वः सोमदीक्षितः सोमाधानमेवाग्रहीत्। सोमयागार्थं संकल्पितो व्ययोऽप्यत्रत्ये नैकेन धनपतिना श्रीमुंशीमाधवलालमहोदयेन स्वार्जितद्रव्योत्सर्गेतकृत इति विशेषः। क्रतुसमारम्भोऽयं काशीजनपदे भूलनपुरग्रामे तस्यैवोद्यानस्थ आम्रवाटिकायां सुसम्पन्नः। अस्य कालः १९६८ वैक्रमाब्दः। अस्याध्वर्युः श्री सोनदीक्षितः पानगांवकरः, ब्रह्मा—श्री काशीनाथभट्ट पुराणिकः, होता—श्री लखू नाना नाफले, उद्गाता श्री बालंभट्ट बापटश्च मिलित्वा यज्ञक्रतुं सफलीकृतवन्तः।

( ११ ) परम्परया काशीवास्तव्यो देशस्थ ऋग्वेदीयः श्री काशिराजाश्रितो धर्मशास्त्रमीमांसाशास्त्रयोर्निष्णातश्चाहिताग्निः श्री भिकाजीपन्तशेषः राज्यकल्याणायैवाग्निहोत्रमाश्रित्य काशीराजसाहाय्येन व्यासाश्रमे ( रामनगरे ) १९६४ तमे वैक्रमाब्दे यज्ञनारायणं ज्योतिष्टोमेनेयाज। यस्याध्वर्युः श्री भालचन्द्र दीक्षित पानगांवकरः, ब्रह्मा—श्री राजारामदीक्षित पानगांवकरः, उद्गाता श्रीगोपालदीक्षित लेले, होता श्री रामकृष्णभट्टवझे प्रभृतयो महर्त्विज आसन्।

( १२ ) आहिताग्निः श्री यज्ञेश्वर दीक्षित महाबलेश्वर करः काशी वास्तव्यो वङ्गवाटिकायां चैतन्यवटप्रान्ते सोमयागमकारि। अस्य महर्त्विजः श्री रामदीक्षितस्तोरो अध्वर्युः, श्रीविट्ठलदीक्षित लेले प्रतिप्रस्थाता, वेदप्रकाण्ड एकपाठी गुणविशिष्टः श्री गुरुजी रामकृष्ण जोशी उद्गाता, श्री रामभाऊ देव नामाग्नीध्रः लेखकस्य पितामहः श्री गंगाधरभट्टदेवश्च होता प्रभृतय आसन्। अयं यागकालः १९६८ वैक्रमाब्दे श्रूयते।

( १३ ) ऋक्शाखीयः पुराणप्रवचनादिकर्ता श्री सदाशिवशास्त्री सोमणः स्वोपार्जितवित्तेन चैतन्यवटीय-यज्ञभूमावेव १९५८ तमे वैक्रमे वर्षे ज्योतिष्टोमयागेन यज्ञनारायणं प्रीणयामास। अस्य क्रतोः

संसाधका मुख्या ऋत्विजः क्रमेण श्री भालचन्द्र-दीक्षितोऽध्वर्युः, श्री नारायण-दीक्षितः जोशी ब्रह्मा, श्री रामचन्द्र-भट्ट काले होता, श्री भैय्याजी सप्रे उद्गाता श्री सीताराम-दीक्षितः पुरोहितः प्रतिप्रस्थाता, चासन् ।

( १४ ) आपस्तम्ब-सूत्रीयः कृष्णयजुर्वेद-विद्वान् द्रविडदेश-( तमिल-नाड ) वास्तव्यो यागार्थं काशीमागत्य १९६६ तमे वैक्रमे हरिश्चन्द्र-घट्टे मद्रप्रान्तीय शतावधानकलासाधकस्य श्री विश्वनाथ-शास्त्री श्रौती महाभागस्याध्वर्यवे ऋग्वेद-गुरुजी-श्रीरामजीजोशी महोदयानां होतृत्वे स्वीयं सोमयागं चकार । यजमानस्य सर्वे प्रयोगाः स्वायत्ता आसन्निति यागस्यास्य वैशिष्ट्यं लोकैः समादृतम् ।

( १५ ) आहिताग्निः सरयूपारीणो विप्रः काशीवास्तव्यः श्री शीतल-पाण्डेयः चैतन्यवटीय-देवयजनभूमौ कात्यायनसूत्रानुसारं सोमयागं कृतवान् । अस्याध्वर्युः श्री विष्णुपाठक-कावले, प्रतिप्रस्थाता—श्री गौरीशङ्कर-बान्धवकरः, ब्रह्मा श्रीगणेशभट्ट-गोडशे तथा चान्ये होता-द्यो विप्राः श्रौतशास्त्रपारङ्गता विद्वांस आसन् । सोमयागोऽयं १९७२ विक्रमाब्दे सम्पन्नः ।

( १६ ) गौडब्राह्मणभूषणः श्रीरघुनाथजी अग्निहोत्री वैदिकः १९७८ तमे वैक्रमीये वत्सरे असीगङ्गासङ्गमस्थ-जगन्नाथ-मन्दिर-निकटस्थे देवयजनभूमौ सप्तर्षिकुलोत्पन्न-श्रीलक्ष्मीनाथदीक्षितानां-माध्वर्यवे कात्यायनसूत्रानुसारं सोमयागं चकार । अस्य होत्रप्रयोगः श्रीलक्ष्मणजी गणोरकरेणाश्वलायन-सूत्रानुसारेण सम्पादितः ।

( १७ ) गौडसारस्वतविप्रपुङ्गवः श्रीगङ्गाधरजी अग्निहोत्री १९८० तमे विक्रमशाके श्रीकाशीदेवीसन्निधौ सप्तसागरसरोवरभूमौ कात्यायनानुसारसोमयागं कृतवान् । अस्याध्वर्यवं श्रीलक्ष्मीनाथपाठक सप्तर्षिणा, हौत्रं तु काण्वशाखा विदुषा घनपाठिना श्रीनारायणभट्ट-वत्तरेश्वरी-महोदयेन, औद्गातृत्वं श्रीबालकृष्णदीक्षित जावजी-भट्टेन कृतम् ।

( १८ ) काशी-वास्तव्यः (ठठेरी बाजार) चतुस्तम्भ-क्षेत्र-वासी सरयूपारीणविप्रकुलावतंसोऽग्निहोत्री शशिभूषणपण्डितः काश्यां

तडागभूमौ सोमयागं सम्पादयामास। यागोऽयं लेखकेनापि बाल्यकाले श्रीमत्पितृचरणैः सह गत्वावलोकितः। अस्य प्रमुखा ऋत्विजः क्रमेण श्री आत्माराम-भट्ट-वाशीमकरः अध्वर्युः, श्री काशीनाथजी-गोडशे प्रतिप्रस्थाता, श्री बाबूदीक्षित जडे उद्गाता, श्रीसीताराम-दीक्षित-चित्तले होता, श्री लक्ष्मणजी-वाशिमकरः ब्रह्मादय आसन्।

(१६) वर्तमानशताब्द्यां "एकः सूर्यो विश्वमनु प्रभूतः" इति श्रुतिवाक्य इवानेकपूर्वपुरुषेभ्योऽखण्डितरूपेण प्रचालितमग्निहोत्रं धार्यमाणो गुर्जरदेशीयोऽपि परम्परया काशीवास्तव्यः श्रीमाल जातीयो विप्रपुङ्गवो गोयनकासंस्कृतमहाविद्यालय-प्राध्यापक-सेवानिवृत्तो वेद-कर्मकाण्ड-श्रौतस्मार्तज्ञोऽनेकग्रन्थलेखकः सर्वदाग्निपरिचर्यारत आहि-ताग्निस्त्रिपाठीत्युपनामा ऋषिशङ्करशर्मा भारद्वाजः स्वात्यो नैक चातुर्मास्य याजी २०२३ तमे वैक्रमेऽब्दे श्रीमतां द्विजकुलावतंसानां काशिराजानां प्राचीने ऐतिहासिकप्रासादे हनुमानघट्टस्थिते शिवालये (शिवालामहाल) ज्योतिष्टोमाग्निष्टोम-चतुःस्तोमात्मकेन सोमयागेन परब्रह्मपरमात्मानं सिषेव। अस्योद्घाटनं श्रीकाशीनरेशेन डॉ० विभूतिनारायणसिंहशर्मणा कृतम्। सोमप्रवाकः श्रीविश्वनाथ देवः, होता श्री डॉ० श्रीकृष्ण देवः घनपाठी वेदाचार्यः नासिकक्षेत्रस्थो नारायणविनायक-भानुवंशो, ब्रह्मा श्री सामवेद-भास्करः "सन्मार्ग" दैनिक वृत्तपत्र प्रबन्धकः शिवराम शर्मा त्रिपाठी नागरः, उद्गाता श्रीदेवकृष्णत्रिपाठी नागरश्चासीत्। अस्याग्निहोत्रं सोमयागश्च वेदत्रयीं सूत्रत्रयीं च निर्वहति। यथा—ऋग्वेदीयमाश्वलायनीयं सौत्रम्, शुक्लयजुर्वेदीयं कात्यायनसूत्रीयमाध्वर्यवं, स्वशाखीयं सामवेदीयं लाट्या-यनसूत्रीयमौद्गात्रत्वं, ब्रह्मत्वं याजमान्यञ्च प्रचलतीतिविशेषः।

अस्मिन्सोमयागे वृताः सदस्यास्त्रयोऽपि कृष्णयजुर्वेदीयाः सत्याषाढ-सूत्रीयाश्चासन्। (क) श्रीगणेशभट्टवापटः, अग्निष्टोमादिसप्त संस्थासु, द्वादशाह-क्रतौ, पौण्डरीक-महायागेऽपि च, कृतार्त्विज्यः गोयनका-संस्कृतमहाविद्यालयप्राध्यापकसेवानिवृत्तः षोडशस्त्वपि श्रौतार्त्विज्यकर्मसु निष्णातः श्रौतवेदिमण्डपादि-निर्माणकुशले लेखकस्यापि श्रौतविद्यायां

निर्देशकः सूक्ष्मातिसूक्ष्मरूपेण, सङ्कल्पितं सोमयागं यथासाङ्गं यथा शास्त्रं च समाधातुं चेष्टते स्म। (ख) कर्नाटकप्रदेशीयो गोकर्णक्षेत्र-वास्तव्यः श्रीगणेशशास्त्री खरे श्रौतविद्यापारङ्गतस्तथैव वर्तते स्म। (ग) पुण्यपत्तनवासी श्रीविद्याधर-भिडे, प्राध्यापकोऽपि तथैव प्रयतते स्म। याजिनाऽनेनानेकेषु स्थलेषु-पञ्चनद-गुर्जर-वङ्ग-अङ्ग-महाराष्ट्र-राजस्थानादिप्रान्तेषु स्वीयैर्ऋत्विग्भिः सह गत्वा नैका नैमित्तिका इष्टयः, चातुर्मास्यश्रौतयागाश्च सुसम्पादिताः। स्वयमपि दर्शपूर्णमासादारभ्याग्निष्टोमादि वाजपेयान्तेषु च यागेषु यथा प्राप्तानि विभिन्नान्यार्त्विज्य-कर्माणि निर्वाहितानि सन्ति। अस्य दीक्षितस्यैक-मेवाग्निहोत्रमधुना काशीस्था दिव्या ऐतिहासिकी अखण्डिता च श्रौतपरा संरक्षकमिति कौतुकास्पदं गौरवपूर्णं स्मरणीयञ्च वर्तते। अयं साग्निचित्य-सर्वपृष्ठाप्तोर्यामसोमयागं चिकीर्षति। भगवत्कृपया शिवसङ्कल्पोऽयं पूर्णतां यात्वितीमहे।

(२०) अस्यैव ऋषिशङ्कर दीक्षितस्य पिता श्री हरिशङ्करदलपतराम-त्रिपाठी श्रीमाली गुर्जरः सामवेदीय आहिताग्निः काशीतः साग्निकं विविधेषु स्थलेषु गत्वा तीर्थादियात्रया सह यत्र तत्र चातुर्मास्यादि-श्रौतसंस्थाः सम्पादयामास। पञ्चाग्नि-परिचर्यायां चत्वारि तपांसि व्यतीतानि। तथा चान्यानां श्रौतयागानामपि यत्र तत्र बहुविधमार्त्विज्य-मनेन साधुसम्पादितमस्तीति विशेषः।

(२१) नागरकुलावतंसः शांखायन-शाखीय-ऋग्वेदीय आहिताग्निः श्रीभगवानीलाल-द्विवेदश्चातुर्मास्य-याजीपरम्परया काशीवास्तव्यश्चत्वा-रिंशद्वर्षपर्यन्तमविरतमग्निहोत्रं धारयामास।

(२२) महाराष्ट्रकुलजः परम्परया काशीनिवासी चतुर्वेदविद् पौराणिको दरभङ्गा-संस्कृत-महाविद्यालये अथर्ववेद-प्राध्यापक आहि-ताग्निः श्री रामचन्द्रभट्ट-रटाटे इत्याख्यः षट्त्रिंशद्वर्षपर्यन्तं वह्नित्रयं सेवयामास। अनेन भारते सर्वेषु प्रान्तेषु नैकवारं परिभ्रमणं विविध-यज्ञानुष्ठानादीनां सम्पादनाय कृतम्। चातुर्मास्यनामकः श्रौतयागोऽपि समनुष्ठितः।

( २३ ) आहिताग्निः श्रीनाथजी सारस्वतः शुक्लयजुर्वेदे आधनान्तं कृतभूरिपरिश्रमो वेदाचार्यपरीक्षोत्तीर्णश्च वर्षमेकं प्रभूतसमुत्साहेनाग्निहोत्रं संरक्ष्य पत्नीवियोगान्निरग्निको बभूव ।

( २४ ) धर्मसंघशिक्षामण्डलप्रबन्धकः शुक्लयजुःशाखीयः सरयूपारीणो विप्रोत्तम आहिताग्निः श्री जोखनराम-पाण्डेयः पञ्चदश वर्षेभ्योऽद्य यावत् अनन्तश्रीविभूषितानां सर्वतन्त्रस्वतन्त्राणां श्रीहरिहरानन्द सरस्वती ( करपात्र ) स्वामिपादानां कृपया सर्वविधसहयोगेन चाग्निहोत्रं सेवते । अनेन द्वौ चातुर्मास्ययागौ सम्पादितौ ।

( २५ ) गौडकुलप्रसूतो राजस्थानीयो महामहिमोपाध्यायो वेदाचार्यः पण्डितप्रकाण्डः श्रीभगवत्प्रसादमिश्रः श्रौतस्मार्तकल्पादीनां विशेषज्ञतायै वेदार्थपरिशीलनाय च १९८१ तमे वैक्रमेऽब्दे काशीक्षेत्रं समागत्य यथासङ्कल्पमधीत्य बहून् छात्राँश्चाध्यापयन्प्रथमतः काशिकराजकीयसंस्कृतमहाविद्यालये, पश्चात्तस्यैव नामपरिवर्तिते सति वाराणसेयसंस्कृतविश्वविद्यालये वेदविभागाध्यक्षपदे प्रथमत्वेन नियुक्तो विद्वज्जनैश्च सम्मानितः २०२३ तमे वैक्रमीये विश्वविद्यालयद्वारा सम्मानिताग्निहोत्रपदे वृतः समाहृतश्चायं विद्वानाधानकालादिदानीं यावत पञ्चाग्नीनां परिचर्यां कुर्वन्नास्ते । वेदसम्बन्धितेषु सर्वविधशास्त्रीयप्रक्रियासु कुशलः पारङ्गतश्च वर्तते । अस्य ज्येष्ठसुतः पण्डितप्रवरः श्रीगोपालचन्द्रमिश्रः वेदाचार्य, एम० ए०, पी० एच्० डी० पदवीभिर्विभूषितश्चेदानीं स्वपितुर्वेदविभागाध्यक्षपदमलङ्कुर्वन्नपि तातचरणानामग्निहोत्रे यथावसरमाध्वर्यवादि प्रयोगार्त्विज्यं विधत्ते । अस्य पौत्रौ श्रीयुगलकिशोरश्रीकिशोरमिश्रावपि दर्शपूर्णमासेष्टिकान्यार्त्विज्यादिकर्माणि कुर्वन्तौ वेद-श्रौतादिविद्याग्रहण-संरक्षण-रतौ विराजेते । एवंप्रकारेणास्याग्निहोत्रिणस्त्रिपुरुष विशिष्टवेदविद्यया सह श्रौतविद्याया पि सेवापूर्वकमध्ययनमग्निहोत्रसेवा च भवतीति विशेषः ।

श्रीमन्नृपविक्रमार्कस्य विंशतितमायां शताब्द्यां यज्ञनारायणसेवया प्रसिद्धि गतानाम् असोमयाजिनामपि कृतसोमयागार्त्विज्यानां श्रीक्षेत्रकाशीमण्डलभूषणानां स्मृतिशेषं गतानाञ्चाहिताग्नीनां कालसहितो नाममात्रेण परिचयः ।

१. ६१ वर्षेभ्यः प्राग् भूता आहिताग्नयः श्री व्यङ्कटेश शास्त्री सहस्रबुद्धे
२. ८७ " " श्री गणेश शास्त्री सहस्रबुद्धे । उभौ ऋग्वेदिनौ ।
३. ७५ " " " रामेश्वर भट्ट वझे ऋग्वेदीयः ।
४. ७२ " " " बालदीक्षित जोशी "
५. ६० " " " तात्याशास्त्री कलेकरः "
६. ५८ " " " बालकृष्ण शास्त्री कलेकरः "
७. ६० " " " विष्णु शास्त्री साठे कृष्ण यजुर्वेदीयः ।
८. ६० " " " भिकूदीक्षितः लेले कृष्णयजुर्वेदाध्यापकः ।
९. ७५ " " " बालदीक्षितः काले ऋग्वेदाध्यापकः ।
१०. ६५ " " " आवादीक्षितः पुरोहितः ऋग्वेदीयः ।
११. ६० " " " बाल दीक्षितः तोरो "
१२. ६० " " " गङ्गाधर शास्त्री थत्थे "
१३. ५५ " " " बालदीक्षितः यज्ञवारु " आन्ध्रः
१४. ५५ " " " सुब्रह्मण्य शास्त्रीद्राविडः कृष्णयजुर्वेदीयः
१५. ५५ " " " गणेश दीक्षित वेत्तगिरिः कर्नाटकीयः ऋग्वेदः
१६. ४० " " " भोलानाथजी गौडः शुक्लयजुर्वेदीयः ।
१७. ५० " " " प्रभुदत्तजी गौडः महामहोपाध्यायः "
१८. ५० " " " श्रीधरभट्ट पांचगांवकरः ऋग्वेदीयः ।
१९. ५० " " " म० म० विनायक शास्त्री वेतालः "
२०. ४५ " " " वंशीधरशास्त्री चातुर्मास्ययाजी वङ्गीयः शु० म०
२१. ४५ " " " बालशास्त्री रङ्गप्पा ऋग्वेदीयः
२२. ४५ " " " देवनाथशास्त्री सरयूपारीणः । शुक्लयजुर्वेदीयः ।
२३. ४० " " " वायुनन्दनमिश्रो गौडः । " "
२४. ३५ " " " मन्नूजी सारस्वतः । " "
२५. ४० " " " सप्तर्षिर्लक्ष्मीनाथ पाठकः । " "
२६. ४० " " " सिद्धनाथशास्त्री शाकन्दीपीयश्चातुर्मास्ययाजी ।
२७. ४० " " " रतनजी दीक्षितः शांखायनो ऋग्वेदीयः
२८. ७० " " " रामचन्द्र देवश्चातुर्मास्ययाजी ऋग्वेदीयः
२९. ४० " " " म० म० विद्याधरजी गौडश्चातुर्मास्ययाजी शुक्लयजुर्वेदीयः ।

३०. ८० वर्षेभ्यः प्रागभृतश्रीगङ्गाधर-दिवाकरदेवः आश्वलायनऋग्वेदीयः कराले कलिकाले विरोधात्मके स्थितावपि यज्ञनारायणकृपया तस्यैव सेवारताः श्रौतविद्याभ्यस्तास्तत्कार्यनिपुणाः श्रौतविद्यासंरक्षका अनाहिताग्नयोऽप्याहिताग्नीनां दर्शादि-वाजपेय-पौण्डरीकादि-क्रतुषु कृतार्त्विज्याः श्रोत्रिया विद्वांसः केचन श्रौतछात्राश्च ।

ऋग्वेदिनः

( १ ) डा० श्री श्रीकृष्णदेवः घनपाठी-वेदाचार्यः—पी० एच० डी० आदि-पदवी-समलङ्कृतः सम्पूर्णानन्दसंस्कृतविश्वविद्यालये ऋग्वेदाध्यापकः ( लेखकः ) दर्शादीष्टिषु, बहुवारं चातुर्मास्ययागे, द्विवारमग्निष्टोमे एकवारं वाजपेये हौत्राग्नीध्र-ब्रह्मत्व-प्रतिप्रस्थातृत्वं, आध्वर्यवमैत्रावरुणादि-प्रयोगार्त्विज्यं कुर्वन् वेद-श्रौत-स्मार्त-विद्यां पाठयन्पारम्पर्येण काश्यामास्ते ।

( २ ) डा० श्री विश्वनाथदेवः घनपाठी, वेदाचार्यः पी० एच० डी० पदवीसमलङ्कृतः काशीस्थाः पुण्यपत्तनीया च सर्वोच्चवैदिकपरीक्षोत्तीर्णः काशीराजस्वर्णकङ्कणविजेता प्रान्तीयशासनेनापि पुरस्कृतो गोयनकासंस्कृतमहाविद्यालये ऋग्वेदाध्यापकः दर्शादिवाजपेयान्तेषु श्रौतयागेषु हौत्रम्, आध्वर्यवम्, आग्नीध्रम् ब्रह्मत्वम्, प्रशास्तृत्वम् ब्राह्मणाच्छंसित्वम् सोमप्रवाकादि विविधार्त्विज्यं कुशलतयाकुर्वन्नास्ते ।

( ३ ) श्रीगङ्गाधरदेवः वेद-शास्त्रिपदवी-विभूषितः ऐष्टिककार्ये होताग्नीध्र-ब्रह्मत्वादिप्रयोगानुष्ठानकर्ता प्रथमत एव काश्यां नववर्षात्प्राकसम्पन्नेऽग्निष्टोमयागे नेष्टा नामार्त्विज्यमकरोत् ।

( ४ ) तस्यानुजः रामचन्द्रदेवः शास्त्री पुण्यपत्तनेऽल्पीयस्येव वयसि ज्योतिष्टोमे सोमयागे ग्रावस्तोता प्रयोगार्त्विज्यं कृतवान् ।

ऋग्वेदिनः

( ५ ) श्री शम्भूनाथकेलकरः श्री घनपाठी वैजनाथभटशायकरस्य श्रौतशिष्य ऐष्टिकादिचातुर्मास्यान्तेषु श्रौतऋत्विज्ये निष्णातः पुण्यपत्तने वाजपेययागे मैत्रावरुणार्त्विज्यमकरोत् ।

( ६ ) श्रीरामचन्द्रभट्ट आठवले दर्शग्रन्थ-विद्वानैष्ठिक-श्रौतकर्मसु कृतार्त्विज्य इदानीमथर्ववेद-संरक्षणपरश्च वाराणस्यां विराजते।

( ७ ) शांखायनशाखीय ऋग्वेदीयः—श्री डा० मनोहरलालद्विवेदो गुर्जरीयनागरजातीयो वंशानुगत-काशीवास्तव्यो ज्योतिष्टोमादि-प्रयोगेषु कृतपरिश्रमश्चातुर्मास्ययागान्तं कृताध्वर्यवादि-प्रयोगः सम्प्रति सम्पूर्णानन्दसंस्कृतविश्वविद्यालये अथर्ववेद-प्राध्यापकरूपेण कार्यं कुर्वन्नास्ते।

( ८ ) कृष्णयजुर्वेदीयो हिरण्यकेशी सूत्राध्यायी वैदिकमूर्धन्यानां वंशानुक्रमेण काशीवास्तव्यानां काश्यामेव साङ्गवेदविद्यालये सर्वप्राथम्येन सर्वोच्चवैदिकपरीक्षोत्तीर्णानां पुणे वेदपाठशाला-प्राध्यापकानां न केवलं स्मार्तप्रयोगेष्वपि तु अग्निष्टोमात्यग्निष्टोमादिसप्तसोमसंस्थासु तथा सर्वतोमुख-पौंडरीकादि-क्रतुषु च कृताध्वर्यव-होत्रोद्गातादिप्रयोगाणां साफल्येन कृतार्त्विज्यानां कृष्णयजुर्वेदीय-संहितास्वाहाकारप्रयोगरचयितॄणामेवंगुणविशेषणविशिष्टानां श्रीमतां स्वनामधन्यानां गङ्गाधरभट्टलेलेमहोदयानामद्वितीयोऽनुजः स्मार्ताग्निसेवकः श्रीपरशुरामभट्टलेले काशीवास्तव्यो द्विसाहस्रचयनसहितेत्यग्निष्टोमेग्रावस्तोतृत्वं सांगलीनगरे, पवनीनगरे सम्पन्नेऽग्निष्टोमे मैत्रावरुणत्वं, सांगलीनगरे पौंडरीके सुब्रह्मण्यत्वं, सर्वतोमुखे चोत्तरदिग्भागे होत्रं च सम्यगकरोत्।

( ९ ) परम्परया वैदिककुलभूषणः श्रौत-स्मार्तयज्ञविज्ञानविषयेषु पारङ्गतः श्रीक्षेत्रकाशीनिवासी कृष्णयजुर्वेदीयः काश्यां पुण्यपत्तने च वैदिकपरीक्षोत्तीर्णो न केवलं स्ववेदे अपितु ऋग्वेदस्याप्याश्वलायनसूत्रादि-षडङ्गाध्येता गोयनकासंस्कृतमहाविद्यालये अध्यापको वेदमीमांसाधर्मादिशास्त्रवेत्ता स्वनामधन्यः श्रीगणेशभट्ट-बापट इत्याख्यः ( सोमनाथभट्ट इति बालनाम्नाऽपि प्रसिद्धः ) श्रौतस्य सोमादिसप्तसंस्थानां सर्वविधेषु कार्येषु पारदृश्वा तथैवाग्निष्टोमादि-सप्तसंस्थासु, द्वादशाह-पौण्डरीक-सर्वतोमुखादि-क्रतुषु च आध्वर्यव-होत्र-ब्रह्मत्वोद्गातृत्व-सदस्यत्वादि-मुख्यामुख्य-प्रयोगाणामार्त्विज्यकर्ता सप्ततिवर्षवयस्कोपीदानीं यावत् वेद-श्रौतादि-विद्यानां प्रयोगान् शिक्षयन्नास्ते।

( १० ) श्रीगणेशदीक्षितजावजीभट्टः शुक्लयजुर्वेदमार्तण्डः साङ्गवेद-विद्यालयप्राध्यापकः श्रौतयागेष्वध्वर्यवादि-सप्तदशस्वपि ऋत्विक्कर्मसु कुशलो बहुषु प्रयोगेषु चतुर्णामपि वेदानां होत्राध्वर्यवोद्गातृत्व-ब्रह्मत्व-सदस्यत्वादि-कृतनानाविधार्त्विज्यः श्रौतपद-पदार्थज्ञाता, पाठित-आघनान्त-प्रभूतशिष्यः, सिद्धहस्तः प्रथितयशस्कः शतमुखाद्यनेकविध-स्मार्तप्रयोगाणां प्रधानाचार्यो मन्त्र-तन्त्राद्यागमविद्यासम्पन्नः साधको वैदिकोत्तमश्चेदानीमेव नवति वर्षात्मके ज्ञान-वृद्धे वयसि काशीक्षेत्रे श्री विश्वेश्वरसायुज्यं लब्धवान् ।

( ११ ) श्रीसखारामदीक्षितजावजीभट्टः पूर्वोक्तस्य भ्राताऽग्निष्टोमादि-सप्तसु संस्थास्वध्वर्यवं ब्राह्मत्वञ्च सम्यग्रूपेण सम्पादितवान् ।

( १२ ) पूर्वोक्तस्य शिष्योत्तमो मङ्गलेश्वरबादल-नामा काश्यां सर्वोच्च-वैदिकपरीक्षोत्तीर्ण आध्वर्यव-होत्र-ब्रह्मत्वादि बहुविधमार्त्विज्यं सप्तसंस्थासु कौशले कर्ता तथा बहुविधासु ललित-काव्य-शिल्प-क्रीडादि-कलासु कुशलो मर्मज्ञश्च विराजते ।

( १३ ) श्रीघनपाठी बदरीनाथ-गणोरकरोऽप्यग्निष्टोमे वाजपेये चाग्नीध्रत्वं होत्रं च कृतवान् । इदानीमपि सर्वदा वेदसेवारतश्चास्ते ।

( १४ ) परम्परया काशीवास्तव्यो-वेद-श्रौतविद्यासंरक्षकगोडशे कुलोत्पन्नः श्रीकाशीनाथजी गोडशे नाम्ना प्रसिद्धस्तस्य ज्येष्ठपुत्रः श्रीश्रीकृष्णजी तथा कनिष्ठपुत्रः श्रीगजाननजी वेदाचार्यः इति त्रयोऽपि घनपाठिनो घनपारायणकर्तारः श्रौत-स्मार्त-याज्ञिक-कर्म-कुशलाः सन्तो दर्शादि-चातुर्मास्यान्त-श्रौतयागेषु विविधमार्त्विज्य-परायणा विराजन्ते श्रीलक्ष्मीकान्तदीक्षितजावजीभट्टः ।

( १५ ) सम्प्रति साङ्गवेदविद्यालये एव शुक्लयजुर्वेदप्राध्यापकः श्रौत-स्मार्ततन्त्रनिष्णातो मण्डपशिल्पकारो घनपाठी चातुर्मास्यान्तेषु श्रौत-यागेषु विविधमार्त्विज्यं, तथा साग्निचित्य-सर्वपृष्ठाप्तोर्याम-सोमयागे च होत्रं कृतवान् । इदानीमपि वेद-श्रौतादि-विद्याभ्यासरतः सर्वत्र, सम्मानितो वर्तते ।

( १६ ) अस्यानुजः श्री सोमनाथ-दीक्षित-जावजी-भट्टो वेदाचार्यः कर्मप्रयोगे वेदप्राध्यापकः काशीवास्तव्यो बृहस्पतिसवे आध्वर्यवं सर्वपृष्ठाप्तोर्याम सोमे प्रतिप्रस्थातृत्वं वाजपेये च प्रतिहर्तृत्वं च साधुतया करोति स्म ।

( १७ ) काश्यामाहिताग्निना श्रीऋषिशङ्कर-त्रिपाठिना कृते सोमयागे नागरकुलावतंसेन श्रीदेवकृष्णशर्मणा औद्गातृत्वं श्रीनन्दकृष्णशर्मणा प्रस्तोतृत्वं श्रीगोपालरामशर्मणा प्रतिहर्तृत्वञ्च सम्यक्कृतमिति नागरजातीयानां कृते विशिष्टरूपेण तथैव सर्वेषां वैदिकविदुषां कृतेऽपि गौरवास्पदमेव ।

( १८ ) सानुवंशं काशीसेवकः श्रीगौरीदत्तत्रिपाठि नामा नागरः ऐष्टिकचातुर्मास्यादि-यागेषु होत्राध्वर्यवादिप्रयोगान्नैकवारं सम्पादितवान् । सामवेदीयः कौथुमशाखाध्यायी पुरुषोऽयं सोमादि प्रयोगाणामौद्गातृगणीय-प्रयोगेष्वतीव कुशलो वेदविद्या-संरक्षणकार्यं कुर्वन्विराजते ।

( १९ ) श्रीमतां काशीनरेशानां परम्परागतः पुरोहितो राजपण्डितः सामवेदीयो गानमार्तण्डो दर्शग्रन्थाध्येता स्मार्तवदेव श्रौतकर्मकुशलोऽपि 'सन्मार्ग' दैनिकसमाचारपत्रप्रबन्धकः सामवेदीययाज्ञिक-पद्धतीनां रचयिता नागरकुलतिलकः श्रीशिवरामत्रिपाठी ( शिवाजी नाम्ना प्रसिद्धः ) दर्शादि-चातुर्मास्यान्तेष्वैष्टिककर्मसु सप्तहविः संस्थासु च सर्वदा आध्वर्यवं हौत्रं प्रतिप्रस्थातृत्वं च साधुसम्पादकः सन्नपि काश्यां सम्पन्ने सामवेदीयाग्निष्टोमे सर्वेषां प्रयोगाणां सञ्चालनपूर्वकं ब्रह्मत्वं तथा चामरावत्यां पुण्यपत्तने चाग्निष्टोमादि-वाजपेयान्तेषु सोमयागेषु स्वशाखीयमौद्गातृत्वञ्च कृतवान् ।

( २० ) श्रीचिन्तामणिपालंदे वेदाचार्यः, श्री काशीनाथ-बापटः श्रीनारायणदातारः शास्त्री, श्रीमाधवबापटः ज्योतिषी, एभिः काशीवास्तव्यैः श्री गणेश-भट्ट-बापट महोदयानामन्तेवासिभिः पुण्यपत्तने सुसम्पन्ने वाजपेयसोमयागे छात्रदशायामेव क्रमेण औद्गातृत्वम् प्रस्तोतृत्वम्, प्रतिहर्तृत्वञ्च साधुतया सम्पादितम् ।



# कालिदासस्य जीवनदर्शनम्

डॉ० धर्मेन्द्रकुमारगुप्तः

महाकविः कालिदासः खलु संस्कृतकाव्यजगति कविकुलशेखर इति चिरन्तनपरम्पराप्रथितेयम् आलोचनोक्तिः। अयं तु कविः प्राच्याया भारतीय-संस्कृतेर्महान् उद्गातेत्यपि कविकुलगुरोरस्यानन्यो महिमा वर्तते। कविरय भारतीय-संस्कृतेस्तत्त्वानि वैशिष्ट्यानि च स्वकीयासु कृतिषु निपुण प्रतिबिम्बयति, एव च कुर्वन्नेव निजयाऽद्वितीयया सूक्ष्मेक्षिकया जीवने, तदीयेषु विविधेषु पक्षेषु, समाज-धर्म-दर्शन-राजनीत्यादिषु चापि विषयेषु निशितां निजां दृष्टिं निपातयति। काव्य-सृष्टिप्रक्रिययानया स निजं जीवनदर्शनं स्फुटमुद्घाटयति, उपस्थापयति च तदस्माकं पुरतो लीलया च, विलासेन च, वैदग्ध्येन च। तदेवं तदीयासु कृतिषु तस्य जीवन-दर्शनं असविवृतमसदपि विवृतं तिष्ठति, विवृतं च सत् तत् सूक्ष्मदर्शनापेक्षीति संवृतं वर्तते। तदिदं दुष्यन्तं प्रति शाकुन्तलं प्रेमेव[1] न विवृतं न च संवृतमिति कथयितुं शक्यते।

कवेरस्य जीवनदर्शनं सुपरिष्कृत चास्ति। जीवनदर्शनमिदं भारतीयायाः संस्कृतेर्महनीयान् आदर्शान् सुतरामुपजीवति तांश्च सूक्ष्ममनुहरति, अनुसरति चापि।

कालिदासमतेन मानवजीवनं कर्मभूमिः सत्कर्मपरम्पराप्रवृत्त्यवसरो वास्ति। अवसरोऽयमनन्तकालमहासागरे जलबिन्दुरिव क्षोदिष्ठ एवेत्य-भिप्रायविशेषमभिव्यक्तुकाम एव महाकविः —

मरण प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः।[2]

इत्याह। नात्र कवेरभिप्रायः कथमपि जीवनं विकार इति। अत्र तु जीवनमीश्वरेच्छानियमितं दुर्लभ चेत्येव तन्मतम्। अत एव स पद्योत्त-रार्धेनाह—"क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु भाग्यवानसौ" इति।

---

1. तु० अभिज्ञानशाकुन्तलम्, २. ११.

2. रघुवंशम्, ८. ८७.

जीवने यथालाभं सन्तोषः कार्यस्तस्य च सदुपयोगो विधेय इति महाकवेर्महानुदात्तश्च सन्देशः। सन्देशोऽयं तस्य परमामास्तिक्यभावनां प्रख्यापयति, आस्तिक्यभावना चेयं भारतीय-संस्कृतेर्मूलं वर्तते। कवेरास्तिक्यदर्शनं न निराशामूलकं निर्वेदपर्यवसायि वास्ति। तत्तु खलु सुतरामास्थास्थापितमाशाप्रेरकं चास्ति, स्वस्थायाश्च मनोवृत्तेः फलं चरीवर्ति।

कालिदासीयं जीवनदर्शनं दृढायास्तदीयाया आस्तिक्यभावनाया अङ्गमस्ति। आस्तिक्य-भावना चेयं तत्कलाकृतिषु सुस्फुट प्रतिफलितस्य तदीयस्याशावादस्य जननी वर्तते।

कालिदासस्य जीवनदृष्टिः परम्परीणामाश्रमव्यवस्थामाधारीकृत्य प्रवर्तते। व्यवस्थेयं पुरुषायुषमाश्रमविशेषेषु यथायथं विभजते। अस्या व्यवस्थायाः संकेतो रघूणामन्वयं वर्णयता कविना इत्थं कृतः—

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥[1]

अस्या आश्रमव्यवस्थाया आधारो जीवने भोगयोगयोः समीचीनः समन्वयो भवेदिति स्वस्थो दृष्टिकोणोऽस्ति। समन्वयस्याभावे जीवनेऽसामञ्जस्यमुदीर्णं भवति, असन्तुलनं च तत्र सुतरां पदं करोति। कालिदासो भारतीयसंस्कृतेर्दृष्टिकोणमिमं विशदं स्फुटं च व्याचष्ट। स स्वकृतिषु सर्वत्रापि गृहस्थाश्रमस्य महत्त्वं प्रत्यपादयत्। गुरुकुलात् समावृत्तं कुमारं रघुं कर्तव्यं कर्मोपदिशतो महर्षेः कौत्सस्य मुखेन स द्वितीयमिमं गृहस्थसंज्ञमाश्रमं सर्वोपकारक्षममाह—

'कालो ह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते।[2]

तदीयेयमुक्तिर्भारतीयसंस्कृतेः परम्परीणां विचारसरणिमनुसरति— या खलु सरणिः सर्वत्र रामायणमहाभारतादिष्वितिहासग्रन्थेषु, पुराणेषु, स्मृतिग्रन्थेषु चानुसरणीयत्वेन निर्दिष्टा वर्तते। भोगो जीवनस्यावश्यकमङ्गमस्तीति मन्यमानोऽपि कविस्तस्यासंयतं रूपं बहुशो निन्दितवान्, तच्च दुःखानां मूलमिति बहुत्रोपस्थापितवान्। शकुन्तलादुष्यन्तयो-

१. रघुवंशम्, १. ८.

२. रघुवंशम्, ५. १०.

निरतिशयदुःखानुबन्धस्य कारणं तयोरसंयतं प्रेमैवासीदिति स स्वकीये विश्वविश्रुते नाटके स्फुटं संदर्शितवान्। एवमेव रघुवंशस्याग्निवर्णस्य राज्ञो[1] दुःखोदर्के विनिपातः विषयभोगेषु तस्यामर्यादितायाः प्रवृत्तेर्विपाक आसीदिति नात्र कवेस्तत्काव्यपाठकानां वा काचिद् विप्रतिपत्तिः स्यात्। वस्तुतस्त्वाध्यात्मिकानाम् आधिभौतिकानां च जीवनमूल्यानां मधुरः समन्वय एव सन्तुलिताया जीवनदृष्टेः प्रतीकमिति भारतीयसंस्कृतेस्तदुद्गातुश्च कवेः कालिदासस्याभिन्नस्वरोद्घोषितो महान् सन्देशः।

मानवजीवनस्य सर्वाङ्गीणाय विकासायास्मत्सांस्कृतिकपरम्परायां धर्मार्थकाममोक्षात्मकस्य पुरुषार्थचतुष्टयस्य[2] कल्पना विहिता। एतेषां पुरुषार्थानां विशेषतश्च धर्मार्थकामरूपस्य त्रिवर्गस्य जीवने संतुलितं सामंजस्यं सामरस्यं चाभीष्टमिति कालिदासस्य परमो विश्वासः। धर्मश्चार्थश्च कामश्च परस्परमबाधमानाऽपरां श्रियं भूतिं च पुष्णान्तीति स स्वीयासु कृतिषु सर्वत्र प्रत्यपादयत् कथाप्रसंगेन वा पात्रवर्णनप्रसगेन वा। अतिथिनाम्नो रघुवंश्यस्य राज्ञो वर्णन-प्रसंगेन स आह—

न धर्ममर्थकामाभ्यां बबाधे न च तेन तौ।
नार्थकामेन कामं वा सोऽर्थेन सदृशस्त्रिषु॥[3]

त्रिवर्गसाधनायाः कालिदासेनोपस्थापितो बहुधा च संस्तुतोऽयमादर्शस्तदीयां स्वस्थां जीवनदृष्टिं प्रख्यापयति।

कालिदासो जीवने नैतिकगुणानां विशिष्टमौपयिकत्वम् अङ्गीकरोति। तदनुसारं सत्यं चार्जवं च, प्रेम च परदुःखकातरता च, करुणा च वदान्यता च, धैर्यं च सहिष्णुता च, चारित्र्यं चात्मसंयमश्चेति गुणा मानवजीवने नैतिकोन्नतिसोपानभूताः सन्ति, मानवजीवनं चेमे गुणाः पारमार्थिकेन सुखेन सयोजयन्ति।

कालिदासमतेन शिक्षासंस्कृत्योर्वागर्थयोरिव घनिष्ठः संबन्धो वर्तते।

---

१. राजायं रघुवंशमहाकाव्यस्यान्तिमे एकोनविंशे सर्गे वर्णितः।

२. तु० रघुवंशम्, १०. ८४

३. रघुवंशम्, १७. ५७.

शिक्षाया वास्तविकं लक्ष्यमेव खलु जीवनकलाप्रावीण्याधिगमोऽस्ति। शिक्षा हि मनुष्यं शिक्षयति जीवने नन्वेवं वर्तितव्यं न चैवमिति। इदमेव च शिक्षायाः परमं गन्तव्यस्थानम्। तदिह 'मनीषी संस्कारवत्या गिरा पूतश्च विभूषितश्च भवतीत्युपमाप्रसंगेन कथयता कविना सम्यक् संदर्शितम्।'[1] अन्यत्रापि 'सम्यगाराधिता विद्या प्रबोधविनयौ' जनयतीत्युपमाप्रसंगेन वदता[2] शिक्षातो ज्ञानमनुशासनं चेति द्वयमपि प्रभवतीति स्फुटं प्रतिपादितम्। ज्ञानं चानुशासनं चेति जीवननिर्माणे महदौपयिकत्वं भजेते इति नात्र कस्यचित् स्वस्थजीवनदर्शनवतो जनस्य विमतिः स्यात्।

कालिदासस्य युगं राजतन्त्रीयमासीदिति राज्ञामादर्श एव तस्मिन् युगे प्रजाभ्य आदर्शभूत आसीत्। राज्ञामपूर्वः खल्वादर्शः कविना रघुवंश्यानां भूपतीनां वर्णनप्रसंगेन प्रदर्शितः तद्यथा—

> सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
> आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥
> यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
> यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥
> त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।
> यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥[3]

राज्ञ आदर्शमयस्य रूपस्य कविकृतेयं भव्या कल्पना जीवनं प्रति तस्यादर्शदृष्ट्याः परिणामो वर्तते।

महाकवेर्जीवनदर्शनं समष्टिपरायणमासीत्, न तु व्यष्टिवादप्रवणम्। स समाजहितसाधनायां जीवनस्यार्थवत्तां परमाममन्यत। अत एव स स्वकृतिषु नैकत्र प्रकृतिहितस्य[4] भूतानुकम्पायाश्च[5] चर्चामकरोत्। विक्रमोर्वशीये स इमां विश्वहितकामनां व्याजहार—

---

१. कुमारसंभवम्, १. २८.

२. रघुवंशम्, १०. ७१.

३. रघुवंशम्, १. ५–७.

४. अभिज्ञानशाकुन्तलम्, ७. ३५.

५. रघुवंशम्, २. ४८.

सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥[१]

समाजे स्त्रीजातेः स्थानमन्तरेण कालिदास उदारमना वैदिक-परम्परानुयायी वर्तते । सम खलु द्वयोः स्त्रीपुंसयोः स्थानमिति तस्य दृढमासीन्मतम् । वस्तुतस्तु वृत्तेन मनुष्यस्य मूल्यांकनं योग्यम् । काचित् स्त्रीति लघ्वी मात्रा कश्चिच्च पुरुष इति महती मात्रा स्यादिति नासीत्तस्यास्था । एव च स आह—"स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम्"[२] इति । एवं सत्यपि स्त्रीजातेरबलात्वे पुरुषाश्रयापेक्षित्वे चापि, अथ च कन्याना परकीयार्थभावे तस्य समकालिकसामाजिक-परम्परानुगामी विश्वास आसीत् ।[३]

महाकवेर्जीवनदर्शनमास्तिक्यमूलम् आध्यात्मिकं च सदपि व्यावहारिकं यथार्थवादि चासीत् । जीवने सुखं च दुःखं चेति द्वयमपि मनुष्यमुपति-प्रतीति तदीयं च जीवनं सपूर्णतां नयतीति स मेघदूते यक्षमुखेनैवमाह—

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥[४]

महाकविरीश्वरेच्छां[५] नियतेश्चालंघ्यतां सोत्कृष्टं मेने[६] । तदीयोऽयं दृष्टिकोणस्तस्यास्तिक्यभावनायाः परिपाक आसीदिति न स नैराश्याभि-भूतो दुःखवादप्रवणो वावर्तत ।

---

१. विक्रमोर्वशीयम्, ५. २५.

२. कुमारसंभवम्, ६. १२.

३. अभिज्ञानशाकुन्तलम्, ४. २२.

४. मेघदूतम्, २: ५२; तु० अभिज्ञानशाकुन्तलम्, ४. २.

५. तु० रघुवंशम्, ८. ४६; "विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया ।"

६. अभिज्ञानशाकुन्तलम्, ४. १७–१८; ५. ३०; रघुवंशम्, ८. ४७.

# सौन्दरनन्दकाव्ये विश्वप्रेमतत्त्वम्

*दीवि श्रीनिवासदीक्षितः*

भारतदेशः प्राचीनकालादारभ्य विविधमतदर्शनसिद्धान्तानामावास-भूमिरिति निश्चप्रचम्। अनेके राजान एतत्पवित्रभरतखण्डं पर्यपालयन् स्वाभीष्टमतान् पर्यपोषयंश्च। क्रीष्टाब्दारम्भात्प्राक् प्रथमशताब्द्यां मगधाधीशः बौद्धमतं अत्यधिकादरेण परिपोष्य सर्वत्र विस्तृतरूपेण प्रचारयामास। तस्यास्थानकविपदवीमधिष्ठाय स्वकाव्यनाटकादिभिः बौद्धमतं सार्वजनीनमकरोत् महाकविरश्वघोषः। "कुषान्" वंशजेषु प्रमुखं उत्तरभरतखण्डशासकं अवक्रपराक्रमशालिनं अद्वितीयं च कनिष्कचक्र-वर्तिनं स्वप्रतिभापाण्डित्यादिभिराचकर्ष सः।

महाकविरयं सुवर्णाक्षीपुत्रः साकेतपुरवासी पार्श्वस्य शिष्यश्च वेदोपनिषद्रामायणमहाभारतादीनि संस्कृत—प्राकृत—पालिसाहित्यं च क्षोदक्षममध्ययनमकरोत्। सांख्य-योग-बौद्धदर्शनेषु कामशास्त्र-राजनीति-व्याकरण-छन्दश्शास्त्रेषु च निपुणः कोविदोऽयम्। रसमयजगति राकेन्दुमूर्तिरयम्। अस्य कविताविभूतिः संस्कृतसाहितीविहायसे नित्य-ज्योत्स्नापरीवाहः। अश्वघोषः जन्मतः विप्रः एव। ततः बौद्धमतं स्वीकृत्य तन्मताचार्योऽभूत्।

अथ प्रस्तुतप्रसङ्गे परिशीलनीयं सौन्दरनन्दमहाकाव्यं महाकवेरस्य कमनीयकविताशिल्पस्य परं प्रमाणम्। तस्य सकलशास्त्रपारीणतया लब्धाशेषशेमुषीवैभवस्य प्रतीकरूपम्। काव्यमिदं सार्थकनामधेयस्य सुन्दरनन्दस्य समग्रचरितस्य सुन्दरीविषयकप्रेमवैराग्यप्रवृत्तेश्च दर्पणः। सङ्कुचितमानवीयमनोभावानां मध्ये त्यागस्य विश्वप्रेम्णः विश्वसेवायाश्च वैशिष्ट्यं कथयति काव्यमिदम्। अपि चात्र विश्वशान्तेरुपदेशः कृतः। सदाचारस्य चित्तशुद्धेश्च शिक्षा विहिता। जीवन्मुक्तिश्चात्र प्रदर्शिता। एतत्काव्यकथावस्तु निदानकथां च महावर्गं चोपजीवति।

काव्येऽस्मिन् कविरस्माकं विभिन्नप्रकृतिद्वयं दर्शयति। सर्वजन-हृदयेषु प्रेमामृतसेचनेन विश्वकल्याणकरी मोक्षसम्पादनक्षमा प्रकृतिरेका।

अपरा तु केवलस्वार्थवडिशस्थसङ्कुचितप्रेम्णा पूर्णा। एतद्विभिन्नप्रकृतिद्वयस्य प्रतिनिधी एव सोदरौ बुद्धनन्दौ।

दम्पत्योः परस्परसंसक्ततात्कालिक-मानसिकभावः एव सङ्कुचितप्रेमा इति कथ्यते। स्वेतरविषयपराङ्मुखतामयं शिक्षयति। ततः नरमन्धं करोति। एतद्भिन्नमेव विश्वप्रेम। जगति स्थितानां सर्वप्राणिनां विषये निर्व्याजानुरागविशेषः एव विश्वप्रेम इति व्यवह्रियते। एतद्विश्वप्रेमासाधारणप्रयत्नलभ्यम्। इदं च त्रेधा भिद्यते—

"वाचिकं—कायिकं—मानसिकं" चेति।

नन्दाय बुद्धेनोपदिष्टेऽष्टाङ्गिकमार्गे एव त्रिविधं विश्वप्रेमान्तर्भवति। वाचिकं "सम्यक् वाणी" नामकेऽङ्गे, कायिकं "सम्यक् कर्म" नामकेऽङ्गे, मानसिकं तु सम्यक् शुद्ध-सम्यकदृष्टि-सम्यक् वितर्क-सम्यक् प्रयत्नसम्यकूस्मृति-सम्यकसमाधिष्वङ्गेष्वन्तर्भवति। एवमष्टाङ्गिकमार्गानुष्ठानेन सम्पूर्णतया विश्वप्रेमतत्त्वानुभवस्सिध्यतीति मम सिद्धान्तः। नन्दस्य मानसिकरङ्गे सङ्कुचितविश्वप्रेम्णोः प्रचलिततीव्रसंघर्षणदशा काव्येऽस्मिन् सुनिरूपिता। अन्ततः सङ्कुचितप्रेम्णः पराजयः विश्वप्रेम्णः विजयश्चेत्यत्र ध्वनिः।

शाक्यानां राजा शुद्धोदनः शुद्धकर्मा जितेन्द्रियश्च। तस्य राज्ञः द्वे भार्ये तयोरेका पट्टमहिषी मायादेवी। सा दिवि देवता। अपरा यवीयसी देवी प्रजावती। मायादेवीपुत्रः सिद्धार्थः बाल्यादारभ्य सत्यान्वेषी संसारसुखद्वेषी च। अत्यन्तसुकुमारा विलक्षणा प्रकृतिस्तस्य। अत एव स एकदा केवलं जीर्णातुरमृतजनदर्शनेनैव सङ्कुचितगृहकुड्यानि विसृज्य तपोवनं प्रविश्य तपस्तप्त्वा गौतमबुद्धोऽभूत् विश्वप्रेमतत्त्वप्रबोधको जातः। प्रजावत्याः पुत्रस्य सुन्दरोपपदधारिणः नन्दस्य प्रकृतिस्तु स्वसोदरप्रकृतेर्वैषम्यं भजते।

नन्दस्य सर्वमपि जीवनं पूर्वभाग उत्तर-भागश्चेति द्विधा विभक्तुं शक्यते। तत्र पूर्वभागः [illegible]चितप्रेम्णस्संसूचकः। उत्तरभागस्तु विश्वप्रेम्णः विवेचकः।

नन्दः पूर्वभा[illegible]ल्यादारभ्य दीक्षास्वीकरणात्पूर्वकाले भोगलालसः क्षुद्रगृहकुड्येषु लग्नमानसश्च। अपि च प्रजावत्याः पुत्रः सः

अनुपमलावण्यराशिभूतायाः सुन्दर्याः सौन्दर्यसमास्वादने सदा संसक्तः। सङ्कुचितप्रेम्णा पूर्णमानसश्च। तस्मिन्नापत्काले एकदा तथागतः भिक्षां स्वीकर्तुं नन्दभवनस्याग्रे क्षणं स्थित्वा भिक्षामलब्ध्वैव जगाम। बुद्धगमनसमये तं दृष्ट्वा तद्गमनविषयं एका परिचारिका नन्दाय निवेदयामास। तं श्रुत्वा नन्दः सुन्दर्याः अनुमत्या बुद्धं प्राप। ततः नान्दीविमुक्ताय नन्दः ननाम। बुद्धस्त्वनुग्रहसूचकतया नन्दाय भिक्षापात्रं ददौ। नन्दोऽपि भिक्षापात्रं स्वीचकार। ततः नन्दाय दीक्षा प्रदत्ता। तस्य अविवेकोऽपि विनाशितः। मुनिना दत्तविवेकबलात् नन्दस्य मनसि तीव्रवैराग्यप्रवृत्तिरुद्बुद्धा। एवं विधं नन्दमानसपरिणामं परिशील्य "अष्टाङ्गिक" मार्गमुपदिदेश नन्दाय बुद्धः।

अमृतपदप्राप्त्यर्थं अष्टाङ्गिकमार्गानुसरणमेव शरणम्। सम्यक्वाणी-सम्यक्कर्म-सम्यक्शुद्ध अथवा सम्यगाजीविका-सम्यक्दृष्टि सम्यक्वितर्क-सम्यक्प्रयत्न-सम्यक्स्मृति-सम्यक्समाधयः एव "अष्टाङ्गानि"।

तत्र "सम्यक्वाणी" नाम सत्यमितहितभाषणम्। एतदनुष्ठानेन विश्वप्रेमतत्त्वानुभवस्सिध्यति। "सम्यक् कर्म" नाम प्राणातिपातविरतिः, अदत्तादानविरतिः, काममिथ्याचारविरतिः, मृषावादविरति, पिशुनवचनविरतिः, परुषवचनविरतिः, प्रलापविरतिः, अनभिध्याविरतिः, अव्यापादविरतिरिति। सम्यक्कर्मणः समाचरणेन कायिकरूपः विश्वप्रेमभावस्सम्पद्यते। "सम्यक्शुद्धो" नाम मनसि आशाविहीनता। एतत्त्रयमाचरणसाध्यम्। अस्याश्रया शीलसम्पदेव। शीलस्य वृत्तमित्यपरं नाम। वृत्तं नाम आचार एव।

"शीलमास्थाय वर्तन्ते सर्वा हि श्रेयसि क्रियाः"

श्रेयस्करकार्याणां सर्वेषामपि मूलं शीलमेव। शीलरक्षणार्थं स्वभावतः चपलानीन्द्रियाणि इन्द्रियार्थेभ्यः निवारयेत्। तत आर्यसत्यानि दुःखस्य प्रवृत्तिः, दुःखप्रवृत्तेः हेतुः, दुःखक्षयः, दुःखप्रशमाय मार्गश्चेति। आर्यसत्यानि चत्वारि। जगत्यनुभूयमानं सर्वमपि दुःखमयम्।

अपां द्रवत्वं कठिनत्वमुर्व्याः वायोश्चलत्वं ध्रुवमौष्ण्यमग्नेः।
यथा स्वभावो हि तथा स्वभावो दुःखं शरीरस्य च चेतसश्च" ॥

इत्युक्तत्वात् दुःखस्य शारीरिकमानसिकभेदेन द्वैविध्यमस्ति।

जरारोगक्षुत्पिपासाशीतोष्णाः शारीरिकदुःखानि । शोकक्रोधभयमोहादयः मानसिकदुःखानि । एतच्छारीरिकमानसिकदुःखानां मूलं जन्म । अत एवोक्तं कविना—

"दुःखाय सर्वं न सुखाय जन्म"

इति । जन्मनः मूलं तृष्णादिदोषसमुदायः एव नैवेश्वरो न प्रकृतिर्न कालो नापि स्वभावो न विधिर्यदृच्छा कारणम् । तृष्णादि दोषसमुदाय-नाशेन दुःखमपि नश्यति । दुःखविनाशानन्तरं परिनिर्वाणप्राप्तिः । परिनिर्वाणस्य दुःखनाशः, वैराग्यं, रागक्षयः लक्षणानीति केचित्पालि-ग्रन्था व्याहरन्ति । दुःखाद्यार्यचतुष्टयविषये सम्यक्दृष्टि-सम्यक्वितर्क-सम्यक्प्रयत्ना आवश्यकाः । एतत्त्रयं ज्ञानसम्बन्धबद्धम् । अस्याश्रयः प्रज्ञा । प्रज्ञा निश्शेषं सर्वदुःखकारणानि नाशयति । सम्यक्स्मृतिः-सम्यक्समाधिश्च योगसम्बन्धिनौ । अनयोराश्रयः शमः । शमेन चित्त-परिग्रहस्सम्भवति ।

पूर्वोक्तसम्यक्शुद्ध, सम्यक्दृष्टि, सम्यक्वितर्क, सम्यक्प्रयत्न, सम्यक्स्मृति, सम्यक्समाधीनामङ्गानामनुष्ठानेन मानसिकरूपः विश्वप्रेमतत्त्वानुभवस्संभवति ।

एवं शील-प्रज्ञा-समाधिरूपं त्रिस्कन्धमेतं अष्टाङ्गिकमार्गमारूढस्सन् नरः क्रमशः वाचिक-कायिक-मानसिकभेदेन विश्वप्रेमतत्त्वानुभवशाली भवति । ततः निर्वाणपदवीं प्राप्नोति । सकलदोषविनिर्मुक्तः जीवन्मुक्तो भवति । एतत्सर्वमपि निशम्य नन्दः तदनुष्ठानमकरोत् ।

"स्वस्थः प्रशान्तहृदयो विनिवृत्तकार्यः<br>
पार्श्वान्मुनेः प्रतिययौ विमदः करीव" ॥

इदानीं नन्दः सङ्कुचितप्रेमव्याधिना विनिर्मुक्तः स्वस्थोऽभूत् । विश्वप्रेमाराधनया प्रशान्तहृदयो बभूव । एवं सकलदोषविनिर्मुक्तः नन्दः मदमुक्तः गजः इव मुनिमनुससार । द्वावपि बुद्धनन्दौ कपिलवस्तुनगरं प्राविशताम् ततः काव्य समाप्तम् ।

एवं महाध्वनिप्रधानतया विश्वप्रेमतत्त्वसंसूचकस्य सौन्दरनन्दमहा-काव्यस्य समर्पकः "अश्वघोष" महाकविः सहृदयहृदयप्रतिक्षणसंस्मर-णीयः एव ॥

( विजयवाटिकाकाशवाणीसौजन्येन )



# प्रातिपदिकं प्रातिपदिकार्थश्च

*सत्यप्रकाश-शर्मा*

संस्कृतव्याकरणे प्रातिपदिकमिति नाम्नी संज्ञैका वर्तते। इयं हि संज्ञा अतिप्राचीनकालादेवास्मिन् सम्प्रदाये सुप्रतिष्ठितास्ति। इदमेव कारणमस्ति यद् व्याकरणसम्प्रदाये सतीष्वपि टि-घु-सदृशीष्वतिलघ्वीषु संज्ञासु प्रातिपदिकमिति महती संज्ञा केवलमस्या अतिप्राचीनत्वात् किंवा श्रुत्यनुरोधादेव स्वीकृताऽस्ति, यथोक्तं भट्टोजिदीक्षितेन प्रौढमनोरमायाम्—"महासंज्ञाकरणं श्रुत्यनुरोधात्। तथा चाथर्वणे पठ्यते—को धातुः? किं प्रातिपदिकम्? कश्च प्रत्ययः? इति।[1]"

तत्र किन्नाम प्रातिपदिकत्वमिति जिज्ञासायामाचार्यः पाणिनिः "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्", "कृत्तद्धितसमासाश्च" तिसूत्रद्वयं निबध्नाति। तत्र प्रथमं सूत्रमधिकृत्य वक्तव्य भवति यद् यः शब्दः न धातुर्नप्रत्ययः न च प्रत्ययान्तः, परमस्ति अर्थवान् सः प्रातिपदिकमित्यभिधीयते। धातोर्नास्ति प्रातिपदिकत्वं "सुपो धातुप्रातिपदिकयोः" सूत्रे धातुप्रातिपदिकयोर्विभेदस्वीकरणात्। प्रत्ययस्यापि न प्रातिपदिकत्वं सम्भवति यतो हि 'कृत्तद्धितसमासाश्चेति' सूत्रेणेदं सुस्पष्टं यत् कृत्तद्धितप्रत्ययान्तानामेव प्रातिपदिकत्वं न च सर्वप्रत्ययान्तानाम्। एवमेव 'रामेषु' इति प्रत्ययान्तस्यापि न प्रातिपदिकत्वमभीष्टम्। अर्थवतः शब्दस्य प्रातिपदिकसंज्ञा भवति, इत्यत्र सार्थकस्य पदोच्चयस्यापि प्रातिपदिकत्वं भवेदिति शङ्का न कर्तव्या। सुबन्तास्तिङन्ताश्च शब्दाः सन्ति पदसंज्ञकाः[2], पदोच्चयस्यैवास्ति नाम वाक्यत्वं, वाक्यानि च भवन्ति सार्थकानि, अतो न सन्ति तानि प्रातिपदिकानि। यथा हि—'देवदत्त गामभ्याज कृष्णाम्' इति वाक्यमस्ति पदोच्चयमात्रं सार्थकञ्च। यतो हि—'देवदत्त' इत्यभिहिते केवलं कर्तैव निर्दिष्टः न तु कर्माक्रियागुणाः। 'गाम्' इत्युक्ते कर्म एव निर्दिष्टं कर्ताक्रियागुणाश्चानिर्दिष्टाः भवन्ति। 'अभ्याज'

---

१. १।२।४५ सूत्रे प्रौढमनोरमायाम्।

२. सुप्तिङन्तं पदम्।

इति व्याहृते केवलं क्रियैव, 'कृष्णाम्' इति कथिते च गुण एव निर्दिष्टोऽस्ति। किन्तु समस्तवाक्योच्चारिते तु सर्वं निर्दिष्टं भवति—देवदत्त एव कर्ता, गौरेव कर्म, अभ्याज एव क्रिया, कृष्णैव च विशेषणमिति। तत्र सुस्पष्टं जायते यद् 'देवदत्त एव कृष्णां गाम् (न तु शुक्लां) आनयेदि'ति। एवमेकस्मिन् वाक्ये सुसंहतानि, सम्पूर्णानि पदानि भवन्ति विशिष्टार्थद्योतकानि। अतो वाक्यस्य प्रातिपदिकत्वं न सम्भवम्। यथाह भाष्यकारोऽपि—"वाक्यप्रतिषेधोऽर्थवत्त्वात्" इति।

कृत्तद्धितसमासाश्चेति सूत्रेण कृत्तद्धितप्रत्यययुक्तानामेव प्रातिपदिकसंज्ञा भवति। अत्रेदमपि ध्यातव्यं भवति यत् 'समास एव सार्थकस्य पदोच्चयस्यास्ति प्रातिपदिकत्वमि" ति प्रकृतसूत्रे समासशब्दग्रहणात् सिध्यति। महाभाष्यकारोऽपि स्वीकरोति—"अर्थवत्समुदायानां समासग्रहणं नियमार्थम्"।

एवं प्रातिपदिकस्य द्वौ पक्षौ भवतः—व्युत्पत्तिपक्षोऽव्युत्पत्तिपक्षश्च। यत्र प्रकृतिप्रत्यय-योगार्थस्यापेक्षयाऽर्थः प्रतिपाद्यते तत्र कृत्तद्धितसमासाश्चेतिसूत्रेण प्रातिपदिकत्वं विधीयते, यथा—'पच्' इति प्रकृतेर्ण्वुल्प्रत्ययेन संयोगे सति 'पाचक' इति निष्पन्नस्य शब्दस्य कृत्तद्धितसमासाश्चेति सूत्रेण प्रातिपदिकसंज्ञा भवति। एवम्भूताः प्रातिपदिकशब्दाः व्युत्पन्नाः कथ्यन्ते। यत्र च योगार्थमनपेक्ष्य समुदाय-शक्त्यार्थोपलब्धिर्जायते तत्र 'अर्थवदिति' सूत्रेण प्रातिपदिकसंज्ञा भवति, यथा डित्थडवित्थादीनां शब्दानाम्। एतादृशाः शब्दाः भवन्ति अव्युत्पन्नाः। अत्र डित्थादिशब्दानां निरर्थकत्वमाशङ्क्य तेषां कथं प्रातिपदिकत्वमिति न वाच्यम्, शब्दार्थयोर्नित्यसम्बन्धात् लोकव्यवहारे तेषामपि पदार्थवत्त्वाच्च।

संस्कृतव्याकरणे द्वावपि पक्षौ सम्मतौ स्तः। 'उणादयो बहुलम्' इति सूत्रेणापि सुस्पष्टमिदम्। काशिकायामपीदमेव स्वीकृतम्—

---

१. यथोक्तं विस्तरेणास्यां कारिकायाम्—

यत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः।
स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत्॥

"नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद् विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥"

एवं यौगिकस्यायौगिकस्यापि शब्दस्योक्तास्ववस्थासु प्रातिपदिक-संज्ञा भवत्येव । एतदतिरिक्तं भाष्यकारः अनर्थकस्य निपातस्यापि प्रातिपदिकत्वं स्वीकरोति "निपातस्यानर्थकस्य प्रातिपदिकत्व" मिति स्वकीयं मतमिदं परिपोषयन् सः "अधिपरी अनर्थकौ" इति पाणिनिसूत्रं समुद्धरति । सूत्रेणानेन पाणिनेः प्रवृत्तिर्ज्ञायते । अत्र "अनर्थकानामप्ये-तेषां भवत्यर्थवत्कृतम्" इति पतञ्जलेरभिमतम् । 'अधिपरी' इति द्वावपि निरर्थकौ निपातौ कर्मप्रवचनीयसंज्ञकौ स्वीकृतौ स्तः । गत्युपसर्गसंज्ञयो-र्बोधनाय सूत्रेणानेन कर्मप्रवचनीयत्वं विधीयते । सत्यां कर्मप्रवचनीय-संज्ञायामनयोर्विभक्त्यादिकार्याणि भवन्ति । अतोऽनर्थकानामपि निपा-तानां भवति प्रातिपदिकत्वमिति स्वीकृतम्भवति ।

एवं प्रातिपदिकविवेचनानन्तरं साम्प्रति प्रातिपदिकार्थो विविच्यते—'प्रातिपदिकस्यार्थः प्रातिपदिकार्थ' इति कथ्यते । लोके ह्यर्थबोधाय वाक्यमपेक्ष्यते । वाक्यं च सुप्तिङन्तात्मकं भवति । तत्र एकस्याः क्रियायाः प्राधान्यम्भवति ।[1] "पदसमूहो वाक्यमर्थसमाप्तौ" इति न्यायसूत्रानु-सारेणापि पदोच्चयात्मकमेव वाक्यमर्थप्रतीतौ प्रकृष्टोपकारकम्भवति । तत्र आकाङ्क्षा-योग्यता-सन्निधीनामपि आवश्यकता सुप्रतीतैव । महा-भाष्यकारमतेऽर्थबोधाय शब्दानां चतुर्धा प्रयोगो दृश्यते—"चतुष्टयी शब्दानां प्रवृत्तिः जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा यदृच्छा-शब्दाश्चतुर्थाः" ।

प्रातिपदिकार्थमधिकृत्यातिप्राचीनकालादेव महान् विसंवादो वर्तते वैयाकरणेषु । कौण्डभट्टेन स्वकीये वैयाकरणभूषणसारे प्रातिपदिकार्थ-सम्बन्धीनि पञ्चमतानि संकलितानि—

"एकं द्विकं त्रिकं चाऽथ चतुष्कं पञ्चकं तथा ।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः" ॥[2]

---

१. 'एकतिङ्वाक्यम्' इति महाभाष्ये ।

२. वैयाकरणभूषणसारे नामार्थनिर्णयप्रकरणे ।

अत्रेत्थं बोध्यम्—

एकम् = स्वार्थः = जातिः धर्मो वा ।

द्विकम् = व्यक्तिः = द्रव्यम् ।

त्रिकम् = लिङ्गम् ।

चतुष्कम् = संख्या ।

पञ्चकम् = कारकम् ।

तत्र सन्ति केचन विद्वांसो ये केवलं 'जातिरेव पदार्थः' इति मन्यन्ते । "जात्याख्यायामेकस्मिन्—" इति सूत्रेण ज्ञायते यद् दाक्षीपुत्रोऽपीदमेव स्वीकरोति । वाजप्यायनोऽपि जातावेव पदार्थत्वमङ्गीकरोति न तु व्यक्तौ, आनन्त्यदोषापातभयात् ।[1] अस्ति च प्रातिपदिकं पदम्, तत्रैवास्ति अर्थनिरूपणात्मिका शक्तिः । अतो जातावेव पदार्थत्वमङ्गीकरणीयं जातेर्व्याप्तिमत्त्वात् ।

ननु 'घटमानय' इत्युक्ते सेवको घटव्यक्तिमेवानयति जातेर्धर्मस्य वानयनव्यापारस्याशक्यत्वात्, अतस्तत्रैव ( व्यक्तावेव ) पदार्थत्वम्भवेदिति चेन्न, व्यक्तेरप्येकत्वधर्मयुक्तत्वात् । यदा व्यक्तावपि एकत्वं वर्तते तत्कथन्न जातावेव पदार्थत्व मन्येत । व्यक्तिबोधस्तु लक्षणयापि शक्यः । 'घट' इत्युक्ते घटत्वजातिरेव ज्ञायते, व्यक्तेर्जात्याऽभेदसम्बन्धाल्लक्षणया व्यक्तिबोधोऽपि भवत्येव यथोक्तमपि—

"तेन तल्लक्षितव्यक्तेः क्रियासम्बन्धबोधना ।
व्यक्त्याकृत्योरभेदे वा वाक्यार्थेषु विवक्षितः ॥ इति ।

केचित्तु 'एकम्' इति पदेन 'व्यक्ति' गृह्णन्ति, व्यवहारकाले व्यक्तावेवार्थबोधनात् । परं सूक्ष्मेक्षिकया वीक्षिते सति ज्ञायते यत्संस्कृतव्याकरणे जातिव्यक्ती उभेऽपि पदार्थत्वेन स्वीकृते स्तः । यतो ह्येकपक्षेऽङ्गीकृते त्वव्यवस्थैव भवेत् । व्यक्तावेव पदार्थत्वं चेत्तर्हि 'सम्पन्नाः व्रीहयः' इत्यत्र व्यक्तीनां बाहुल्यादेव बहुवचनं सिद्धम्, तत्कथं पाणिनिना 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति सूत्रेणात्र बहुवचनत्व विहितम् ? जातिरेव पदार्थ इति चेत्, तत्कथनाय एकस्यैव शब्दस्य

---

१. 'सरूपाणामेकशेषविभक्तौ' सूत्रे पतञ्जलिः—"आकृतिं वाजप्यायनः ।"

प्रयोगो भवेत् जानेरेकार्थवत्त्वात्। एकेनैव शब्देन तज्जात्यावच्छिन्नानां व्यक्तीनां बोधो भवेदतोऽनेकव्यक्तीनां बोधाय नैकान् शब्दान् प्रयोक्तुं न कस्यापि प्रवृत्तिः स्यात् तत्कथं पाणिनिना 'सरूपाणामेकशेष-विभक्तौ' सूत्रं प्रणीतवान्। यथाह भगवान् पतञ्जलिरपि—"उभयथा ह्याचार्येण सूत्राणि पठितानि। आकृति पदार्थम्मत्वा जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् इत्युच्यते। द्रव्यं पदार्थं मत्वा सरूपाणामित्येकशेष आरभ्यते" इति। वस्तुतः "न ह्याकृतिपदार्थस्य द्रव्यं न पदार्थः" इति भाष्यवचनादपि सिध्यति यन्न केवलमाकृतिर्न च केवलं द्रव्यमेव पदार्थो भवितुमर्हति, जातिव्यक्ती—उभेऽपि सम्मिलितरूपेण 'पदार्थ' इति कथ्यते। अयमेवाभिप्रायः द्विकमिति पदस्य।

केचित्तु लिङ्गस्यापि पदार्थत्वं स्वीकुर्वन्ति। लौकिके व्यवहारे लिङ्गम्भवति महान् सहायक पदार्थावबोधने। यथा—'अजा' इत्युक्ते स्त्रीत्वावच्छिन्नस्यैव द्रव्यस्य बोधो भवति न तु पुंस्त्वावच्छिन्नस्य द्रव्यस्य। यद्यपि गुणानां साम्यावस्था क्लीबत्वमुपचयो पुंस्त्वमपचयश्च स्त्रीत्वमिति कथ्यते। तथापि व्यावहारिकज्ञानमेव भवति लिङ्गबोधकम्। सति लिङ्गसम्बन्धिनि व्यावहारिके ज्ञानेऽर्थस्य नियतपरिधेरवगमनं भवति लिङ्गेनैव; यथा 'पशुना यजेत' इत्यत्र 'आङोनास्त्रियाम्' इति सूत्रेण 'ना' स्त्रीत्व बोधयति। लिङ्गस्यार्थनिष्ठत्वं भर्तृहरेर्वचनादपि सिध्यति—

"आविर्भावस्तिरोभावः स्थितिश्चेत्यप्यपायिनः।
धर्मा मूर्तिषु सर्वासु लिङ्गत्वेन व्यवस्थिताः"॥

केचित्तु संख्यायामपि पदार्थत्वं मन्यन्ते। जाति-व्यक्ति-लिङ्गैस्सह संख्यापि पदार्थबोधने सहायिका भवति, इति तेषामभिप्रायः। कदाचित् संख्यामपि पदार्थं स्वीकुर्वता पाणिनिना 'द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनम्, सरूपाणामेकशेष विभक्तौ' इतिसूत्राणि प्रणीतानीत्यनुमीयते।

सन्ति केचन वैयाकरणाः ये जाति-लिङ्गव्यक्तिसंख्याभिस्साकं कारकमपि पदार्थं मन्यन्ते। यथोक्तं भर्तृहरिणा—

"द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः।"

महाभाष्याज्ज्ञायते यत् पतञ्जलिमतेन शब्दोऽपि प्रातिपदिकार्थः। यतो हि शब्देन शब्दो बोध्यते। भर्तृहरिरपीदं सिद्धान्तं स्वीचकार। अतएवोक्तं तेन स्वकीये वाक्यपदीये—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

सत्तामपि प्रातिपदिकार्थत्वेन स्वीकुर्वन्ति केचित् । ते अव्ययार्थ-मुदाहरन्त्यस्मिन् प्रसङ्गे । अव्ययार्थेन केवलं सत्ताया एव बोधो भवति न तु कस्यापि द्रव्यस्य, अव्ययानामद्रव्यार्थकत्वात् ।

उपरिनिर्दिष्टेन विवेचनेनेदं सुस्पष्टं भवति यत्प्रातिपदिकार्थमधिकृत्य नास्ति मतैक्यं वैयाकरणेषु । वस्तुतः जातिद्रव्यलिङ्गसंख्याकारकान्विते शब्देऽव्यये च प्रातिपदिकार्थत्वं स्वीकरणीयम् ।

# ऐतिहासिक-महाकाव्येषु शिक्षा-प्रणाली

डॉ० रामदत्त-शर्मा

शिक्षाप्रणाली समाजचित्रणस्य महत्त्वपूर्णा आधारभूमिः। शिक्षाक्षेत्रे भारतमेव प्रथमो देशः, यत्र विश्वसाहित्यस्य प्रथमग्रन्थस्य ऋग्वेदस्योत्पत्तिरभवत्। एतदतिरिक्तः कोऽप्यन्यो देशः शिक्षाक्षेत्रे अग्रदूतरूपे प्रस्तोतुं नात्मानं शक्नोति। वैदिककालादेव भारतीयजनजीवने शिक्षां प्रति आस्था, ज्ञानं च प्रति जिज्ञासा वर्तते स्म।

आलोच्यानां संस्कृतैतिहासिकमहाकाव्यानां (१५००–१६०० ई०) अध्ययनेन तत्कालीनसमाजस्य शिक्षाप्रणाल्याः विषये विशिष्टविवरणं वयं प्राप्नुमः। तस्मिन् युगे शिक्षास्थितिः कीदृशी आसीत्? शिक्षणविषयश्च कतमाः, अध्ययनविषयाः के के, शिक्षकशिष्यसंबन्धश्च कीदृशः इत्यादि विषयेषु विपुला सामग्री उपलभ्यते विवेच्येषु ऐतिहासिकमहाकाव्येषु।

तत्कालीनसमाज-शिक्षाक्षेत्रे राजकुमाराणां पण्डित-पुत्राणां च शिक्षाग्रहणवर्णनानि दरीदृश्यन्ते।[1] राजानः महिषीनां, राजकुमारीणां कुमाराणां च शिक्षणाय समुचितं प्रबन्धं कुर्वन्ति स्म। ते नृपाः[2] स्वयमपि योग्यगुरुं निकषा अध्यन्ति स्म। काव्यादिश्रवणपठनादिभिश्च स्वज्ञान-वृद्धये तल्लीना वर्तन्ते स्म।

अजमेरमण्डलस्य महाराजा, महिष्यः, राजकुमारेषु पृथ्वीराजः, भावसिंहो महाराजः प्रथमजयसिंहः, प्रथम-रामसिंहः, महाराजविष्णुसिंहः, महाराज्ञी तस्य राजकुमारो जयसिंहो राजकुमारो विजयसिंहो महाराजकुमारो जयसिंहः, राजकुमारो विजयसिंहः, महाराज ईश्वरीसिंहः, महाराजस्तृतीय-जयसिंहः, महाराजो माधवसिंह इत्यादीनां

---

१. विद्यासु सर्वासु सुदुर्ग्रहासु कृतश्रम' पण्डितसंगमेन। जयवंश ०१०।५।

२. 'इमौ कुमारौ मम शिक्षणीयौ—यथोपरि ०१०।१०५' 'सम्राजाऽस्य कृते कृतोऽति-सुमहान् शिक्षा-प्रबन्धस्त्व'—मानवंश ०१०।२६.१७।५७।

योग्यगुरूणां सान्निध्ये विद्याध्ययनस्य उल्लेखाःप्राप्यन्ते। एतेषां राज्ञांः शासनकाले विविधविद्या-पारंगता गुरवः विद्वांसः प्रकटिताः। महाराज कोटानरेशः सुर्जनसिंहोऽपि योग्यगुरुमुपास्य अल्पकालेनैव विद्या-प्रवीणोऽभूत्।

तत्कालीने समाजे गुरोः स्थानं सर्वोपरि वर्तते स्म। गुरोः सम्मुखे राजापि स्वात्मानं अकिंचनमगणयत्, तेषां गुरूणां विधिपूर्वकं सम्मानं च कुर्वन् शास्ति स्म। [1]महाराजो विष्णुसिंहः महापण्डितं माधवभट्टं सम्मान्यस्वमहिषीं राजकुमारं च शिक्षयितुं तस्मै समर्पितवान्। महाराजः पृथ्वीराजः चतुराननानामानं कर्णफटं (कनफड़ इति भाषायाम्) स्वामिनं गुरुरूपेण स्वीकृतवान्। ततश्च बालाबाई-महाराज्ञी पयोहारी-नामधेयं विद्वांसं स्वगुरुं स्वीकृतवती। महाराजेन भावसिंहेन रुद्रकविः सम्मानितः महाराजरामसिंह-द्वारा वैद्यपण्डितो लल्लूरामः समादृतः।' काव्यवर्णितैः [2]एतैः प्रमाणैः स्पष्टं प्रतीयते यत् तदानीन्तने समये राज-महाराजानां विद्यायै प्रगाढानुरागो विद्यते स्म। गुरुभक्तिसाधनायां च ते नृपाः स्वकल्याणं मन्यन्ते स्म। अनेके[3] भूपतयः गुरुं प्रति विनयनता वर्तन्ते स्म। गुरूणां सम्मानसंयोजने राज्ञी-राजकुमाराः पुनः पुनः प्रेरिताः। [4]एवं विविधैतिहासिकस्थलेषु वर्णनप्रसंगेन गुरुमहत्ता-स्वीकरणरूपम् सर्वोपरि गुरोः प्रतिष्ठापनम्, सम्मानप्रदर्शनं, चरणवन्दनं, अर्चनं, सद्विद्याप्रशंसनं चेति बहुलवर्णनानि गुरुमहत्त्वप्रदर्शकानि काव्येषु दरीदृश्यन्ते

तदानीन्तने समाजे विविधविद्यापारंगता विद्वांसो गुरवः प्रादुर्भूताः। तस्मिन् युगे नैके विषयाः अध्ययनाय प्रचलिताः आसन्। तेषु प्रमुखा

१. जयवंश ०१०।६३, १३२. १२।३, २५. १२।

२. जयवंश ०११।१०५, मानवंश ०८।७ कच्छवंश ९।२२३११।१०७।

३. जयवंश १०।६३।२२।१२।११५ ईश्वरविलास ०२।७ राजप्रशस्ति ६।४० हरिभूषण ५।२७।

४. अहौ कुमारौ श्रुणुतं वचो मे निसेवनीयो गुरुरेक एव—जयवंश ०।०।११६।

इत्थम् रूपेण विलोचयितुं गृह्यन्ते यथाहि—साहित्यम्, ज्योतिषशास्त्रम्, गणितशास्त्रं, दर्शनम्, श्रुतम्, पौरोहित्यम्, शास्त्रसत्कथाकुंजम्, वेदाः, योगशास्त्रम् विधिसिद्धान्तशास्त्राणि, शस्त्रास्त्रविद्या, अश्वविद्याः गजवाहनविद्या प्रशिक्षणम्,. कौटिल्यार्थ-शास्त्रम्, भूगोलशास्त्रम्, वेदान्तशास्त्रञ्चेति। एतदतिरिक्तं गुरवो विविधविद्या-पारंगताः वर्तन्ते स्म। अतएव तेषां कृते काव्येषु पौनःपुन्येन एव वर्णनं लभ्यते यत् ते "सर्वविद्या-विशारदाः, विविधकलाविचक्षणाश्च आसन्" इति।

वस्तुतः तदानी समाजे शिक्षणस्य कापि सुनियोजिता सुव्यवस्थिता वा पाठनविधिर्नासीत्। एक एव विद्वान् विविधविद्याप्रशिक्षणम् स्वशिष्येभ्यः प्रदाय तान् सुयोग्यान् कर्तुं प्रयतते स्म। सः गुरुः केवलं शिक्षा-क्षेत्रे एव न, अपितु कर्मकाण्डे, राजनीतौ, धार्मिकक्रियास्वपि प्रवीणः अभवत्। अतः शिक्षणसमकालं तान् विधीन् अपि सम्पादयति स्म। अतस्तद् युगं वैशिष्ट्ययुगं नासीत्।

तदानीन्तने युगे ज्योतिर्विद्यायाः प्रचारः प्रचुरतया अभूत्। कच्छवंशमहाकाव्ये बहूनां राज्ञां औरंगजीवसम्राजश्च जन्मपत्रीविषये विस्तृतविवरणं परिलभ्यते। तद्वर्णनं महाकवेः ज्योतिर्विद्याविषये चूडान्तज्ञाननिदर्शनमेव। अत्र साम्प्रतं जयपुर-संस्थापकस्य महाराज-सवाई-जयसिंहस्य विषये सामग्री प्रस्तुता—तस्मात् तत्कालीनायाः ज्योतिर्विज्ञान-प्रवीणतायाः दिग्दर्शनं स्पष्टरूपेण संभवेत्। महाकाव्ये समुल्लिखितं यत् माघकृष्णा-षष्ठी-शनिवासरे १७४५ संवत्सरे, ५४।१३ सूर्योदयादिष्टे, तुलालग्ने, लग्नस्थाने भौमशनिकेतुस्थिते, धनस्थाने शुक्रबुधगुरु विराजिते, सुखभावे बृहस्पतौ कलत्रगृहे राहुग्रहे, पितृस्थाने चन्द्रसुशोभिते महाराजस्य जयसिंहस्य जन्म अभूत्।

तदानीन्तने समाजे स्त्रीशिक्षायाः अपि उल्लेखाः प्राप्यन्ते। स्त्रिय. गुरुषु प्रभूतमास्थावत्यो भवन्ति स्म।[1] महाराज-विष्णुसिंहस्य महाराज्ञी, पृथ्वीराज-महिषी बालाबाई च स्वगुरुं प्रति दृढश्रद्धावन्त्यौ

१. जयवंश ०।०।१०५ 'बालानाम्नी तस्य राज्ञी तु जाता शिष्या साधो कृष्णदायाभिधस्य'—मानवंश ०८।११३।

आस्ताम्। एतस्मिन् विषये बालाबाईसमाख्यानं सुप्रथितं यत्र तस्याः गुरुद्वारा पृथ्वीराजगुरुपराभव-वर्णनं वर्तते। कथ्यते यत्—महाराजः पृथ्वीराज एकदा कापालिकचतुरनाथस्य प्रयासैः योगशिक्षणे प्रायतत, राजकार्ये नितान्तं निरतश्चाभूत्। स नरपतिः सर्वदा स्वगुरुं निकषैव अवर्तत। एतस्मात् महाराज्ञी मंत्रि-गणाश्च अतीव खिन्नाः अभवन्। तदा महामहिषी श्रीकृष्णपयोहारी-नामानं विद्वांसं स्वगुरुरूपेण स्वीकृतवती। येन गुरुणा स्वकीयप्रतिभया शास्त्रार्थे चतुरनाथः पराजितः। परं तस्य कापालिकस्य मनसि पयोहारि-पण्डितं प्रति प्रतिशोधस्य भावना समजायत। अतः स योगाभ्यास-द्वारा व्याघ्ररूपं धारयित्वा निशायां भीतिं जनयति स्म। तदा पयोहारी गुरुरपि योगशक्त्या तं व्याघ्रं गर्दभे परिवर्तितवान्। परेद्युर्यदा कापालिकशिष्यैः स्वगुरुः नावलोकितस्तदा श्रद्धयावनतैस्तैः पयोहारी महाभागो निवेदितः। तदानीं पयोहारी समभणत् "पश्यतु गर्दभसमुदाये'—यस्य गर्दभस्य कर्णयोः छिद्रे स्तः स एव भवतां गुरुः।' शिष्यैरन्वेषणावसरे वस्तुत एको गर्दभः छिद्रकर्णः प्राप्तः। प्रार्थनया-प्रसन्नः पयोहारी पुनरपि तं पूर्ववत् परावर्तितवान्। अस्मिन्नाख्याने गुरुमहिमा तत्कालीनसामाजिकशास्त्रार्थविवेचना च सम्यक् प्रदर्शितौ।

तदानीन्तने समाजे शिक्षणसंस्थानामपि कापि सुयोजिता व्यवस्था नाभूत्। वर्णन-प्रसंगेष्ववगम्यते यत् प्रायः राजकुमारादयः शिष्याः गुरुगृहे आश्रमे एव पठन्ति स्म। तेषां आश्रमाणां व्यवस्था च राज-कुलेन अभवत्। अथ च राज्ञीनामध्ययनं तु अन्तःपुरेष्वेव संभवति स्म। यतो हि तत्कालीने युगे स्त्रीणामवगुण्ठनप्रथा प्रचलिता आसीत्, तासां बहिर्गमनं तु शिविकायां राजपुरुषसंरक्षणे च समायोजितम्। राजानश्च गुरोराश्रमेऽपि विद्यालाभाय गच्छन्ति स्म। महाराज-पृथ्वी-राजस्य चतुरनाथसमीपे गमनं सुप्रमाणितम्। महाकविना सीताराम-पर्वणीकरेण स्वकीयकाव्ये जयवंशे, तथा पण्डितकृष्णरामेण कच्छ-वंशकाव्ये च महाराज-विष्णुसिंहपुत्रयोरध्ययन-व्यवस्था वर्णनप्रसंगे सम्यक् प्रदर्शिता। तत्कालीन-सामाजिकी शिक्षा-प्रणाली साम्प्रतं विशदं विवेचयामः।

महाराज-विष्णुसिंहस्य समये कश्चिद् विद्वान् पंडितः माधवभट्टनामा जयपुरं समगच्छत्। महाराजस्य आतिथ्यं प्राप्तः स महाराज्ञीमध्यापयत्। द्वौ राजपुत्रावपि सुयोग्यौ तेन कृतौ। महाराजस्तं पण्डितं काशी-नगरात् समायातं विलोक्य "विद्याकरः" इति मन्यते स्म।

राजपुत्रयोरध्ययनकाले एकदा भट्टगुरुः राजकुमारं अजयसिंहं शिरसि अताडयत्। तदा ज्येष्ठो राजपुत्रः तत् ताडनं असहमानः अवादीत् क्षत्रियपुत्रोऽहं न कदापि कस्यापि ताडनं सहे।" पितृसमक्षमेव स्पष्टतः कथनेऽसमर्थः स मातरमवदत्। यथा हि जयवंशे (१०१, ११८)

'निवेदिता सा जननी कुमारमुद्घोषयामास च ताडयन्ती।
पित्रोर्गुरोस्ताडनमर्हमेव त्वं गूढधीर्दग्धमनाः शिशुत्वात्॥

मातृवचनादधिकं संतप्तः स प्रोक्तवान् यदि पुनः कदाचित् स एवं ताडयिष्यते तर्हि न सहिष्ये। पुत्रवचनाद्दुःखिता माता सर्वमिदं तत्पितरं निवेदितवती। महाराजः गुरुं शिष्यं च राजसभायामा-मन्त्रितवान्। स तदा ज्येष्ठं पुत्रं भर्त्सयन् कनिष्ठं शिक्षितुं तमाचार्यं निवेदितवान्।

अस्मिन्नाख्याने तदानीन्तनी सामाजिकी विचारधारा गुरुशिष्य-मर्यादा, अनुशासनशासनविधिश्च सम्यक् प्रदर्शिताः भवन्ति। ज्येष्ठ-कनिष्ठराजपुत्रावस्थया इदं प्रतीयते यत् तदानीं अपि सुशिष्याः कुशिष्याः च भवन्ति स्म।

सुशिष्यलक्षणवर्णनं तत्काव्ये प्राप्यते कनिष्ठराजपुत्रस्य विजयसिंह-चित्रणे। कुमारः सदा गुरुं प्रणमति स्म, चरणयोरर्चनां करोति स्म। एवं सुयोग्यं कुमारं राजा तिण्डौनराज्याधिकारिणं कृतवान्। यस्माच्च कुमारेण स्वगुरवे भूमिदानं कृतम्।[1] एवं माधवभट्टस्य मरणानन्तरं तज्ज्येष्ठपुत्रं श्यामभट्टं विजयसिंहः स्वगुरुरूपेण अमन्यत। अन्ययोः द्वयोः गुरुपुत्रयोः जयरामराजारामयोरपि सम्मानं कृतवान्।[2]

राजभिः महाराजैश्च गुरुभ्यः समर्पिता गुरुदक्षिणा साधु निरूपिता। महाराज-जयसिंहेन जगन्नाथ-पण्डिताय लक्षैकस्वर्णमुद्राः समर्पिताः।

---

१. ज्येष्ठं सुतं तस्य पदेऽभ्यसिञ्चद् गुरोः'—जयवंश ०१०।१३८।

२. जयवंश ०१०।१३५।२।२४।

राजोचितवेशभूषा, पंचालंकाराश्च च तेन प्रदत्ताः। गुरुदेवभट्टश्च दक्षिणायां शतग्रामराज्यम् कोटिस्वर्णमुद्राः, गजाश्वरथांश्च प्राप्तवान्। विद्यामंत्रप्राप्त्या प्रसन्नो महाराजविष्णुसिंहः स्वगुरवे प्रभूतां दक्षिणां समर्पितवान्। जयसिंहस्तु स्वगुरुं स्वर्णभारेण अतोलयत्। एवं दृढं प्रतीयते यत् तदा गुरुदक्षिणायां धनराशिना सह पशुभूमिवस्त्ररथादयोऽपि प्रदीयन्ते स्म।



# कालिदासकृतिषु नगरवर्णनम्

डॉ० कैलाशनाथ द्विवेदी

संस्कृत-साहित्यस्य महाकविषु कालिदासेनैव गौरवमयं स्थानं प्राप्तम्। कविकुलगुरोः कालिदासस्य कान्तासम्मिता ललितभावाभिव्यक्तिपूर्णा भारती भारतीयनगराणां वर्णने राष्ट्रियभावनासांस्कृतिकचेतनाभ्यां समन्विता वर्त्तते, यस्या मार्मिकानुभूतिः केन सहृदयेन नास्वादिता? अस्मिन्निबन्धे "कालिदासकृतिषु नगरवर्णनम्" इति विषयो विविच्यते मया सोदाहरणम्।

महाकविना नगराणां वर्णनं वर्गचतुष्टयाधारे कृतम्, अतएव वर्णितानि नगराणि तत्कालीनसमृद्धराज्यानां शासनस्य केन्द्रीभूतानि ज्ञान-विज्ञानकलावाणिज्यादिक्षेत्रेषु विख्यातानि धर्मार्थकामप्रधानानि सन्ति। कालिदास एतेषां नगराणां पुरातनपृष्ठभूमिविषयकं माहात्म्यं निर्दिशन् भौगोलिकदृष्ट्याऽपि सम्यगवस्थितिमप्यभिव्यक्तवान्। शासनकेन्द्रीभूतनगरेषु तक्षशिलापुष्कलावतीहस्तिनापुरमथुरायोध्याशरावतीप्रतिष्ठानपुष्पपुरप्राग्ज्योतिष-मिथिलाकाशीमाहिष्मती-दशपुरोज्जयिनीकुशावतीकुण्डिनपुरोरगपुरालकौषधिप्रस्थादीनिगराणि कविनोल्लिखितानि सन्ति। धर्मार्थकामतीर्थरूपेषु बहूनामेतेषां वर्णनं वर्ण्यविषयेण सह कविना कृतम्।

तक्षशिला[1]-पूर्वगान्धारराज्ये वर्तमानरावलपिण्डीक्षेत्रे भरतपुत्रतक्षस्य राजधानी आसीत्। पुष्कलावती[2] काबुलसुवास्तुसंगमेऽवस्थिता पश्चिमीगान्धारराज्ये पुष्कलस्य राजधानी बभूव। महाराजदुष्यन्तस्य राजधान्या हस्तिनापुरस्योल्लेखोऽभिज्ञानशाकुन्तले विद्यते[3]। इन्दुमतीस्वयंवर-प्रसगे शूरसेनाधिपस्य परिचय ददती सुनन्दा मथुराया मनोहारिवर्णनमित्थं कृतवती—

---

1. रघु० १५।८९।

2. रघु० १५।८९।

3. अभिज्ञानशाकुन्तले, चतुर्थाङ्के (प्रियंवदोक्तिः)।

"यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारिविहारकाले ।
कलिन्दकन्या मथुरां गताऽपि गंगोर्मिसंसक्तजलेव भाति ॥
(रघु० ६।४८)

यमुनाजले विहरन्तीनां सुषेणान्तःपुरसुन्दरीणां धवलस्तनचन्दनप्रक्षालनात् यमुना प्रयागं विना मथुरायामेव शुभ्रगंगाजलसंयुक्तेव शोभते स्म। मथुरापार्श्ववर्ति वृन्दावनमपि कामतीर्थरूपे कविना नैसर्गिकैरुद्यानादिभिः परमरमणीयं वर्णितम्—

"संभाव्यभर्त्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये ।
वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि यौवनश्रीः"॥

वस्तुतः वर्णनमिदं यथातथमेव। अद्यापि वृन्दावनं वर्षतौ स्वकरीरकुञ्जपुञ्जै रम्योद्यानैश्चातिशयं रमणीयं वर्तते।

विक्रमोर्वशीये[1] वर्णितं पुरूरवसः शासनकेन्द्रं प्रतिष्ठानपुरं गंगायमुनासंगमसमीपे 'झूसी' स्थलेऽवस्थितमासीत्। परवतिपैठनेन[2] समीकृतं प्रतिष्ठानपुर पुरूरवसः प्रासादैः प्रतिबिम्बितं भवति स्म संगमजले।

सरयूतटेऽवस्थितायोध्या[3] साकेतं वा कोशलानां राजधानी बभूव। कोशलविभाजने राप्तीतटस्थिता [4]शरावती (बौद्धकालीन-श्रावस्ती) सहेतमहेतेन समीकृता,[5] उत्तरकोशलेषु लवस्य राजनगरी, विन्ध्यश्रेणिपु स्थिता कुशावती च दक्षिणकोशलेषु कुशस्य राजधानी आसीत्। 'कुशावतीं श्रोत्रियसात्कृत्वा' इतिवर्णनेन ज्ञायते यदत्र वैदिकधर्मानुया-

---

१. विक्रमो० द्वितीयाङ्के (चित्रलेखोक्तिः), २।१४ चतुर्थाङ्के (विदूषकोक्ति)।

२. "कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान' लेखकस्य शोधग्रन्थे, १९६९, कानपुर, पृष्ठ २०८, २०९ ॥

३. रघुवंशे—११।९३; १४।१०, २९, १५।३८, ६०, १६।२५ साकेतं—रघु० ५।३१, १३।७९, १४।१३, १८।३६।

४. रघु० १५।९७।

५. Cunnigham's Ancient geography of India, 1934 Calcutta. P. 467.

यिन्नाह्मणानां न्यूनता नासीत्।[1] वाल्मीकिरामायणमनुसृत्य कविनैतन्नगराणि वर्णितानि।

मगधराज्यशासनकेन्द्रं पुष्पपुरं पाटलिपुत्रेण समीकर्त्तुं शक्यते। अत्र गवाक्षयुक्तानां प्रासादानामधिकतासीत्। तेषु विराजिता विलासिन्यः बाह्यदृश्यमवलोकयन्ति स्म[2]।

पूर्वसीमान्तकामरूपस्य राजधानी प्राग्ज्योतिषपुरं लौहित्य-(ब्रह्मपुत्र) पारे आसीत्। तत् कविर्वर्णयति—

"चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वराः।" (रघु० ४।८१)

दक्षिणभारतस्य विख्यातनगरेषु अनूपराजकार्तवीर्यराजनगरीमाहिष्मती नर्मदावक्रधारया रशनयेवावृता प्रासादैः प्रतिबिम्बिता शुशुभे—

........................माहिष्मतीवप्रनितम्बकाञ्चीम्।
प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः॥
(रघु० ६।४३)

वस्तुतो नर्मदाया नैसर्गिकशोभया माहिष्मती सम्प्रति महेश्वराद्[3]-भिन्नजनपदे प्रेक्षणीयैवास्ति।

"तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीम्' इति मेघदूते वर्णिता शुङ्गशासनकाले सुप्रसिद्धा राजनगरी विदिशा राराजते[4] अधुना मध्यप्रदेशे। पुरा सा राजनैतिकव्यापारिकदृष्ट्या महत्त्वशालिनी आसीत्। अवस्थितिरस्याः वेत्रवत्यास्तटे नीचगिरेः पार्श्वे वर्णिता,[5] यत्र विदिशाया विलासिनः वाराङ्गनाभिः समं विहरन्ति स्म। [6]मालविकाग्निमित्रे

---

१. वा० रामा० उत्तर० १०८।५ श्रावस्ती पुरी रम्या श्राविता च लवस्यह।

२. रघु० ६।२४ प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम्।

३. सार्थवाहः—डॉ० मोतीचन्द्र, पटना, १९५३ पृ. १३८ तथा लेखकस्य शोधग्रन्थे "कालिदास की कृतियों में भौगो० स्थलों का प्रत्यभिज्ञान", १९६९ कानपुर, पृ० २१५।

४. लेखकस्य शोधग्रन्थे, पृष्ठाङ्के २१९।

५. पूर्वमेघदूते २५, २६।

६. मालविका० ५।१०, अस्मात्पूर्वं परिव्राजिकाकथनम्।

विदिशाया उद्यानानां सार्थवाहप्रयुक्तानां दस्युबाधितव्यापारिकमार्गाणाञ्च वर्णनं विद्यते।

रन्तिदेवशासनकेन्द्रं दशपुरं चर्मण्वत्यास्तटेऽवस्थितमाधुनिकमन्दसोरादभिन्नमासीत्[६]। दशपुरवधूनां विभ्रमपूर्णदृष्टेः कविना मनोरमं वर्णनं कृतमस्ति—

"तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां,
पक्ष्मोत्क्षेपादुपरिविलसत् कृष्णसारप्रभाणाम्।
कुन्दक्षेपानुगमधुकरश्रीमुजामात्मबिम्बं,
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम्॥ (पू० मे० ५१)

अवन्तिराज्यस्य शिप्रातटवर्तिनी राजधानी उज्जयिनी महाकवेर्मनःप्राणेषु समाहिता सर्वाधिकमहत्त्वपूर्णा विद्यते। अस्या वर्णनमैतिहासिकधार्मिकार्थिकदृष्टिभिः सर्वथा समीचीनमेवाऽस्ति। महाकविः महाकालनिकेतनमभिधानं प्रयुज्योज्जयिन्याः धार्मिकमहत्त्वं, विशालाभिधानेनास्याः आर्थिकोत्कर्षं, वासवदत्तोदयनप्रणयकथयैतिहासिकं महत्त्वञ्च प्रतिपादितवान्। यथा रघुवंशे महाकविर्वर्णयति—

"असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः।
तमिस्रपक्षेऽपि सह प्रियाभिः ज्योत्स्नावतो निर्विशति प्रदोषान्॥
(रघु० ६।३४)

अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते।
सिप्रातरंगानिलकम्पितासु विहर्तुमुद्यानपरम्परासु॥
(रघु० ६।३५)

मेघदूते महाकवेर्यक्षः मेघं प्रत्युज्जयिनीं वर्णयन् कथयति—

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्,
पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम्।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां,
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम्॥
(पू० मे० ३२)

---

६. Ancient India Dr. R. K, Mukerji, Allahabad, 1956. p. 223.

कामिनीभिरुज्जयिन्यां शिप्रावातः प्रार्थनाचाटुकारः प्रियतम[1] इवानुभूयते। सुसमृद्धिस्तु तत्र विपणिषु एवमवलोक्यते शंखशुक्तिमणि विद्रुमैर्यत् समुद्रास्तोयमात्रावशेषाः[2] संलक्ष्यन्ते। महाकालमन्दिरे चण्डीश्वरस्य [3]सान्ध्यपूजा, चामरधारिणीनां वेश्यानां कटाक्षाश्च [4]वर्णिताः।



१. पू० मेघदूते, ३३. दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां········ शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः।

२. पू० मे०, ३४—हारांस्तारांस्तरलगुटिकान्कोटिशः शंखशुक्तीः········ संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः।

३. पू० मे० ३६।

४. पू० मे० ३७।

# संस्कृत–वृत्तम्

*डा० राधावल्लभः त्रिपाठी*

## शोध-प्रगतिः

प्रत्न-नूतन-संस्कृत-साहित्यस्य तासु तासु विधासु अनुसन्धानविषये-ऽनवरतं जागरूके सागरविश्वविद्यालय-संस्कृतविभागे ये विषयाः शोधार्थं पञ्जीकृताः यानधिकृत्य शोधोपाधिर्वा अनुसन्धातृच्छात्रैः समुपलब्धस्तेषां सूच्योऽस्माभिः काले-काले सागरिकायां प्रकाश्यं नीताः। साम्प्रतिके सत्रे शोधोपाधि प्राप्तवन्तौ—

सुश्रीः कुसुम-भूरिया—कालिदासीयरूपकाणां नाट्यशास्त्रीयानुशीलन-मधिकृत्य,—

श्री रविनन्दनः त्रिपाठी—संस्कृतसाहित्ये व्यायोगरूपकस्य विकास-मधिकृत्य च।

इमे छात्राः शोधार्थं पञ्जीकृताः—

श्रीमती अर्चना मिश्रः—महाभारते जीवनमूल्यानि। श्री वीरेन्द्र पाण्डेयः—रमा-चतुर्धरीणायाः कृतीनामनुशीलनम्।

श्री रामलोचनयादवः—जग्गु-बकुल-भूषणस्य कृतित्वम्।

## नूतनप्रकाशनानि

विभागाध्यक्षैः श्रीमद्भी रामोपाध्यायवर्यैः आधुनिकसंस्कृतनाटकस्य बृहदितिहासो द्वयोः भागयोः परसहस्रेषु पृष्ठेषु प्रकाशितः। संस्कृत-भाषा-यामप्यस्य लघु-संस्करणमुपलभ्यते।

डॉ० राधावल्लभत्रिपाठिना वेदान्त-सारः (हिन्दी-व्याख्योपेतः), संस्कृत-कवियों के व्यक्तित्व का विकास चेति ग्रन्थद्वयं गतसंवत्सरे प्रकाशितम्।

## स्वागतं नूतनपत्रिकाणाम्

पुरा जबलपुरनगरादुद्गता ऋतम्भरेति त्रैमासिकी संस्कृतपत्रिका चिरकालिकीं समाधिमवधूय पुनरपि नयनगोचरा जायत इति हर्षस्य

विषयः। पत्रिकाया द्वितीयवर्षस्याङ्कद्वयं समुपलब्धमस्माभिः। श्रीमत्कृष्ण-कान्तचतुर्वेदप्रमुखैर्महता सम्भारेण सौष्ठवेन चेयं पत्रिकोपस्थाप्यते। तत्र श्रीचन्द्रमणिशर्मणां श्रद्धाभरणं नाम काव्यम्, श्रीहसूरकरमहाभागस्य सरलललितगिरोपनिबद्धः अजातशत्रुरित्यैतिहासिकोपन्यासः, डॉ० राधावल्लभत्रिपाठिनः निद्रानीराजनेति नूतनकाव्यं च संस्कृतज्ञान् सम्मोहयन्ति।

लक्ष्मणपुरतः श्रीमता डॉ० वीरभद्रेण अलघुप्रयासेन सर्वगन्धा नाम्नी संस्कृतसर्वस्वभूता नूत्ना मासिकपत्रिका प्रचारिता। पत्रिकायामस्यां नवीना सामग्री आधुनिकदृष्टिसम्पन्ना राराजते, व्यङ्ग्यचित्राणां सुमनोहरच्छवीनां च समायोजनं संस्कृतपत्रिकासु दुर्लभं वैशिष्ट्यं सर्वगन्धया आविष्कृतम्। पत्रिकासम्पादकस्य कर्मठता श्लाघ्या। पत्रिकेयं द्वितीय-वर्षे पदं विन्यस्य वर्धते।

वाराणसीतः परमार्थसुधा नाम्नी पत्रिका चित्ताकर्षकमुद्रणविन्यासेन ललित-गवेषणापूर्णैः लेखैः सहृदयान् रञ्जयन्ती प्रचरति।

संस्कृतपत्रिकासु ज्येष्ठा यौवने पदमुपन्यस्य प्रकर्षमातन्वती सागरिका स्वकनिष्ठभगिनीनां जन्मना विलासेन विकासेन च प्रहर्षमापन्ना तासां सर्वतोमुखीं समृद्धिं कामयते।

## जबलपुरविश्वविद्यालये संस्कृत-संगोष्ठी

नूतनसंवत्सराभिनन्दनमुपस्थापयता जबलपुरविश्वविद्यालयस्य संस्कृतविभागेन त्रिदिवसीया संस्कृत-संगोष्ठी समायोजिता। अस्या उद्घाटनं ज्ञानपीठपुरस्कार-विभूषितैः विश्वविश्रुतैः गुर्जरभाषायाः सुकविभिः केन्द्रीयसाहित्यपरिषदध्यक्षपदमलंकुर्वद्भिः श्रीमद्भिः उमाशंकर-जोशिवर्यैः कृतम्, आध्यक्ष्यं च पण्डितप्रवरैः डॉ० वी० राघवन्-महाशयै-र्निर्व्यूढम्। संगोष्ठ्यां निखिलेभ्योऽपि भारतेभ्यः समायाताः सारस्वत-ज्योतिषा दीप्यमानाः साहित्यविद्यानिकषोपलभूताः पञ्चविंशतिप्रायाः पण्डिताः संस्कृतभाषाया वर्तमानकाले प्रासङ्गिकतां शिक्षणपद्धतौ तस्याः स्थानं संस्कृत-पाठ्यक्रमाणां पुनर्योजनं च विचारितवन्तः। प्रथमयोः सत्रयोः डॉ० प्रभुदयालाग्निहोत्री, डॉ० रेवाप्रसादो द्विवेदः, डॉ० वीरभद्र-मिश्रः, डॉ० राजीवलोचनाग्निहोत्री, डॉ० जयमन्तमिश्रः, डॉ० देवीशंकर-

द्विवेदश्च संस्कृत-पाठ्यक्रमं शिक्षाविधिं राष्ट्रियशिक्षानीतौ संस्कृतं चेति प्रकरणानि आश्रित्य लेखान् विचारान् वा प्रकटयामासुः। तृतीयसत्रे डॉ० राधावल्लभस्य त्रिपाठिनः संस्कृत-रंगपीठस्य प्रासंगिकता, डॉ० बलदेव-सिंहस्य डॉ० देवीशंकरद्विवेदस्य च भाषाविज्ञाने संस्कृतस्योपयोगिता, डॉ० शिवशेखरमिश्रस्य संस्कृते विज्ञानम् चेत्यादयो लेखाः प्रस्तुता विचारिताश्च। रात्रौ कविगोष्ठी समजनि, यत्र डॉ० उमाशंकर-जोशी-डॉ० राघवन् डॉ० श्रीधरभास्करवर्णेकर-डॉ० रेवाप्रसाद द्विवेद-डॉ० वीरभद्रमिश्र-डॉ० राधावल्लभत्रिपाठि-श्रीश्रीनिवासरथ-प्रभृतयः सुकवयः स्वोपज्ञसंस्कृतकाव्यपाठैः रसवृष्टिमकुर्वन्त।

निष्कर्षतः सङ्गोष्ठ्यामस्यामिमे विचाराः समुद्गताः—

(१) उच्चतरमाध्यमिककक्षासु संस्कृतं सम्मिश्रपाठ्यक्रम-(कम्पोजिट कोर्स)-रूपेण सन्निवेशनीयम्।

(२) विश्वविद्यालयकक्षासु संस्कृतपाठ्यक्रमाणां पुनर्निर्धारणं कार्यम्। तत्र आधुनिकसाहित्यस्य लोकोपयोगि-विषयाणां चाधिकतरः सन्निवेशः स्यात्।

(३) प्राच्यशिक्षाप्रणाल्याः परिष्कारो ऽप्यावश्यकः। तत्र पिष्टपेषणं चर्वितचर्वणं च परिहार्यं, आधुनिकसमीक्षादृष्टिर्विकासं नेया।

इमे प्रस्तावाः सङ्गोष्ठ्यामस्यां सर्वसम्मत्या ऊरीकृताः—

(१) मध्यप्रदेशे संस्कृतस्य विकासाय केन्द्रीयविद्यापीठः संस्था-पनीयः।

(२) अत्र प्राचीनहस्तलिखितग्रन्थानां संग्रहाय अनुसन्धानाय च शोधसंस्थानमेकं भवेत्।

(३) संस्कृतपाठ्यक्रमाणां पुनर्योजनाय संस्कृतप्राध्यापकाः पण्डिताश्च पुनरपि संगत्य सुस्पष्टं विचारयेयुः।

संगोष्ठ्याः साफल्याय संयोजकचणः श्रीकृष्णकान्तचतुर्वेदः सभाजनीयः।

# प्राप्तिसम्भव-विमर्शः

- रामजी उपाध्यायः

ईषत्प्राप्तिर्यदा काचित् फलस्य परिकल्प्यते ।
भावमात्रेण तं प्राहुर्विधिज्ञाः प्राप्तिसम्भवम् ॥

ना० शा० १६. ११

अत्र प्राप्तिरीषदुताहो परिकल्पनेषदिति विवेचनीयम् ।

अभिनवगुप्त एतां कारिकां विवृण्वन्नाह—"उपायमात्रेण लब्धेन यदा कदाचित् विशिष्टफलप्राप्तिरीषत् कल्प्यते, सम्भावनामात्रेण स्थाप्यते न तु निश्चीयते, तदा प्राप्तेः सम्भवः ।"

अत्र ईषत्परिकल्पनेति आचार्योऽभिप्रैति । नेदं सम्यक् प्रकल्पनमभिनवगुप्तस्येति मतमस्माकम् ।

नाटकेषु कवयो नायिकानायकयोरेकान्तिकसमागमात् प्रागेव तयोरस्थायिनं समागमं योजयन्ति । तथाहि स्वप्नवासवदत्ते—

शय्यायामवसुप्तं मां बोधयित्वा सखे गता । ५. ८
स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।
चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥ ५. १०

अविमारके तृतीयेऽङ्के नायकोऽविमारको नायिकया कुरंग्या सह अज्ञातरूपेण वर्षमेकं न्युष्य पश्चात् पृथग्बभूव ।

प्रतिज्ञायौगन्धरायणे तृतीयेऽङ्के शिष्यारूपेण प्राप्ता वासवदत्ता गान्धर्वविवाहेन परिणीता ।

कुन्दमालायां चतुर्थेऽङ्के सीता मोहं गतं रामं परिष्वजते । पश्चात् रामो रोमाञ्चितो भवति ।

मृच्छकटिके—

वर्षशतमस्तु दुर्दिनमविरतधारं शतह्रदा स्फुरतु ।
अस्मद्विधदुर्लभया यदहं प्रियया परिष्वक्तः ॥ ५. ४८

अभिज्ञानशाकुन्तले नायको गान्धर्वेण विधिना शकुन्तलामुपयेमे[1]। विक्रमोर्वशीये नायकयोर्मिलनसुखमीषत्कालं तृतीयेऽङ्के परिणमति।

मालविकाग्निमित्रे नायको नायिकां मालविकां मिलित्वा संश्लेषमुपजनयति। मालविका तं नाट्येन परिहरति। तदा राजा कथयति—'रमणीयः खलु नवाङ्गनानां मदनविषयावतारः। तथाहीयम्—

हस्तं कम्पयती रुणद्धि रसनाव्यापारलोलाङ्गुलि
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात्।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे॥ ४. १५

रत्नावल्यां नायकयोर्मिलनं द्वितीयाङ्के भवति। पश्चात्—

राजा—(सानन्दं) यथाह भवती। (सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति।)

वसन्तकः—भो, एसा खु तुए अपुव्वा सिरी समासादिदा।

राजा—वयस्य, सत्यम्—

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवम्॥ २. १७

पश्चात् पुनरपि तयोर्मिलनं भवति। राजा नायिकां कथयति—

चलितमपि निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि॥ ३. १७

प्रियदर्शिकायां नायक आरण्यकां कमलवने मिलति। पश्चात् रङ्गपीठे पात्रीभूय तौ परिणयमभिनयतः।

उत्तररामचरिते तृतीयेऽङ्के वनप्रोषिता सीता मूर्छितं राममुपसृत्य हृदि ललाटे च स्पृशति। प्रत्यापन्नचेतनो रामो वदति—

आलिम्पन्नमृतमयैरिव प्रलेपैरन्तर्वा बहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मादानन्दादपरविधं तनोति मोहम्॥ ३. ३६

मालतीमाधवस्य षष्ठेऽङ्के मालतीमाधवयोरीषत्प्रणयभोगो निदर्शितः। तथाहि—

---

१. अनुसूया—प्रियंवदे, यद्यपि गान्धर्वेण विधिना निवृत्तकल्याणा शकुन्तला। तृतीयचतुर्थाङ्कयोर्मध्ये मिश्रविष्कम्भके।

माधवः—किं वा भणामि विच्छेददारुणायासकारिणि।
कामं कुरु वरारोहे देहि मे परिरम्भणम्॥ ६.११

मालती—(सहर्षम्) कथमनुगृहीतास्मि। (उत्थाय) इयमालिङ्गामि। दर्शनं पुनर्बाष्पोत्पीडनेन प्रियसख्याः प्रत्यक्षं न लभ्यते—इत्यादि।

प्राचीनरूपकेषूपर्युक्तास्थायिसमागमप्रसङ्गा ईषत्प्राप्तेरुदाहरणानि सन्ति। ईषत्प्राप्तेरनन्तरं या वियोगावस्थाऽन्तरीभवति सा रसमयसन्दर्भस्य सर्वोत्कृष्टं वैचित्र्यमावहतीति परं प्रयोजनमीषत्प्राप्तेः।

सान्तरायो लाभः पुनर्विच्छेदः पुनः प्राप्तिः पुनर्विच्छेदः पुनश्चैतस्यैवान्वेषणं वारं वारं सोऽनिर्धारितैकान्तफलप्राप्त्याशात्मको गर्भसन्धिरिति।[1]

फलयोगे तु समग्रं क्रियाफलं भवति,[2] किन्तु प्राप्तिसम्भवेऽसमग्रं क्रियाफलम् उत्पद्यते। ईषत्प्राप्तिः नाम फलप्राप्तेरसमग्रता, तदेव हि प्राप्तिसम्भवस्य प्रधानं लक्षणमिति प्रतिपाद्यं प्रतिभाति भरतस्य। तदनुसारं प्रणयात्मकानि रूपकाणि प्राप्तिसम्भवं यथा तथा सन्धौ घटयन्ति।

उपर्युक्तं विश्लेषणं तु भरतानुसारमेव। प्राप्तिसम्भवात्मके सन्धौ प्राप्तिरप्राप्तिरेव वेति नाट्यशास्त्रीयं कारिकांशं विशदयन्नभिनवगुप्तः सम्यगाह—

प्राप्तिरप्राप्तिरन्वेषणमित्येवंभूताभिरवस्थाभिः पुनः पुनर्भवन्तीभिर्युक्तो गर्भसन्धिः, प्राप्तिसम्भवाख्ययाऽवस्थया युक्तत्वेन फलस्य गर्भीभावात्। तथाहि रत्नावल्यां द्वितीयाङ्के—

सुसंगता—अदक्षिणा इदानीं त्वं या एवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि।

---

१. दशरूपके १.३६ अधिकृत्यावलोकः।

२. अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम्।
इतिवृत्ते भवेद्यस्मिन् फलयोगो प्रकीर्तितः॥ ना० शा० १९.१३।
धनञ्जयोऽप्येतदेव समर्थयति—
समग्रफलसम्पत्तिः फलयोगो यथोदितः॥ द० रू० १.२२।

—इत्यादौ प्राप्तिः।[1]

दशरूपके प्राप्तेरसमग्रता धनञ्जयेन न निर्दिष्टा प्राप्तिसम्भवपरिभाषा-प्रसङ्गे इति त्रुटिः।[2] रसार्णवसुधाकरेऽपि प्राप्त्याशाप्रसंगे 'ईषत्प्राप्तिः' न निर्दिष्टा।

ईषत्प्राप्तिः प्रायः प्रणयात्मकेषु नाटकेषु नायकयोरस्थायिसमागम-रूपेण विलसति। तत्पश्चात् कविसमीहितं विप्रलम्भशृङ्गारस्यौचित्यं वर्तत एव। एतदनुसारं भारतीया प्राप्तिसंभवविषयिणी कारिका व्याख्येया।

तदयमत्र निष्कर्षो यत् प्राप्तिसंभवपदे संभवशब्द उत्पत्तिपरः कुमार-संभवपद इव। स चासौ संभवः प्रकृते क्षणमात्रात्मा न तु दीर्घकालिकः स्थायी वा यथा समग्रफलप्राप्तिरूपे फलागमे।



१. ना० शा० २१.४१ अधिकृत्य भारती।

२. उपायापायशंकाभ्यां प्राप्त्याशा प्राप्तिसंभवः॥ द० रू० १. २१।

# कालिदासीय-नाट्यविधानम्

डॉ० राधावल्लभः त्रिपाठी

कालिदासीयकाले नाट्यं नितरां बहु मन्यते स्म। नाट्यप्रयोगा न केवलं बाहुल्येन प्रवर्तिताः अपि तु तेषां माहात्म्यमपि रसिकसमाजे सर्वंकषमूरीकृतम्। नाट्यं पवित्रं पावनमिति सम्मतम्। अत एव मालविकाग्निमित्रे नाट्यं परामृशन् स्वयमूचे कालिदासः—'कान्तं क्रतुं चाक्षुष'मिति (१।४)। काट्यवेमस्तु स्थलमिदं टीकमानः परिकरश्लोकमिममुद्धरति स्म—

> प्रयोगं यश्च कुर्वीत प्रेक्षते वा विधानवान्।
> या गतिर्वेदविदुषां या गतिर्यज्ञयाजिनाम्॥
> या गतिर्दानशीलानां तां गतिं प्राप्नुयान्नरः॥

(माल० श्रीरंगम् सं० पृ० ११)

उद्धरणमिदं नाट्यविषये पारम्परिकीं मान्यतां प्रकाशयन् सुस्पष्टं सूचयति यन्न केवलं नाट्यशास्त्रादौ सिद्धान्तेन, व्यवहारेणापितु आकालिदासमाकालिदासाच्च नाट्यप्रयोगस्य वेदपुराणादेरिव महिमा ज्ञायते स्म। एवं स्थिते कालिदासकाले नाट्यप्रयोगाणां प्रचलने वृद्धिरनुमातुं शक्यते। वस्तुतो रूपकरचनाया मौलिकं प्रयोजनमेवाभवत् प्रयोगो नाम। प्रयोगप्राधान्यात् नाट्यस्य प्रयोग इति पर्यायो रूढिमाप्तः। तद्यथा विक्रमोर्वशीये सूत्रधारो बभाषे—'पूर्वेषां कवीनां दृष्टाः प्रयोगबन्धाः' इति (काले सं० पृ० ५२)। स्वयं महाकविरपि नाट्यस्थाने प्रयोगमभिदधाति—

> मुनिना भरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयो नियुक्तः।

विक्र० २।१७

अत एव कालिदासकाले नाट्यप्रयोगकला समुन्नता बभूव, प्रयोगार्थमेव महाकविना नाट्यकृतयो रचिताश्चेति युज्यते वक्तुम्। तेन च स्वरूपकाणां प्रयोगविषये जागरूकः सन् स तेषां प्रायोगिकस्वरूपं संकेतयेदित्यपि स्वाभाविकमेव। प्रायोगिकपक्षविषये कालिदासस्य नाट्य-

चेतना सर्वत्र जागर्ति इत्यग्रे दर्शयिष्यते। तेन स्वरूपकाणां प्रयोग-सम्बन्धिसंकेताः सांकेतिकतयैव तत्र स्थापिताः। ते च पुरातनटीकाकारैः क्वचित्पल्लविताः। अत्र कालिदासीयरूपकत्रये प्राप्यमाणानामेतादृश-संकेतानां तदुपरि च काट्यवेम-राघवभट्टाज्ञातनामधेयाभिज्ञानशाकुन्तल-चर्चालेखक-रंगनाथाभिराम-प्रभृतीनां टिप्पणानुसारतः कालिदासीय-रङ्ग-पीठस्य तन्नाट्यप्रयोगस्य च स्वरूपमनाव्रियते।

## प्रेक्षागृहम्

कालिदासेन स्वरूपकाणां रचना राजप्रसादे रंगशालां मानसे निधाय कृतेति प्रतीयते। अस्याः कृते कालिदासेन प्रेक्षागृहं संगीतशाला चेति द्वे नामनी प्रयुक्ते। मालविकाग्निमित्रे नाट्यप्रयोगप्रदर्शनसमुद्यतयोः गणदासहरदत्तयोः विदूषक आह—

'तेण हि दुवे वि वग्गा पेक्खाघरे संगीदरअणं करिअ तत्तभवदो दूदं पेसअह।'

शाकुन्तलस्य पञ्चमांकेऽपि विदूषकः संगीतशालाभ्यन्तरे राज्ञोऽव-धानं प्रेरयति—

'भो वअस्स ! संगीदसालंतरे अवधाणं देहि।'

काट्यवेम-नीलकण्ठ-प्रभृतिटीकाकृतां मते प्रेक्षागृहं नाट्यशाला संगीतशाला चेति पर्यायाः।

प्रेक्षागृहस्य रचनाविषये केचन संकेताः कालिदासेन दत्ताः। नाट्य-शास्त्रप्रोक्तविधिना अग्निमित्रस्य रंगशालापि द्विधा विभक्ता प्रतीयते। तत्रैकभागे रंगपीठः स्यात्, यत्र मालविका नाट्यं प्रस्तुतीचकार अपरस्मिश्च भागेऽग्निमित्र-विदूषक-देवी-परिव्राजिकादि-सामाजिकाः समुपविष्टा आसन्। रंगपीठस्य द्विधा विभागः कालिदासेन संकेतितः। तत्र पृष्ठभागे नैपथ्यगृहमभूत्। नीलकण्ठेन इदमेव 'यवनिकान्तर्गृहमध्य' मिति सूचितम् ( श्रीरंगम् सं० पृ० ४० )। शाकुन्तलटीकायामभिरामः कथयति—'नेपथ्यमलङ्कारः, तदर्थं गृहं नैपथ्यम्' ( अभिरामटीका पृ० २ )। एतेन 'नेपथ्ये कृतं कर्म नैपथ्य' मिति केषांचन विमतिः पराहता भवति। नैपथ्यगृहमिदं तिरस्करिण्या जवनिकया वा आच्छा-दितमभूत्। जवनिका रंगपीठे निबद्धः संहरणयोग्यः पट आसीदिति

कालिदासस्य विवरणेन ज्ञायते । यतो हि नैपथ्यगृहे विद्यमानायां मालविकायामग्निमित्रो जवनिकाया संहरणाय व्यग्रो बभूव—

नैपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः ।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥ २।१

एतेन जवनिकासंहरणेन नैपथ्यगृहगतपात्रस्य प्रवेशः शक्य आसीदिति ज्ञायते । प्रयोगात् प्राङ् मालविका जवनिकाभ्यन्तर आसीद्, अवसिते च प्रयोगे तत्रैव सा तिरोहिता इत्यपि स्पष्टमेव । रंगपीठान्निवृत्तायां तस्यामग्निमित्र आह—

द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करिणीम्—२।११ ।

पात्रप्रवेशकाले तिरस्करिण्या संहरणं तन्निर्गमे च तस्याः पिधानमिति प्रक्रियात्र कवेरभिमता । कालिदासस्य एभिः संकेतैः तत्कालिक-रंगपीठे जवनिकायाः प्रयोग-विषये विवादावसरो न विद्येत । अन्यत्र—

'दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति' ।

इति कुमारसम्भवस्य ( १।१४ ) उल्लेखेन तिरस्करिण्या विलम्बित्वमपि कालिदासः सूचयति ।

अन्यच्च—तिरस्करिण्या विशिष्टोऽपि कश्चित्प्रयोगो विक्रमोर्वशीये विचारमपेक्षते । द्वितीयाङ्के उर्वशी 'तिरस्करिणीप्रतिच्छन्ना भूत्वा पुरूरवसमभिसरति । तया सहायाता चित्रलेखा स्व—'तिरस्करिणीमपनीय' ( काले सं० पृ० ११६ ) राज्ञः पुरत आविर्भवति । तृतीयाङ्के पुन उर्वशीचित्रलेखे तिरस्करिणीं धृत्वा राजानं गच्छन्ति, तत्र च 'हला, अगदो वि मम ट्ठिदाए उदासीणो विअ महाराओ' इति कथयित्वा सविग्नामुर्वशीं चित्रलेखा स्मारयति—'अइ अदितुवारदे ! अणक्खित्ततिरक्खरिणीआसि ।' एव तिरस्करिण्या अपनयनमुत्क्षेपं चोल्लिख्य कालिदासः तिरस्करिणी आहार्याभिनयाङ्गभूतः कोऽपि सूक्ष्मः पटोऽपि भवितुमर्हतीत्यनुमापयति । तिरस्करिण्या इद रूप पात्रमेकमन्यस्मात् तिरोहित दर्शयितु प्रयुक्त स्यात् । अस्मिन् प्रयोगे सूक्ष्मपटरूपायाः तिरस्करिण्याः सौकर्येण अपनयनम् उत्क्षेपो वा कर्तुं शक्य आसीत् पात्रस्याविर्भावप्रदर्शनाय । यद्यपि शाकुन्तलस्य षष्ठाङ्के तिरस्करिणी अन्तर्धानविद्याया अर्थेऽपि प्रयुक्ता, विक्रमोर्वशीयस्यास्मिन स्थलेऽपि

टीकाकारैस्तिरस्करिण्या अयमेवार्थो गृहीतः, तथापि विक्रमोर्वशीये कालिदासेन तिरस्करिणीविद्यायाः स्थाने 'अपराजिता नाम शिखाबन्धन-विद्या' प्रागेव उल्लिखिता, तेनात्र विद्याया अर्थे अपराजिताया नाम-ग्रहणमुचितं, न तिरस्करिण्याः। तिरस्करिण्या उल्लेखेन तु कालिदासः पटरूपं स्थूलावरणमेव संकेतयति। मयूरेश्वरस्तु 'अनक्षिप्त-तिरस्करिणी के'ति स्थलं टीकमानो लिखति 'असंहृततिरस्करिणी-प्रयोगा' इति (मयू० टीका पृ० ८१)। अन्यच्च मयूरेश्वरेण चित्रलेखासंवादे स्वीकृतः पाठभेदोऽपि तिरस्करिण्या अस्मत्स्वीकृतं स्वरूपमेव प्रमाणयति—

'अलं आवेएण। अंतरिदा दाणीं सि तुमम्।' (अंतरिदा दाणिं वयं—इति पाठभेदः।)

अत्र अन्तरितेत्यनेन तिरस्करिण्याः पटत्वमेव सम्भाव्यते। तिरस्क-रिणीविद्यया अन्तर्धानत्वं भवति, न अन्तरितत्वम्। तत्तु पटेनैव। 'अंतरिदा दाणीं सि तुमम्' इति कथयन्ती चित्रलेखा स्वयमुर्वशीं पटेना-वृणुत इति प्रतीयते, उर्वश्या विभ्रान्तत्वात्।

## अभिनयः

अभिनेतारः स्त्रीपुरुषाः कालिदासेन पात्रमिति संज्ञयाऽभिहिताः।[1] प्रयोगारम्भात् प्राक् पात्राणि स्वस्वपाठेष्वसम्मूढानि भवेयुरित्यपेक्षा नाट्याचार्येण क्रियते स्म।[2] अपनीतायां तिरस्करिण्यां प्रविशति च पात्रे नाट्याचार्यः[3] तदङ्गसौष्ठवं प्रत्यवेक्षते स्म।[4] किमिदं नाम अङ्ग-सौष्ठवमिति काट्यवेमो विशदयति—

'सौष्ठवं नाम अङ्गानां शोभनः अवस्थानविशेषः। यथोक्तम्—

अनुच्चनीचलतामंगानां समपादताम्।
कटिकूर्परशीर्षांसकण्ठानां समरूपताम्॥

---

१-२. तदुच्यतां पात्रवर्गः। स्वेषु स्वेषु पाठेष्वसम्मूढैर्भवितव्यमिति। (शाकु० प्रस्तावना)।

३. सूत्रधारः = नाट्याचार्यः इति माल०—टीकायां नीलकण्ठः। श्रीरंगम्, १९०८ सं०, पृ० ३।

४. ततः प्रविशत्याचार्यप्रत्यवेक्ष्यमाणांग-सौष्ठवा मालविका-माल० पृ० ४१।

रम्यां प्रतीकविश्रान्तिमुरसश्च समुन्नतिम्।
अभ्यासोपहितां प्राहुः सौष्ठवं नृत्यवेदिनः॥
( माल० काटयवेमटीका, पृ० ४१ )

अतो नाट्ये अंगसौष्ठवं नाम नायत्नसाध्यं सहजं वा, अपितु अभ्यासग्राह्यम्। अंगसौष्ठवाभिव्यक्तौ नेपथ्यस्याधिक्येन बाधा स्यात्। अतो युक्तमुक्तवती परिव्राजिका—

'सर्वांगसौष्ठवाभिव्यक्तये विरलनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु' इति मालविकायाम्।

कालिदासमतेन अभिनयो रसानुभूतिकारणं स्यात्। अत एव मालविकाया 'दुल्लहो पिओ मे—' इति गीतिमनु तस्य नाट्यनिर्देशः—'इति यथारसमभिनयति' इति। रसानुभूतिस्तु अभिनयकाले तैस्तैरङ्गविन्यासैर्विधीयते।[1] वस्तुतो अंगविन्यासा एव अभिनयस्य मूलम्। अत एव कालिदासेन अभिनयः 'शाखायोनि' रिति कथितः।[2] नीलकण्ठमतेन—'शाखा अङ्गुलयः तत्प्रभवोऽभिनयः शाखायोनिः।[3] काटयवेमस्तु 'शाखा नाम नृत्तहस्तानां मानप्रचारः। यथोक्तम्—

'शाखा तु नृत्तहस्तानां या मात्रोचितनर्तनी' इति व्याचष्टे।[4] नृत्तहस्तानां निरूपणं भरतेन अभिनयदर्पणकारादिभिश्च विस्तरशो विहितमेव।

अभिनयस्य पूर्णतायै अभिनेता विगतभीः सत्त्वस्थश्च स्यादिति कालिदासः समुपदिशति। नाट्याभिनयात् प्राङ् नाट्याचार्यो गणदासो मालविकां बोधयति—'वत्से, मुक्तसाध्वसा सत्त्वस्था भव' इति। सत्त्वस्थताया अभावात् स्खलनं भवति। विक्रमोर्वशीये अमृतमन्थननाटकाभिनयकाले उर्वशी सत्त्वस्था न बभूव, अतः पुरुषोत्तम-स्थाने पुरूरवसो नामग्रहणमनवधानतया चकार।

---

१. अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः। ( माल० २।८ )।

२. शाखायोनिर्मृदुरभिनयः—तत्रैव।

३. माल० श्रीरंगम् सं० नीलकण्ठटीका।

४. माल० निर्णयसागर सं० पृ० २८।

अस्य अभिनयस्य पंचांगानि कालिदासेन संकेतितानि ।[1] नीलकण्ठेन पंचांगाभिनयव्याख्यायां परिकरश्लोकोऽयमुद्धृतः—

करास्यां चरणाभ्यां च शिरसा चाभिनीयते ।
यत्र वस्त्विति विज्ञेयः पंचांगाभिनयो हि सः ॥

काटयवेमस्तु स्थलमिदं टीकमानोऽन्यान्येव पंच अंगानि विवृणुते—

नृत्तं तथैव कैवारो घर्मरो वागडं तथा ।
गीतं चेति समाख्यातं प्रेरणस्यांगपंचकम् ॥

अभिनये विशिष्टांगिकमुद्राविन्यासानां गति-चारी-करणादीनां प्रयोगोऽपेद्यते । एतादृशविशिष्टमुद्राया अपेक्षायां कालिदासः *नाट्येन, रूपयित्वा, सूचयित्वा, अभिनीय* चेति चतुर्णां नाट्यनिर्देशानां प्रयोगेण तां सूचयति । एतैर्नाट्यनिर्देशैः नाट्यधर्मि-व्यापाराणां संकेतः भवति । यानि कार्याणि नाट्येऽपि तथैव सम्पाद्यानि, यथा लोकव्यवहारे । तेषां कृते कालिदासेन 'तथा कृत्वा' इति नाट्यनिर्देशः प्रयुक्तः ।

कालिदासेन येषां कार्यव्यापाराणां कृते तास्ताः नाट्यमुद्रा अपेद्यन्ते, ते प्राधान्येनेत्थं गणयितुं शक्यन्तेः—

( १ ) रथ-सोपान-प्रासाद-पर्वतादिषु आरोहणमवतरणं च तद्यथा— *नाट्येनावतीर्णौ*—शाकु० पृ० २६८ ।

इति *नाट्येनावतीर्य* स्थिता ( सानुमती )—तत्रैव पृ० २१० इति सर्वाः शैलावतरणं *रूपयित्वा* स्थिताः—विक्र० पृ० ६० ।

आकाशोत्पतनं *रूपयन्ति*—तत्रैव पृ० ७८ ।

शैल-यान-विमानादीनां वस्तुतो रंगपीठे अभावात् नाट्यमुद्राभिरेव तेभ्यस्तेषु वावतरणमारोहणं च प्रदर्शयितुं शक्येते । नाट्यशास्त्रे आरोहणाय अवतरणाय च करणादिकं निर्दिष्टम् ।[2] कालिदासेन

---

१. इदानीमेव पंचाङ्गाभिनयमुपदिश्य—'इति मालविकायां गणदासः । निर्णयसा० सं० पृ० ८ ।

२. आरूढमुद्वहेद् गात्रं किञ्चित्स्यादुन्मुखस्थितम् ।
अस्यैव वैपरीत्येन कुर्याच्चाप्यवरोहणम् ।
अधोवलोकनैश्चैव मण्डलावर्तनेन च ।
आकाशगतये चैव कर्तव्या नाट्ययोक्तृभिः ॥ ना. शा. १२।८४, ८६ ।

स्वयमेव एकस्मिन् स्थले गगनोत्पतनाय विशिष्टा मुद्रा सनामग्रहण-मुल्लिखिता। शाकुन्तलपष्ठांके सानुमत्या आकाशगमने कविर्निर्दिशति-'इत्युद्भ्रान्तकेन निष्क्रान्ता' इति। राघवभट्टमतेन उद्भ्रान्तको नाम उत्प्लवनाय प्रयुक्तः करणविशेषः।[1] नाट्यशास्त्रे अभिनयदर्पणे अशोक-मल्लकृत-नृत्याध्याये चोल्लिखितेषु १०८ करणेषु उद्भ्रान्तक-नामा उत्प्लुतिकरणविशेषो न कुत्रचिन्निर्दिष्टः। तथापि गगनोत्पतनाद्यर्थम् अशोकमल्लेन निकुञ्चितनाम करणं वर्णितम्—

तदौत्सुक्ये वितर्के च गगनोत्पतनादिषु॥—नृत्याध्याये ११७५।

अशोकमल्लमतेन करणमिद चरणमेकं वृश्चिकमिव विधाय, शिरः तिर्यक् कृत्वा, हस्तमेकं च ऊर्ध्वमुत्थाप्य प्रदर्श्यते। कालिदासराघव-भट्ट-स्वीकृतोद्भ्रान्तककरणेनास्य साम्यं तादात्म्यं वा सम्भवत्येव।

(२) *पूजायाम्*—यथा विक्रमोर्वशीये देवीनाट्येन गन्धपुष्पादिभि-श्चन्द्रपादानभ्यर्च्य, पृ० १६२ पूजा*मभिनीय*—पृ० १६२।

(३) *उद्यानशोभा—तिरोहितपदार्थयोरवलोकने*—यथा—उभौ—नाट्येनोद्यानशोभां निर्वर्णयतः। माल० पृ० ३६।

दुष्यन्तः—निपुणं *निरूप्य*—शाकु० पृ० २४ (शकुन्तला-दर्शने)

(४) *वस्त्राभूषणादीना परिधानावमोचनयोः*—यथा—नाट्येन नूपुर-युगलमामुच्य—माल० पृ० ५६ उभे *नाट्येना*लकुरुतः शाकु० १४२।

(५) *पुष्पचयन—वृक्षसेचनयोः*—यथा शाकुन्तले—कुसुमावचयं *नाट्यन्त्यौ* सख्यौ—पृ० १२४ तदेव कर्म *अभिनयतः*—पृ० १२६ प्रियंवदा *नाट्येन* सुमनसो गृह्णाति—१३८ पुष्पोच्चयं रूपयति—पृ० १२८ वृक्षसेचनं रूपयति—पृ० १२८।

अत्र असत्यपि वृक्षे कुसुमादिके वा करण-विशेषेण तत्तत् कर्म दर्शयितु शक्यते इति 'अभिनयतः' 'रूपयति' इत्यादिपदैर्लक्ष्यते। शाकुन्तलस्य 'वृक्षसेचनं रूपयति' इत्यंशस्य टीकायां राघवभट्ट आह—'अभिनयती' त्यर्थः। अत एव रंगपीठे वास्तविक-वृक्षसेचन-पुष्पचयना-दीना स्थाने तेषामभिनय एव कालिदासराघवभट्टयोरभिप्रेतम्। अभिनय-

---

१. उद्भ्रान्तकेनेत्युद्भ्रान्तकनामोत्प्लुतिकरणेन। शाकुन्तल—राघवभट्ट-टीका, काले सं० पृ० २२१।

दर्पणानुसारं कुसुमावचयादिषु कटकामुखो नाम हस्तः प्रयोक्तव्यः—
कपित्थे तर्जनी चोर्ध्वमुच्छ्रिताङ्गुष्ठमध्यमा ।

कटकामुखहस्तोऽयं कीर्तितो भरतागमैः ।

कुसुमावचये मुक्तास्रग्दाम्नां धारणे तथा ॥ १२४–२५ ।

( ६ ) *शरसंधाने*–राजा—शरसंधानं नाटयति—शा० पृ० १६ । अभिनयदर्पणमतेनात्रापि कटकामुखहस्तः ।

( ७ ) *नायिकया नायकस्य स्पर्शालिंगनादिपरिहारे* राजा—इति मुखमस्याः समुन्नमयितुमिच्छति, शकुन्तला परिहरति *नाट्येन*—शाकु० पृ० ११८ ।

राजा—संश्लेषमुपजनयति, मालविका परिहरति *नाट्येन*—माल० पृ० ७१ ।

शाकुन्तलटीकायां राघवभट्टेन राजा कथं नायिकाया मुखोन्नयनमभिनेष्यति कथं च नायिका तत्परिहारमिति विशदीकृतम्—

'समुन्नमयितुमिति त्रिपताकस्योत्तानाभ्यां मध्यमा-तर्जनीभ्यां चिबुकदेशगताभ्यामिति ज्ञेयम् । नाट्येनेति परावृत्तेन शिरसा विनिगृहीतेनाधरेण । शा० पृ० ११९–१२० ।

( ८ ) क्रोध-लज्जा-विषाद-मदनबाधा-शंका-भय-सापत्यता-दृष्टिविघानादिदर्शने—

इति कोपं *नाटयित्वा*—विक्र० पृ० १३० उर्वशी विषादं *नाटयति* तत्रैव पृ० १५२ मदनबाधां *निरूप्य*—शाकु० पृ० ६२ इत्यादि ।

( ९ ) लेखस्योद्घाटने—परिजनो लेखं नाट्येनोद्घाटयति—माल० पृ० ६१ ।

( १० ) निमित्त-कोकिलरव-भ्रमरबाधादिसूचने-शकुन्तला—( निमित्तं सूचयित्वा )—अहो किं मे वामेतरं नयनं विस्फुरति—शाकु० पृ० १७६ निमित्तं सूचयित्वा—विक्र० पृ० १४८ शकु०—भ्रमरबाधां *रूपयति*—शाकु० पृ० १४६ ।

भ्रमरबाधा भ्रमरोत्पतनस्य च प्रदर्शनाय नाट्यशास्त्रे भ्रमरहस्तः ( ९।९८ ) भ्रमरांगहारश्च ( ४।२२ ) निरूपितौ । अभिनयदर्पणे भ्रमरहस्तनिरूपणे उक्तम्—

मध्यमाङ्गुष्ठसंयोगे तर्जनी वक्रिताकृतिः।
शेषाः प्रसारिताश्चासौ भ्रमराभिधहस्तकः॥
भ्रमरं च शुभे पद्मे सारसे कोकिलादिषु॥ १५२-५३

भ्रमरहस्तस्यायमेव विधिः अशोकमल्लेन नृत्याध्याये निर्दिष्टः। किन्तु तेन तत्र परिवर्धित किञ्चिद्। तद्यथा—भ्रमर-प्रदर्शने तत्र हस्तः कम्पनीय इति।[1] शकुन्तलाया हस्तकम्पनं भ्रमरबाधादिप्रदर्शने कालिदासेन स्वयमेव वर्णितम्—'करौ व्याधुन्वत्याः' (१।२१) इत्यादि-पद्येन। भरत-नन्दिकेश्वरादिभिर्भ्रमरहस्तनिरूपणे हस्तकम्पनं न निर्दिष्टं, कालिदासपरवर्तिनाऽशोकमल्लेन तु निर्दिष्टमिति कालिदास-प्रभावादेव तेन एतत् संशोधयितव्य स्यात्।

(११) *गतिभग-स्खलनादौ* शाकु०—पदान्तरे स्खलितं *निरूप्य*-शाकु० पृ० १२८-गतिभगं रूपयित्वा-शाकु० पृ० १५२।

नाट्यशास्त्रमतेनात्र अंगभ्रमरी[2] विषमाचारी[3] च प्रयुक्ता स्यात्।

(१२) *रथादिवेगनिरुपणे*—यथा शाकुन्तले दुष्यन्तः रथवेगं निरूप्य पृ० १४ इति भूयो रथवेगं निरूपयति—पृ० २०।

कालिदासमतेनात्र दुष्यन्तानुकर्तो नटः विशिष्ट-गति-मुद्रया रथवेगं प्रदर्शयतु। इयं गतिमुद्रा भरतेनेत्थं प्रकीर्तिता—

रथस्थस्यापि कर्तव्या गतिस्तूर्णपदैरथ।
समपादं तथा स्थानं कृत्वा रथगतिं व्रजेत्॥
विमानस्थस्यापि कर्तव्या ह्येषैव स्यन्दिनी गतिः॥

—ना० शा० १२।८१, ८४

(१३) *लतादिष्वासक्तवस्त्रादिमोचने* विक्रमोर्वशीये प्रथमांके लता-विटपसंलग्नामेकावलीम् चित्रलेखा 'उत्पतनभंगं रूपयित्वा' दर्शयति,

---

१. भ्रमरत्वेन कम्पितः-नृत्या० ३०-३२।

२. वितस्त्यन्तरितौ पादौ कृत्वाङ्गभ्रमणं तथा।
तिष्ठेद् यदि भवेदङ्गभ्रमरी भरतोदिता॥—अ० द०-२९७-९८।

३. वेष्टयित्वा दक्षिणेन वामं वामेन दक्षिणम्।
क्रमेण पादं विन्यस्य भवेद् विषमसंचरः॥—अ० द० ३०८।

चित्रलेखा च 'मोचनं नाट्यति'। अत्र उत्पतनभगनिरूपणे गतिभंगादिषु प्रयुक्ता मुद्रा प्रयोज्या।

( १४ ) लेखने—शाकुन्तले प्रियवंदा 'एतस्मिन्नलिनीपत्रे नखैः सन्देशं निक्षिप्तवर्णं कुरु इति समादिशति। शकुन्तला लेखनमभिनयति ( यथोक्तं रूपयित्वा–शा० पृ० ११७ )। अभिनयदर्पणानुसारतः लेखनादिषु हंसपक्षहस्तः प्रयोज्यः।

सर्पशीर्षकरे सम्यक् कनिष्ठा प्रसृता यदि।
हंसपक्षकरः सोऽयं तन्निरूपणमुच्यते।
षट्संख्यायां सेतुबन्धे नखरेखाङ्कणे तथा॥ ( १५७–१५८ )

इत्थं कालिदासेन नाट्यधर्मिकार्यव्यापाराणामभिनयार्थं स्वरूपकेषु विशिष्ट-नाट्यकरणानां संकेतः कृतः। सोपानाद्यारोहणावरोहण—उद्यानशोभावलोकन-प्रसाधन-परिधान पश्चादिदर्शनेषु नाट्येन, रूपयति अभिनीयेत्यादिपदानां प्रयोगेण—लोकव्यवहारे प्रयुक्ता सामग्री एषु कार्येषु न स्यात्, किन्तु करणैः सा तथा प्रदर्शनीयेति कविना सूचितम्। अत एव उपर्युक्तानां सर्वेषां कार्यव्यापाराणां नाट्यधर्मित्वं स्पष्टमेव। ये पुनः कार्यव्यापाराः प्रकृतरूपेण लोकधर्मितयैव रंगे सम्पादयितुं शक्यास्तेषां कृते नाट्येन, अभिनीय—इत्यादिसंकेतानां प्रयोगः कविना न कृतः। यथा शाकुन्तले शकुन्तला प्रियंवदामालिंगति, अत्र आलिंगनमात्रमेव कविना सूचितम्, न नाट्येन आलिंगनम्। किन्तु दुष्यन्तः शकुन्तलालिंगनमिच्छति, शकुन्तला च तत्परिहरति। अत्र विशिष्टा मुद्रा अपेक्षिता। अत एव 'शकुन्तला परिहरति नाट्येन' इति रंगसूचना प्राप्यते। तथैव—विक्रमोर्वशीये विदूषकेण मोदकशरावग्रहणम्, राज्ञा मणेरादानम, उर्वश्या पृष्ठतस्तस्य नयनयोः पिधानम्, तथैव शाकुन्तले राजपुरुषाभ्यां धीवरस्य ताडनम् चेत्येवंविधेषु व्यापारेषु तत्तन्नाट्यकरणादिकं नापेक्ष्यते, अत एव 'नाट्येन मोदकशरावमादाय' इत्यादिकं रंगसंकेतमदत्त्वा केवल 'मादाय' इत्यादेव कविना दत्तम्। एकस्मिन्नेव समये युगपत्क्रियमाणकार्यद्वयसम्पादने एकतरस्य कृते विशिष्टनाट्यमुद्राया अपेक्षा, अन्यस्य च कृते तदनपेक्षा कविना सूचिता। तद्यथा विक्रमोर्वशीये देवी—'राज्ञः पूजामभिनीय प्रणिपत्य च' इत्यत्र पूजाकर्म नाट्येन मुद्रया भवेत्, प्राणिपातस्तु लोकधर्मितयैव।

## नेपथ्य-ध्वनिः

अग्निमित्रस्य रंगशालायां मालविकाया नाट्यारम्भात् प्राक् नेपथ्यात् मृदंगध्वनिरश्रूयत। प्रथमं नाट्याचार्यः संगीतरचनामकरोत्। तदनु सामाजिका नाट्यदर्शनाय आहूताः इति सर्वमधोलिखितसंवादैः सुस्पष्टं भवति—

विदू०—तेण दुवे वि वग्गा पेक्खाघरे संगीदरअणं करिअ तत्तभवदो दूदं पेसअह। अहवा मुदंगसद्दो एव्व णो उत्थावइस्सदि।

परि०—हन्त, प्रवृत्तं संगीतम्। तथा ह्येषा—

जीमूतस्तनितविशङ्किभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य।
निर्ह्लादिन्युपहितमध्यमस्वरोत्था मायूरी मदयति मार्जना मनांसि॥ २१

राजा—

धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरागोऽयम्।

( —माल० १।२२ )

नेपथ्यादेव यथावसरं तेषां तेषां पशुपक्षिणां रुतादिकमपि नटैः कृत्रिमैरुपायैरुत्पाद्यते स्म। तथाहि—शाकुन्तलचतुर्थांके काश्यपः कोकिलरवं सूचयति। अत्र शाकुन्तलार्थद्योतनिकायां राघवभट्टस्येदं स्पष्टीकरणम्—कोकिलरवं सूचयित्वेति—'नेपथ्यगतनटत्वेन···ते हि सुशिक्षिताः सर्वशकुन्तशब्दं कुर्वन्ति।'—( शाकु० पृ० १४८ )।

## रंगपीठ-विन्यासः

कालिदासीयरूपकाणां प्रयोगेऽनेकत्र रंगपीठे विशिष्टा विन्यासस्यापेक्षासीत्। यथा—शाकुन्तल-विक्रमोर्वशीय-प्रथमांकयोः धावद्रथोपविष्टराज्ञः प्रवेशे, शाकुन्तलसप्तमांके च विमानस्थदुष्यन्तप्रवेशे वा। एतद् सविधानकं स्थूलरूपेण रंगपीठे प्रदर्शयितुमशक्यमिव प्रतिभाति। तर्हि कथमस्याभिनयः स्यात् इति प्रश्नः पञ्चदशशतकस्याज्ञातकर्तृकायाम् 'अभिज्ञानशाकुन्तलचर्चायां'[1] विचारितः। यद्यथा—

'अत्र रथो न रंगे प्रवेश्यते' अपि तर्हि तस्य सूचनमेव क्रियया

---

1. त्रिवेन्द्रम्, १९६२।

युक्तं न त्ववतरणं कार्यम् , तुरंगमृग-पोत-रथ-विमानानां तेषामाकृतिचिह्नैः विधानमुक्तं गतिविचारे इति । गतिविचारे चोक्तम्—

गजवाजिरथादींस्तु चिह्नमात्रेण कारयेत् ।
वाहनार्थप्रयोगेषु रंगावतरणेषु च ॥ इति

अथवा—तृणवस्त्रादिरचितो रथः प्रवेशयितव्यः । तदुक्तम्—

वस्त्रकृतान्यथवा रथगजवाजिविमानयानानि ।
कर्तव्यानि विविधैः तथा च विविधप्रहरणानि ॥ ( पृ० ३० ) ।

इत्थमेतट्टीकाकारमतेन अत्र रथस्याकृतिचिह्नम् , तृणादिरचिता रथाकृतिर्वा रंगपीठे प्रदर्शनीया । उभयत्रापि 'दूरममुना सारंगेण वयमाकृष्टाः' इत्यादिसंवादेषु संकेतितं दूरगामित्वं कथं प्रदर्शनीय स्यात् ? यदि कथंचित् प्रदर्श्यतेऽपि चेत्, 'दूराध्वानं वधं युद्धं···न दर्शयेदि'ति नाट्यशास्त्रनिर्देशातिक्रमः स्यात् । अस्याः शंकाया अपि समाधानमनेन टीकाकारेण एवं विहितम् ।

'नात्र राजा सूतश्च रथे स्थितौ पादचारं कुरुतः, रथश्च न चलति, तस्याकृतिचिह्नविषयत्वात्, वस्तुकृतत्वाद्वा । न खलु साक्षाद्रथो रंगे अवतार्यते इत्युक्तम् , अतो गमनमेव नास्ति, तत् कुतो दूराध्वगमनम् ? कथनमात्रं तत् , नाटयन्यायात् । ( पृ० ३० )

इत्थमभिज्ञानशाकुन्तलचर्चाकारमतेन रंगे रथ-विमानादीनां प्रदर्शनं नाटयधर्मीरूपेण स्यात् , न तु साक्षात् । भरतेनापि यानविमानादीनां नाटयधर्मीप्रयोगो रंगे निदिष्टः—

शैल-यान-विमानानि चर्मवर्मायुधध्वजाः ।
मूर्तिमन्तः प्रयुज्यन्ते नाटयधर्मी तु सा स्मृता ॥ ( १३।७२ )



# पुण्यपत्तने प्राच्य-परिषद्यभिभाषणम्

*अयि विद्वद्वरेण्याः संस्कृतानुरागिणः,*

अखिलभारतीय-प्राच्यविद्या-परिषदः संस्कृत-साहित्य-खण्डस्याध्यक्ष-पदे नियोजनेनात्र-भवतामहं भूयिष्ठं कृतज्ञोऽस्मि। अवसरोऽयं भारतीय-संस्कृति-संस्कृत-विद्याविषयक चर्चां समाधातुं समीचीनः। विगत-चत्वारिंशद्-वर्षेभ्यः संस्कृतं सेवमानस्य मे मानसे केचन प्रश्ना समुदिता.। तान् श्रीमतां पद्भ्ये विचारार्थमुपन्यस्यामि।[1]

## अर्वाचीनसंस्कृतसाहित्यसमुन्मेषः

अधुना विपश्चिदग्रेसरा यथापूर्वं संस्कृत-लेखनाय रुचिपरायणा इति प्रहर्षस्य विषयः। अथ च विश्वविद्यालयीयाः प्राध्यापकाः संस्कृत-विद्याया साहित्यस्य च विविधशाखा अधिकृत्य बहु कवयन्ति। तैः संस्कृतभाषया भूयांसि महाकाव्य-लघुकाव्य-कथाख्यायिकादीनि विरचि-तानि यथापूर्वं प्रतिवर्षं प्रकाशितानि च। तेषु श्रीजीवन्यायतीर्थस्य काव्यानि रूपकाणि च विशिष्टतां भजन्ते। संस्कृतप्रतिभायाः संपादकः श्रीमान् वी० राघवन्-महाभागो न केवलं पाण्डित्यप्रकर्षेण ग्रन्थरचनया वा, अपितु विविध-संस्कृतकाव्यरूपकादिरचनयापि ख्यातिं गतः। प्राच्यवाणीप्रतिष्ठापकेन श्रीयतीन्द्रविमलचतुर्धुरीणेन तत्पत्न्या च रमाचतुर्धुरीणया संस्कृतेन नाना श्रेष्ठनाटकानि लिखितानि। तथैव पुण्यपत्तनस्थपलसुले-महाभागो महता समुद्योगेन संस्कृतरचनासु प्रवृत्तः। नागपुरविश्वविद्यालयस्य संस्कृतविभागाध्यक्षपदमलंकुर्वता श्रीमता श्रीधरभास्करवर्णेकरेण शिवराज्योदयमहाकाव्यं विवेकानन्द-चरितनाटक-मितराणि च काव्यान्युपस्थापितानि। वर्धमानविश्वविद्यालयस्य संस्कृत-विभागाध्यक्षः श्रीसिद्धेश्वरचट्टोपाध्यायः लोकरञ्जकानि रूपकाणि विरचित-वान्। पुण्यपत्तनस्य श्रीमाइनकरः स्मृतितरङ्गं नाम ललितकाव्यं सद्य

---

१. प्राच्यविद्यापरिषदः २९ तमेऽधिवेशने संस्कृत-साहित्य-सभाध्यक्षस्य प्रो० रामजी उपाध्यायस्याभिभाषणस्य अनुवादः।

उपहृतवान् । तथैव देहलीस्थ-श्रीमद्-रसिकविहारिजोशिना मोहभङ्ग-करुणाकटाक्षलहरीप्रभृतिकाव्यानि विरचितानि । तत्रस्थेनैव श्रीसत्यव्रत-शास्त्रिणापि बोधिसत्त्वचरितगुरुगोविन्दचरितेन्दिराचरितानि त्रीणि महा-काव्यानि लिखितानि । भाग्यनगरस्य डा० रामचन्द्रः, डा० बी० आर० शास्त्री च बहूनि नाटकानि विरचितवन्तौ। वाराणसीस्थहिन्दूविश्वविद्यालये प्राच्यविद्यासंकायस्य साहित्यविभागाध्यक्षः श्री रेवाप्रसादद्विवेदः न केवलमाचार्यत्वेन, अपितु सीताचरितमहाकाव्य-यूथिकारूपकादिरचन-यापि गौरवारूढः। बंगलौरस्य डा० नागराजन्, के० टी० पाण्डुरंगी च बहूनि काव्यानि विरचितवन्तौ । सागर विश्वविद्यालयस्य तरुणेन विपश्चिता राधावल्लभत्रिपाठिना स्फुटकाव्यानि प्रेमपीयूषनाटकम् आख्यायिका चैका संस्कृतेन रचितानि। तत्रैव श्रीमती वनमाला भवालकर गीतनाट्यानि विरचितवती । न केवलं विश्वविद्यालयीयाः प्राध्यापका अपितु इतरक्षेत्रेषु व्यापृता विद्वांसोऽपि संस्कृत-रचना-विशारदाः सन्ति । तेषु श्रीरामवेलणकरः वीरेन्द्रकुमारभट्टाचार्यः लीला-रावश्चोल्लेखनीयाः सन्ति ।

एतेषां लेखकानां संस्कृतरचना गुणवत्तया प्रकृष्टाः सन्तु नाम। किन्तु तासां यथोचिता परिज्ञप्तिर्नास्तीति मानसं दुनोति । अर्वाचीन-संस्कृतरचनानामुपेक्षा हि अनवधान-विजृम्भिता विद्यते । तथाहि १९६२ तमे ई० वर्षे श्रीरामवेलणकरः स्वरचितं कालिदास-चरितं नाम नाटकं भारतराष्ट्रपतये राधाकृष्णमहाभागाय उपनिन्ये । तदानीं स तेनेत्थमनुशंसितः—शोभनमेतद् यद् अधुनापि जना मौलिक-संस्कृत-रचनायां प्रवृत्ताः सन्तीति । १९६६ वर्षे विश्वेश्वरविरचितचाणक्यविजय-मधिकृत्य तेनैवालेखि—इदानीमपि संस्कृतेन रचना क्रियते इति श्लाघ्यमेव ! वेलणकरस्य कालिदासचरितविषये दारुवङ्ग-संस्कृत-विश्ववि-द्यालयस्योपकुलपतिना महामहोपाध्येन उमेशमिश्रेण लिखितम्—

'अस्मिन् युगे भवद्भिरीदृशीं रचनां सम्पाद्य संस्कृतसाहित्यस्य सेवा कृतेति महान् मे प्रहर्षः ।'

प्राच्यविद्याया अनुत्तमपण्डितानामिमे उद्गारा सुस्पष्टं प्रमाणयन्ति यत् विंशशतके विरचितेष्वपि सहस्रशः काव्यादिग्रन्थेषु, संस्कृतानुजी-

विभिरपि तेषां रचना न दृष्टिपथं नीताः। जबलपुर-विश्वविद्यालयस्थ-श्रीमद्रहसविहारिद्विवेदेन तस्यैव दशकस्य संस्कृतमहाकाव्यानि आश्रित्य शोधप्रबन्धः ग्रथितः, यस्य विषये राधाकृष्णन्-उमेशमिश्रमहाभागाभ्यामिमे उद्गारा प्रकटिताः। तस्मिन् शोधप्रबन्धे लेखकेन १९६१–७० वर्षेषु विरचितानि त्रिशन्महाकाव्यानि परिशीलितानि।

विशालेऽस्मिन् भारतदेशे सम्प्रति प्रतिवर्षं रच्यमानानि प्रकाश्यमानानि च सहस्रसंख्यकानि संस्कृतकाव्यान्यपि विदुषां दृष्टिपथ न प्राप्नुवन्तीति उपर्युक्तविवेचनेन सिद्धमेव। एवमेव विगतशतकेषु असंख्यकाव्यानि संस्कृतेन रचितानि अद्यावधि अज्ञातानि एव। तेषु अनेकानि संग्रहागारेषु निक्षिप्तानि सन्ति। यदि तेषु सर्वाणि अथवा कानिचिदपि प्रकाश्यतामनेष्यन्त, तर्हि संस्कृतस्य भारतीयजनतायामनन्यसामान्यः प्रभावः सर्वेषु कालेषु अभविष्यदिति सुस्पष्टं भवेत्। तेषां प्रकाशनाय शासनेन मुक्तहस्तमनुदानं वितरणीयम्। तेषां प्रकाशनस्य वितरणस्य च कार्यभारः प्रबुद्धजनानां विद्यते। यदि प्रकाशितेषु तेषां विक्रयो न प्रवर्तेत, तर्हि प्रकाशनसमुद्योगो वृथा स्यात्। अत एव अधुनातनग्रन्थकाराणां सस्कृतरचनाभ्यो यथा शिक्षितजनानां रुचिर्वर्धेत, तथा सर्वभावेन प्रयतनीयम्।

विगतशतकेषु विरचिता अप्रकाशिताः संस्कृतग्रन्था गवेषणीयाः प्रकाश्याश्च इति अस्मदभ्यर्थनाया विद्यन्ते बहवो हेतवः। काव्योत्कर्षदृशा कालिदास-भवभूति-प्रभृति-पुरातन-कविवर्याणां कृतीनां तुलनयेमे ग्रन्थाः क्वचित् हीनाः स्युः, तथापि तेषां प्रकाशनेन बहवोऽज्ञाताः सुकवयो ग्रन्थकाराश्च संस्कृतसाहित्येतिहासे पदं न्यस्यन्ति, स्वभाषावैशिष्ट्येन भावप्रवणतया कल्पनायाश्चमत्कारेण च रसिकानां रञ्जने प्रभविष्यन्तीति निश्चप्रचम्। इतरविषयाणां पण्डितेभ्योऽपि तेषामुपादेयता साधयितुं शक्यते। तथाहि—इतिहासविदां कृते प्रचुरज्ञानसामग्री तेषु समकालिक-साहित्येषु लभ्या। तत्कालिक-राजनीतिक-सामाजिक-दशा तेभ्यः ज्ञास्यते। मध्यकालिकसाम्प्रतिकेतिहासज्ञानां कृते तेषां किमपि मूल्यं विद्यते। एवं स्थिते इतिहास-स्रोत एव नैतदुपेक्षणीयम्। मध्यकालिक-साम्प्रतिक-संस्कृतसाहित्यस्य विस्तृतेतिहास-

प्रणयनं नितरामपेक्ष्यते। अस्यां दिशि अस्माभिः प्रयासो विहितः। संस्कृतनाटकेतिहासमधिकृत्यास्माभिर्द्विसहस्रपृष्ठात्मको ग्रन्थश्चतुर्षु भागेषु विरचितः। तत्र प्रथमशतकादारभ्य आविंशशतकं विरचितानि रूपकाणि समालोचितानि। षोडशशतकादाविंशशतकं रचितानि प्रायशः ६०० रूपकाणि तत्र निर्दिष्टानि। ग्रन्थेनानेन अर्वाचीनकाले संस्कृतनाट्यस्य समृद्धिः परिचीयते। एवमेव दर्शन-व्याकरण-ज्योतिषायुर्वेद-कला-विषयक-ग्रन्थानामपि इतिहासाः समुपन्यसनीयाः। तेन अस्मिन् काले विविध-विधासु विरचितस्य संस्कृतसाहित्यस्य वैविध्यं वैपुल्यं च सुविदितं स्यात्। एतादृश-विपुलकार्यसम्पादनाय परिषदियं सुसमर्था। भारतीय-विद्या-भवनेन भारतीयेतिहास-संस्कृति-विषये यादृशीं पद्धतिमाश्रित्य ग्रन्था निर्माय प्रकाशं नीतास्तामेव पद्धतिमाश्रित्य प्राच्यविद्यापरिषदिय-मद्यावधि-संस्कृतसाहित्येतिहास-प्रणयने प्रवृत्ता भवेत्।

## शास्त्रीयमभिनव-चिन्तनम्

आधुनिक-संस्कृत-साहित्य-प्रकाशनं तद्विषयकेतिहासनिर्माणं सुतरामपेक्ष्यते इति साधितमस्माभिः। किन्तु पण्डितानां कृतेऽन्यास्वपि दिक्षु कार्यमवशिष्यते। विदुषामनुसन्धातॄणां च कृते विपुला सामग्री गवेषणाय मूल्यांकनाय च संस्कृते निगूढा। संस्कृत-काव्यशास्त्राचार्यैः सिद्धान्ता ये स्थापितास्तेषां परप्रत्ययनेयबुद्ध्या कण्ठाग्रीकरणं पिष्टपेषणमेव नालम्, अपितु नूतनचिन्तनालोके ते परीक्षणीयाः। तथाहि—पुरातनैरालंकारिकैरलंकार-गुण-रीति-वक्रोक्ति-ध्वनि-प्रभृतिप्रस्थानानां प्रपञ्चे अति-विस्तारो विहितः। एतेषां काव्योपस्करभूतानां सम्बन्धः प्रायशः शैली-विज्ञानेन वरीवर्ति। किन्तु काव्योद्देश्यविचारे न तादृशं विवेचनमाचार्यैः कृतम्। महत् किमप्युत्तरदायित्वं साहित्यस्य विद्यते समाजं प्रति। तत् तु रसिकमनसामुदात्तीकरणायालं स्यात्। तेषामग्र उत्कृष्टादर्शानामुप-स्थापनं काव्येन विधेयं, न पुनस्तेषामनुत्कृष्टभावानां वासनानां वाभि-व्यञ्जनं समीचीनम्। साहित्यं चित्तरञ्जनाय शिक्षायै च युगपत्प्रभवेदिति पाश्चात्यकाव्यशास्त्रे प्राक्खीष्टीयैः होरेस-प्रभृतिभिरतिपुरातनकालात् सिद्धान्तितम्। तदेव नव्यशास्त्रीयसमालोचकैरपि स्वीकरणीयम्। संस्कृत-काव्यशास्त्रे काव्यसमुद्देशविषये चिन्ता न पर्याप्तं प्रवर्तते। तत्र दुर्वा-

सनाप्रचयचित्रणव्यासंगमात्रनिरतानां कवीनां कृते अंकुशो न विहितः। एतद्व्यासंगस्य दुष्प्रभावः सामाजिकानां चित्ते भवेदित्याचार्यैर्विचारणीयमासीत। संस्कृत-काव्येषूपलभ्यमानान्युद्दामश्रृंगारचित्राणि व्यावहारिकजगति कामं सत्यानि स्युः, तथाप्यादर्श-सौन्दर्योभयपरायणे काव्ये तेषां निवेशो न युज्यते। काव्यशास्त्रे कविकृतेऽस्मिन्विषये मार्गनिर्देशनाभावात् संस्कृतेऽत्यन्तमश्लीलानि भाणप्रहसनादीनि रचितानि।

स्वयुगस्य श्रेष्ठतमा विद्वांस एतादृशाश्लीलभाणप्रहसनादीन्यरचयन्निति चकितचकितमस्मच्चित्तं भवति। केवलं भाण-प्रहसन-मात्रेष्वेव नैषा स्थितिः। कुमारसम्भव-नैषध-सदृशोत्कृष्टमहाकाव्येष्वप्यस्या विजृम्भितं वर्तत एव। पुरातनप्रबन्धेष्वेव इयं प्रवृत्तिर्नावसीदति, आधुनिकसंस्कृतकवयस्तत्प्रभावेण दूषिताः सन्ति। श्रृङ्गारातिरेकः संस्कृतकाव्येषु मा विलसेदिति तत्परिष्काराय सम्प्रति नियमनीयम्। प्राचीन-साम-हाद्यालंकारिक-रचित-सन्दर्भेषु परिष्कारः संशोधनं वा न सम्भवेत्; किन्तु वर्त्तमानपण्डितैर्ये ग्रन्था एतत्प्रकरणविषयका विरच्यन्ते, तेषु काव्यानुशासनाय चिन्तनं निदर्शनं च प्रस्तोतव्यम्। सामाजिकानामुदात्तीकरणाय प्रभवेदित्येतादृश साहित्यमस्माकं देशे प्राचीनकालतः विद्यते एव। कस्मिन् देशे रामायण-महाभारत-सदृशानि समुज्ज्वल-भास्वर-काव्यरत्नानि भान्ति, येषु न केवल भव्यानामुदात्तानां नैतिकमानदण्डाः स्थापिताः, अपितु आसहस्रेभ्योऽपि संवत्सरेभ्यो येषां काव्योत्कर्षो न क्षीयते। अत एव वाल्मीकिव्यास-प्रभृतय आधुनिकरचनाकारैरुपास्याः, तेषां महत्तमा आदर्शा ऊरीकरणीयाः, कवित्वशक्तिरपि तेषामनुशीलनाद् वर्धनीया च।

## शास्त्रीयसिद्धान्तानां परिष्कारः

आभरतात् अद्यावधि ये साहित्यसिद्धान्ताः काव्यमार्गे प्रचलितास्तेषामपि पुनर्मूल्याङ्कनस्य महती आवश्यकता सम्प्रति विद्यते। संस्कृते अतिपुरातनकालादद्यावधि साहित्यस्य विविधविधासु असंख्या रचनाः प्रस्तुताः प्रस्तूयन्ते चेदानीमपि सहस्रशः, तथापि काव्यसिद्धान्तास्तु अनेकशतकेभ्योऽवरुद्धा एव तिष्ठन्ति। काव्यशास्त्रं साहित्यस्य विकासेन विकासं न प्राप। परवर्तिपण्डितैः पुरातनाचार्याणां सिद्धान्ता

एवानूदिता, नवीनानां विचारपद्धतीनामाविष्कारो न विहितः न वा प्राचीनसिद्धान्तानां तुलनात्मकं मूल्यांकनं कृतम्। नाट्यशास्त्रस्य दृष्टान्तोऽस्मत्पुरतो वर्तते। भरतादिभिः प्रख्यातोत्पाद्यभेदेन द्विविधमितिवृत्तं प्रतिपादितमासीत्। दशरूपककारादिभिस्तत्र मिश्रनामा तृतीयोऽपि भेदो निवेशितः। अथ ऊरीकृते मिश्र इतिवृत्तेऽभिज्ञानशाकुन्तलीया कथा एतस्यामेव कोटौ गणनीया भवति, तत्र प्रख्यातेमहाभारतवृत्ते कविना दुर्वाससः शापांगुलीयकविनाशादिषष्ठसप्तमांककथांशानां संयोजनात्। तथैव प्रतिमाकुन्दमाला-वेणीसंहारोत्तररामचरितमहावीरचरितप्रभृतीनां नाटकानामपि वृत्तं न प्रख्यातमपितु मिश्रमेवेति स्वीकार्यं स्यात्। एवं स्थिते तु प्रख्यातेतिवृत्तस्य नाटके क्वचिदवकाश एव न स्यात्। वस्तुतो मिश्रभेदस्य संयोजनं नाट्येतिवृत्तभेदेषु नापेक्ष्यते। तथापि आधनञ्जयादाविश्वनाथ सर्वेऽपि नाट्यशास्त्राचार्या भेदमिममूरीकृतवन्तः।

शास्त्रीय-सिद्धान्त-व्यवहारयोरन्तरस्य नास्ति अयमपवादरूपो दृष्टान्तः। अंकार्थोपक्षेपकयोर्लक्षणेऽपि शास्त्रीयग्रन्थेषु वैषम्यं परिलक्ष्यते। अंके दृश्यम्, अर्थोपक्षेपके च सूच्यमेव वस्तु स्यादिति तत्रसिद्धान्तितम। किन्तु कस्मिंश्चिदपि रूपके अंके एकांततो दृश्यम् अर्थोपक्षेपकेषु केवलं सूच्यं वस्तु नैव दृश्यते। तथाहि—वेणीसंहारनाटकस्य चतुर्थेऽङ्के सूच्यमेव वस्तु केवलं विलसति। तत्र सुन्दरकेण दुर्योधनाय अर्जुनवृषसेनयोर्युद्धादिकमेव निवेदितम्। मुद्राराक्षसनाटकस्यापि सर्वेष्वंकेष्वेतादृशसूच्यांशानां बाहुल्यं विद्यते। एतत्सर्वमस्माभिः सागरिकाया १३. २, १५. ३—अंकयोः प्रकाशितेषु 'भरतातिक्रमः' 'अर्थप्रकृतिविमर्शः' इति लेखयोर्विस्तरशः प्रतिपादितम्। सागरिका ११. १-अंके प्रकाशितः 'रूपके दृश्यसूच्यानुसन्धानमिति लेखोऽपि तदेव स्पष्टयति।

गर्भाङ्कविषये लक्ष्य-लक्षणयोर्वैसादृश्यं ध्यातव्यम्। विश्वनाथेन अंके विद्यमानोऽक इत्यसौ लक्षितः। किन्त्वसौ रूपकान्तर्वर्ति रूपकं प्रतिभाति। उत्तररामचरितस्य सप्तमांकस्थो गर्भाङ्कोऽत्र उदाहर्तुं शक्यते। एतत्कृते नाटिका प्रेक्षणकादीनि नामान्यपि अस्य रूपकत्वं प्रथयन्ति। अत एव गर्भे रूपक यस्य तादृशोऽङ्को गर्भाङ्क इति वक्तुं युज्यत एव।

सागरिकाया अंके प्रकाशिते लेखे पाश्चात्त्यानाम् एकोक्तिः (Soliloquy) स्वगतकथनात्सर्वथा विभिद्यत इति मया स्पष्टं निदर्शितम्। संस्कृतनाट्यशास्त्रे एकोक्तिर्नैव स्वीकृता। तथैव धनंजय-मतेन प्रकरणस्येतिवृत्तमुत्पाद्यमेव स्यात्। किन्तु सारिपुत्रप्रकरण-देवीचन्द्रगुप्तयोर्नियमोऽयं न घटते। 'एक एव भवेदङ्गी वीरः शृङ्गार एव वे' ति नाट्यशास्त्रीय-नियमोऽपि उत्तरचरितवेणीसंहारयोर्विरुध्यते। तथाहि उत्तरचरिते तावत् करुणोऽङ्गी, वेणीसंहारेऽपि च रौद्ररस एवाङ्गित्वमर्हतीति अस्माभिः 'स्वप्नवासवदत्त-वेणीसंहारयोरङ्गिरसविमर्शो' इति सागरिकाया अङ्के प्रकाशिते लेखे प्रतिपादितमेव प्रमाणपूर्वकम्।

अत एव आलंकारिकैर्नाट्यशास्त्राचार्यैर्वा निर्दिष्टा नियमा गतानुगतिकन्यायेन नोरीकरणीया न चानुसरणीया इति विमर्शो जायते। नाट्यशास्त्रस्य रूपकाणां च कोऽपि विशेषः विजृम्भते। आचार्यैः स्वनियमानामुदाहरणस्वरूपं तु रूपकेभ्यो बहवः अंशा उद्धृताः किन्तु साकल्येन किमपि रूपकं तेषां लक्षणानि कियदनुसरतीति न तैः निरूपितम्। प्रातिभज्योतिषा भ्राजमानैर्नाट्यकारैः प्रायश एव नूतनप्रकरणानां प्रकटीकरणाय लक्षणान्युल्लंघितानि। तदनुसारतः लक्षणानि परिष्करणीयानि। ये केचन पण्डितप्रवरा नूतननाट्यशास्त्र-रचनायां नाट्यानुशीलने वा संलग्नास्तैः संस्कृतनाट्यस्य गवेषणार्ह-पक्षः सम्यग्वधेयः। तेषु छायानाटकं सविशेषं विचारार्हं विद्यते।

## छायानाटकम्

छायानाटकमाविगतशतकान्नितरां विवादास्पदं विषय आस्ते। छायानाटकनिगूढरहस्योद्घाटनार्थं मया प्रकाशिताः केचन लेखाः। तथापि कैश्चिदविश्रान्तशेमुषीजुषैरेतत्सम्बन्धिविवादोऽद्युनापि प्रचाल्यते। तद्यथा—बटोदरविश्वविद्यालयस्य प्राच्यविद्याप्रतिष्ठानेन प्रकाश्यमानायां पत्रिकायां १६७७ वर्षस्य मार्च-मासांके पिशल-महाभागस्य 'प्राचीनभारते छायानाटक' मिति लेखः डॉ० एस० एन० घोपालमहाभागेन जर्मन-भाषाया अनूद्य प्रकाशितः। छायानाटकविषये कालकवलित-मिथ्या-सिद्धान्तेष्वपि सम्प्रत्यपि सारं घोपालमहोदयः पश्यतीत्यनेन ज्ञायते।

सुभटप्रणीत दूताङ्गदं छायानाटकस्यानुत्तममुदाहरणम् । किन्त्वद्यापि केचन तस्य छायानाटकत्वं संशेरते । अस्माभिः चारुदेवशास्त्र्यभिनन्दन-ग्रन्थस्य प्रथमभागे प्रकाशिते 'द मीनिंग आफ छायानाटक' इति लेखे विषयमिममाश्रित्य एते निष्कर्षाः प्रस्तुताः—

( १ ) छद्मना कोऽपि नटः अन्यमेवानुकार्यमभिनयति । यथा—दूताङ्गदे सीतायाः स्थाने पुरस्क्रियते मायासीता रावणेन ।

( २ ) मायाद्वारेण प्रमुखपात्राणां प्रतिकृतयो रंगपीठे स्थापिताः । सामाजिकास्ताः प्रतिकृतीर्मूलपात्रेभ्योऽभिन्ना इत्यमन्यन्त । एतादृशी योजना हनुमन्नाटके उल्लाघराघवे दूताङ्गदे च वर्तते ।

( ३ ) रङ्गपीठे प्रमुखानुकार्यस्य प्रतिरूपं पुत्रकद्वारेण स्थापितम् । तादृशी योजना धर्माभ्युदये वर्तते ।

( ४ ) प्रमुखपात्रस्याभिनयात्मकं प्रतिरूपं चित्रद्वारेण पुरस्कृतम् । उल्लाघराघवस्योल्लेखेनैतत्प्रतीयते ।

( ५ ) केचन नटाश्छद्मना पश्वादिरूपेण रङ्गपीठे प्रादुरभवन् , यथा—शामामृतच्छायानाटके ।

सागरिकाया १०. ४-अङ्के प्रकाशिते छायानाटकविषयकलेखे अयमस्मदीयो निष्कर्षः—'कथावस्तुनि प्रतिरूपस्य ( छायायाः ) आयोगाच्छायानाटकत्वं सार्थकमभवत् न तु छायायाः ( Shadow ) अभिनयस्य तत्र व्यपेक्षा ।' एतेन कीथ-प्रभृतीनां छायानाटक-विकल्पाः परास्ता एव ।

छाया-संविधानाच्छायानाटकमिति नाम सार्थकं भवति । यथा—प्रतिमा-नाटकस्य प्रतिमा-संविधानात् । सूर्यस्य मायारूपिणी भार्या छाया पुरा वृत्तेषु निगदिता । नाटकेऽपि मायया-कृतेन संविधानेन छाया-तत्त्वं सिद्ध्यति । माया-पात्राणि संस्कृत-नाटकेषु अतिप्राचीनकालादेव व्यवहृतानि । आधुनिकनाटकेषु महामहोपाध्यायश्रीशंकरलालस्य सावित्रीचरित-ध्रुवाभ्युदय-गोरक्षाभ्युदय-श्रीकृष्णचन्द्राभ्युदयामरमार्कण्डेयानि छायानाटकानि प्रामुख्यमर्हन्ति । विगतशतकस्यान्तिमचरणे अस्मिन् शतकस्य प्रथमचरणे च एतेषां रूपकाणां रचना श्रीशंकरलालेन विहिता । सावित्रीचरितविषये कीथ-महाशयो लिखति—

'The Sāvitricarita of Shankaralal, son of Maheśvara.

calls itself a Chāyānāṭaka, but the work written in 1882, is an ordinary drama and Lüders is doubtless right in recognising that these are not shadow dramas at all'.

कीथ-महाशयस्यायमुपन्यासः सर्वथा निराधारः। लेखकः स्वकृतिं छायानाटकमिति कथयति, सोऽयं समीक्षकश्च तस्य छायानाटकत्वं विकल्पयति इत्याश्चर्यावहमेव। अधिकतरं विस्मयकरमेतद् यच्छायानाटक-विवादः शंकरलालस्य जीवनकाले प्राचलत्, किन्त्वसौ स्वरूपकाणि कथ छायानाटकत्वेन मनुते इति न केनापि पृष्टः।

स्वनाट्यानुशीलनकाले यदा तदा मया इमा विसंगतयः परामृष्टाः भवत्समक्षमुपस्थापिताश्च। इतरशास्त्रानुशीलनरतानां श्रीमतां समक्षमपि एतादृशप्रश्ना असंगतयो वा भविष्यन्ति नाम। अत एव अस्माकमधीतं विवेकसम्भृतं तेजस्वि च भवेदिति मेऽभ्यर्थना। यथा नाट्ये तथैवेतरक्षेत्रेष्वपि समीक्षा प्रवर्तनीया।

अथ संस्कृतभाषाया अस्मिन् युगे उपादेयतां तदुत्थानं चाधिकृत्य कांश्चन विचारान् श्रीमतां समक्षमुपस्थापयामि।

## संस्कृत-महिमा

केवलं समकालिकजनानामपेक्षापूर्तये लिखितस्य साहित्यस्यायतिर्न भवति। संस्कृतसाहित्ये तु नैतद् दृश्यते। आवेदकालादासहस्राब्दम् इदं जनेषु स्फुर्तिं प्राणांश्च संचारयदास्ते। प्रतिशब्दं प्रतिविचारं चात्र संस्कृतिर्निहिता। अस्य विशालोऽनुपमश्च निधिरस्मन्महत्तमं रिक्थम्। भारतीयसंस्कृतेः सर्वदा पुष्पफलाढ्यो महावृक्षः संस्कृतेनैव जीवति, संस्कृतमेवास्य मूलम्। संस्कृतेनैवायं शाश्वतकालं यावद् धारयिष्यति। अस्य महावृक्षस्य मूलं स्कन्धः शाखाः वल्कलः फलानि पुष्पाणि च सर्वाण्येवास्मत्कृते अपेक्ष्यन्ते। एतदपेक्षापूर्तिस्तु संस्कृतनिष्ठतयैव संभवति। भारतीयेतिहासस्य सर्वेष्वपि कालेषु भारतीयभाषाणां तत्साहित्यस्य च संस्कृतोपजीव्यता वर्तते। अत एवास्मिन् युगेऽपि संस्कृतस्योपादेयता सिद्धैव।

कोऽपि चक्रवर्ती अधिकाधिकं देशमधिकर्तुं विजययात्रामारभते।

कालजयोऽपि तादृशं महत्त्वपूर्णम्। संस्कृतज्ञ एव पुरातनतमं कालं संस्कृतभाषाद्वारेण विज्ञाय स्वप्रातिभयात्रामारभते। स एव कालजयी भवति।

संस्कृते विद्यमानाः सर्वेऽप्युपादेया ग्रन्था आधुनिकभारतीयभाषासु अनूद्य प्रकाश्या इति केचित् कथयन्ति। तेन च वेदादीनां मूलग्रन्थानामध्ययनस्य न स्यादावश्यकता। तेषां कृते इदमेवास्मदुत्तरम्—मूलवेदादिग्रन्थस्य तदनुवादस्य एतावानेव विशेषो यावान् ताजमहल-संज्ञकभवनस्य औरंगाबादनगरे तदनुकृतेश्च।

संस्कृतस्य राष्ट्रियैक्ये महदवदानं नातिविस्तरेण निरूप्यते, यतो हि वयं संस्कृतस्य विश्वसंस्कृतौ अवदानमनुशंसामहे। तद्यथा—

वसुधैव कुटुम्बकम्।

जनं बिभ्रती बहुधा विवाचसं नाना धर्माणं पृथिवी यथौकसम्।

इत्येतादृशी भावना संस्कृतेनैव इदम्प्रथमतया प्रकटिता।

## संस्कृतस्यावनतिः

साम्प्रतिके काले संस्कृताध्ययनाध्यापनयोर्ह्रासं वीक्ष्य दूयतेऽस्मन्मानसम्। संस्कृतोन्नतिविषये लम्बलम्बाः कथाः श्रूयन्ते, तत्प्रचारार्थं महान्ति अनुदानान्यपि केन्द्रशासनेन विज्ञाप्यन्ते। नूतनसंस्कृतविद्यापीठानां चर्चाः क्रियन्ते, संस्कृतसाहित्यस्यानुपममहात्म्यं राष्ट्रैक्यसाधने तदुपयोगितां चाधिकृत्य बहुशो भाषणानि प्रकाश्यन्ते। किन्तु संस्कृतच्छात्राणां संख्या हीयते इति सुविदितं परं सत्यमेव। संस्कृतवैदुषी अपि क्षीयमाणा वर्तते। त्रिभाषासूत्रेण संस्कृतं प्रति कुठारः प्रयुक्तः, यतो हि तद्व्यवस्थायां छात्रेण क्वचिद् वैकल्पिकतयैव संस्कृतं पठ्यते, परिणामतः विश्वविद्यालये स्वल्पा एव छात्राः संस्कृतपाठ्यक्रमं धारयन्ति। कलाविषयेषु व्यवसायदृष्ट्या संस्कृतस्य नास्ति तन्महत्त्व यद् अर्थशास्त्र-राजनीतिशास्त्र-प्रभृतिविषयाणाम्। छात्रेषु व्युत्पन्नतमाः यांत्रिकीविज्ञानायुर्वेदादि-विषयान् गृह्णन्ति; कलाविषयेषु गुणवत्तया अपकृष्टा एव छात्रा आयान्ति, तेष्वपि गुणतो दरिद्रतमाः संस्कृते।

यदि संस्कृतस्य समुन्नतिरस्माभिरिष्यते, तर्हि व्यवसायदृष्ट्याऽस्य उपादेयता संवर्धनीया। स्वातन्त्र्यपूर्वकाले संस्कृतस्य या दशा एत-

दृष्ट्या बभूव, सैवेदानीमपि विद्यते। वैदेशिकाः शासनकर्तारः संस्कृतविद्याध्ययनेन भारतीया आत्मानं आत्मनः संस्कृतिं च विज्ञाय स्वाभिमानघनाः स्युरिति न जातु कदाचिद् वाञ्छन्ति स्म। आस्वातन्त्र्याप्ति अस्माकं शिक्षापद्धतिः अन्ताराष्ट्रियपद्धतेर्न विभिन्ना। प्रायशो नेतारः समामनन्ति यदस्माकं शिक्षापद्धतिः राष्ट्रियविकासदृष्ट्या अपूर्णा विद्यते, किन्तु तत्र पूर्णतामाधातुं न ते प्रयतन्ते। शिक्षायाः प्रयोजनं मानसिक-नैतिकाध्यात्मिकलक्ष्यपूर्तये छात्राणां राष्ट्रस्य च विकासो भवितुमर्हतीत्यहं मन्ये। एतत्त्रितयमपि वर्तमानशिक्षापद्धतौ नास्ति। अत एवेयमसन्तोषप्रदा।

यदि वयं स्वस्नातकान् चारित्र्योत्कर्षयुक्तान् उच्चैरादर्शैः परिचालितांश्च द्रष्टुकामास्तर्हि आप्राथमिकशिक्षां आविश्वविद्यालयशिक्षां संस्कृताध्ययनं सर्वत्रानिवार्यं विधेयम्। यदि वैविध्यपरायणस्य राष्ट्रस्य एकतासंपादनमस्मदीप्सितं तर्हि संस्कृत-संस्कृत्योरेव प्रचारेणैव तत् संभाव्यते। अतिप्राचीनकालादमरभारतीयं भारतीयान् एकतासूत्रेण बध्नन्ती आस्ते, सम्प्रत्यपि इयमेवात्र सर्वथा प्रभवति।

अत्र पारम्परिकसंस्कृतशिक्षापीठानां संस्कृतविश्वविद्यालय-विद्यापीठ-पाठशालादीनामवगतिमपि पराम ष्टुमिच्छामि। नामानुरूपं तेषां विकासकार्यं च न दृश्यते। मध्यप्रदेशराज्ये संस्कृतमहाविद्यालया अनुदानदृष्ट्या प्राथमिकशाला इव मन्यन्ते, यद्यपि तेषु शास्त्र्याचार्यकक्षाः पाठ्यन्त इति तेषां दुर्भाग्यविलसितम्।

## सरलीकुरुत संस्कृतम्

सरलशिक्षणपद्धतेरपि संस्कृताध्यापनायाविष्कारो नितरामिदानीमपेक्ष्यते। संस्कृतद्वारा आप्राथमिककक्षातः शिक्षणीयम्। आङ्ग्लभाषाया वर्णमालामजानन्नपि शिशुः आङ्ग्लपद्धतिविद्यालये गच्छन् सत्वरमाङ्ग्लभाषाभाषणे पटुर्भवति। तत्रासौ आङ्ग्लीमेव सर्वदा शृणोति। यदि विद्यापीठेषु विद्यालयेषु च संस्कृतमेव केवलं समाम्नायते तर्हि छात्राः संस्कृते प्रवीणाः स्युः। भाषाया अध्ययनस्येयमेव सरला पद्धतिः। संस्कृतानुरागिण इमां पद्धतिं व्यवहरन्त्वित्यस्माकं हार्दिकी कामना।

# वैशेषिकनये तमसो विवेचनम्

*डॉ० सत्यनारायणमिश्रः*

बाह्यार्थवादिषु भारतीयदर्शनेषु विद्यत इयं विप्रतिपत्तिर्यत् तमो द्रव्यमस्ति न वा। मीमांसकैस्तमो द्रव्यत्वेन स्वीक्रियते, किन्तु न्यायवैशेषिकमते तमसो द्रव्यत्वं न स्वीक्रियते। वैशेषिकदर्शने नवैव द्रव्याणि भवन्ति। तद्दर्शनप्रणेतृभिर्महर्षिकणादैः कण्ठतो नवैव द्रव्याणि प्रोक्तानि[1]। अनन्तरं तद्भाष्यकारैः टीकाकारैरन्यैश्च नवानां द्रव्याणामेव चर्चा कृता नान्यस्य कस्यचित्। सर्वैः वैशेषिकैः तमसो द्रव्यत्वेन निरसनं कृतम्। अत्रेदं विचारणीयं भवति यत् तमो नाम दशमं द्रव्यं कथं न स्वीक्रियते? तस्य नवसु द्रव्येषु नान्तर्भावात्। यतोहि तत्तु न पृथ्वी, तस्मिन् गन्धाभावात्। जलं तेजो वायुरपि न, तत्र स्पर्शाभावात्। आकाशकालदिङ्मनांस्यपि न, तत्र रूपाभावात्। तमसि रूपसंस्थापरिमाणपृथक्त्वपरत्वापरत्वविभागादयो गुणाः वर्तन्ते।[2]

गुणप्रतीतिमत्त्वादेवेदं द्रव्यं सिद्ध्यति क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम्[3], 'द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम्'[4] इति सूत्रद्वये स्पष्ट तस्य निर्देशात्। टिप्पणीकारैस्त्वत्रानुमानं प्रस्तुतम्—'तत्र शब्दाभिधेयं द्रव्यं गुणवत्त्वात् घटवदिति'[5]। तत्र केचन समादधति तमो न द्रव्यं, सति रूपे तस्य स्पर्शाभावात्। यत्र रूपं तत्र स्पर्श इत्यव्यभिचरितनियमः। अस्ति स्पर्श इति चेत्तर्हि प्रतिघातधर्मकत्वाभावः, यतो हि स्पर्शवतो महतो द्रव्यस्यैष स्वभावो यत्प्रतिघातं कुर्यात्, तदत्र नानुभूयते। नहि कश्चन पुरुषश्चलन्नन्धकारे प्रतिरोधमनुभवति।

---

१. वैशेषिकसूत्रम् १।१।५।

२. न्यायकन्दली पृ० ९:२१।

३. वैशेषिकसूत्रम् १।१।१५।

४. वैशेषिकसूत्रम् १।१।१८।

५. न्यायकन्दली—टिप्पणी पृ० १३।

अपि चान्धकारो महद्द्रव्यं, तर्हि तस्यावयवानां प्रतीतिः स्यात्, महाभूखण्डस्य प्रतीतौ तस्यावयवप्रतीतिसम्भवात्। किन्तु तमसोऽवयवानां प्रतीत्यभावो वर्तते। अतएव तमो न द्रव्यम्।

एतत्सर्वमचारु। यतो हि यथा प्रदीपाग्निः सरद्भ्यः तेजोऽवयवेभ्योऽदृष्टवशादनुद्भूतस्पर्शयुक्तस्यानिबिडप्रभामण्डलरूपस्य प्रकाशद्रव्यस्योत्पत्तिर्भवति। तथापि महतोऽस्य द्रव्यस्यावयवानां प्रतीतिर्न भवति, नापि चलनक्रियाया काचिद् बाधा सञ्जायते। तथैवान्धकारेऽपि द्रव्यता स्यात्[1]। वस्तुतस्तु श्रीधराचार्या द्रव्यस्य सत्तां स्वीकुर्वन्ति, किन्तु न द्रव्यरूपेण[2]। तदन्धकारद्रव्यवादिनं प्रति ये आक्षिपन्ति यद्भासामभावोऽन्धकारोऽथवा आलोकदर्शनाभावमात्रमिति, तदपि नोचितम्। नादौ तमसो नीलाकारेण प्रत्यक्षत्वात्। सत्यभावे तत्र कस्यापि रूपस्य प्रतीतेरसम्भवात्। प्रकाशकाले प्रौढातपेऽपि गगनमण्डले नीलिम्नः प्रतीतिर्भवति। अभावप्रत्ययस्तु प्रतिषेधमुखो भवति। किन्तु तमसः प्रतीतौ नान्यस्य प्रतियोगिनः प्रतीतिः सम्भवति। तस्मान्न भासामभावस्तमः[3] न द्वितीयः, अत्र अन्धकारः तत्र छाया इति प्रतीतिदर्शनात्। यस्मिन्देशे तेजोऽत्यन्ताभावो विद्यते तस्मिन् देशे आरोपितनीलरूपाभिन्नं तम इत्येव छाया।

तदुक्तम्—'यदा तु नियतदेशाधिकरणो भासामभावस्तदा तद्देशसमारोपिते नीलिम्नि छायेत्यवगमः'।[4]

अभावपक्षे तु आलोकाभावे कथं नीलत्वस्य भावधर्मस्याध्यारोपः सम्भाव्यते। उक्तं हि पुराणेषु—

"न च भासामभावस्य तमस्त्वं वृद्धसम्मतम्।
छायायाः कार्ष्ण्यमित्येवं पुराणे भूगुणश्रुतेः॥

---

१. न्यायकन्दली—पृ० २२।

२. 'न वयमन्धकारस्य प्रत्यर्थिनः; किन्तु आरम्भकानुपपत्तेर्नीलिमामात्रप्रतीतेश्च द्रव्यमिदं न भवतीति ब्रूमः'। न्यायकन्दली–पृष्ठ २३।

३. न्यायकन्दली–पृ० २४।

४. न्यायकन्दली पृ० २४—'अत्र हि छायाशब्देनारोपितं सारूप्यमुच्यते' न्यायकन्दली टि० पृ० १३।

दूरासन्नप्रदेशादि-महदल्पचलाचला ।
देहानुवर्तिनी छाया न वस्तुत्वाद्विना भवेत् ॥"

अपि च छायाया भावत्वाभावे तत्र कृष्णसर्पस्य भ्रमो दुरुपपादः स्यात्। छायायां कृष्णसर्पभ्रमस्तु लोकसिद्ध एव। आलोकितनीलरूपं तम इत्यत्र न सूत्रविरोधः भाभावे सति तमस प्रतीतेर्भाभावस्तम इति सूत्रस्य निर्गलितार्थः। 'द्रव्यगुणकर्म्मनिष्पत्तिवैधर्म्याद्भाभावस्तमः' इत्यत्र 'भाऽभावस्तम' इति प्रयोगः 'आयुर्घृतमिव लाक्षणिकः'।

यत्तु आलोकाभाव एव तम इति प्रतिपादयन्नाद् श्रीमदुदयनाचार्यः— 'सोऽपि कथमालोकमन्तरेण प्रतियोगिस्मरणाधिकरणविरहे विधिमुखेन च चाक्षुष इति चेत्। न। यद्ग्रहे हि यदपेक्षं चक्षुषस्तदभावग्रहेऽपि तदपेक्षते'।[2] तन्नोचितम्। अत्र ध्यातव्यमेतत् यदग्रे स्वयमेवोदयनाचार्येण संशोधितम्—'विधिमुखस्तु प्रत्ययोऽसिद्धः। नहि नोऽप्रयोग इत्येव विधिः। प्रलयविनाशावसानादिषु व्यभिचारात्। न अर्थान्तरभावेन' वाक्यार्थे पदप्रयोग इति तु समं समाधानमन्यत्राभिनिवेशात्'[3]। तत्किमिदं नाम विधिमुखप्रत्ययवेद्यत्वमिति समालोचनीयम्।

न्यायकन्दलीकारमते विधिमुखप्रत्ययवेद्यत्वं भावे विद्यते। अभावे तु प्रतिषेधमुखवेद्यत्वं विद्यते।[4] लक्षणावल्यां तूदयनाचार्येण प्रतिपादितम्-

---

१. न्यायकन्दली पृ० २५। २. किरणावली पृ० १८।

३. किरणावली—पृ० १९ द्रष्टव्यम् कणादरहस्येऽपि—न चाभावत्वेऽपि तमसः कथं विधिमुखवेद्यत्वं कथं च बाह्यालोकनिरपेक्षचक्षुर्ग्राह्यत्वं······नञ्पदसमभिहाराभावाद्विधिमुखप्रत्ययवेद्यत्वाभिमानात्। पृ० ४९।

४. "षण्णां सामान्यलक्षणं विधिमुखप्रत्ययविषयत्वम्" न्यायक०—पृ० ४० भावाभावयोर्विशेषो यदेकस्य विधिरूपतया ग्रहणम्, अपरस्य त्वन्यप्रतिषेधमुखेन"। न्यायकन्दली—पृ० ५४६ तोलनीयमत्र—

"It's ( physics's ) subject-matter was the doctrine of being i. e. that which exists independently of us and must be regarded as the eseence of things appear to be."

Introduction to Philosophy Pg. 18

This close proximity to the real world, however, is sometimes stressed so heavily as to amount to remoteness from the

नञर्थविषयत्वरहितप्रत्ययविषयो भावः। नञर्थप्रत्ययविषयोऽभावः।[1] किरणावल्यां तु विधिमुखप्रत्ययविषयत्वमस्तित्वं स्वीक्रियते। तच्च प्रतियोग्यनपेक्षनिरूपणत्वमेवेति।[2] अभावस्तु प्रतियोगिनिरूपणाधीननिरूपणीयः इत्यपि स्वीक्रियते।[3] अत्र विचारणीयं भवति यत् प्रतियोगिनिरूपणाधीन-निरूपणीयोऽभावः। अत एव भावः इति तु प्रतियोग्यनपेक्षनिरूपणीयभवितव्यमेव तदेवास्तित्वं, तच्च विधिमुखप्रत्ययविषयत्वम्। तस्मान्न साक्षादपितु परम्परया विधिमुखप्रत्ययविषयोभावः इति तु आचार्यः स्वीकरोत्येव। तर्हि कथं "विधिमुखस्तु प्रत्ययोऽसिद्ध" इत्युक्तमिति विचारणायामेवं चिन्तयितुं शक्यते यत् विधिमुखप्रत्ययविषयत्वं भावत्वं तु क्रियानिवृत्तं सिद्धवस्तु।[4] किन्त्वत्र सन्दर्भविरोधः, स्वमत-

---

actual facts Thus Indian regards the perception of an object in a certain place as a being a concrete impirical process, but he regards in as equally positive sense the non-perception of a thing in its accustomed place whenever the eye returns disappointed from its fruitless search. In this way Indian logic elaborates its apparently abstruse and highly abstract theory of the impirical reality of non-existence, the so called positive proof negative or non-existence the abhāva."

Indian and Western philosophy pg. 88.

१. लक्षणावली—पृ० २ तथा ३६।

२. अस्तित्वं विधिमुखप्रत्ययविषयत्वम्। प्रतियोग्यनपेक्षनिरूपणत्वमिति किरणावली पृ० २७।

३. अभावस्तु स्वरूपवान् अपि पृथङ् नोद्दिष्टः। प्रतियोगिनिरूपणाधीननिरूपणत्वात्—किरणावली—पृ० ६।

४. अवलोकनीयम्—"This means that being can neither be derived from the possible nor reduced to the necessary, Necessity concerns the connection between ideal propositions but not that of existents."..................."Being is, Being is in itself.

पोषणायान्या व्याख्या परमतप्रत्याख्यानायान्याव्याख्येति न समीचीनम्। यथोक्तम् *पद्मनाभेन* अत्यन्तव्यावृत्तिबुद्धिहेतुत्वं व्यावृत्तिबुद्धेरेव हेतुत्वम्। किरणावल्यां पङ्क्तिरेषा तथा व्याख्याता। सन्दर्भविरोध आचार्यशैलीशरणम्। आचार्या हि क्वचित्प्रमेयान्तरसंचाराय सन्दर्भमभिदधति।[1] यत्तु भारावतारे सुखिनः सवृत्ताः स्म इति, संयोगाभावे विभागाभिमान इत्यादि। एतेन नीलिमाध्यारोपो व्याख्यातः शुक्लभास्वरविरोधित्वसारूप्येण तदारोपोपपत्तेरिति, तत्तु *टिप्पणीकारेण* प्रत्युक्तम्—"सारूप्यग्रहणं *समारोप*निबन्धनम्। नात्र भावाभावयोः सारूप्यमस्ति इति कथमालोकाभावे नीलत्वस्य भावधर्मरूपारोप इत्यर्थः। शुक्लभास्वररूपविरोधित्वं सारूप्य निरूप्य इति चेत्। न। शुक्लभास्वरविरोधित्वे नीलत्वात् रक्तस्यापि आरोपप्रसंगात्। न चारोपे सति निमित्तानुसरणमिति वाच्यम्, आरोपस्येवानुपपद्यमानत्वेनासिद्धत्वादिति।"[2] *पद्मनाभ*स्तु कन्दल्याः पूर्वपक्षं समुपस्थाप्याशेषेणोदयनाचार्यमतं प्रत्युक्त-

---

Being is what it is. There are three characteristics which the preliminary examination of the phenomenon of being allows us to assign to the being of phenomenon."

Some one will object that being in itself cannot furnish negative replies. Did not we ourselves say tnat it was beyong affirmation, as beyond negation ? Furthermore ordinarv experience to itself does not seem to disclose any non-being to us."..................Negation proper is unthinkable. It could appear only on the level of an act of judgment by which I should establish a comparision between the result anticipated and the result anticipated and the result obtained. Thus negation would be simply a quality of judgment and expectation of the questioner would be an expectation of the judgment-response.

Ibid—page 6.

१. सेतुः पृ० ५७।

२. न्यायकन्दली टिप्पणी-पृ० १३-१४।

वान्—"नन्वालोकाभाव आरोपितनीलरूपं तम इति कन्दलीकारमत-मेवास्त्विति चेन्न नीलं तम इति प्रतीतावुभयोरंशयोर्नीलिमरूपविषय-त्वेऽभानांशस्याभावेन तथा भ्रमस्यासम्भवात्। आरोपविषयाविषय-कस्य भ्रमस्य ब्रह्मणापि समर्थयितुमशक्यत्वात्। न च यथा प्रभाऽ-भानेऽपि तद्रूपं भासते तथा प्रकृतिरपीति वाच्यम्; आरोपविषयाभाने तद्वतितत्प्रकारत्वस्य भ्रमत्वस्य वक्तुमशक्यत्वात्। ततः संयुक्तसमवा-यादिसत्त्वे सामग्रीसम्पत्तौ नीलरूपभानस्य सम्भवात्, प्रकृते च विशेष-णादिसामग्र्या विशिष्टज्ञानजनकत्वात्। न च नीलवत्तमोवदिति प्रत्ययार्थः मत्वर्थकल्पनायां प्रमाणाभावात्। यत्त्वालोकाभाव आरोपितनीलरूपस्य तमस्त्वे तमस्त्वं ज्ञानगर्भं चाक्षुषे चेतसि कथं चकास्तेति। तदचारु। प्रौढप्रकाशकयावत्तेजः संसर्गाभावत्वेऽपि प्रकाशप्रवेशे न दोषावैषम्यात्। उपमीतमानशरणानुसरणसिद्धान्तस्यापि सम्भवात्। यदपि तमोनील-योरैक्ये नीलिमा तम इत्यनुभवः *स्यान्न* तु नीलं तम इति, तदपि चिन्ता-बीजमधिरोहति। ननु गुणे शुक्लादौ पुंसि गुणिलिंगास्तु तद्वतीत्यतो नीलशब्दस्य गुणपरत्वे नीलतम इति प्रयोगः स्यादित्येव बीजमिति वाच्यमिति चेन्न। अस्य नीलं रूपमित्यादौ स्फुटं व्यभिचारित्वेन गुणशब्दात् पुंल्लिंगस्य विशेष्यतायां तथा नियामकत्वात्। प्रकृते च तमःशब्दस्य नपुंसकस्य विशेष्यतायां तथा नियामकत्वात्। प्रकृते च तमःशब्दस्य नपुंसकस्य विशेष्यतायां नपुंसकताया एवोचितत्वात्। नन्वेका नीला रूपव्यक्तिरिति गुणे स्त्रीलिंगतापि स्यादिति चेत्। यद्यस्ति प्रामाणिकप्रयोगस्तदा स्यात्। न चैवं नीलो गुणो, नीलं रूप, नीला व्यक्तिर्नीलो घटो नील वासो नीला वनीति प्रयोगाणामभ्युपगमे विशेष्यलिंगतैव शुक्लादिपदानां कथं नोक्तेति चेत्। एष हि पर्यनुयोगो-ऽमरकोषकृतान्न तु तर्ककर्कशानाम्। नीलतमसोरैक्ये नीलं तम इति सहप्रयोगो योग्यः स्यादित्यपि न रमणीयम्, धर्मभेदेन पृथिवीद्रव्यमित्या-दाविव सहद्वयप्रयोगस्योचितत्वात् नीलत्वालोकाभावारोपितनीलत्वयो-र्धर्मभेदस्य प्रामाणिकत्वात्।

वस्तुतस्तु नीलस्याप्याचार्यचरण*निरूक्ता* सहप्रयोगानुपपत्तिरुपपन्ना। तथाहि नीलं तम इत्यस्य हि नीलमालोकाभावारोपितमित्यर्थः। ताव-

न्मात्रेण तमस्त्वेन तमःपदे लक्षणापत्तेः, आलोकाभावे क्रियादेरप्यारोपेण तावन्मात्रस्यातपत्वात्। न च सामान्यविशेषभावेन सह प्रयोगः द्रव्यं पृथिवी-द्रव्यमित्यादेः सहप्रयोगस्यानुचितत्वादस्याप्यनुचितत्वात्। मूढप्रबोधपरतया पिकः कोकिल इत्यादिवत् सहप्रयोगसमाधानं तु न सम्यक्। यत्तु नीलं तम इति भ्रम आलोकाभावभानस्यावश्यकतया स एव तम इति, तन्न नीलभानस्यावश्यकतया तस्यैव तमस्त्वापत्तेः। यदपि नीलं तम इति भ्रमोत्तरं नेदं नीलमिति बाधदर्शनान्नेदं तम इति बाधादर्शनान्न नीलतमसोरैक्यमिति तदपि न; नहि प्रमातुरातुरदारोदरन्यस्तकणादप्रवाहस्येव प्रत्यक्षतोऽत्र बाधः। किन्त्वोपपत्तिकः स च स्वस्वदर्शनानुसारी स्वानुसारी कस्य न सुलभ इति। न चैवमाचार्यविरोधे परमोपजीव्यविरोधः, आचार्यचरणानां मनस्तोषस्य भास्करे वर्द्धमानानुरूद्धव्याख्यानेन कृतत्वात्। तस्मादुक्ताभिरेव युक्तिकिरणीभिः कन्दलीकार्युक्तिकमलिनी निष्कलंकतां प्रापणीयेति।[1]

अत एव 'तस्माद्रूपविशेषोऽयमत्यन्तं तेजोभावे सति सर्वतः सर्वतः समारोपितस्तम' इति मतं व्यवस्थितम्।[2] तत्र नीलरूपं तु न वास्तविकं, किन्तु जलमिवारोपितमित्यर्थः।[3]



१. सेतु-पृष्ठ ४१-४२।

२. न्यायकन्दली-पृष्ठ २४।

३. सर्वदर्शनसंग्रह-दर्शनांकुशा पृष्ठ १७५।

# नृसिंहसांख्यदर्शनम्

*डॉ० राणी रामानन्दशास्त्री*

अहं ब्रह्म परं ज्योतिर्ब्रह्माहं परमं पदम्

नृसिंहसांख्यशास्त्रमिदं किल संख्याव्याख्यानपरं परब्रह्मतत्त्वावबोधकं षड्विंशतिसूत्रात्मकं (२७) महर्षिनृसिंहमुनिपादैः प्रणीतं शास्त्रम्। संख्यैव तत्राप्युपाय इति स्फुरणे सति यत्क्रमेणेयं तत्रोपयोच्यते तत्क्रमविवरणघटितं संख्यागोत्ररतया तन्मुखेनैव सम्यक् तत्त्वाख्यानसाधनतया च सांख्यसंज्ञितं शास्त्रमिदम्। दृश्यतेऽनेनेति दर्शनम्, संख्यायाः दर्शनं सांख्यदर्शनम्। सांख्यविद्या। सेयं हि विद्या सर्वविद्याप्रदीपत्वेन प्रशंसिता।

'प्रदीपस्सर्वविद्यानामुपायः सर्वकर्मणां आश्रयः सर्वधर्माणां शश्वत् सांख्यायिकी मता॥ (चाणक्यः) अपि च, आर्षधर्मोपदेशं च वेदशास्त्रविरोधिना यत्सांख्येनानुसंधत्ते स धर्मो वेदनेतरः॥ (इति मनुः) तदिदं वेदांतार्थविरोधिसांख्यनिरसनोपायिकं, वेदांतसिद्धान्तरक्षणोपयोगिप्रमाणादिप्रतिपादनमेव सांख्यशास्त्रस्य प्रयोजनम्। यदीश्वरप्रभवत्वेन, निरस्तसमस्तालीकभ्रमविप्रलिप्सादिपुंदूषणतया वेदानां स्वतः प्रामाण्यमव्याहत सत् सर्वेषामास्तिकानां स्वयमभिमतमेव तत्कथं वास्ति सांख्यशास्त्रप्रयोगस्यावकाश इति। तत्र भ्रमः; सत्यमेव तत्तथापि निरीश्वरवादिनां चार्वाकप्रभृतीनां वेदप्रामाण्यविप्लावनतत्पराणां कुतर्ककुठारकुण्ठीकरणाय शास्त्रस्यास्य परमसुपयोग मन्यन्त आगमिनः। न खलु सांख्यशास्त्रमंतरेण दुर्दान्तचार्वाकादिनास्तिकानां प्रखरसांख्यनिरसनमनायासेन कर्तुं सुकरम्। तन्निरसनार्थमेवास्य शास्त्रस्यावतारः।

तत्त्वज्ञानान्निःश्रेयसाधिगमोपायस्य शास्त्रस्य प्रतिपाद्यो विषयः निःश्रेयसो मोक्षः। न स प्रमाणादीनां तत्त्वज्ञानमंतरा शक्योपगमः। चतुर्विधा खल्वस्य शास्त्रस्य प्रवृत्तिः, विषयः, प्रयोजनं, सम्बन्धः, मुमुक्ष्वधिकारी चेति।

तदेवमुक्तदिशा निर्दिश्यमानः आत्मैव निर्विकल्पकःनिरुपाधिः निर्विकारसत्ताकः ब्रह्मपदेनोच्यते। तच्च ब्रह्म निर्गुण-सगुण-रूपेण द्विविधमिति प्रागवोचम्। तादृश-ब्रह्म-स्वरूपनिर्धारणार्थं स्वयमाचार्य-महाभागैः संख्यामाधारीकृत्य संख्या-शास्त्रस्य आधारो पूर्णमिति स्वीकृत्य स्वशास्त्रस्य यद्वैपूर्णालंबमिति निर्दिष्ट द्वितीयसूत्रे ततः अष्टविंशतितमे सूत्रे 'पूर्णमगुणं ब्रह्म वाक्' इति पूर्णमेव निर्गुणं ब्रह्मेति व्यनक्तिनिर्धारितः आचार्येण।

संख्यायन्ते सम्यक् ज्ञायन्ते तत्त्वानि येन तत्सांख्यम्। 'संख्या-शब्दोऽयं संख्यातिः, इत्युभयवचनम्। कपिलसांख्ये मूलप्रकृतिः अविकृतिः प्रकृतिश्च सप्त। केवलविकृतयः षोडश, प्रकृतिभिन्नोऽनु-भयात्मकः पुरुषश्चैक इति सम्भूय सर्वाणि पंचविंशति (२५) तत्त्वानि संख्यायन्ते गण्यन्ते-येन तत्सांख्यं इत्युच्यते।

शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते॥ (शांकरभाष्ये)

'अथातस्सांख्यमिति' अस्य दर्शनस्य प्रथमसूत्रम्।

अस्य दर्शनस्य प्रवक्तारः तत्र भवन्तो महर्षिपदवाच्यभगवन्नृसिंह-मुनिपादाः। जननी चास्य परमसाध्वी 'लक्ष्मीदेवी' इति नाम्नी देवी। जनकश्च राणी अनन्तरामशास्त्री ब्रह्मतेजस्समन्वितो विप्रवरः। सोऽयं नृसिंहमहाग्निचिद् यज्वा जन्मतः कुशाग्रधीः महामेधावी-प्रदीप्त प्रतिभाशाली-ऊहावान्-तार्किक-दैवज्ञसार्वभौमश्चासीत्। बाल्यकाल एव सांख्यदर्शनस्य महान् सिद्धांतः 'पूर्ण'वादः पूर्णरूपोऽस्यैव मस्तिष्के स्फुटितः। अतएवाश्यं ज्ञानं (ब्रह्मज्ञान) निर्वहणीयत्वेन तन्निर्वाहाय 'तत्त्वमसीत्यादि' वाक्यवत्; ज्ञानेन तन्निर्वाहार्थं तस्याः प्रत्यक्प्रवृत्त्यु-पपत्तेः, यथा च श्रुतिः, प्राक्प्रवृत्ताकर्मसु पुंसः प्रवर्त्य तत्फलं स्वर्गादि-निर्वहन्त्यपि तत्त्वमस्मादिवाक्यरूपेण प्रत्यगपि प्रवर्त्य पुंसो विद्यया योजयन्तः अज्ञाननिरासद्वारेण तन्निष्पाद्यात्मावाप्तिं साधयति। एवमेवेयं संख्यापि प्राक्प्रवृत्ता व्यवहारं साधयति। प्रत्यक्प्रवृत्ता अविद्या मग्नमात्मानमुद्धरति। अत्र संख्याब्रह्मबोधनक्रमोऽस्य शास्त्रस्य विषयः— तद्विषयलभ्यं ब्रह्मतत्त्वज्ञानं प्रयोजनं शास्त्रस्य तत्क्रमस्य च प्रतिपाद्य प्रतिपादकभावसंबंधः—गणितज्ञानविशिष्टो मुमुक्षुरधिकारी—

अनेन सांख्येन संख्यायाः ब्रह्मबोधनक्रमं ज्ञात्वा तत्क्रमसञ्जनित-ब्रह्मतत्त्वज्ञानस्य अप्रकंप्यत्वात् तेन कृतार्थो भविष्यतीति बोध्यते। प्राचीनतमकपिलसांख्ये 'अष्टौ प्रकृतयः' इत्यादिसंख्यानिर्णीतपंच-विंशतिर्गणः अस्ति। अत्र नृसिंहसांख्ये दर्शने 'यद्वैपूर्णलम्बं' इति सूत्रितत्वात् 'नृसिंहसांख्यं' 'पूर्णालम्बं'[1] कपिलसांख्यन्तु अपूर्णालम्बमिति ज्ञेयम्।

'पूर्णं' नाम बिंदुः, संख्यास्थानानां व्यंजको बिन्दुः। वृत्तं, परिधिः, मंडल-रेखा-पूर्णमिति तदेवोच्यते। अत इदं सांख्यं कापिलसांख्यात् भिन्नमेव ग्राह्यं। 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' ( बृ० उ० )

तत्पूर्णं संख्यायाः एकत्वादिरूपायाः मूलं कारणं भवति। ततः 'मूलमूलिनो' रभेदादिति वचनात् संख्यालम्बत्वं संभवतीति न विरुद्धम्। सर्वैरपि गणितवेदिभिरस्तित्वलक्षण एव बिंदुरिति सम्मतं न शून्यगर्भकम्। एकेन बिंदुना दशधा, द्वितीयेन शतधा, एवमुत्तरोत्तरं निजाशितमंकं प्रवर्तयति एक-दश-शत-सहस्रायुत-लक्ष-प्रयुत-कोटिकम्।

क्रमशोऽर्बुदाब्ज-खर्व-निखर्व-महापद्म-शंकवस्तस्मात्। जलधिं चान्त्यं मध्यं परार्धम्, इत्यादि ( भास्कराचार्यलीलावती )। अपिच; तैत्तिरीयसप्तमकांडे 'समुद्रं' इति संख्यावाचकसंज्ञा दृश्यते। किञ्च 'इमामे अग्न इष्टका धेनवः सन्तु……'।

एका च दश च दश च शतं च शतं च सहस्रं च सहस्रायुतं च नियुतं च नियुत च प्रयुतञ्चार्बुदं च समुद्रस्य। मध्यं चान्तञ्च परार्धस्य……( यजुर्वेद )

'अयं वेदः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम॥

( यजुर्वेद० अ० २३-मं० ७२ )

इत्यादयः वेदे दृश्यन्ते।

---

१. पूर्णं = ZERO.

तदिदं ब्रह्मवत् सद्रूपमेव नासद्रूपम्। एकादिनवान्तां संख्यां जनयित्वा 'तत्सृष्ट्वा तदेवानु प्रविशत् तदनु प्रविश्य सत्यं चाभवत्' इति। तामनु प्रविश्य दशधा-शतधा-सहस्रधा-अयुतधा-लक्षधेत्यादिरूपेण प्रवर्तयति। तस्मान्न भ्रमितव्यं शून्य-गमकमिति। इयमखंडापि मूर्तिभिरवच्छिन्ना छिन्नवद्भूत्वा व्यवहारं साधयति।

"तस्या गुणहाराभ्यां वृद्धिह्रसा" इति सूत्रितत्वात् संख्याया गुणहाराभ्यां वृद्धिह्रासौ भवतः। तौ गुणहारौ प्रत्येकं त्रेधा वर्तेते। गुणो धन-गुण-घातैस्त्रिविधः, हारो ऋण-हार-मूलैस्त्रिविध इति ज्ञेयम्। बिन्दुर्हि द्वाभ्यां त्रिभिरित्यादिस्वेतरेण गुणितो न किंचिदपि वर्धते। परंतु यथापूर्व तिष्ठति। बिन्दुना गुणितो न वर्धते, हृतस्तु तिरोहितपूर्वरूपस्सन् तिरोधायकरूपेण परिवर्तते। इदमेवाह श्रुतिः "पूर्णमदः पूर्णमिदं" इत्यादिः। पूर्णं ब्रह्म व्यवहितं हार्यस्थानीयतया निर्दिश्यते। तदनु पूर्णं इदं सन्निकृष्टं हारक-स्थानीयतया निर्दिश्यते। अथ पूर्णात् पूर्णमेव उद्धार्यते, एवं पूर्णस्य पूर्णमादाय पूर्णात् पूर्णं परिहृत्यापि अहो चित्रम्! पूर्णमवशिष्यत एव। इतरसंख्यावत् न क्षीयते। अत्र (घातप्रक्रियायां एकांकस्य) सघातत्वभावनाया जीवतया च ब्रह्म परिवर्तत इत्यर्थः सूच्यते।

"पूर्णेन गुणितं पूर्णं" इति। बिंदुना गुणितं किन्तु वापि संख्यारूपं पूर्णं भवति। अनेन ब्रह्मविस्त्वेन ब्रह्मगुणितस्यावश्यंभावी ब्राह्मी भावः बोध्यते। अनेन "कोह्येवान्यातकः प्राण्यात्। यदेष आकाश आनंदो न स्यात्" इति श्रुत्युक्तप्रकारेण ब्रह्मसत्तां विना क्वापि अन्या सत्ता नास्तीत्युपदिष्टम्। अत्रोदाह्रियन्ते—धन :—४ + ४ = ८; गुण :— ३ × २ = ६; ऋण :—४ − २ = २; घातत्वे :—३$^{३}$ = (३ × ३ × ३ = २७) इति। अत्र घातप्रकाशकसंज्ञितानि (वर्गघनसंज्ञितानि च) शिरोऽकानि वर्तते। इदं पूर्णं, व्यवहारप्रक्रियायां अपरिहार्यं अत इदं अनंतमिति ज्ञेयम्। अनेन ब्रह्मणोऽनंतत्वं बोधितम्। तस्मात् पूर्णो बिंदुः ब्रह्मणः प्रतिनिधिः। स्वस्वरूपस्वभावाभ्यां ब्रह्मस्वरूपस्वभावौ सूचयति। "प्रपंचस्य तु संख्या";—इति बिंदु-विवर्त-भूत-संख्या-जीव-प्रवाहस्य प्रतिनिधिः। अत्र निर्घातैकांकः स गुणस्य सिसृक्षोः ब्रह्मणः

प्रतिनिधिः। यथा सिसृच्छु ब्रह्म निखिलशक्तिगर्भं तथा एकांकः स्वोत्तर-निखिल-संख्याकशक्तिगर्भं इति भवति गुणो ब्रह्मणः प्रतिनिधिः। अत्र सगुणाद् ब्रह्मणः प्रपंचस्य ( जीवप्रवाहस्य ) चिदचिद्रूपस्य प्राप्तिः इति बोधो भवति। यथा :—एकांकः गुण्यगुणकविभागं संख्याप्रपंचं जनयति—तथा सगुणं ब्रह्मापि जीवजडविभागं प्रपंचमुत्पादयतीति तौल्यात् ब्रह्ममहिमानुबोधकत्वं संभवति। वेदान्तैर्यदेवार्थजातमुच्यते तदेव संख्ययापि। मोक्षसाधनं ज्ञानं तस्य अतएव ( संख्यास्वरूपकृत-लब्धत्वादेव ) सांख्यमिति प्रसिद्धिः। अतः पूर्णसंज्ञितो बिंदुः निर्गुणं सिसृच्छोदासीनं ब्रह्म वक्ति सूचयति। बिंदुना बिंदुहरणादेकांकोदयः। 'तदैक्षत बहुस्यां, इत्युदेति हि शबलं ब्रह्मरूपं—त्रिपादस्यामृतं दिवि' इति त्रिपादमात्मस्थमेव विद्यते एकपादं तु बहिष्टं—तावतैव सर्वसर्ग-संभवः। संख्यायाः गुणनादि कर्म; जीवस्य सत्व-रजस्तमांसि गुणजात-सुकृत-दुष्कृतरूपं कर्म बोधयन्ति। संख्यायाः गुणहारौ तस्या जीवक्रियायाः प्रवृत्तिनिवृत्तिरूपतां वदतः। गुणेन प्रवृत्तिः हारेण निवृत्तिश्च ज्ञेयम्। निवृत्तिभावात् ( हारात् ) ब्रह्मैक्यम् सिद्धि ब्रवीति सूचयति।

अतः संख्यायाः परमपुरुषार्थकसाधकब्रह्मविद्यां जानीयात्। अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः इति श्रुताधीश्वरस्य व्याप्ति तौल्यात् बोधयति। द्वितीयांकादयो नवांता अंकाः प्रधानादीन् ( प्रकृतिमहदहंकारपंचतन्मात्राणि ) सूचयति। प्रथमांकः स्वामिप्रकृति-भूतं शबलं पुरुषं ( ब्रह्म ) सूचयतीति पूर्वमेवोक्तं "दिघोतंकांकः सगुणस्य सिसृच्छोर्ब्रह्मणः प्रतिनिधिरित्यनेन"।

अनेन शास्त्रेण नवैव प्रकृतयः सर्गस्य सन्तीति तत्प्रतीकतया नवैवांकास्संख्यायाः कल्पिता "रहस्यं" विज्ञेयम्। अंक-बीज-रेखा-कोण-वृत्ताश्रमैः तथा पंचविधेऽपि गणिते लब्धैरेतादृशैरन्यैरपि प्रकारैः ज्ञातव्यमन्यदपि विदां कुर्वंतु गणका मुमुक्षवः।

सांख्यनये ब्रह्मावबोधनार्थं जीवसुकृत-दुष्कृतकर्मज्ञानार्थं नवान्ता अंकाः "पूर्णं" च निर्दिष्टाः। श्रीमद्भगवद्गीतायां पुनः सांख्ययोगयोः बहुशो बहुधा विवेचनं सांख्यदर्शनस्य आध्यात्मिकपक्षे निर्धारण-सामर्थ्यं विशदां ख्यातिं च विशदं निर्दिष्टम्। किन्तूपनिषत्स्वपि सांख्य-दर्शनस्योपकीर्तनमुपलभ्यते।—

"तत्कारणं सांख्ययोगादिगम्यं" ( श्वेता० उप० ७. १३. )

श्वेताश्वतरोपनिषदि च सृष्ट्युत्पत्तेः मूलकारणं "अजां" इत्यादि, सांख्यमेवानुवदति। तथाहि—"अजामेकां लोहितशुल्क-कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। ( श्वेताश्व ६-४ ) अस्य सांख्यविज्ञानस्य निरुपमस्याविर्भावकत्वं संभवति सर्वार्थ जातं दिव्यचक्षुषा हस्तामलकवत्प्रत्यक्षीकुर्वाणस्य। वेदांतसारस्सर्वोपि सांख्यदिशा "नृसिंहसांख्यदर्शनेन" अत्यंतविशदतया प्रकटीकृतः सुलभपथा। अस्य प्रणेता राणी नृसिंहमहाग्निचिद्वैवज्ञसार्वभौमनामा आचार्य इति सर्वैः स्वीकृतं अतः सुगृहीतनामधेयाः नृसिंहायार्याः कस्य वा न स्युर्नमस्याः।

"दृग्गोचरं तद्रहस्यं भविष्यति न संशयः।
नागमज्ञैः ब्रह्मनिष्ठैर्दर्शितं ब्रह्मवादिभिः॥
अतो भगवान् नृसिंहमुनिः पूजनीयः।

ज्ञातञ्च :—

पाणिनेर्जैमिनेश्चैव व्यासस्य कपिलस्य च।
कणादस्याक्षपादस्य दर्शनानि षडेव हि।
अभिधागर्तिनोक्तानि गणितेन तु सप्तमम्।
नृसिंहसांख्यनामेदं उपमादिरसंशयः॥
सूत्रं यदाम्नायेन तदेवोच्यते संख्ययापि च॥

( नृ. सां. द. २५ सू. ) इत्युक्तत्वात्॥



# काव्येऽलोकसामान्यत्वम्

*राममूर्ति त्रिपाठी*

काव्ये लोकसामान्यमेवोपनिबध्यत उतालोकसामान्यमपि। आचार्याणामलङ्कारग्रंथेषु काव्यनिरूपणप्रसंगेऽलोकसामान्यस्यापीतस्तत आलोचनं दृश्यते. यथा—ध्वन्यालोके निगदितं ह्यानदवर्द्धनाचार्यैः।

'अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्'—इति। न चात्र काव्य उपनिबद्धयमानस्य वस्तुनो निरूपणमिति वाच्यम्, प्रतिभायाः सविषयकत्वात्, सविषयक-प्रतिभाया एवालोकसामान्यत्वोक्तेश्च। किञ्चान्यमप्यलोकसामान्यापरपर्यायस्य लोकोत्तरत्वस्य वा शतश समुल्लेखो दृष्टिगोचरकृतः। एवञ्चात्र काव्येऽस्यालोक-सामान्यस्य लोकोत्तरत्वस्य वा कीदृशोऽर्थो ग्राह्य इति विचारयितुं तावदारभ्यते।

लोकोत्तरत्वमित्यत्र लोकादुत्तरत्वमित्यर्थापेक्षया किं लोकोत्तीर्णत्वमिह लोकतः परत्वं पारलौकिकत्वं वेष्टमुतान्यत् किञ्चित्? आहोस्विदेतदप्यन्यदपि च. अन्यच्चेत्तत् किमात्मकमित्येवंविधेषु विकल्पेषु प्रस्तुतेषु कतिपये इत्थं विचारयन्ति—

काव्येषु लोकोत्तरत्वमलोकमनोगोचरेषु लोकमनोगोचरेषु च द्विविधेष्वर्थेषु पर्याप्तम्. तथाहि काव्यत्वावच्छिन्नासु रचनासु पूर्वोक्तं द्वैरूप्यं दृश्यते—श्रीमच्छङ्कराचार्यप्रणीतायां काव्यमय्यामानन्दलहर्यां कालिदासप्रणीतायां चिद्गगनचन्द्रिकायामेकत्रालोकमनोगोचरः रहस्यमयार्थो दृश्यते। तदान्यत्र रघुवंशकुमारसंभवादिषु च लोकमनोगोचरोऽर्थः। स्वकीयं पक्षमुपस्थापयन्त इमे मनीषिणो समालपन्ति यत्कवयः स्वप्रतिभयाऽलोकमनोगोचरमप्यर्थं साक्षात्कुर्वन्ति, काव्येषु च तन्निबध्नन्ति। परञ्चान्येऽत्र प्रत्यवतिष्ठन्ते—तेषामयमाशयः—काव्येषु कविनिर्मितेषु नियमतोऽलोकमनोगोचरोऽर्थः कविभिर्निबध्यते—इति तावन्न गदितु शक्यम्। न हि कवयो योगिन इव रहस्यात्मकमलोकमनोगोचरमर्थमार्षप्रतिभया साक्षात्कर्तुमर्हन्ति। ये खलु साधनाविशेष-

मङ्गीकृत्य रहस्यदर्शिनः सञ्जाताः तेऽलोकसामान्यमर्थं साक्षात्कृत्य काव्यमर्मी गिरमाश्रित्य सर्वं वक्तुं प्रभवन्ति—परञ्चैतन् न कवि सामान्य-प्रणीतेषु काव्येषु संभवति। नहि सर्वत्रार्षप्रतिभा समुदेति। यद्यपि कविसामान्यगतायाः प्रतिभायाः स्वरूपं व्याहरद्भिराचार्यैः 'अपूर्ववस्तु-निर्माण क्षमा प्रज्ञा प्रतिभा' इति भणितम्—तथापि अत्रत्यप्रतिभायाः स्वरूपगतमपूर्वत्वं नालोकमनोगोचरार्थ निधायकतया समभीप्सित-मित्यग्रे निरूपयिष्यते। दशरूपकटीकाकरिणा घनिकेन स्वकीयं मतं प्रकाशितम्—'न हि कवयो योगिन इव ध्यानचक्षुषा ध्यात्वा प्रातिस्विकीं रामादीनामवस्थामितिहासवदुपनिबध्नन्ति। किं तर्हि सर्वलोकसाधारणीः स्वोत्प्रेक्षाकृतसन्निधीः धीरोदात्ताद्यवस्थाः क्वचिदाश्रयमात्रदायिनी-र्विदधति'। अलोकमनोगोचरोऽर्थस्य काव्येऽस्तित्वं विवादास्पदमत एव शान्तरसे आचार्याणां मतभेदो दृश्यते। ये खलुतत्समर्थयन्ति, तेऽपि न तस्य पार्यन्तिकीं स्थितिं काव्ये स्वीकुर्वन्ति, यद्यप्यन्यस्यापि शृङ्गा-रादिकस्य रसस्य पार्यान्तिकी स्थितिः न वर्णयितुं पार्यते—तथापि शृङ्गारादिरसेषु न शांतरस इव कस्यचिद्विमतिः। इदमपि प्रायो दृश्यते यदानन्दवर्द्धनाचार्यमम्मटप्रभृतयश्च लक्षणग्रन्थप्रणेतारः कविकाव्य-प्रसंगे सत्स्वपि व्यासवाल्मीकिप्रभृतिषु आर्षप्रतिभासमाहितेषु केवलस्य कवेः कालिदासादेरेव प्रथम नाम गृह्णन्ति—'यथा, तथाहि कविपरम्परा-वाहिनि संसारेऽस्मिन् कालिदासादयः द्वित्राः पञ्चषा वा महाकवयो दृश्यन्ते'—इति आनन्दवर्द्धनः समुद्घोषयति। मम्मटाचार्येणापि काव्यप्रकाशे—'कालिदासादीनामिव यशः'। एनेन कविकाव्यप्रसंगे आर्षप्रतिभासमेधितानां महात्मनामनुल्लेखेनैतत् सिद्ध्यति यदाचार्या ऋषिभ्यः कवीन् पृथक्कृत्योपस्थापयन्ति। एवञ्चैवंविधैः विशुद्धकाव्यो-चितप्रतिभासंचलितैः कविभिः लोकमनोगोचर एवार्थः काव्ये वर्ण्यते—किंतु तत्रापि लोकोत्तरत्वं दृश्यते।

अत्रत्यं लोकोत्तरत्वं काव्यवर्णितेषु भावव्यंजकेषु विभावादिषु तद्व्यञ्जितेषु भावेषु च विद्यते। परञ्चात्रत्यं लोकोत्तरत्वमलोकमनो-गोचरार्थोपस्थापकतया न तथोच्येत, अपि तु लोकोत्तरत्वञ्चात्रा ह्लादगतश्चमत्कारत्वापरपर्यायः सहृदयहृदयसाक्षिकः जातिविशेष इति रसगंगाधरकारैर्निरूप्यते। कारणं च तदवच्छिन्ने भावनाविशेषः पुनः

पुनः अनुसंधानात्मा। लोकोत्तरत्वं च विभावादिष्वेतदेव यन्न तत्र लौकिकवेद्यान्तरसाधारण्यम् प्रत्युत लौकिकवेद्यान्तरवैलक्षण्यम्। वैलक्षण्यन्त्वेतदेव यदिमे विभावादिपदव्यपदेश्याः पदार्थाः यादृशमलौकिकं लौकिकसुखान्तरासाधारणं रसात्मिकां परिणतिं प्रकाशयन्ति, न तादृशीं लौकिकाः पदार्थाः। अत एव काव्यव्यंजिता भावा रसा अपि न लौकिकसुखान्तरसाधारणाः। अत एव ब्रह्मानन्दसहोदरा इति समुक्ताः। अत्र लोकोत्तरमपूर्वत्वं नवत्वञ्चैतत् सर्वमनर्थान्तरम्। उक्तं हि आनन्दवर्द्धनैः—

'सर्वे नवा इवाभान्ति काव्ये रसपरिग्रहात्'

रसपरिग्रहादेव काव्येऽपूर्वता समुन्मिषति, इयमेवलोकोत्तरत्ता लोकसामान्य वा। मुख्यतस्त्वेतदेवऽलोकसामान्यत्वममुख्यतस्तु काव्योचितमन्यविधं चमत्कारमादायापि। इत्थञ्च लोकोत्तरत्वमलोकसामान्यत्वं वाऽलोकमनोगोचरमर्थमादाय निजमतो न व्यवहर्तुः। शक्यतेऽपि तु लोकमनोगोचरार्थमादायैव-परन्तु न लौकिक वेद्यान्तरसाधारणन्तदित्यपि स्मरणीयम्।



# महामतेः मोक्षमूलरस्य वेदप्रवृत्तिः

*रामकृष्णशास्त्री 'अव्ययः'*

अद्य हि विश्वविबुधसमामध्ये नास्ति कश्चिदेवंविधः विपश्चित्, यो हि संस्कृतसाहित्यसमालोचकस्य महामतेः मोक्षमूलरस्य नाम न जानाति। असौ महापण्डितः विद्यानुरागमण्डितः धैर्येणाखण्डितः शर्मण्यदेशीयो विश्वविश्रुतः संस्कृतविद्वान् आसीत्। शब्दशास्त्रविमर्शे तु तस्यागाध-पाण्डित्यं समीक्षावैदुष्यं च सर्वैरेव स्वीकृतम्।

१८२३ ईस्वीयाब्दे 'देसौ' इत्याख्ये शर्मण्यदेशान्तर्गत नगरे तस्य जन्म अभूत्। तस्य पिता 'एनहाल्ट देशाऊ' इति विख्यातनाम्नो 'ड्युकाल' पुस्तकालये पुस्तकालयाध्यक्ष आसीत्।

अध्यापको मोक्षमूलरः सम्भ्रान्तकुले एव जनिमलभत इति नास्ति कस्यापि इतिहासविदः तिरोहितम्। तस्य पितृ-मातृवंशौ शर्मण्यदेशे समृद्धिसंपन्नौ आस्ताम्। द्वौ एव तौ शारदानुग्रहौ इव अवर्तताम्।

तस्य पितामहः महाकविः 'गेटे' शिक्षाविभागे प्रधानानुसन्धाता अविद्यत। अतएव तस्य महान् आदरः अभूत्। पिता तस्य 'विलहेल्म मूलरः' सुप्रसिद्धः कविरभवत्। परं कथमपि दैवदुर्विपाकेन पितुर्दारिद्र्यदोषेण कविपुत्रः 'मोक्षमूलरः' शैशवादेव महतीं कठिन-दशामनुभूय अपि विद्यामार्गेऽग्रेसरोऽभूत्। बाल्यादेव असौ जीवि-कोपार्जनोद्योगेन साकमेव स्वोत्कृष्टप्रयासैः शिक्षासोपानेषु सोत्साहं समारोहत्।

दारिद्र्यार्दितेन अपि तेन महता अध्यवसायेन पठनलेखनादि समारब्धम्। विद्याप्तिपर्यन्ते तेन एकदा स्वामि केनापि बन्धुना अवरोधे कृते सति एवमुक्तं, यत् 'दरिद्रतायैव कठोरश्रमेण च ममोन्नतिर्बभूव'।

बालो मोक्षमूलरः द्वादशवर्षायुष्पर्यन्तं 'हेसेऊ' विद्यालयेऽपठत्। तत्र हि तेन संगीतविद्यायामपि महती योग्यता समवाप्ता। एवं विधा

आसीत्तस्य संगीतयोग्यता, यत्तदा तत्संगीतप्रभावेण तात्कालिकाः जर्मनवासिनो बहवो महात्मानोऽपि प्रमुग्धाः सन्तो भृशं तं प्रति समाकृष्टा अभूवन्। पितुरर्थाभावात् तदानीमपि असौ हस्तलिखित-पुस्तकानां प्रतिलिपिकरणेन स्वां जीविकां संपादयति स्म।

१८४१ ख्रिस्ताब्दे 'लिपजिक' विद्यालये सम्प्रविश्य तेन १८४३ ख्रिस्ताब्दे 'पी० एच० डी०' उपाधिं प्राप्तवान्। विश्वविद्यालये तु तदा 'हर्मणः, ब्राप्ते' चेति द्वौ संस्कृत पण्डितौ संस्कृतमध्यापयतः स्म। ताभ्यामेव 'मोक्षमूलरेण' संस्कृताभ्यासे महती व्युत्पत्तिः समासादिता। एवं च संस्कृताय तदनुरागोऽहर्निशं संवृद्धिमुपागच्छत्।

उपाधिग्रहणानन्तरं तेन "बर्लिन" नगरस्य विश्वविद्यालये प्रवेशः संप्राप्तः। पूर्वजन्मार्जितसुकृतवशेन तस्य कोमलमनसि संस्कृतस्नेहः सुचारु संचारं कृतवान्। भारतप्रभृतिभ्यः "एशियाखण्डदेशेभ्यः" संगृहीतपाण्डुलिपिसंभृतानां प्राक्तनसंस्कृतभाषायाः, अन्यान्य-भाषाणां च ग्रन्थानां तालिकाः समालोक्य असौ प्रमुग्धः समाकृष्टश्च भूत्वा "बर्लिन" विश्वविद्यालये ह्यत्र स्थित्वा तदध्ययनोद्योगे संप्रवृत्तः। तत्र "हिब्रू" भाषायाः संस्कृतभाषायाश्च चर्चायां किल अविश्रान्तश्रमेण महता संप्रयासेन च स पाण्डित्यमवाप। प्रसिद्धभाषातत्त्वविदः अध्यापकस्य "बपस्य, सोलिङ्गस्य" च सहचारानुशीलनेन तासु भाषासु ग्रन्थान् संगृहीतवान्।

अष्टादश वर्षायुषि "मोक्षमूलरः" विद्यालयं विहाय जीविकोपार्जनायायतत। उदरपूर्ति-चिन्तायां दिवानिशं श्रान्तेनापि तेन पठनलेखनादि विद्याव्यवसाये मन्दता नाङ्गीकृता। तदानीमेव तेन अगाधसंस्कृत-साहित्यसिन्धोः प्रमथनेन महान्ति रत्नान्याकृष्य स्वकालभाषोन्नत्यै बद्धादरोऽनुष्ठितः। विंशतिवर्षायुरसौ अग्रे अग्रे प्रगतिपथे पदानुक्रम-विधिना श्री विष्णुशर्मणा विरचितस्य, हितोपदेशस्य जर्मनभाषाया-मनुवादं कृत्वा एकं नवीनं पन्थानं समुद्घाटयत्।

संस्कृतसाहित्याध्ययनेन सह एव तस्य महती ज्ञानपिपासा अपि समवर्धत। तदनन्तरमसौ "फ्रांस" देशस्य राजधान्यां "पेरिस" प्रयौ

गत्वा प्राच्यभाषाविदः पण्डितवर्यस्य "युजिन् बुर्नोफ" महाशयस्य यत्नेन समुपदेशेन च ज्ञानोन्नत्यै श्रेष्ठोऽभवत् ।

"पेरिस" नगरे ह्येव पण्डितवर्यस्य "युजिन् बुर्नोफ" महोदयस्य संस्कृतविषयकं संभाषणं समाकर्णितम् पश्चाच्च सर्वप्राचीनस्य, आर्यहिन्दु-जातेर्महामान्यस्य, सर्वोत्तमग्रन्थस्य किं वा—सर्वप्राचीनार्यजातेरादि-ग्रन्थस्य ऋग्वेदस्य माहात्म्यमभ्युदितम् ।

तस्य ज्ञानमयस्य वेदस्य अध्ययने, प्रचारे प्रसारे च तस्य मनो लग्नम् । परिणामतश्च तेन सभाष्यस्य ऋग्वेदस्य संप्रकाशने मतिर्विहिता । तदानीमेव तस्य "बुर्नोफ" महोदयेन सह सुपरिचयोऽपि समभूत् । उक्ताध्यापकस्य सकाशात् शिक्षादानारम्भकाले विशेषं कष्टं भुक्त्वा असौ स्वसंकल्पसिद्ध्यै किंचित् भग्नोत्साहोऽपि अभवत् । तथापि तेन तदाज्ञानुसारं मूलभाष्यसहितस्य एव ऋग्वेदग्रन्थस्य संपादने मनः कृतम् ।

तेनाध्यापकेन तस्मै प्रतिबोधितं यत् अस्मिन् वेदप्रकाशनरूपे महति यज्ञे त्वया सम्यक् शोधो विधेयः। यूरोपस्य संगृहीतसमस्त-पुस्तकान्यधीत्य, तत्पाठमेलनं कृत्वा, विमर्शं कुरु । वेदप्रकाशने तु सभाष्यं तत्संपादनमेव समुचितम् । केवलं कतिपयश्लोक( मन्त्र )विषये एव समाश्रयो नोचितः । यतो हि अस्मिन् नवीनप्रकाशने दुरूहदुर्बोधां-शानां संयोगोऽपि वरीयान् सम्भविष्यति इति ।

एवं तदुद्बोधनं मत्वा द्वाविंशतिवर्षायुष्मानसौ युवा मनीषी कठिनं तत्कार्यं संपादयितुं संप्रवृत्तः। स्वस्मात् प्राक् प्रकाशितस्य, पण्डित-वर्यस्य "डॉ० रोसन" महोदयस्य वेदभागस्य कतिपयेषु अंशेषु तस्य दृष्टिरपतत् । कोटिशः संप्रयतमानोऽपि असौ समग्रयुरोपदेशे एकस्मिन् स्थाने एकस्य सम्पूर्णवेदग्रन्थस्य संग्रहकरणे सफलो नाभूत् । 'जर्मन-फ्राँस' देशयोः पुस्तकालयेषु संगृहीतग्रन्थानां भागेभ्यो विभिन्नांशोद्धार-कार्यं संपाद्य असौ १८४६ ईस्वीयाब्दे "इङ्गलैंड" देशे गत्वा "आक्सफोर्ड" विश्वविद्यालयस्य सुविख्यातपुस्तकालये "बाडलियन" इत्याख्ये संगृहीत-हस्तलिखितप्राक्तन-वेदग्रन्थैः सह पूर्वसंगृहीतग्रंथांशानां पाठोद्धार-मकरोत् ।

तदा च तस्य श्रेष्ठपण्डितेन, राजनीतिनिपुणेन जर्मनराजदूतेन "वैरिनशुनसेन" महोदयेन सह परिचयोऽजायत। असौ राजनेता अपि ज्ञानानुसन्धित्सोः, अधनस्यापि उद्यमशीलस्य तस्य जर्मनतरुणस्य महति अध्यवसाये सन्तुष्टश्च अभवत्। पश्चादसौ राजनेता सुचिरं विमृश्य भारतवाणिज्ये सुप्रसिद्धायाः "ईस्ट इण्डिया कम्पनी" इति संस्थायाः संचालकान् वेदप्रकाशनाय किमपि वित्तसाहाय्यं कर्तुं संप्रेरयामास। इंग्लिशवणिक्समित्या च तदङ्गीकृतम्। तस्या सहानुभूत्या समुल्लसितेन युवकेन मोक्षमूलरेण सभाष्यं समस्तं मूलवेद-ग्रन्थं संग्रह-रूपेण संप्रकाशयितुं भृशं संप्रयतितम्।

१८४६ खिष्टाब्दात् आरभ्य १८६३ खिस्ताब्दान्तं यावत् असौ असाधारणाध्यवसायेन अनुपमश्रमेण च स्वं कालं वेदसंकलनकर्मणि न्ययुंक्त। १८४६, १८५३, १८५६, १८६३, खिस्ताब्देषु "आक्सफोर्ड" विश्वविद्यालयीय-मुद्रणालये तत्संपादितस्य ऋग्वेदस्य प्रथमतः षड्भाग-पर्यन्तं यावत्प्रकाशनं समजायत। १८७४ ईस्वीयाब्दे सितम्बर मासे १४ दिनांके तेन "आक्सफोर्ड" नगरे स्थित्वा एव स्वसंपादितस्य ऋग्वेदस्य प्रथमतः षड्भागपर्यन्तं यावत्प्रकाशनं सानुक्रमणिकं समजायत। तद्दिने एव "लण्डन" नगरे प्राच्यभाषाविदां विबुधानां महाज्ञातीयसमितेः प्रथमं सभाधिवेशनमभूत्।

वेदसंकलने तु तेन प्रख्यातस्य फरासीसीपण्डितस्य "अलेक्सन्दर-भान-हम्बोल्ड" इत्याख्यस्य, अन्येषां च अध्यापकानां, "ई० बुर्नोफ, सियेलियर बुल्सेन्, भिल्स, ट्रिथेन्, शेअर बार्डेली, गोल्डस्तुकर, बैलण्टाइन्, भावदाजी, थियोडर, आफ्रैक्, डा० फिट्ज एडवर्ड हाल, प्रो० हौग, कावेल, एगली, थिवो इत्यादीनां, "इंगलैण्ड" स्थितस्य च प्रसिद्धस्य "एच० एच० विल्सन" प्रभृतेः आन्तरिक-श्रद्धया अकुण्ठित-भावेन च महती सहायता समासादिता।

वेद-संकलनकाले चासौ विद्याभ्यासी १८५० खिस्ताब्दे "आक्स-फोर्ड" विश्वविद्यालये प्राच्यभाषाध्यापक-पदे संस्कृताध्यापकोऽभूत्।

# वैदिकं काव्यबिम्बम्

डॉ० अयोध्याप्रसाद द्विवेदी

भारतीयकाव्यबिम्बस्य प्रथमोन्मेषो वैदिकवाङ्मयरूपेणैव समजनि। तत्रापि, ऋषीणामुदात्तचिन्तनधिया तेषां गहनानुभूतेश्च काव्यात्मक-प्रस्फुरणदृष्ट्या ऋग्वैदिकं काव्यमेवाधिकं विशिनष्टि। तस्य प्रत्येकमृक् कवेरलौकिककाव्यप्रतिभाया बिम्बात्मको निस्पंद एव[1]। वैदिकर्षिर्नहि सामान्यो रचनाकारः, साक्षात्कृतोऽर्थ एव तेन प्रकाश्यत। अतो महत्-स्वाभाविकं यत्तस्य वाणी बिम्बबहुला भवेत्।[2] अमूर्तस्य मूर्तीकरणमेव सर्जनमित्यतो वैदिकर्षेः 'दर्शनम्' मूर्तनव्यापारस्यानेनैव विधिना ऋग्बद्धतामगात्।[3] अस्माद्धेतोरेवैवं प्रतीयते 'यद्यथेमे देवा अस्माकं पुरतो देवत्वमुपयान्ति सूक्तेषूपात्तो निखिलो विषयः प्रत्यक्षमिवाभाति'[4]।

---

१. '......The RV. contains much genuine poetry. As the gods are mostly connected with natural phenomena, The praises to them give rise to much beautiful and even noble imagery'.

A. A. Macdonell, A Vedic Reader, P. 28.

२. 'साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः'। निरुक्तम्, पृ० १३०।

३. (क) Anything known of born is an image' हार्ट.

डॉ० वासुदेवशरणस्य अग्रवालस्य 'वेदविद्या', पृ० ११६।

(ख) 'The literary merits of Vedic poetry are quite conspicuous. In handling metre or language, in the expression of striking fancies or telling similies, in graphic descriptions of natural phenomena as in the hymns to Dawn and speculative conceptions as in the Cosmogonic Hymn, and even in the introduction of verbal assononcess, the Vedic Rishi shows himself definitely a poet, and an able one at that.'

Dr. V. Raghavan, The Indian Heritage, P. 25-26.

४. द्र०, 'प्राचीन भारतीय साहित्य' (विन्टरनित्ज) अनुवादकः—लाजपतरायः, पृ० ५६।

अभिव्यक्तिदिशा वैदिकं काव्यबिम्बमभिधया लक्षणया सांकेतिकरूपेण प्रतीकपद्धत्या वा गुम्फितमस्त्यतो यत्रैकतो वेदेषु जीवनस्य चिरन्तनप्रवाहः प्रकृतेर्विविधवैचित्र्येण सहाकृत्रिममभिव्यज्यते तत्रैवापरतस्तस्य काव्यध्वनेर्नितान्तगंभीरमोजस्वि च विराट्कल्पनिकरूपमपि संग्राह्यं भवति। वैदिककवेः काव्यबिम्बं कल्पनाया व्यापकत्वादेवाधिकं चमत्कारि इत्यत्र केन संदिह्यते[1] ? अत एव यदा 'वेदात्मकं काव्यमपौरुषेयम्' इति विद्वद्भिर्विज्ञाप्यते[2] तदा नूनमेव कवेर्विराट्कल्पना, आध्यात्मिकैः संकल्पादर्शैः संग्रथिता सार्वत्रिकी चैतन्यवृत्तिता, सार्वजनीनं हितकामित्वम् , औदात्त्यसंवलितकाव्यार्थस्यानन्त्यादिकं चेति वैशिष्ट्यमेव तत्र हेतुत्वेनोह्यम्। किं बहुना, स्वभावोक्तौ वर्णनात्मकबिम्बनिर्मितावपि अखिलभुवनकल्याणपरोदात्तभावनानुस्यूताखण्डचैतन्यसूक्ष्मसत्ता सहृदयैरनुभूयते। दृश्यतां तावद्वार्षिकमेकमतीव स्वाभाविकं दृश्यम् :—

## स्वभावोक्तिबिम्बम्

प्रवाता वान्ति पतन्ति विद्युत उदोषधीर्जिहते पिन्वते स्वः।
इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीं रेतसावति॥
(ऋ० ५।८३।४)

'प्रभंजनो वहति, विद्युतः पतन्ति, ओषधय उद्भवन्ति नभो निस्यन्दते इत्थं यदा पर्जन्यो जलेन पृथ्वीमाप्लावयति तदा सा विश्वस्य कल्याणाय प्रभवति'। अत्र वर्षाया नैसर्गिको बिम्बः, परमत्रापि पर्जन्यश्चेतनप्राणीव पृथिव्यां रेत आदधाति, पृथिव्यपि चेतनेव सम्पूर्णभुवनस्य श्रेयो विदधाति। एवमेव—

सद्यो जातस्य ददृशानमोजो यदस्य वातो अनुवाति शोचिः।
वृणक्ति तिग्मामतसेषु जिह्वां स्थिरा चिदन्ना दयते वि जम्भैः॥
(ऋ० ४।७।१०)

---

१. स कविः काव्यं पुरुरूपं द्यौरिव पुष्यति नभन्तामन्यके समे। ऋ०, ८।४१।५।

२. 'आनन्दवर्धन' (डॉ० रेवाप्रसाद द्विवेदी), पृ० ८।

अत्रोत्तरोत्तरं शीघ्रमेधमानस्याग्नेः पराक्रमो बिम्बितः। 'यदा वायुरग्नेर्ज्वालाः धूनोति तदा सोऽग्निः स्वतीक्ष्णजिह्वया इन्धनानि चर्वति। नैतावता स विरमति, अपितु स्वदन्ताग्रैर्वृक्षानपि भक्षयति'। 'जिह्वाम्', 'जम्भैः' चेति विशेषणद्वयेन मानवीयव्यापारमारोपयन् कविरग्नेर्भयङ्करत्वं तस्य सर्वग्रासित्वञ्चात्र मूर्तयति। व्याप्तस्य दावाग्नेः स्वाभाविकमिदं चित्रम्।

## वक्रोक्तिबिम्बम्

वक्रोक्तिबिम्बनदिशा तूपमात्मको बिम्बः वैदिकस्यापि कवेः प्रेष्ठ इति प्रतिभाति। तद्यथा—

एषा शुभ्रा न तन्वो विदानोर्ध्वेव स्नाती दृशये नो अस्थात्।
अपद्वेषो बाधमाना तमांस्युषा दिवो दुहिता ज्योतिरागात्॥
(ऋ० ५।८०।५)

अत्रोदयमाना उषा सद्यस्स्नातया गौराङ्ग्या तरुण्या प्रतिबिम्बिता। 'द्वेषकारिणमन्धकारं विनाश्योज्ज्वलप्रकाशकिरणान् विकिरन्ती स्वर्गकन्या उषा लोकस्य नेत्रव्रजानि तथैवाह्लादयति यथा काचिद् गौरवर्णा युवतिः सरसि स्नात्वा बहिरागत्यार्द्रत्वात् संसक्तसूक्ष्मवासांस्यपि स्वाङ्गानि प्रकाश्य जनानानन्दयति'। तरुण्या 'उषाया' अवयवानि केवलं स्नानवेलायामेव नाविर्भवन्ति अपि तु, नृत्यक्षणेष्वपि तस्या मनोहारिणी अङ्गच्छविर्दृग्गोचरतामायाति—

अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहम्।
ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्युषा आमर्तमः॥
(ऋ० १।९२।४)

उषा स्वान्यनेकरूपाण्युद्भावयन्ती आत्मवक्षस्थलस्य प्रदर्शनं तथैव करोति यथा दोहनकाले गौः स्वस्या ऊधसः। केवलाङ्गप्रदर्शनमात्रमुषायाः प्रकृतिर्नास्ति, सा सर्वाण्यङ्गानि अनावृणुते—

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम्।
जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः॥
(ऋ० १।१२४।७)

युवत्या उषाया अङ्गप्रदर्शनस्यैवं चरमा स्थितिः। उक्तैरेभिस्त्रिभिरपि बिम्बैरत्र वैदिककवि उषायास्सर्वाङ्गीणां सौन्दर्यात्मिकीं स्थितिमुद्घाटयितुं समीहते। उषाया उद्‌यो विकासः परिणतिश्चेति सर्वमपि अतीवाकर्षकम्। सर्वमपि जगत् तस्या इदं त्रिविधमपि रूपसौन्दर्यमभिलपति। सृष्टेरादिकालत उषाया रमणीयमिदं रूपमनुदिनमवलोक्यते लोकैर्न किन्तु कदाचिदपि तत्र पुराणत्वमनुभूयते तैः। तस्याः पौनःपुन्येनापि सौन्दर्यपानेन रसिकमिदं जगन्न तृप्यति। किमधिकं, प्रकृतिरमण्या उषाया इदं यौवनं सर्वदैव पुरुषमनांसि आकर्षदिव राराजते। अत्र यौवन एव नारीसुलभलज्जाया विगलनं प्रियमिलनञ्च पर्यवस्यत इति शाश्वतं स्वाभाविकं रहस्यं साधु संवीक्ष्यैव वैदिककविनोषायास्त्रिविधापि यौवनदशा समीचीनतया प्रतिबिम्बिता। वस्तुतः, उषाचित्रणप्रकरणेनात्र कविना युक्त्या आकर्षकं विलासलावण्यमेव चित्रितम्। अत एव उषसः कल्पना वैदिककालस्य सर्वोत्तमं काव्यबिम्बमिति विद्वद्भिः स्वीक्रियते[1]।

नभसीतस्ततो भ्रमन्तो मेघा रणाजिरे रथस्था योद्धार इवोपमिताः[2]। वर्षाकाले मण्डूकानां टरायमाणो ध्वनिः शिष्यवर्गैरनुकृता शिक्षकवाणीवोपकल्पितः[3]। अनेन बिम्बेन तदानीन्तने समाजेऽनुश्रवाध्ययनस्य प्रभविष्णुत्वमवगम्यते। अग्नेरनिगृह्यमाणत्वमुद्भावयितुं तन्मरुतां शब्द इवोत्सृष्ट बाण इव चपलेव च मूर्तितम्[4]।

---

१. 'In any case, she is their most gaceful creation, charm of which is unsurpassed in the descriptive religious lyrics of any other literature. Here there are no priestly subtleties to obscure the brightness of her form, and few allusions to the sacrifice to mar the natural beauty of the imagery.' by A. A. Macdonell, History of Sanskrit Literature, P. 81.

२. रथीव कशयाश्वाँ अभिक्षिपन्न् आविर्दूतान्कृणुते वर्ष्याँ अह।

ऋ० ५।८३।३॥

३. यदेषामन्यो अन्यस्य वाचं शाक्तस्येव वदति शिक्षमाणः।

ऋ० ७।१०३।५॥

४. ऋ० १।१४३।५॥

नैसर्गिकबिम्बयोजनातोऽतिरिक्तमिन्द्रवृत्रयोर्युद्धप्रसङ्गे उत्कृष्टानि बिम्बान्युपलभ्यन्ते । तद्यथा—

वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमवजग्मुरापः ॥ ऋ० १।३२।२

यदा पर्वते निवसन्तं वृत्रमिन्द्रोऽवधीत्तदा सशब्दं त्वरमाणा वत्साभि-धेनव इव प्रवहमाणा वारिधारा निम्नं समुद्रमभिदुद्रुवुः । अत्र कलकलं निनदन्ती वेगेन च प्रवहन्ती वारिधारा वत्सोत्सुकया धेन्वा प्रति-बिम्बिता । वैदिके समाजे गोः स्थानमतीव महत्त्वपूर्णमासीदित्यप्यनेना-वबुध्यते । नद्याः समुद्रेण सह संगमः साहित्ये जगति प्रायशः प्रिय-मिलनमिवोत्प्रेक्षितः । अत्र तु वैदिक्यां कल्पनायां गोवत्समिलनरूपेण सुताजनन्योर्मिलनमिव नदीसमुद्रसंयोगो दृष्टः । सर्वथा नूतनोऽयं बिम्बोऽद्यापि वैदिकदृष्टिपथस्य पावनत्वं साधून्मीलयति । एवमेव परशुना विच्छिन्नविटपस्येव इन्द्रवज्रप्रहारेण धराशायिनो वृत्रस्य वर्णनमपि ( ऋ० १।३२।५ ) लोकजीवनाय कवेरभिरुचिमुज्जृम्भते । तत्रैव देवेन्द्रस्य शस्त्रचालननैपुण्यं वृत्रस्य लघुत्वञ्च प्रकाशयितुमिन्द्रोऽश्वपुच्छ-रोम्णोपमितः—

अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः ।

ऋ० १।३२।१२

अश्वः प्रकृत्या स्वपुच्छं प्रायशो धुनोति । तस्मिन्क्षणे तु सोऽतीव-त्वरया तस्य संचालनं करोति यदा किमपि दंशादिकं तत्रोपविशति । शीघ्रमेव स स्वपुच्छरोम्णां तीक्ष्णाक्रामकप्रकम्पनैरेव तस्य स्थितिं न विसहते । कियत्स्वाभाविकं नूतनं चेदं बिम्बमद्यापि भावोद्दीपने क्षमतेतराम् ।

अमूर्तप्रस्तुतस्य स्थाने मूर्ताप्रस्तुतविधानेऽपि स्वाभाविकं रमणीयकं च बिम्बं प्रेक्षणीयम्—

'परा हि मे विमन्यवः पतन्ति वस्य इष्टये । वयो न वसतीरुप ॥

ऋ० १।२५।४

'यथा पक्षिणः स्वस्ववसतिं प्रत्युत्पतन्ति तथैवास्माकं निष्कोपा-श्रितवृत्तयोऽपि धनप्राप्तये धावन्ति' । अत्र मनुष्यस्यार्थलिप्सासारल्येनैव मूर्तिता ।

उपमातोऽतिरिक्तं वैदिककाव्यबिम्बेषु सन्ति एतादृशान्यपि स्थलानि यत्र रूपकातिशयोक्तिविधिना रूपकेण वा भावाभिव्यंजनं कृतम्। परमयं बिम्बनविधिः प्रायः आध्यात्मिकरहस्योन्मीलन एव प्रयुक्तः। तद्यथा—

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥

ऋ० १।१६४।२०

संसारोऽत्र वृक्ष इव कल्पितः। तत्र सहचरौ द्वौ पक्षिणौ जीवब्रह्मणी, सार्द्धमेव निवसतः। ब्रह्मपक्षी तु वृक्षस्य फलं सुखदुःखं केवलं पश्यति, किन्तु जीवपक्षी तत्सर्वमास्वदते। जीवब्रह्मणोः मित्रवदेकस्यामेव शाखायामवस्थितिस्तथापि निर्लिप्तत्वाद् ब्रह्मणः साक्षित्वं द्रष्टृत्वं सुखदुःखयोरभोक्तृत्वञ्च निरूपितानि, किन्तु जीवः सांसारिकेषु भोगेषु लिप्तः। सुखादीनामनुभविता चेति दार्शनिकी प्रवृत्तिः सुकरत्वेनाववुद्ध्यते। इत्थं, दार्शनिकगूढभावान् अपि वैदिककविः अतिसरलबिम्बनदिशा सम्प्रेषयति इति सुस्पष्टमेव। अस्मिन्नेव सूक्तेऽन्यत्र सर्वान् जीवान् पक्षिण इव सूर्यञ्च पितरं परमेश्वरमिव प्रतिबिम्बयन्निदं व्याकरोति यत् य इमं पितरं न वेत्ति स परमानन्दमपि न वेत्ति (१।१६४।२२)॥

## भाविकम्

भावनाप्रधानबिम्बनशिल्पमपि ऋग्वैदिके काव्ये हृद्यमुपलभ्यते। सर्वप्रथमं वात्सल्यभावस्योदात्तचित्रणमेव उदाहरामि, यत्र एषैव रूपकात्मिकी पद्धतिरवलम्बिता—

संगच्छमाने युवती समन्ते स्वसारा जामी पित्रोरुपस्थे।
अभिजिघ्रन्ती भुवनस्य नाभिं द्यावा रक्षतं पृथिवी नो अभ्वात्॥

ऋ० १।१८५।५

'पृथिव्याकाशौ सहोदरभ्रातृभगिन्याविवान्योन्यं संमिल्य संसारस्य केन्द्रं यथा धारयतस्तथैवास्माकं जनकजनन्यौ अपि बन्धुवत् परस्परं ससौहार्द्रं निवसेतां, तथा चात्मजस्य नाभिं प्रेम्णा परिचुम्बेताम्'। अत्र द्यावापृथिव्योः प्रेम पित्रोः प्रेमेव प्रतिबिम्बितम्। इत्थं, पारिवारिकप्रेम्णः सीमा आकाशवत् विस्तृता उदात्ता चोपकल्पिता। 'पृथिव्याकाशयोः सम्मिलनं भ्रातृभगिन्योर्मिलनमिव' इति बिम्बे ऋषीणां विराट्कल्पना

प्रादुर्भूता 'द्यावा भुवननाभेराघ्राणबिम्बे' अपि स्नेहस्य औदार्य्यं व्यापकत्वं वा मूर्तिते। एवमेव दिवारात्र्योर्वात्सल्यबिम्बनमपि द्रष्टव्यम्—

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुपधापयेते।
हरिन्यस्यां भवति स्वधावञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः॥

ऋ० १।९५।१

'पृथक्-पृथक् प्रयोजनवत्यौ भिन्नरूपिण्यौ द्वे स्त्रियौ विचरतः। ते द्वे दुग्धपायनेन अन्योन्यस्य वत्सं पोषयतः। एकस्या अङ्के मनोहरः श्यामवर्णो बालकः, अपरस्याश्चाङ्के उज्ज्वलवर्णः'! रात्रेर्गर्भादुत्पद्यमानस्य बालसूर्यस्य पोषणं दिवा विदधाति तदुत्पन्नस्याग्नेश्च पोषणं रात्रिः। इत्थं, दिवारात्रं पृथग्रूपगुणवत्। पर द्वयोरन्योन्यं सौहार्दं जगत्याः कल्याणहेतुकम्। काव्यबिम्बस्यादिमे युग एव वात्सल्यस्यैतादृशी विराट्-कल्पना भारतीयप्राचीनकवीनां चरित्रौदात्यमुद्घोषयति। अतः विद्वद्वर-केगीमहोदयस्येदं कथनं यत् 'अनुभूतेः सा प्रथमस्रोतस्विनी······रूपकाणां वक्रोक्तीनां सा निर्भीकवृत्तिः, कल्पनायाश्च तदुड्डयनम्···।'[1]

न केवलं वात्सल्यमपितु मानवस्येतरचित्तवृत्तयोऽपि सम्यग् विनिबद्धाः। दशममण्डलस्याक्षसूक्तमनया दृष्ट्या अत्यधिकं महत्त्वपूर्णं वर्तते। अनुतापदग्धस्य द्यूतकारस्य दयनीया दशा तस्यैव एकालापेन गुम्फिता। द्यूतव्यसनेन तस्य सर्वापि सुखशान्तिर्विनष्टा। वाञ्छन्नपि स तद्दुर्व्यसनं हातुन्नपारयति। प्रत्युत, अक्षासक्तेन तेन स्वकीया पतिव्रता पत्नी अपि परित्यक्ता (ऋ० १०।३४।२)। ततस्तस्यातीव शोच्या दशा प्रतिपन्ना—यथा श्वश्रूः द्वेष्टि, पत्नी गृहादपसारयति, न च कश्चिद्दयालुस्तस्य सहायतार्थमुत्सहते (ऋ० १०।३४।३)। अन्ये तस्य स्त्रियमालिङ्गन्ते, माता, पिता, भ्राता, सर्वेऽपि तं प्रति कथयन्ति यत् 'न जानीमो नयताबद्धमेतम्' इति[2]। अतः, आत्मीयोपेक्षितः समाजोपेक्षितश्च स द्यूतकार इतस्ततो भ्रमते। पत्नी माता चापरतो दुःखभागिन्यौ। अतो विवशः स रात्रौ चौरवृत्त्या धनं प्राप्तुमन्येषां गृहाण्युपयाति—

---

१. द्र०, 'प्राचीन भारतीय साहित्य' पृ० ५५।

२. ऋ० १०।३४।४।

जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्वस्वित् ।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥

ऋ० १०।३४।१०

अन्येषामलङ्कृताः स्त्रीः सुन्दराणि गृहाणि चावलोक्य स भृशं दूयते । तथापि, द्यूतस्य विनाशकृद् दुर्व्यसनं परित्यक्तुं स न प्रभवति तथा च रात्रौ शीतेन परिबाधमानो यत्रकुत्रापि अग्नेः समीपमेव सुप्त्वा निशां व्यत्येति ( ऋ० १०.३४।११ ) । इत्थं द्यूतकारस्य सूक्ष्मातिसूक्ष्मा मनोभावा साफल्येन प्रतिबिम्बिताः । अत्र सर्वत्र करुणाया मार्मिकी अभिव्यंजना सहृदयैरनुभूयते ।

अनेन सुस्पष्टं यत् वैदिककवीनां बिम्बयोजना लोकजीवनस्य तथ्यात्मकभावपूर्णचित्रणेन संवृद्धासीत् । अतः, श्री ओल्डनवर्गमहोदस्यायमारोपो यत् 'येषां पुरोहितानां सम्पर्क एव लोकजीवनेन सह न स्यात् तेषां काव्येषु लौकिकतत्त्ववर्णनं यथातथ्यं कथं भवितुमर्हति'[1] सर्वथा असङ्गतं मिथ्या चेति । ऋग्वैदिककाव्यस्य सत्यपि देवतापरकत्त्वे धर्मप्रधानत्वे च मानवजीवनस्येतरक्षेत्रसम्बन्धीनि उत्कृटानि बिम्बान्युपलभ्यन्त एवेति उपरि स्पष्टम् । बिम्बविन्यासपद्धति समालोच्येदं कथयितुं शक्यते यद् वैदिकी बिम्बात्मिका भाषा अतीव सरला लघुशब्दात्मिका वर्णनपरा चास्ति । विशेषणबिम्बानां प्रयोगस्तु अल्पेनैव यत्र-तत्र प्राप्यते[2] । मानवीकरणद्वारा प्रचुरा बिम्बनिर्मितिर्जाता । अलङ्कारेपूपमैव बिम्बसृष्टौ सर्वाधिकमुपात्ता । दार्शनिक-विचारगुम्फने तु रूपकबिम्बनं विहितम् । किन्तु यत्किमपि अतीव महत्त्वपूर्णं तत्त्वं वैदिककवेः काव्यबिम्बस्य वर्तते, तत्तु तस्य दृष्टेर्व्यापकत्वं कल्पनाया औदात्यञ्चेति ।



---

१. 'प्राचीन भारतीय साहित्य' पृ० ५५ ।

२. द्र०, ऋ० १०।३४।७, एवं संस्कृत के महाकवि और काव्य, पृ० २६, ( डॉ० रामजी उपाध्याय ) ।

# चन्दनमुनिप्रणीमार्जुनमालाकारम्

*डॉ० सत्यव्रतः*

हरियाणाप्रदेशान्तर्गते सरस्वतीपत्तने 'सिरसा' इति प्रख्याते नगरे १६१४ ख्रिष्टाब्दे लब्धजनुरिभ्यचरस्य केवलचन्द्रमुनेस्तनुजनुश्चन्दनमहाभागो वैश्यवंशसुलभं कुलागतं प्राज्यं वैभवमृद्धिं विहाय नववर्षीयेऽल्पीयसि वयसि तेरापन्थाभिधानस्य शासनस्याष्टमाचार्येभ्यः कालूगणिभ्यः दीक्षां परिगृह्य मुनित्वमापेदे ! पदवाक्यप्रमाणपारीणेभ्यो विद्वद्धौरेयेभ्यो विधिना संस्कृतं प्राकृतं शब्दशास्त्रं न्यायं वेदान्तमार्हतदर्शनं च सविशेषं चिरं पर्यशीलयत् नदीष्णतां च तत्राविन्दत् । इदानीं चोर्ध्वषष्टिरयं मुनिपुङ्गवो वैदुष्येण गाम्भीर्येणौदार्य्येण च प्रशस्यं पदमध्यास्ते साम्प्रतिकेषु संस्कृतकविषु । प्राकृतवाचा संस्कृतगिरा च काले काले स १२ गद्यपद्यात्मकान् ग्रन्थान् प्राणयत् । तद्विरचितमार्जनमालाकारं वर्णयामि ।

हिंसाहिंसयोर्निर्द्वन्द्वं द्वन्द्वं तीर्थाधिपतेर्महावीरस्वामिनोऽनुभावातिरेकं च प्रख्यापयज्जैनागमे प्रथितं मालाकर्तुरर्जुनस्य चेतोहरं वृत्तमुपाश्रित्य संदृब्धा 'आर्जुनमालाकार'[1]—नामधेया कृतिर्मुनिवर्य्याणां चन्दनमहाभागानां गद्यकाव्येषु प्रथमा । दण्डिबाणादिपण्डिततल्लजैः प्रवर्तितां रूढां गद्यशैलीमनुरुध्यापि प्रणीतं तदन्तर्वर्ति—शब्दाडम्बर—भाषासौष्ठववैदुष्यप्रख्यापनाप्रभृतिभ्यो दोषेभ्योऽपेतमिदं काव्यं प्रात्यग्र्येण माधुर्य्येणापरैश्च गुणैस्तुङ्गं किमपि पदं चुम्बति वर्तमानगद्यबन्धेषु । तत्र कथासारोऽधोलिखितः ।

षड्भिर्लम्पटचेलैर्गोष्ठीलैः प्रसभं गमिताया जायाया निकारेण न्यक्कृतो मुद्गरपाणेर्यक्षस्य वशंवदो विनीतचरो मालाकारोऽर्जुनो वशासप्तान् जनान् विशस्य प्रत्यहं सप्तजनव्यापादव्रतमाददे । पञ्चभिर्मासैः स सहस्राधिकान् जनान् यमधानीं प्रापयामास । नागराणां हाहाकारवेण निभृतं राजगृहं चाचिरेण श्मशानकक्षां व्यगाहत । पादरजोभिर्देशा-

---

1. १९६९ ख्रिष्टाब्दे नेपालान्तर्वर्तिनो विराटनगरात्प्रकाशितम् ।

न्तराणि पुनाना महावीरप्रभवोऽर्जुनस्य कर्मभुवं विनयशीलोद्यानमेकदा विभूषयाञ्चक्रिरे। परमर्जुनभिया कोऽपि राजगृहवास्तव्यस्तीर्थेशानां पादौ प्रणम्यात्मानं कृतिनं कर्तुं न समुत्सेहे। यः कोऽपि नगरान्निर्गच्छति स सपदि कृतान्तकवलतां गच्छति। परोपकरणीकृतकायस्याहिंसापरायणस्य सुदर्शनस्य सर्वभूतेषु मैत्र्येण आगस्स्वपि कारुण्येन च द्रवीभूय घातुकोऽर्जुनः क्रौर्यमपहाय वर्द्धमानप्रभोर्भागवतीं प्रव्रज्यां जग्राह, अनुशयदवेन निचितानि कर्माणि दंदह्य कालान्तरे सिद्धतां चेयाय।

जन्मान्तरे संचितानि पुण्यानि वा पापानि वा सदसतां संगमश्च प्राणभृतां हेयतायामहेयतायां वा कारणतां यान्तीति प्रकामं प्रख्याप्यतेऽनेन वृत्तेन। आगमिकमिदं वृत्तं प्राञ्जलया शैल्या कोमलकान्तया प्रौढिमयुतया भाषया च कविना तथा प्राणायि यथार्जुनमालाकारं गुणाढ्या प्रशंसहितां प्रपेदे विदाम्। गद्यमुकुटायमानान् ग्रन्थानुपजीव्यापि मुनिवर्यैर्निरमायि कोऽपि नवीनो निगमो (मार्गो) यत्र सारल्यं प्रौढिमा च सरसं सायुज्यमापद्येते। विलोक्यन्ते ऽत्र गद्यकाव्यस्य समग्राणि तत्त्वानि कामं, परं कविना शास्त्रमन्धवन्नन्वकारि। आर्जुनमालाकारस्य नेता कुलीनः प्रख्यातो वा नास्ति। क्षुद्राचारोऽर्जुनोऽत्र नेतृपदं भजते यः प्राणहरीं वृत्तिं परिहाय वन्द्यां पद्यां विन्दते। प्राकृतिकपदार्थानां सविस्तराणां वर्णनानामभावोऽपि कवेः स्वातन्त्र्यं व्यनक्ति। स्वीयैर्गुणैः कमपि गरिमाणं बिभर्त्ति आर्जुनमालाकारम्। यत्सत्यमीदृक्षा रचना अद्यत्वे विरलविरलाः नाना-गुणोपेतं काव्यमिदं प्रणीयाधमर्णतां नीता जैनधर्मपरायणाः।

# चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम्

*डॉ० अयोध्याप्रसाद द्विवेदी*

कविः प्रथमं पश्यति ततो गुम्फति। भवति विशेषः सामान्यजनापेक्षया तस्य दर्शने, यतस्स कस्यचिदपि वस्तुतत्त्वस्य सूक्ष्मं निरीक्षते। नहि यत्र साधारणो जनः प्रभवति। अन्यथा, सर्वोऽपि लोकः कलाकारपदवीमवाप्नुयात्। एवमनुभूतिवेलायां कलाकारः ऋषिकल्पो द्रष्टा, अनन्तरं कविः, ह्यसौ स्वानुभूतमेव तत्त्वं शब्देषूपनिबध्नाति। अतः काव्यसृष्टये दर्शनवर्णनयोः अनुभूत्यभिव्यक्त्योर्वा अपरिहार्यत्वम्। तत्राभिव्यक्तावपि बिम्बोक्तेः प्रभविष्णुत्वमेव काव्यमलङ्कुरुतेतराम्। शाश्वतिकेऽप्यनुभूतितत्त्वे बिम्बोक्तिमन्तरेण कुतो धरायां काव्यप्रादुर्भावः? लौकिककाव्यनिर्मितेर्धिया स्वस्य प्राथमिकं श्रेयो महर्षेर्वाल्मीकेरेव[1]। क्रौञ्चवधस्य घटना सामान्या सुविदितासीत्। प्रायः सर्व एवानुदिनं स्वजीवने एतादृशानि वृत्तानि पश्यति शृणोति च, परं न तैस्तथा प्रभावितो दृश्यते। वाल्मीकिस्तु तेन क्रौञ्चवधवृत्तेनाधिकं विद्रावितः। भूमौ लुठन्तं शोणितसिक्तं मृतप्रायं क्रौञ्चमवलोक्याप्रत्याशितवियोगविधुरायाश्च क्रौञ्च्या करुणक्रन्दनमाकर्ण्य महर्षेः करुणापगा विगलिता—तस्य शोकानुभूतिर्बिम्बोक्तौ विनिःसृता[2]। इत्थं स्पष्टमेव यत् कवेर्दर्शनस्यानुभूतेर्वा याथार्थ्यं तत्काव्यबिम्बस्याधारभूमिः। यस्य कवेर्दर्शनं यावदेव सूक्ष्मं गहनमुदात्तञ्च तस्य काव्यन्तावदेव गम्भीरं विशदं प्रभविष्णु आकर्षकञ्चेति। अनुभूतेरविकलोपस्थापने वर्णनोपकरणानां तत्सामञ्जस्यमनिवार्यम्। अनेन दर्शनबिम्बनयोरनुपमसमन्वयेनैव कलाकारस्य समग्रापि अनुभूतिर्निखिलकाव्यसम्पदा सहैवमभि-

---

१. दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुतिः।
तथाहि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः॥
नोदिता कविता लोके यावज्जाता न वर्णना॥ भट्टतौट॥

२. रामा० १।२।४०, रघुवंशम् १४।७०, ध्वन्यालोकः १।५॥

व्यक्तिमादधाति यत्सहृदस्य चित्तपटले पदार्थस्य प्रत्यक्षवदुपस्थितिर-नायासमेव जायते[1]। एषा काव्यार्थस्य प्रत्यक्षतुल्योपस्थितिरेवादिकवे-र्बिम्बविषयक आदर्शः। महाकवेरिममेव काव्यबिम्बादर्शमधिकृत्यात्रो-दाहृतैः कतिपयबिम्बैः हृदयवन्तस्समीक्षकास्स्वयमेवादिकवेर्बिम्बन-नैपुण्यमनुभविष्यन्ति।

## स्वभावोक्तिबिम्बम्—

महाकवेर्लेखन्या स्वभावोक्तिविधायां प्रकृतेर्बाह्यरूपस्य याथातथ्या-ङ्कनं सर्वातिशायि विद्यते। हेमन्तन्तु चित्रयन्कविः कथयति यत् 'शीताधिक्येन शरीरं परुषं भवति, धरा शस्यैः शोभते, जलमुपभोग्यं नास्ति, अग्निश्चाधिकं रोचते' (३।१६।५)। 'प्रकृत्या शीतः पश्चिमो वायुः सम्प्रति हिमविद्धत्वाद् द्विगुणशीतलः' (३।१६।१५)। प्रातःकालिकं हेमन्तर्तोर्दृश्यञ्चातीव चारुः—

बाष्पच्छन्नान्यरण्यानि यवगोधूमवन्ति च।
शोभन्तेऽभ्युदिते सूर्ये नदद्भिः क्रौञ्चसारसैः॥
खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः।
शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः॥
(३।१६।१६-१७)

अवश्यायनिपातेन किञ्चित्प्रक्लिन्नशाद्वला।
वनानां शोभते भूमिर्निविष्टतरुणातपा॥
स्पृशन् सुविपुलं शीतमुदकं द्विरदः सुखम्।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम्॥ (३।१६।२०-२१)

अत्र अन्तिमं 'वन्यद्विपस्य करसङ्कोचबिम्बम्' नितान्तं हृदया-वर्जकम्। अनेन हेमन्तर्तोः शीताधिक्यं प्रतिपादितम्। प्रयोजनमिदं कवेः 'अत्यन्ततृषितः, इति विशेषणेनाधिकं विशिष्यते। सम्पूर्णो परिसरोऽतीव सूक्ष्मतया प्रत्यङ्कितो येन हेमन्तर्तोः स्वाभाविकं दृश्यमनायासमेव नयनगोचरतामायाति। सम्प्रति दृश्यतामेकं वर्षादृश्यम्—

---

१. चिरनिर्वृत्तमप्येतत् प्रत्यक्षमिव दर्शितम्॥ रामा० १।४।१८॥

श्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयातं शैलापगाः शीघ्रतरं वहन्ति ॥ ४।२८।१८

समुद्वहन्तः सलिलातिभारं बलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ ४।२८।२२

प्रहर्षिताः केतकिपुष्पगन्धमाघ्राय मत्ता वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्राः सार्धं मयूरैः समदा नदन्ति ॥ ४।२८।२८

धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं शनैर्मदं षट्चरणास्त्यजन्ति ॥ ४।२८।२९

मेघाः समुद्भूतसमुद्रनादा महाजलौघैर्गगनावलम्बाः ।
नदीस्तटाकानि सरांसि वापीर्महीं च कृत्स्नामपवाहयन्ति ॥ ४।२८।४४

वर्षप्रवेगा विपुलाः पतन्ति प्रवान्ति वाताः समुदीर्णवेगाः ।
प्रणष्टकूलाः प्रवहन्ति शीघ्रं नद्यो जलं विप्रतिपन्नमार्गाः ॥ ४।२८।४६

घनोपगूढं गगनं न तारा न भास्करो दर्शनमभ्युपैति ।
नवैर्जलौघैर्धरणी वितृप्ता तमो विलुप्ता न दिशः प्रकाशाः ॥ ४।२८।४७

'गिरिनदीनां द्रुतगामित्वम्, गैरिकादिधातुयुक्तत्वेन तज्जलानां च ताम्रवर्णता, प्रवाहपतितत्वात्सर्जकदम्बादिविविधवन्यपुष्पाणामपि प्रवहणम्, पार्श्वमेव तत्रत्यानां मयूराणां च निनादः, नवाम्बुभरवाहिनां नदतां मेघानां पर्वतशिखरेषु विश्रम्य विश्रम्याग्रतो गमनम्, पर्वतीयप्रपातानां शब्दः, केतकिकुसुमगन्धमाघ्राय मत्तानां गजेन्द्राणामुन्मत्तनादः, कदम्बशाखासु लम्बमानानां पुष्परसलुब्धानां मधुकराणां धारापाताभिघातः, तेन च तेषां शनैर्मदत्यागः, वेगशालिनां वातानां प्रवहणं सममेव तीव्रविपुलवृष्टेश्चपातः' इति बिम्बमेखला अतीव स्वाभाविकी। अतएव सर्वत्र 'नदीमयमिव' दृश्यं प्रतिभाति। न केवलमेतावता, अपितु दिनेऽपि घोरनिशाया इव दशा सञ्जाता। तद्यथा—'कृष्णमेघैर्गगनमाच्छन्नं, सूर्यः तिरोहितः, अतः सर्वत्र तिमिरानुलिप्ता दिशो न प्रकाशन्ते नवीनजलधाराभिर्धरा कामं वितृप्ता चेति' अन्तिमसंश्लिष्टबिम्बद्वारेण कविः वर्षाविषयकं स्वाशयं भृशं पुष्णाति। पूर्वोक्तानि सर्वाण्यपि बिम्बानि अत्र पर्यवस्यन्ति। 'नवैर्जलौघैर्धरणी वितृप्ता'

इदमेव प्रमुखं वक्तव्यं यदर्थमतीवप्रभावकारि वार्षिकं संश्लिष्टविम्बविधानं विहितमस्ति।

विम्बानीमान्यालोच्य कथयितुं शक्यते यदादिकवेः प्राकृतिकविम्बन-कलायाम् ऋग्वैदिककाव्यबिम्बस्य प्रभावो लक्ष्यते। प्रकृतिं प्रति महर्षे-र्वाल्मीकेर्मनसि महती संवेदनशीलता वर्तते। अस्माद्धेतोरेवास्य विम्बन-कर्मणि प्रकृतेर्विविधरूपाणाम्—ऋतु-वन-पर्वत-नदी-सरोवर-मेघ-गज-मयूर-भ्रमरादीनां रमणीयं संश्लिष्टचित्रं प्राप्यते, यत्र समग्रेव रूप-रस-गन्ध-स्पर्श-शब्दवृत्तीनां तृप्तिर्जायते। सकलर्तुवर्णनेषु ईदृशानां विम्बानां बाहुल्यं विद्यत एव। तथापि, चाक्षुषबिम्बानां प्राचुर्यं सर्वमतिक्रमते। ततोऽनन्तरं ध्वनिबिम्बबाहुल्यं वाल्मीकेर्वैशिष्ट्यम्।

सम्प्रति दृश्यतामेकोऽर्धनिशाया निस्तब्धो बिम्बः।

> निष्पन्दास्तरवः सर्वे निलीना मृगपक्षिणः।
> नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन॥ १।३४।१५
> उत्तिष्ठते च शीतांशुः शशी लोकतमोनुदः॥ १।३४।१७

अनेन बिम्बेन पाठकस्य समक्षं भारतीयार्धरात्रस्य प्रशान्तं रूपमुद्भवति।[1]

प्रकृते रामणीयत्वचित्रणाद्व्यतिरिक्तं कस्यचिदपि वस्तुनो रूपाङ्कने तस्य क्रियाव्यापारोल्लेखने वा वाल्मीकिरतीव निष्णातः। भवतु नाम कबन्धरक्षसो भयङ्कररूपवर्णनम्[2] अथवा वनयायिनो रामस्य पौरैरनु-गमनम्[3], सर्वत्र तस्य बिम्बनचातुरी परिलक्ष्यते।

आदिकवेर्बिम्बनशिल्पस्य महत्त्वपूर्णं वैशिष्ट्यमिदं वर्तते यत्स

---

1. Study in Ramayan, P. 128, K. S. Ram swami Śastri.

२. रामा० ३।६९।०३०-३२।

३. पार्श्वतः पृष्ठतश्चापि लम्बमानास्तदुन्मुखाः।
वाष्पपूर्णमुखाः सर्वे तमूचुर्भृशनिःस्वनाः॥
संयच्छ वाजिनां रश्मीन्सूत याहि शनैः शनैः।
मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति॥
(रामा० २।४०।२१-२२)

केवलं प्रकृतेर्बाह्यरूपं कस्यचिद्वा वस्तुनो वृत्तस्य वा क्रियाकलापं याथातथ्येन ऋजुनैव चित्रयित्वा न विरमति, प्रत्युत पात्राणां मनोभावानुरूपं सम्पूर्णमपि दृश्यं भावनात्मकदिशा मनोवैज्ञानिकदृष्ट्या च नव्यं रूपं प्रदायोपस्थापयति। भरतस्य स्वप्नबिम्बमस्यानुत्तमसुदाहरणम्—

स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम्।
पतन्तमद्रिशिखरात् कलुषे गोमये ह्रदे॥ २।६६।८
प्लवमानश्च मे दृष्टः स तस्मिन् गोमये ह्रदे।
पिबन्नञ्जलिना तैलं हसन्निव मुहुर्मुहुः॥ २।६६।६
ततस्तिलोदनं भुक्त्वा पुनः पुनरधःशिराः।
तैलेनाभ्यक्तसर्वाङ्गस्तैलमेवान्वगाहत ॥ २।६६।१०
स्वप्नेऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि।
उपरुद्धां च जगतीं तमसेव समावृताम्॥ २।६६।११

महाराजस्य दशरथस्य मृत्युः यदायोध्यायां घटिताः, तद्रात्रावेव स्वमातुलगृहस्थेन भरतेनायं स्वप्नोऽदर्शि। 'मुक्तकेशस्य विवर्णस्य च दशरथस्य पर्वतशिखराद् गोमये सरसि पतनं तत्रावगाहनं वा, हसता तेनाञ्जलिना तैलपानम्, अधःशिरसा च तेन तिलोदनभक्षणम्, तस्य तैलाभ्यङ्गं तदवगाहनं वा, सागरस्य शुष्कता, चन्द्रमसो नभसो भुवि पतनम्, सकलचराचरस्य च गाढेन तमसावरणम्' इति बिम्बानि साक्षादवचेतनोद्भूतत्वेनातीवस्वाभाविकानि। एभिर्यत्रैकतो भरतस्य मानसी अशान्तिः अन्तर्द्वन्द्वं वा प्रतीयेते तत्रैवापरतो राज्यस्य भीषणा विपदपि संसूच्यते। 'समुद्रस्य शुष्कत्वकल्पना चन्द्रमसश्च पृथिव्यां पतनकल्पना' इति प्रकृतेरसंभवबिम्बविधानद्वयेनात्र कविर्विपुलपरिवर्तनं सङ्केतयति। वस्तुतः, अनया रीत्या पात्राणां मनोभावान् पाठकानां पुरतः प्रत्युपस्थापने महाकवेर्वाल्मीकेरेव प्रथमो महत्तमः काव्यबिम्बात्मकः प्रयास इत्यत्र नास्ति अत्युक्तिलेशोऽपि। अतोऽनया दिशा वैदिककवेरपेक्षयादिकवेरयं बिम्बनप्रकारो विशेषतस्समादरणीयस्तदुत्कृष्टत्वात्[1]।

---

१. द्र०, Imagery in the Mahabharata, S. Bhattacharya, P. 91.

वक्रोक्तिबिम्बम्

अस्यां श्रेण्यां सर्वाधिकमुपमायाः प्रयोगः प्राप्यते। एतादृशेषूपमामूलकबिम्बेषु प्राकृतिकोपमानानाम्—आकाश-सूर्य-चन्द्र-तारा-विद्युत्-पर्जन्य-वृष्टि-नीहार-समुद्र-सरित्-सारस-सर्प-मृग-मयूर-मत्स्यादीनां प्रामुख्यमस्ति। कतिपयान्यत्रोपस्थाप्यन्ते—

सतुषारावृतां साभ्रां पूर्णचन्द्रप्रभामिव।
मध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव॥ १।४९।१५

गौतमस्य शापेन अदृश्या किन्तु देदीप्यमाना तपस्विनी अहल्या मेघतुषारावृता पूर्णचन्द्रप्रभेव नीरसंक्रान्ता अस्पृश्या सूर्यप्रभेव च शोभते। अत्र मेघतुषारावृतस्य पूर्णचन्द्रस्य जलान्तःप्रविष्टस्य दिनकरकिरणस्य च बिम्बम्।

अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि।
उद्यानभूमिमागम्य तारा इव घनान्तरे॥ १।३२।१४

कुशनाभस्य शतकन्यकाः मेघान्तरिताः तारागणा इवोद्याने विराजन्ते। उपवने वृक्षलतागुल्मादीनामवरोधकत्वात् कन्यानां सम्पूर्णं सौन्दर्यं नोद्भासते। मेघखण्डेषु तारानिकरा अपि कदाचित् प्रकाशन्ते कदाचिन्नाप्रकाशन्ते।

छिन्नाभ्रैरिव संवीतं शारदं चन्द्रमण्डलम्।
मुहूर्तादेव ददृशे मुहुर्दूरात्प्रकाशते॥ ३।४४।७

धनुष्पाणी रामो मृगं मारीचमनुधावति। पलायमानश्च सभीत इव मायामृगः कदाचिद्रामस्य दूरस्थः कदाचिच्च पार्श्वस्थो भवति। कदाचिदुपर्याकाशे ऊर्ध्वमुत्प्लवते, कदाचित्सम्मुखमेव प्रकटितो भवति कदाचिच्च वनराजिषु तिरोदधते। इमामेव स्थितिमुद्भावयितुमिह वाल्मीकिर्मेघखण्डेष्वच्छस्य शरत्कालीनस्येन्दोश्चित्रं प्रस्तौति यदुड्डीयमानेषु मेघेषु कदाचिद् दृश्यते कदाचिच्चादृश्यतां याति।

कशाभिरिव हैमीभिर्विद्युद्भिरभिताडितम्।
अन्तस्तनितनिर्घोषं सवेदनमिवाम्बरम्॥ ४।२८।११
नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभाति मे।
स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी॥ ४।२८।१२

बालेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नवशाद्वलेन ।
गात्रानुपृक्तेन शुकप्रभेण नारीव लाक्षोक्षितकम्बलेन ॥ ४।२८।२४

'त्रिपुराकाशोऽत्र सव्यथः उत्प्रेक्षितः । मेघगर्जनद्वारा स स्वकीयामन्तर्व्यथां प्रकटयति । विद्युत्कशाप्रताडनं तत्र हेतुत्वेनोत्प्रेक्षितम् । नीलाभ्रेषु दीप्यमाना तडित् रावणस्याङ्के स्थिता साध्वी सीतेव प्रतिभाति । सेन्द्रगोपा नवशाद्वला भूमिः लाक्षारसाङ्किता सोत्तरीया नारीव प्रतीयते ।' एषा बिम्बत्रयी वियुक्तरामस्य मनोदशानुरूपा एव स्थाने सुशोभते । एकमेव प्रस्तुतं—विद्युत् पृथक्-पृथक् क्रमशः 'हेमीकशा', 'सीता' चेत्यप्रस्तुतद्वयेन प्रतिबिम्बितम् । उभयत्र नीलाभ्रेषु संदीपितायाश्चपलायाश्चित्रन्तु समानमेव । किन्तु प्रथमे मेघगर्जनाया नादबिम्बमपि संश्लिष्टमस्ति, द्वितीये त्वाकाशपथेन राक्षसराजेनापहृतायाः सीताया बिम्बमतीव हृदयहारि यद्रामस्यावचेतनात्सहजमेव विनिःसृतम् ।

शोकसन्तप्तस्य महाराजदशरथस्यापि रूपमुल्लेख्यमस्ति यत्र स उपरक्तादित्य इव, भस्माच्छन्नोऽग्निरिव, निस्तोयं तटाकमिव प्रत्यङ्कितः ।[1]

एवमेव ब्रह्मर्षिणा वसिष्टेन पराजितस्यातो विलज्जितस्याशक्यस्य च राजर्षेविश्वामित्रस्य दैन्यरूपमपि बिम्बगुच्छेन निरूपितं यत्र स्वसैन्यं पुत्राणां शतं च विनाशितं दृष्ट्वा स 'निर्वेगः समुद्र इव, भग्नदंष्ट्र उरग इव, उपरक्त आदित्य इव, लूनपक्षश्च द्विज इव' ( १।५५।६-१० ) हृतसर्वबलोत्साहस्सन् निष्प्रभृतां प्रपेदे । कोपाविष्टां कैकेयीम् अपि—

लतामिव विनिष्कृत्तां पतितां देवतामिव ।
किन्नरीमिव निर्धूतां च्युतामप्सरसं यथा ॥
मायामिव परिभ्रष्टां हरिणीमिव संयताम् ।
करेणुमिव दिग्धेन विद्धां मृगयुना वने ॥ २।१०।२४-२५

इत्यादिबिम्बगुच्छेन कविश्चित्रयति । एभ्यो भावनाप्रधानबिम्बेभ्योऽतिरिक्तं बौद्धिकमपि बिम्बमुपलभ्यते[2] । एतादृशेषु बिम्बेषु कविर्नकिमपि

---

१. रामा० २।३४।३ ॥

२. द्र०, Some concepts of the Alenkarshastra, Dr. Raghavan, P. 67.

विस्तरेण कथयति अपितु तत्र सचेतोभिः प्रतीयमानमनुमीयते। तद्यथा—

अविसह्यातपो यावत्सूर्यो नातिविराजते।
अमार्गेणागतां लक्ष्मीं प्राप्येवान्वयवर्जितः॥ ३।८।८

'अन्यायोपार्जितेन धनेन संयुक्तो दुष्कुलीनो मनुष्य इव यावत् सूर्यस्य तेजोऽसह्यं न जायते' इति कथनं रामस्य वर्तते यः सुतीक्ष्ण-मुनेराज्ञामादाय प्रातरेव तस्याश्रमादग्रे प्रस्थातुं समीहते। अस्मिन्बिम्बे आतपस्य तीव्रत्वं कुमार्गादागतेन धनोष्मणा मूर्तितम्। अन्यायिनो धनं नहि परार्थम्, अपितु स्वार्थमेव बोभुज्यते। आपाततस्तु तत्समृद्धेस्ते-जोऽतीव प्रभावि किन्तु मध्याह्नतेज इव तच्छयिष्णु विनाशकारि च। प्राभातिकः सायन्तनश्च सूर्यातप एव प्रियङ्करस्सुखदश्च भवति। तथैव सन्मार्गोच्छनैः शनैरागतैव लक्ष्मी शोभतेतराम्। तया एव समाजस्य राष्ट्रस्य च हितं संभवति। अनेन बिम्बेन वाल्मीकेरियं धारणा बलवत्प्रस्फुरति यद्धर्मानुकूलमेवार्थसञ्चयो वरेण्यो न त्वधर्मैरीत्येति।

उपमानानां पौनःपुन्यप्रयोगेणोत्तेजनक्षमता बिम्बस्य परिसमाप्यते। चन्द्र-हंस-मीन-पङ्कजादीन्येतादृशान्येव चिरोपभुक्तान्युपमानि सन्ति। किन्तु एभिरप्युपानैरादिकविः स्वप्रतिभाबलात् सर्वथा नूतनबिम्ब-निर्मितौ प्रभवति। एकमुदाहरणमिह प्रकृतमनुसृत्य प्रस्तवीमि—

सुस्राव नयनैः स्त्रीणामस्रमायाससम्भवम्।
मीनसङ्क्षोभचलितैः सलिलं पङ्कजैरिव॥ २।४०।३५

अत्र रामस्य वनगमनकालेऽतिशयदुःखिनीनां नारीणां चञ्चलनेत्रेभ्यो निस्सरन्तोऽश्रुबिन्दवो मीनसंस्पर्शचलितेभ्यः पङ्कजेभ्यः पतद्भिर्जल-बिन्दुभिरुपमिताः। अस्य पठनेन जलाशयस्य तत्परिसरो नयनगोचरी-भवति यत्र कमलानि विकसितानि सन्ति। तत्पार्श्वमेव मीना इतस्ततो विपरिवर्तन्ते येन कमलोपरि स्थिता जलबिन्दवोऽधःपतन्ति। अत्र मीनपदस्य श्लेषोपि बिम्बस्य चारुतायै हेतुः। परं कुत्रचिच्छ्लेषस्याना-वश्यको मोहः बिम्बस्य भास्वरतां विकरोति। तद्यथा—कुपितो दुन्दुभीति-नामा राक्षसो यदा युयुत्सया किष्किन्धायां बालिनमभ्युपागमत्तदा तस्य रूपं भयङ्करमहिषस्येवासीत्। तस्य शृङ्गे अतितीक्ष्णे आस्ताम्। स

वार्षिकस्य जलभरिताकाशस्थमेघस्येव प्रातीयत । 'तदानीं स पार्श्वस्थान् वृक्षानभाङ्क्षीत्, खुरैः पृथ्वीं व्यदारयत्, विषाणेन च किष्किन्धाया द्वारमुद्घाटयितुं मुहुर्मुहुरुल्लिलेख । तस्यां दशायां बाली सर्वाभिस्स्त्रीभिस्सह तारासहितश्च चन्द्रवदन्तःपुरेभ्यो बहिराजगाम'—

समीपजान् द्रुमान् भञ्जन् वसुधां दारयन् खुरैः ।
विषाणेनोल्लिखन् दर्पात् तद्द्वारं द्विरदो यथा ॥
अन्तःपुरगतो बाली श्रुत्वा शब्दममर्षणः ।
निष्पपात सह स्त्रीभिस्ताराभिरिव चन्द्रमाः ॥
(४।११।२५-२८)

अत्रान्तिमायां पङ्क्तौ उपमानचन्द्रो बालिने प्रयुक्तः ।

आकाशे तारागणैस्सह चन्द्रस्योदयस्तु समीचीनः किन्त्वत्रप्रकृते यदा शत्रुः द्वारि आक्रमते तदा बालिने शीतलस्य चन्द्रमसः कल्पना औचित्यन्नावहति । अस्मिन्प्रयोगे 'तारा' इत्यत्र श्लेषमोह एवाधिकं विद्यते[1] । वस्तुतोऽत्र प्रस्तुतदुन्दुभिरूपवर्णनमेवाप्रस्तुतमेघद्विरदापेक्षयाधिकं प्रभविष्णु । अतो नेदं वक्तुमसामयिकं यद्वाल्मीकेः लेखनी वक्रोक्तिबिम्बननिर्मित्यपेक्षया स्वभावोक्तिबिम्बविधान एवाधिको विशिष्यते । इत्थमेव 'रामेण मारितैर्युद्धस्थले पतितैः रक्तार्द्रैर्मुक्तकेशैः राक्षसैः तत्स्थली तथैव भरिता यथा कुशैर्यागवेदी पूरिता भवति' (३।२६।३३) । अत्रापि यज्ञोपकरणैः पावनकुशैः मृतरक्षसां सादृश्यं हृद्यत्वं न प्रतिपद्यते ।

व्यावहारिकक्षेत्रेभ्यो गृहीता अतिपरिचिता अपि बिम्बा अद्यापि स्वसंप्रेषणतया नवीना इवाभान्ति । 'जटायू राममवादीद्यत्त्वं यां (सीताम्) औषधिमिवान्वेष्यसि तां रावणोऽपाहार्षीत्' (३।६७।१५) । सीताया अन्वेषणे रामस्योत्कण्ठां व्यग्रतां सूक्ष्मनिरीक्षणत्वराम् अनन्यत्वादिकञ्च मूर्तयितुम् 'औषधेरन्वेषणबिम्बम्' अतीव समीचीनम् । अनेन सीताया महत्त्वं रामस्य च कृते तस्या प्राणप्रियत्वमपि गम्यते ।

---

1. द्र०, **Remarks on Similies in Sanskrit Literature, J. Gonda, P. 63.**

'पुत्रोत्पत्तिहेतुकं देवनिर्मितं पायसं प्राप्य महाराजो दशरथस्तथैव मुमुदे यथा निर्धनो धनमासाद्य मोदते' (१।१६।२३)। 'हे राम ! यावत्त्वं वनं न प्रयासि, तव पिता तावन्न स्नास्यति न च भोक्ष्यते' इति कैकेय्या निगदितो रामः कशाघातेन प्रेरितोऽश्व इव वनं प्रत्यत्वरत— 'कशयेव हतो वाजी वनं गन्तुं कृतत्वरः' (२।१६।१८)।

उपमाया अनन्तरं रामायणे बिम्बविधानदृष्ट्या रूपकस्य द्वितीयं स्थानं प्रमीयते। अस्य प्रकारद्वयमुपलभ्यते। दीर्घरूपकबिम्बं लघुरूपकबिम्बञ्च। प्रथमः प्रकारः पात्राणां दीर्घवार्तालापप्रसङ्गेषु प्राप्यते। यथा—रावणमारीचयोर्वार्तालापे मारीचेन सीतापहरणरूपकर्मणो वार्यमाणो रावणः अपराजेयस्याद्भुतशक्तिसम्पन्नस्य रामस्यैश्वर्यवद्रूपं 'राघवगन्धहस्ती' (३।३१।४६-४८) इति रूपकबिम्बेन स्मारितम्। अनेनैव विधिना दशरथस्य तीव्रशोकोऽपि सागरबिम्बेन-मूर्तितः (२।५६।२६-३२)। किन्तु नेदं विस्मर्त्तव्यं यदीदृशेषु बिम्बेषु प्रायः कृत्रिमता विद्यते। मरणासन्नदशरथस्य मुखेन सायासं बौद्धिकी सर्वाङ्गीणसागरबिम्बकल्पना अस्वाभाविकी प्रतीयते। द्वितीयस्तु प्रकारः सामान्यतः सर्वत्र प्राप्यः, यद्यथा—४।३०।४६,५४ इत्यत्र द्रष्टव्यम्।

मानवीकरणपद्धत्यापि बिम्बनिर्मितौ प्रायः रूपकाणामुत्प्रेक्षाणाञ्च समाश्रयणं चमत्कारावहम्। यथा सीताहरणकाले सर्वोपि प्रकृतिर्विह्वला विद्यते—

> उत्पातवाताभिहता नानाद्विजगणायुताः।
> मा भैरिति विधूताग्रा व्याजह्रुरिव पादपाः॥
> नलिन्यो ध्वस्तकमलास्त्रस्तमीनजलेचराः।
> सखीमिव गतोत्साहां शोचन्तीव स्म मैथिलीम्॥
> समन्तादभिसंपत्य सिंहव्याघ्रमृगद्विजाः।
> अन्वधावंस्तदा रोषात्सीतां छायानुगामिनः॥
> जलप्रपातास्रमुखाः शृङ्गैरुच्छ्रितबाहुभिः।
> सीतायां ह्रियमाणायां विक्रोशन्तीव पर्वताः॥
> ह्रियमाणां तु वैदेहीं दृष्ट्वा दीनो दिवाकरः।
> प्रविध्वस्तप्रभः श्रीमानासीत्पाण्डुरमण्डलः॥ (३।५२।३३-३७)

'पादपानामभयदानम्, नलिनीनां शोकाकुलत्वम्, सिंहादीनां रोषात् सीताच्छायानुगामित्वम्, पर्वतानां विक्रोशनम्, दिवाकरस्य दैन्यञ्चेति बिम्बकल्पनेनात्र रावणस्य महती अनर्थकारिता रामस्य च घोरा विपत् निदर्शिते। एवंविधा उदात्ता मार्मिक्यश्चानुभूतयस्सम्पूर्णेपि रामायणे बिम्बमाध्यमेनैवाभिव्यक्तिमाप्नुवन्ति। यत्र तत्र अप्रस्तुतप्रशंसासमासोक्तिनिर्मितबिम्बान्यपि मनोरमाणि'[1]।

### भाविकम् :—

पूर्वमेवोक्तं यद्भावनायाः प्राधान्यन्त्वादिकवेर्बिम्बयोजनायां सार्वत्रिकमेव। यदूक्तयोर्द्विविधभेदयोरन्तर्विश्लेषिते बिम्बविधाने स्पष्टमेव। इह तु केवलं भाविकालङ्कारपरं बिम्बविधानमेव सङ्क्षिप्यते यत्र भावनातिरेकाद् भूतभाविनोर्विषयिणी काव्यरूपसंपद् भावकमाह्लादयति। अनया दिशा दशरथविलापस्यैकोऽतीव हृदयावर्जकः प्रसङ्गोऽत्र उद्ध्रियते—

> यः सुखेनोपधानेषु शेते चन्दनरूषितः।
> वीज्यमानो महार्हाभिः स्त्रीभिर्मम सुतोत्तमः॥
> स नूनं क्वचिदेवाद्य वृक्षमूलमुपाश्रितः।
> काष्ठं वा यदि वाश्मानमुपधाय शयिष्यते॥
> उत्थास्यति च मेदिन्याः कृपणः पांसुगुण्ठितः।
> विनिःश्वसन्प्रस्रवणात्करेणूनामिवर्षभः॥
> द्रक्ष्यन्ति नूनं पुरुषा दीर्घबाहुं वनेचराः।
> राममुत्थाय गच्छन्तं लोकनाथमनाथवत्॥ (२।४२।१४-१८)

एवमेव रामेण सह वनं गन्तुं मुहुर्मुहुरनुरुन्धत्याः सीताया भाविकोक्तावनागतभावनाप्रवणबिम्बानि (२।३०।११-१४), सीतायै च विलपतो रामस्य कारुणिकबिम्बान्यप्यनुसन्धेयानि (३।६३।७-१२)॥

इत्थं बिम्बनकर्मदृष्ट्यादिकवेः काव्यकला अद्वितीया। भावोपकारकं बिम्बनशिल्पमेव तस्याभिव्यक्तेः प्रमुखो गुणः। तस्य कल्पना सर्वत्र भावानानुगामिनी। भवतु नाम कस्याश्चित् सामान्यघटनायाश्चित्रणं, कस्यचित्कार्यव्यापारस्योल्लेखः, प्रकृतेर्वा प्रत्यङ्कनं, सर्वत्र

---

१. रामा० ३।१९।३, ४।३०।४५।

रससिक्तकाव्यनिर्मितिरेव तस्य कवित्वम्। निःशङ्कमतो निगदितुं शक्यते यद् वाल्मीकेर्बिम्बनशिल्पकौशलेनैव तस्य रामायणं संस्कृत-साहित्ये कविभिर्विशेषमाद्रियते बहुशश्चानुक्रियते तथापि समुद्रवदन्यून-तयाद्यापि राराजते तथा च नात्र मनागपि संदेहावसरो यत् 'चिरनिर्वृत्त-मप्येतत्प्रत्यक्षमिव दर्शितम्' इति आदिकवेः काव्यबिम्बादर्शः पूर्णतया चरितार्थो भवति।

अभिनव-प्रकाशनम्

# आधुनिक-संस्कृत-नाटक ( हिन्दी में )

( नये तथ्य : नया इतिहास )

कतिपयवर्षैः सागरिका-सम्पादकः, सागर विश्वविद्यालयस्य प्राचार्यो डा० रामजी उपाध्यायः संस्कृत-नाटकस्य बृहदितिहासं हिन्दी-भाषया प्रणीतवान् ।

प्रथमो भागः अश्वघोषतो भवभूतिपर्यन्तः
४७५ पृष्ठानि मूल्यं १० रूपकाः

द्वितीयो भागः अष्टमशतकात् पंचदशशतकं यावत्
५०५ पृष्ठानि मूल्यं २५ रूपकाः

तृतीयो भागः षोडशशतकात् १९७५ ई० यावत् भागद्वयम्
१२७१ पृष्ठानि मूल्यं ६० रूपकाः

तृतीयभागेऽस्मिन् संस्कृत-नाटकानां साहस्रं नाट्यशास्त्रीयविवेचन-पुरस्सरमैतिहासिकक्रमेण परिशीलितम् ।

# संस्कृत कवियों के व्यक्तित्व का विकास

डा० राधावल्लभ त्रिपाठी

मूल्य २५-००

मन्त्री, संस्कृत-परिषद्

सागर-विश्वविद्यालय

सागर ( म० प्र० )

# सागरिका

षोडशवर्षे तृतीयोऽङ्कः

२०२४ विक्रमसंवत्सरे

सम्पादकः

डॉ० रामजी उपाध्यायः

सागरविश्वविद्यालये

संस्कृतविभागस्य प्राध्यापकाध्यक्षः



प्रकाशकः

सागरिका-समितिः, सागरविश्वविद्यालयः

सागरम् ( म० प्र० )

फोन : २७०९

# सागरिका

षोडशवर्षे तृतीयोऽङ्कः

२०३४ विक्रमसंवत्सरे


सम्पादकः

डॉ० रामजी उपाध्यायः

सागरविश्वविद्यालये

संस्कृतविभागस्य प्राध्यापकाध्यक्षः



प्रकाशकः

सागरिका-समितिः, सागरविश्वविद्यालयः

सागरम् ( म० प्र० )

फोन : २७०९

प्रकाशिका
सागरिका-समितिः
सागरविश्वविद्यालयः
सागरम् ( म० प्र० )

देयम्

| | |
|---|---|
| प्रत्यङ्कम् | ३-०० रूप्यकाणि |
| वार्षिकम् | १०-०० रूप्यकाणि |
| आजीवनग्राहकस्य | २००-०० रूप्यकाणि |
| अङ्कप्रकाशः | प्रतिवर्षम् आषाढाश्विन-पौष-चैत्र-<br>[ जून-सितम्बर-दिसम्बर-मार्च- ] मासेषु |

सूच्यम् : आजीवनग्राहकेभ्यः सागरिकायाः प्राचीना अपि सर्वेऽङ्काः सवस्त्र-पुटबन्धा निश्शुल्कमुपह्रियेरन् ।

मुद्रकः
विद्याविलास प्रेस
गोपालमन्दिर लेन
वाराणसी

## विषय-सूची


| | | |
|---|---|---|
| १. कालिदाससाहित्ये योगविद्या | रेवाप्रसाद द्विवेदी | २१५ |
| २. वैदिकसंहितासु हंसशब्दः | डा० रामनाथ वेदालङ्कार | २३७ |
| ३. कालिदासभवभूत्योः काव्यबिम्बानुप्रेक्षा | डा० बुद्धदेवशर्मा वेदाचार्यः | २४७ |
| ४. अविश्रमोऽयं लोकतन्त्राधिकारः | अयोध्या प्रसाद द्विवेदी | २७१ |
| ५. भासस्य बिम्बनविधिः | अयोध्या प्रसाद द्विवेदी | २९५ |
| ६. ग्रन्थालोचनम् | | ३०५ |




# कालिदाससाहित्ये योगविद्या

रेवाप्रसाद-द्विवेदी

योगविद्या-पदघटकीभूतेन योगपदेनात्र योगसूत्रोपनिबद्ध-योगदर्शन-प्रतिपाद्यं तत्त्वं विवक्षितम्। तत्त्वमिदं समाधिपदेन व्यपदिश्यते। समाधिश्च यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-रूपसप्तसोपानकः। एकाग्रा निरुद्धा वा चित्तवृत्तिश्च तस्य स्वरूपम्। द्रष्टुर्वृत्तिसारूप्यं स्वरूपावस्थानं वा तत्र मुख्यं फलम्, अमुख्यानि च फलानि सिद्धिप्रभृतीनि। सोऽयं साङ्गो योगः कालिदाससाहित्ये लब्धचतुरस्रप्रतिष्ठः। तमत्र लेशेन प्रस्तुतीमहे।

## १. योगशब्दः

योग-शब्दो हि घञो योगेन द्वाभ्यां धातुभ्यां व्युत्पादयितुं शक्यते दैवादिकाद् युजधातोः, रौधादिकाद् युजिर्-धातोर्वा। तत्र रौधादिकः संयोगार्थः, दैवादिकश्च समाध्यर्थः। अस्ति च चौरादिकोऽपि संपर्चनार्थो युजिः। प्रकृते तु 'योगश्चित्तवृत्तिनिरोधः'[1] इति योगसूत्रप्रामाण्यात्, 'योगः समाधिः'[2]—इति भाष्यकृद्व्यासवचनप्रामाण्याच्च दैवादिक एव प्रमाणीक्रियते यद्यपि नास्त्यसौ रौधादिववदिदकाले प्रसिद्धः। कालिदाससाहित्ये समाध्यर्थको योगशब्दः प्रकीर्ण इव लभ्यते सर्वत्र। तथा च—

रघुवंशस्य राजानः शरीरं शरीराणि वा योगेनैव त्यजन्ति [र० १।८]। रघुवंश-नायको रघुर्योगसमाधिनैव तमसः परमव्ययं पुरुषमाप्नोति [र० ८।२३]। लक्ष्मणः सरयूतीरं गत्वा योगेनैव देहं त्यजति [र० १५।९५]। पुष्यनामा नृपतिरपि योगविदे जैमिनिनाम्ने महर्षयेऽर्पितात्मतया योगविद्यामवाप्य अजन्मने कल्पते [र० १८।३३]। योगेन विसृष्टदेहा सती हिमाचलगृहिणी मेनां पुनर्जन्मने प्रपद्यते [कु० १।२१]। भगवती पार्वती भविष्यतः पत्युर्भगवतः समाधिस्थस्य शिवस्य प्रतिहारभूमिं यदैव प्राप्नोति तदैव सोऽपि भगवान् योगात्

१. योगसूत्रम् १।२।

२. प्रथमयोगसूत्रभाष्ये।

परमात्मसंज्ञं ज्योतिर्दृष्ट्वोपरमति [ कु० ३।५८ ]। स्थिरधी रघुरापरमात्मदर्शननाद् योगविधेर्न विरमति [ र० ८।२२ ]। भगवतो विष्णोः पावनान्यवलोकनानि योगनिद्रान्तविशदानि दृश्यन्ते [ र० १०।१४ ] नाभिप्ररूढाम्बुरुहासनेन प्रथमेन धात्रा संस्तूयमानः परः पुमान् [ विष्णुरेव ] युगान्ताय युगान्ते वा समुद्रमधिशिशयिषन् योगनिद्रामाश्रयते [ र० १३।६ ] चित्रकूट-प्रयागयोर्मध्यवर्त्तिषु वनेषु वीरासनैर्ध्यानजुषामृषीणां समध्यासितवेदिमध्याः शाखिनोऽपि निवातनिष्कम्पतया योगाधिरूढा इव विभान्ति [ र० १३।५२ ]। वियोगिवेषसाकेतदेवतामप्रत्यभिजानानः कुशो विस्मयते 'योगप्रभावं विनापि कथमियं मम सावरणेऽपि गेहेऽन्तरमलभते–'ति [ र० १६।७ ][1]।

---

१. संयोगाद्यर्थकोऽपि योगशब्दो निम्नलिखितेषु सन्दर्भेषु कालिदाससाहित्ये सुलभः—कुमार० ५।६७, ७।६, ५५, ७८, ८।७६, ७८; रघु १।४६, ३।२६, ५।६०, ७२, ६।६५, ८५, ७।३, ९।१८, ४४, १०।८६, ११।५६, १३।२९, ७६, १५।२५, १६।८४, १७।७८, १८।१, ४६; शाकु० २।१० [चित्रे निवेश्य], १५ [ अध्याक्रान्ता वसति० ] ७।२२–[ स्मृतिभिन्न० ]; विक्र० २।४ [ निषिञ्चन् ] । एतेषु रघुवंशस्य ९।१८ [ प्रियतमाभिरसाविति ] पद्ये १०।८६ पद्ये, १८।४६ पद्ये, शाकुन्तलस्य २।१५ पद्ये च योग-शब्दो राजनयप्रसिद्धोपाययोजनार्थकः, कु० ८।७८ पद्ये चोपयोगार्थः । अन्यत्र हि योगशब्दयोगादन्ये शब्दा निष्पाद्यन्ते । तथा च प्रीतियोगः [ कु० ७।५५ ], सान्निध्ययोगः [ कु० ७।७८, रघु० ७।३ ], योगतारा [ कु० ८।७३ ], दैवयोगः [ र० ५।६० ] तरुणारुणरागयोगः [ र० ५।७२ ], समगुणयोगः [ र० ६।८५ ], अलिकदम्बकयोगः [ र० ९।४४ ], प्रत्ययप्रकृतियोगः [ र० ११।५६ ], बाष्पयोगः [ र० १३।२९ ], बुधबृहस्पतियोगः [ र० १३।७६ ], साधर्म्ययोगः [ र० १७।७८ ], सुवृष्टियोगः [ र० १८।२ ], सत्त्वयोगः [ शा० २।१० ], रक्षायोगः [ शा० २।१५ ], भक्तियोगः [ वि० १।११ ]। एतेषु र० ११।५६—स्थले व्याकरणशास्त्रीयः, र० १३।५७, १८।२, कु० ८।७३—स्थलेषु ज्योतिषशास्त्रीयः, कु० ७।५५, र० ६।८५—स्थलयोः कामशास्त्रीयः, रघु० ७।३ स्थले च धर्मशास्त्रीयो योगार्थः स्पष्टः । अरिहयोगः [ र० ९।१८ ] पुनरर्थशास्त्रस्य तन्त्रयुक्तिप्रकरणे स्पष्टः । सुवृष्टियोगशब्दे—>

नियमितप्राणादिभिरन्तरेव विमृग्य ईश्वरैकपरवाच्यः स्थाणुः स्थिरेण भक्तियोगेनैव सुखेन लभ्यते [ वि० १।१ ]।

मनीषिभिरनावृत्तिभयत्वेनाम्नायमानपदं शिवं योगिनः क्षेत्राभ्यन्तर-वर्त्तित्वेन क्षेत्र एव विचिन्वन्ति [ कु० ६।७७ ] योगी कार्त्तवीर्यः अनन्य-साधारणराजशब्दो बभूव [ र० ६।३८ ]। अजो मन्त्रिभिरिव रघु-र्योगिभिः समियाय [ र० ८।१७ ] हृदयाश्रयं ज्योतीरूपं च विष्णुं योगिनो हृदय एव विचिन्वन्ति [ र० १०।२३ ]।

## २. समाधिः

समाधिशब्दोऽपि कालिदाससाहित्येऽक्लेशलभ्यः। तत्र योगार्थकः समाधिशब्दश्चतुर्दशसु स्थलेषु स्पष्टमुपलभ्यते। यथा हि—'मुनीनामपि माननीया मेना प्रकृष्टेन योगेन युक्तेति समाधिमतीत्युच्यते, प्रपद्यते च तामेव योगविसृष्टदेहा सती नाम दक्षसुता पुनर्जन्मने [ कु० १।२२ ]। धीरः शिवः समाधेः प्रत्यर्थिभूतामपि शुश्रूषमाणां पार्वतीं शुश्रूषायै अनुमन्यते [ कु० १।५९ ]। शिवेन प्रत्यादिष्टा पार्वती आत्मनः अवन्ध्य-रूपतायै समाधिमास्थाय तपांसि चरति [ कु० ५।२ ]। प्रगल्भवचसे ब्रह्मचारिणे रत्नभूतायाः पार्वत्याः समाधिः पत्युर्लाभाय निरर्थक इव प्रतीयते [ कु० ५।४५ ]। प्रसंख्यानपरे हरेऽप्सरोगीतयः समाधिभेद-प्रभवो न भवन्ति [ कु० ३।४० ]। दुश्चरतपसस्तृणबिन्दोः परिशङ्कितो देवराजस्तस्मै समाधिभेदिनीं हरिणीति नाम्नीं देवाङ्गनां प्रहिणोति [ र० ८।७९ ]। समाधिभीतो देवराजो दूर्वाङ्कुरमात्रवृत्ति माण्डकर्णि शातकर्णि वा मुनि पञ्चाप्सरोयौवनकूटेन बध्नाति [ र० १३।३९ ]। अन्यसमाधिभीरुतयैव हि मेनकां विश्वामित्राय देवेन्द्रः प्राहिणोत् [ शा० १।२३ पृ० ४४० ]। शिवः समाधिवश्यं मनः हृदि व्यवस्थाप्य क्षेत्रवित्सु 'अक्षरपुरुष'-तया प्रतीतम् आत्मानमात्मन्येवावलोकयते [ कु० ३।५० ]। समाधिजितेन्द्रियो दशरथो यमवताम् अवतां च धुरि

---

कृषिशास्त्रमपि सहायकृत्, दैवयोगपद्ये लौकिकं जीवनमपि। अवशिष्टेषु सन्दर्भेषु केवल एव योग-शब्दो लभ्यते। तत्रापि कु० ७।६, र० १।४६ शा० ७।२२-स्थलेषु ज्यौतिषं शास्त्रं प्रमाणम्। विक्र० २।४ स्थले 'स्नेहदाक्षिण्ययोग-' शब्दोऽपि शक्यनिष्पादः।

तिष्ठन्नुत्तरकोसलान् पितुरनन्तरं सम्यगधिगच्छति प्रशास्ति च [ र० ६।१ ]। योगसमाधिरेव रघोः साधनम् अव्ययस्य पुरुषस्य प्राप्तये [ र० ८।२४ ]।

भगवतः शङ्करस्य तपोवने तपःसमाधेः प्रतिकूलवर्ती मधुरात्मानमाधाय जृम्भते [ कु० ३।२४ ]। पार्वती स्वकीयं रूपं तपःसमाधिनैवाबन्धयितुमिच्छति [ कु० ५।२ ]। सा हि फलोदयान्ताय तपःसमाधये पितरमात्मनोऽरण्यनिवासं याचते [ कु० ५।६ ]। यदा च पूर्वतपःसमाधिना फललाभं न मनुते तदा महत् तपश्चरितुं प्रक्रमते [कु० ५।८]। मालविकायाश्चित्रं कान्तिविसंवादि। ततस्तदालेखिता नूनमेव शिथिलसमाधिः[1] [ मा० २।२ ]। दिलीपो वेधसा नियतमेव महाभूतसमाधिना[2] निर्मितः [ र० १।२९ ]।

एभ्यो योगशब्दप्रयोगेभ्यः समाधिशब्दप्रयोगेभ्यश्च स्पष्टं यच्छब्दाविमौ कालिदाससाहित्ये स्थलानामेषां मध्ये केषुचित् चित्तस्य एकाग्रतायै प्रयुज्येते, केषुचिच्च चित्तवृत्तीनां निरुद्धतायै। ततश्च समाधेः सबीजता निर्बीजता, संप्रज्ञातता असंप्रज्ञातता वा क्रमेण स्पष्टे।[3] स्पष्टौ चैतेभ्यो निर्विचारवैशारद्यरूपोऽध्यात्मप्रसादाख्यः समाधिः[4]। प्रसंख्यानेऽप्यकुसीदतारूपो धर्ममेघाख्यश्च[5]। इदमपि स्पष्टं यद् योगाभ्यासः पुनर्भवायेवापुनर्भवायापि सोपानति। इह जन्मन्यपि दुःसाध्यमपि फलं योगेन साधयितुं शक्यते। कलासु वैचक्षण्यप्रसिद्धयेऽपि समाधियोगरूपा चित्तैकाग्रताऽनन्यसाधारणं साधनम्, व्यवहारेषु च परार्थसंपत्तये। योगशक्तिर्हि वज्रमपि विफलयति,[6] ततश्च देवेन्द्रोऽपि योगिभ्यो बिभेति। सोऽयं योगो गुरुशिक्षयैव सिद्ध्यति, न तु स्वैरतया। तत्रापि भक्तिः स्थिरत्वं चाभ्यर्हिततमे।[7]

---

१–२. अत्र पूर्ववर्त्तिचतुर्दशस्थलतुल्ययोगक्षेमतैव समाधिशब्दस्य।

३. योगशास्त्रे या एव चित्तैकाग्रता स एव सबीजः संप्रज्ञातो वा समाधिः यश्च चित्तवृत्तिनिरोधः स एव निर्बीजोऽसंप्रज्ञातो वा सः।

४. यो सू. १।४७ ५. यो. सू. ४।२९

६. वज्रं तपोवीर्यमहत्सु कुण्ठम् कु० ३।१२; ७. यो० सू० १।१४

## ३. योगाङ्गानि

योगाङ्गं नाम योगकारणम्, अङ्गशब्दस्य काव्याङ्गादिशब्देषु कारणवाचित्वेन प्रसिद्धेः। योगरूपस्य समाधेः समाधिरूपस्य योगस्य वा कारणत्वेनैकं 'अभ्यासवैराग्य'-युग्मम्[1] द्वितीयम् 'ईश्वरप्रणिधानम्[2] तृतीयं चाभिमतध्यानमु[3]पकल्प्यते। मन्ये त्रितयमप्येतत् तृणारणिमणिन्यायेन योगे कारणम्, अथापि 'अभ्यासवैराग्ययोः' प्रणिधानसामान्येऽनिवार्यत्वादीश्वरविषयकेऽभिमतवस्त्वन्तरविषयके वा प्रणिधानेऽपि सहकारित्वमप्रतिहतम्। अभ्यासो नामावृत्तिकस्य चित्तस्य प्रशान्तवाहितायै यत्नः। स च यमनियमादिसतत्त्वः।[4] वैराग्यं च लौकिकालौकिकप्रपञ्चवैतृष्ण्यम्।[5] एतश्चाभ्यासरूपे यत्ने कारणायते, वैतृष्ण्यस्य विवेकमूलत्वात् तज्जन्येच्छाजन्यत्वाच्च यत्नस्य। सेयं शास्त्रस्थितिः। अथात्र कालिदासः। तत्र हि योगिनो हृदि स्थितं विष्णुज्योतिरभ्यासनिगृहीतेनैव मनसा विचिन्वन्ति[6]। अस्ति च भगवानीश्वर आत्मेश्वरः[7]। तस्य नास्त्येवार्थः सांसारिकेण लौकिकाऽलौकिकेन प्रपञ्चेन[8]। येऽपि राजानस्तेऽपि सम्यग् विनीतेषु तनयेषु स्वाधिकारान् संक्रमय्य विषयव्यावृत्तात्मानः सन्तः प्रयतपरिग्रहद्वितीया मुनिवनतरुच्छायां श्रयन्ते[9]। सानसूयोऽत्रिः सारुन्धतीको वसिष्ठः, दाक्षायणीसहितः कश्यपश्च कालिदासस्य तेषां महर्षीणां प्रतिनिधयो ये हि वशिष्ठा महान्तश्च योगिनः।[10] दण्डकारण्यमुनयः खलु स्वकीयं देहमपि यज्ञाग्नौ जुह्वति[11]। सेयं सुमहती गाथा कालिदासेऽभ्यासवैराग्ययोः। यानि पुनरभ्यासस्याङ्गानि तेषु बहिरङ्गत्वेन यम-नियमासन-प्राणायाम-

१. यो० सू० १।१२; २. यो० सू० १।२३; ३. यो० सू० १।३९; ४. यो० सू० १।१३ भाष्यं च; ५. यो० सू० १।१५-१६; ६. रघु० १०।२३; ७. कु० १।५९; ८. कु० ६।२६, कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद् यतीनाम्—मा० १।१; ९. रघु० ३।७०, ७।७१, ८।११ १४, १८।७, ९, १२, २६, २८, ३१, ३३, १९।१, २, वि० ५।१७, शा० ७।३५; १०. रघु० १।५६, २।७१, १२।२७, १३।५१, कु० ६।११, १३, ९१, शाकुन्तलसप्तमोऽङ्कः; ११. र० १३।४५ प्रभृति।

प्रत्याहाराः अन्तरङ्गत्वेन च धारणाध्यानसमाधयो योगदर्शने भगवता पतञ्जलिना काममुपदिष्टाः। कालिदास एतानपि भूम्नोल्लिखति। तथा च—

क. *यमः*। दशरथो यमवतां धुरि तिष्ठति [ र० ९।१ ][1]। यमोऽपि पञ्चाङ्गः। अङ्गानि च 'अहिंसा–सत्याऽ–स्तेय–ब्रह्मचर्यापरिग्रहाख्याणि।[2] एतेषु *अहिंसायाः* प्रतिष्ठायां योगिनः सन्निधौ सर्वाण्यपि भूतानि वैरं त्यजन्तीति भगवतः पतञ्जलेः अनुशासनम्।[3] कालिदासस्य तपःसमाधिनिरतायाः भगवत्याः पार्वत्यास्तपोवने सेयमहिंसा प्राप्तप्रतिष्ठा। अतस्तत्र विरोधीन्यपि सत्त्वानि सहजमपि मत्सरमुज्झन्ति [कु० ५।१७]। रघुवंशे भगवतोऽत्रेस्तपोवने सत्त्वानीमानि अनिग्रह–त्रासमेव विनीतानि भवन्ति [ र० १३।५० ]। दयार्द्रभावतया धनुष्मानपि दिलीपः कातरतमानामपि हरिणीनामनुद्वेगकरो वर्ण्यते [ र० २।११ ]। मारीचाश्रमे लङ्घयन्तमपि दौष्यन्तिं सिंहशावकस्तस्य माता वा न लङ्घयति। [ शा० ७।१४-१५ ]। रघुवंशराजपुरुषा हि[4] *सत्याय* मितं भाषन्ते [ र० १।७ ] तत्र दशरथः परिहासकथास्वपि वितथवाङ् न भवति [ र० ९।८ ]। अजः सूनृतमप्यवितथमेव वक्ति [ र० ८।९२ ] राममातरौ कौसल्यासुमित्रे च प्रियमप्यमिथ्यैवोचतुः [ र० १४।६ ] तस्करतारूपं स्तेयं हि दिलीपस्य शासने कथास्वेवाशिष्यत [ र० १।२७ ] विहारार्धपथे निद्रां गतानां विलासवनितानामपि वासोऽपि वातोऽपि नास्रंसयद्, आभरणानामाहरणार्थं हस्तमपि प्रसारयितुं कश्चित् प्रगल्भेतेति तु दूरे तिष्ठतु कथा [ र० ६।७५ ]। कार्त्तवीर्यो हि अकार्यचिन्तासमकालमेव सचापं पुरस्तादाविर्भूय प्रजानामन्तःशरीरेष्वपि विनयं प्रतिष्ठापयति प्रत्यादिशति चाविनयं ततः [ र० ६।३९ ]। अस्तेयस्य प्रतिष्ठायां सर्वाणि

---

१. कु० २।२३, रघु० ९।६, २४, १०।७१, १७।८१—स्थलेषु यमशब्दो लोकपालविशेषवचनः। २. यो० सू० २।३० ३. यो० सू० २।३५

४. यथार्थे वाङ्मनसी सत्यम् [ यो० सू० भा० २।३० ] सत्यप्रतिष्ठायां योगिनो वाचमर्थोऽनुधावति। र० ३।७७, मे १।१, कु० ४।४१, र० १।७८-७९ शा० ४।१ प्रभृतिषु शापसन्दर्भेषु चैतदपि स्पष्टम्।

रत्नानि सर्वाभ्य एव दिग्भ्यः स्वयमेवोपतिष्ठन्ते[1]। विश्वजिता वीतहिरण्मयस्य रघोः कोशे सुवर्णं वर्षति [ र० ५।२६ ] उर्वशीविरहिणं पुरूरवसं सङ्गमनीयो मणिः स्वत एवोपप्रयाति [वि० ४ अन्ते]। *ब्रह्मचर्यप्रतिष्ठायां* वीर्यं लभ्यते[2]। कालिदासो हि मनोः प्रसूतिं स्व-वीर्य-गुप्ता-मुदाहरति [ र० २।४ ] दिलीपसूनू रघुः किल गोत्रभिदो महेन्द्रस्य गोत्रेष्वप्यविसह्यं वज्रमात्मनो वक्षसा विफलयति [ र० ३।६२ ]। कालिदासस्यैव ककुत्स्थो वृषभाकृतेरिन्द्रस्य पृष्ठमधिरुरोह संजहार च देवशत्रून् [ कु० ६।७२ ] परस्त्रीविमुखः [ र० १६।८, शा० ५।१४ पृ० ४०१ ] कुशो दुष्यन्तश्च गोत्रभिदोऽर्धासनमधितिष्ठतः स्ववीर्यमहिम्नैव [ र० १७।७, शा० ७।१ ]। वीर्यलाभे हि शिष्यप्रभृतिषु स्वविद्या-संक्रान्तिप्रभृतिस्वरूपोऽपि प्रभावो भगवता व्यासेन वाचस्पतिना चाम्नायते[3]। नन्दिनीवृत्तान्तः कालिदाससाहित्ये तस्य प्ररूढो दृष्टान्तः। नन्दिनीनाम्नीं गां विद्यामिव[4] वसिष्ठाद् दिलीपो दिलीपाच्च रघुः प्रापेति रघुवंशस्य द्वितीयतृतीयाभ्यां सर्गाभ्यां प्रथितचरम्। नात्र संदेग्धव्यं यद् एकविंशता दिनैर्दिलीपो गुरुप्रदिष्टां नन्दिनीविद्यामपि प्रासादयन्नन्दिनीति नाम्नी सौरभेयीमिव[5]। प्रौढिवादमात्रमन्यथा पितुराश्वमेधिकस्याश्वस्य प्रत्यक्षमेवाप्रत्यक्षेण हरिणा हरणे विषादलुप्तप्रतिपत्तये रघवे नन्दिन्या आत्मदर्शनम्, तदङ्गनिष्यन्दजलप्रमार्जनासादितातीन्द्रियदर्शनोपपन्नशक्तिकत्वं च दिलीपसूनोः[6]। सेयं काचिद् विद्यैव। अथवा योगविद्यैव सा। अत एवोच्यते—'स्वार्थसंयमात् पुरुषज्ञानम्,'[7] ततः[8] प्रातिभवार्तया सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानम्—' इति।

*अपरिग्रहो* नाम विषयाणामस्वीकरणम्[9]। तस्य च परा काष्ठा मारीचाश्रमे। तत्र हि सत्कल्पवृक्षेऽपि वने प्राणवृत्तेरनिलेनैवाभ्यासः, चिन्तामणि-रत्नशिलागृहेषु च प्रत्ययैकतानतारूपेण ध्यानेन विषय-

---

१. यो० सू० २।३७; २. यो० सू० २।३८; ३. यो० सू० २।३८ भाष्यं तत्त्ववैशारदी च; ४. र० १।८८ ५. अस्मन्निबन्धः 'नन्दिनीविद्या', कालिदासग्रन्थावलीभूमिकायाः ३१ पृ०। ६. र० ३।४१, ७. यो० सू० ३।३५; ८. यो० सू० ३।३६, ३।३३, ३।५, ३।२६, १।२५, १।४८

९. यो० सू० २।३० भाष्यान्तः।

प्रमोकः [ शा० ७।१२ ]। रघुवंशे श्रुतस्ववृत्तगीतिः प्रसन्नश्च रामो रामायणकवये केवलं स्वकीयं देहं त्यक्त्वा सम्पूर्णं राज्यं समादिशति, किन्तु कविरसौ कारुणिकः। स हि सीतासंपरिग्रहणमात्रं वृणुते [ र० १५।७०,७१ ]। रघुः कौत्साय सुमेरोः शृङ्गमिव भासुरं समग्रमपि हेमराशिं दित्सति, कौत्सः पुनः गुरुदक्षिणाऽधिकं द्रव्यं नादित्सति। दातृपरिग्रहीत्रोः सोऽयं कलहः—'जनस्य साकेतनिवासिन' इति पद्यरत्नेन संस्कृतवाङ्मये सुभाषितभावमादाय सुमनस्सु ताम्बूलवीटिकायते [ र० ५।३१ ]। प्रसिद्ध एव भगवान् माण्डकर्णिः दूर्वाङ्कुरमात्रवृत्तितायै [ र० १३।३६ ]। स्वयं-विशीर्णद्रुमपर्णवृत्तितामप्युत्तीर्णा भगवती पार्वती अपर्णात्वेन सश्रद्धमभिवन्द्यत एव पुराविद्भिः [ कु० ५।२८ ]। अपरिग्रह-फलत्वेन प्रतीतो जन्मकथन्तासंबोधोऽपि[1] कालिदासस्य सुप्रतीतः। जन्मान्तरे तत्कारणेऽदृष्टवादे च लभ्यन्त एवास्यानेक उद्गाराः। तत्र भगवत्या सीतायाः—[ र० १४।६२ ]

> कल्याणबुद्धेरथवा तवायं न कामचारो मयि कल्पनीयः।
> ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः॥

इयमुक्तिरेव पर्याप्ता। भवपूर्वपत्नी सती स्वयमेव पार्वतीरूपं जन्मान्तरं प्रतिपद्यते [ कु० १।२१ ]। भगवतोऽवतारस्य लीलायाश्च मूलं केवलो लोकानुग्रह एव [ र० १०।३१ ]। सेयं जन्मकथन्तासंबोधकथा।[2]

सोऽयं यमः यतशब्देन प्रयत-शब्देनापि च कालिदासेन भृशं स्मर्यते।[3]

ख. *नियमेषु* हि शौचम्, संतोषः तपः, स्वाध्याय ईश्वरप्रणिधानं च योगदर्शनेऽङ्गतया प्रथितानि। एषु *शौचे* बाह्यं शौचं कायेनावद्यस्पर्श-निरासः, आन्तरं च तच्चित्तमलापनुत्तिः, येन हि सौमनस्यम्, सौमनस्याद्

---

१. यो० सू० २।३९ भाष्यञ्च।

२. स्थालीपुलाकन्यायेनैषा कथा, न पुनः कार्त्स्न्येन।

३. कु० १।५८, ३।१६, ५४, र० १।३५, ९०, ९५, ३।४४, ६५; ५।२८, ८।११, ९।२२, १३।७०, १४।८२, वि० ३।२-प्रभृतिषु स्थलेषु।

-ऐकाग्रयम् , ऐकाग्र्यादिन्द्रियजयः, ततश्चात्मदर्शनयोग्यता संपद्यते[1]। एतेषु अवद्यस्पर्शनिरासो नाम नागराणां शिष्टानां च तपस्विनामिवैव स्वाभाविको गुणः। तीर्थक्षेत्रेषु तपस्यतां मुनीनां जीवने पुनस्तदभावः स्वप्नेऽपि न संभाव्येत। दूर्वाङ्कुरमात्रवृत्तितयाऽपरिग्रहशीलतया च संतोषो व्याख्यातचरः। तपः पुनः कालिदाससाहित्ये त्रिंशदुत्तरैकशतकृत्वो नामग्राहं स्मर्यते[2]। स्वाध्यायश्च पार्वतीतपोवर्णनेन स्पष्ट-

---

१. यो० सू० २।४० भाष्यम्, यो० सू० ४१, २. √तप् शा० ३।२०· √तपस् र० १३।४१, शा० ८।९, १२, तपस् कुमा० १।२६, ५४, ५७, ५७, २।५६, ३।४, १२, २४, ७१, ७४, ४।४२, ५।२, ३, ४, ६, १८, १८, २८, २९, ३३, ४१, ५१, ५२, ५९, ६०, ६१, ६४, ८६, ६।१०, ११, १६, ७।६५, रघु० १।६९, ९४, ५।३, ५, १३, ५५, ६।२१, ८।७९, ८०, १०।२५, ४६, ११।१३, २३, ३३, ४८, ८९, १३।५०, १४।६६, १५।६, १०, १२, ३७, ५१, ५३, १७।६५, १८।९, १९।२, शाकु० १।१७, २५, ३२, २।१४, १५, १७, ३।२, ५।१, १०, १२, १५, १५, ७।१२, १२, ३४, तपस्यत् कु० ३।१७, र० १५।४९, तपस्विन् कुमा० ३।३४, ६५, ७४, ५।२९, ३६, ६।१०, ३४, ८।४७, रघु० १।४९, ३।१८, ९।७२, ७६, १०।१९, ११।१२, ८९, १३।४१, १४।९, ६७, ७५, १५।२७, शाकु० १।१०, १६, २४, ३१, ३२, ३३, २।१२, १४, १५, १८, १९, ३।७, ४२, ५।२, १०, १०, १०, १३, १५, २०, २९, ३१, ७।९, माल० ४।५, विक्र० १।१०। तप कु० ४।४४, ५।२३, शा० ३।१४, तपन र० ४।१२, वि० ३।१६, तपनीय कु० ८।८१, र० १८।४५, मा० ४।३। तप'कृश कु० ५।६१, तपःक्लम शा० १।१७, तपःपरामर्श—विवृद्धमन्यु कु० ३।७१, तपःप्रतिबन्धमन्यु र० ८।८०, तपःप्रभाव शा० ७।३४, तपःप्रभाव-सिद्ध र० १५।१२, तप.फल कु ५।४१, तपस्विकन्या शा १।१६, २४, २।१२ तपस्विकार्य शा० २।१८, १९, तपस्विकार्यव्यग्रता शा० २।१९, तपस्विगाढा र० ९।७२, तपस्विदर्शनोचित शा० ५।१०, तपस्विनी र० १४।६४, शा० ७।३२, तपस्विवेशक्रिया र० १४।९, तपस्विसंसर्गविनीतसत्त्व र० १४।७५, तपस्विसामान्य र० १४।६७, तपःसमाधि कु० ३।२४, ५।६, तपःसाक्षिन् कु० ५।६०, तपःसाधन कु० ५।५२, र० १३।५०, तपःसिद्धि कु० ६।११, र० १।९४, तपःषड्भाग शा० २।१४,

भूयिष्ठः । अत्रासावधीतिनीत्युच्यते [ कु० ५।१६ ] कुमारसंभव एव प्राजापत्यास्तपस्विनः वेदाख्यं ब्रह्म सम्यगामनन्ति [ कु० १६।२४ ] वेद एव च मोक्षशास्त्रम् , अस्ति च मोक्षशास्त्रस्यैवाध्ययनमत्र भगवतो योगदर्शनभाष्यकर्तुर्व्यासस्य विवक्षितम् [ यो० सू० २।३२ ]। ईश्वर प्रणिधानमपि प्रपञ्चितसर्वस्वमिवात्रैवानुपदीनेन विवरणेन । तथा हि 'ईश्वर'-तत्त्वं क्षेत्राभ्यन्तरवर्त्तीति कृत्वा क्षेत्राभ्यन्तर एव योगिनो विचिन्वन्ति [ कु० ६।७७ ]। शिवः क्षेत्रविद्भिरक्षरत्वेन प्रतिपन्नमात्मरूपं तत्त्वमात्मन्येवावालोकयत [ कु० ३।५० ] अष्टमूर्त्तिरीश्वरः स्थिरेण भक्तियोगेन सुलभः सन् तामसीं वृत्तिमपनीय सन्मार्गमालोकयत्विति कालिदासनाटकानां मङ्गलनान्द्यः । योगिराजो नारदो गोकर्णनिकेतमीश्वरमुपवीणयति [ र० ८।३३ ]। ईश्वरप्रणिधानान्तो हि रघोरपि योगसमाधिः [ र० ८।२२,२४ ]।

सामर्थ्यवचन ईश्वरशब्दः परमेश्वरेऽपि समान इति तस्यास्यार्थविभागाविशेषेण ६६ प्रयोगान्, ईशशब्दस्य २१ प्रयोगान्, ईशानशब्दस्य च १ प्रयोगं कालिदाससाहित्ये[1] लभामहे। इत्थमन्विष्टौ यमनियमौ कालिदाससाहित्ये स्थालीपुलाकभावेन ।

---

1. ईश् र० १४।२८, १८।१३, ईश कु० २।९, ३।३४, ५९, ५।८१, ६।८०, ७।९५, रघु० २।६७, ३।६६, ४।८३, ५।१, ६२, ६।४४, ७।३३, ३७, १०।२०, ११।२०, १२।८४, १४।४३, शाकु० १।१, ३।२९, माल० १।१। ईशान कु० ७।५६। ईश्वरः कु० ३।६३, ४।११, ६।१२, ५३, ७५, ७।३१, ३८, ७२, ८।५०, ८०, रघु० २।२, ३।३, ५, ३०, ४६, ५२, ६४, ६८, ४।१९, ७०, ८१, ८४, ५।१२, ३९, ६।२, २०, ४०, ७।१, ८।५, १५, २०, ३३, ४६, ९।६, २२, २४, १०।५५, ७३, ११।१, ३५, ४०, ६२, १२।११, ८९, १३।५७, ६९, ७२, ७७, १५।७, ५८, ९०, ९१, १६।४२, १८।२४, १९।१५, शाकु० ७।४, २६, २७, माल० ४।३, विक्र० १।१, २।१८, ४।६५, ईश्वरी शा० ३।२३। ईश्वरेच्छा र० ८।४६; ईश्वरनियोगपरिपन्थी वि० २।१८, ईश्वरव्याहृतिः कु० ३।६३ ।

योगविवक्षित ईश्वरः क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः [ यो० सू० १।२४ ] वैशिष्ट्यं चेदमन्ययत्वेनेति कालिदासः । यदुच्यते तेन 'तमसः—>

ग. आसनं प्रति कालिदासो नितान्तं जागरूकः। आसनेन हि स्थिरेण सुखेन च भवितव्यमिति भगवतः पतञ्जलेरनुशासनम् [ यो० सू० २।४६ ] तत्र स्थिरत्वमनन्तसमापत्त्या सुखत्वं च प्रयत्नशैथिल्येन¹ व्याख्यातचरे [ यो० सू० २।४७ ]। तदिदं द्विविधम १. स्थण्डिलादिरूपम् २. शारीरं चेति। सूत्राभ्यामाभ्यामाद्येन प्रथममपि संगृह्यते। व्यासभाष्यतत्त्ववैशारदीभ्यामत्रान्यथैव प्रतिपद्यते तथापि 'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः, नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्' [ ६।११ ]

---

परमापदव्ययं पुरुषं योगसमाधिना रघुरि'—[ र० ८।२४ ] ति। गीतासु च सुप्रसिद्ध एषोऽव्ययः पुरुषो 'यस्मात् क्षरमतीत' इत्यादिभिः।

१. कालिदाससाहित्ये आसनशब्दो निम्नलिखितेषु स्थलेषु सुखमुपलभ्यः कु० ३।२, ६।५३, ५३, ७।१२, ७०, ८६, रघु० २।६, ६।१, ४, ६, १६, ७३, ७।१, ८।१८, १०।७, १३।६, १३।५२, १७।७, २१, २८, १८।४०, शाकु० २।१७, ६।८, ७।२६, मा० १।१३, १३, १६, २०, वि० ५।११। अत्र विविधाः प्रयोगाः—

आसनबन्धः [ र० २।६ ], वेत्रासनम् [ कु० ६।५३ ], रत्नासनम् [ र० ६।४ ], महार्हासनम् [ र० ६।६ ], व्यवहारासनम् [ र० ८।१८ ], धर्मासनम् [ शा० ६।८ ], गजदन्तासनम् [ र० १७।२१ ], सिंहासनम् [ र० ६।१, १८।४० ], वीरासनम् [ र० १३।५२ ], पद्मासनम् [ कु० ७।८६ ], कमलासनः [ ब्रह्मा कु० ७।७० ] अम्बुरुहासनः [ ब्रह्मा र० १३।६ ], अर्धासनम् [ र० ६।७३, शा० ७।१ ] आसनार्धम् [ र० ६।१६, १७।७ ], आसनोपदिष्टः [ मा० १।१३ ], आसनस्थः [ शा० ७।२६ ], आसनपरिग्रहः [ कु० ६।५३, मा० १।१६ ], कल्पासनम् [ कु० ७।१२ ], आसनसन्निकर्षः [ कु० ३।२ ]। एतेषु योगसम्बन्धित्वं हि आसनबन्धः [ र० २।६ ] वीरासनम् [ र० १३।५२ ] चेत्यनयोरिव पद्मासनं सिंहासनं चेत्यनयोरपि शक्यसम्भवम्। व्यवहारासनधर्मासने पुनर्धर्मशास्त्रीये नीतिशास्त्रीये वा। अन्यानि पुनः सामान्यानि।

२. स्थिरसुखमित्यासनविशेष इति भाष्यकारः। तत्र तत्त्ववैशारदी 'स्थिरं निश्चलं यत् सुखं सुखावहं तद् आसनमिति सूत्रार्थः येन संस्थानेनावस्थितस्य स्थैर्यं सुखं च सिध्यति तद् आसनं स्थिरसुखम्। तदेतदत्र भगवतो भाष्यकारस्य संमतम्। तस्य विवरणं यथासुखमिति।'

इति गीतोक्तया दिशा भाष्यान्तरमपि नानुपादेयम्। कालिदासः पुनर्गीतोक्तेनैव क्रमेण प्रवर्त्तते। कुमारसंभवे शिवः खलु देवदारुद्रुमवेदिकां शार्दूलचर्मणाऽऽस्तीर्य पर्यङ्कबन्धेन समाधिमाविशति [ कु० ३।४३-४५ ] तत्र पर्यङ्कबन्धो घेरण्डसंहितायां योगपट्टेन पृष्ठजानूरुजङ्घानां सुखाभिमुखतया बन्धः[1]। स चात्र शिवस्याङ्कमध्ये उत्तानपाणिद्वयसन्निवेशस्य वर्णनादप्राप्तप्रसरः [ कु० ३।४५ ][2] एतेन भाष्यकारोक्तः पर्यङ्कोऽपि पराहृतः, तस्य वाचस्पतिमिश्रेण 'जानुप्रसारितबाहोः शयनं पर्यङ्कः' इति व्याख्यानात्। वीरासनमेव पर्यङ्कबन्ध इति तु कुमारटीकायां मल्लिनाथः। वीरासनं [ र० १३'५२ ] च पद्मासनकल्पमेवेति रघुवंशे मल्लिनाथ-हेमाद्रि–चारित्रवर्धनसुमतिविजयाः। तदेतदन्यत्र सावकाशमपि प्रयागोपान्तभूमिषु तपस्यतां मुनीनां समध्यासितवेदिमध्येषु शाखिष्वनवकाशमेव। ततश्च रघुवंशे वीरासनम्—'अङ्गुष्ठाग्रसंस्थितया सूर्यविलोकनरूपतयैव" नेयं वल्लभोपदर्शितया। यदपि चात्रैव चतुर्वर्गचिन्तामणिमाश्रित्य गारुडं पुराणं चोपजीव्य 'उत्थितस्तु दिवा तिष्ठेदुपविष्टस्तथा निशि, एतद् वीरासनं प्रोक्तं महापातकनाशनम्' इति वल्लभहेमाद्रिभ्यामेव लक्षणान्तरं प्रस्तूयते तदपि नात्र समञ्जसम्, वृक्षाणां रात्रावुपवेशस्या-

१. घेरण्डसंहितार्थं द्र० शब्दकल्पद्रुमः। द्वितिया-न्तः प्रकाशितायां घेरण्डसंहितायां वचनमिदं न लभ्यते।

२. उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः
ऊरुमध्ये तथोत्तानौ पाणी कृत्वा तथा दृशौ
नासाग्रे विन्यसेद् राजदन्तमूले तु जिह्वया००' ॥ इति
हठयोगप्रदीपिका [ १।४५–४६ ]।

तत्रैव द्वितिया-घेरण्डसंहितायां च वीरासनलक्षणम्—

एकं पादं तथैकस्मिन् विन्यसेदूरुणि स्थितम्।
इतरस्मिंस्तथा चोरुं वीरासनमितीरितम् ॥ १'२१ ॥

मल्लिनाथहेमाद्री इदमेव—

एकं पदमथैकस्मिन् विन्यस्योरुणि संस्थितम्।
इतरस्मिन् पदं चान्यद् वीरासनमुदाहृतामि ॥' ति पठतः ॥

वस्तुतस्तु हठयोगप्रदीपिकाया लक्षणेनैवंविधेन भाव्यम्—

एकं०० स्थितम्, पादेऽस्मिंस्तथाऽन्योरु'—

इति। एतच्च पद्मासनाद् भिन्नमेव।

शक्यत्वात्। ततश्च पर्यङ्कबन्धः पद्मासनरूप एव, वीरासनं च वल्लभोक्ताङ्गुष्ठाग्रस्थितिद्वारकसूर्यावलोकनरूपम्। यद्यप्यङ्गुष्ठाग्रस्थितिर्वृक्षेषु विसंवदेत्, वृक्षेषु अङ्गुष्ठानामेवाभावात् तथापि मूलानामङ्गुष्ठतया नेतुमशक्यत्वाभावात् संवादोऽपि नासुलभः। ऋषि-तद्वृक्षयोः पारस्परिकस्य साम्यस्य प्रतीत्याऽपि वीरासनपदेनर्षीणामुत्थितत्वमेव वृक्षाणामिव शक्योत्प्रेक्षम्। रघुवंशे दिलीपो निषेदुषीं नन्दिनीमासनबन्धेनानुगच्छति [ र० २।६ ]। अत्रासनशब्दो बन्धशब्दसमभिव्याहाराच्छारीरासनपर एव। एतेन स्पष्टं यद् दिलीप उपवेशकाले यथा तथा स्वैरतया वा प्राकृतवन्नोपविशति। स हि योगासनमाबध्यैवोपवेशसुखमुपचिनोति। योगविद्याया अप्युपासना धेनुचारणसमकालतया दिलीपेनाचरितेत्यत्रासनबन्धोऽप्यसौ लिङ्गम्। ब्रह्मदेवः 'पद्मासनस्थः' कुमारसंभवे [ ७।८६ ]। अत्र पुष्पविशेषरूपाधारलक्षणासनपरत्वमिव शारीर-पद्मासनपरत्वमपि शक्योत्प्रेक्षम्। यद्यपि सिंहासननामाप्यासनं हठयोगे प्रसिद्धम्,[1] लभ्यते च सिंहासनपदं कालिदासेऽपि तथापि नास्ति तत्र शारीरासनपरत्वसंभावना, सन्दर्भशुद्धेरभावात्।

घ. *प्राणायाम*—पदे आयामो नाम निरोधः। स च आ समन्तात् यामः यमः, अयामः अप्रच्छर्दनं वा। कुमारसंभवे शिवो निरोधादन्तश्चराणां मरुतां निरोधान्निवात निष्कम्पः प्रदीप इवाभाति स्मारयति च भगवद्गीताम्—'यथा वातो निवातस्थो नेङ्गते सोपमा मते'-ति। मरुतामन्तश्चरण नाम कुम्भकः। स च श्वासप्रश्वासाख्ययोः प्राणवायोराचमनवमनयोर्विच्छेद एव योगसूत्रोक्तः [ यो० सू० २।४६ ]। विक्रमोर्वशीयनान्दीपद्ये स्थाणुरूपोऽव्ययः पुरुषो मुमुक्षावद्भिः नियमितप्राणैः सद्भिरन्तरेव मृग्यमाणोऽवष्टभ्यते। नियमितप्राणत्व प्राणायामश्चेत्यनर्थान्तरमेव। शाकुन्तले मारीचाश्रमगते वाल्मीकार्धनिमग्नमूर्तिस्तपस्वी स्थाणुरचलश्च दृश्यते स्मारयति च सोऽपि गीतायाः 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातन' इति। अचलत्वेन सिद्धमस्य निरुद्धप्राणत्वं प्राणायामित्वसतत्त्वम्। अन्यत्रापि च योगाङ्गमिदं न शक्योत्प्रेक्षं यत्र हि महाकविरसौ भगवतः शङ्करस्य, पुरूरवसश्च सन्ध्योपासनं वर्णयति।

1. हठयोगप्रदीपिका १।५०

सन्ध्योपासनस्याव्यभिचरितमङ्गं प्राणायामः। एष हि प्रणिधानेनापि सिद्ध्यतीत्यनुपदमेव वदामः।

ङ. *प्रत्याहारः* खलु विषयेभ्यो मनसो व्यावृत्तिः [ यो० सू० २।५४ ] स चात्र 'मनो नवद्वारनिषिद्धवृत्ती'-ति पदेन [ कु० ३।५० ] प्रकामव्याख्यातः। अभ्याससाध्यत्वं मनोनिग्रहस्य ब्रुवता प्रत्याहारोऽपि कविना [ र० १०।२३-पद्ये ] कटाक्षित एव। प्रत्याहरण—[ वि० १।१६ ]—प्रत्याहृत [ मा० ५।१६ ]—निगृहीत [ र० १४।५२ ] प्रभृतिभ्यः शब्देभ्योऽपि प्रत्याहारः प्रकामं विवृतार्थः।

च. *धारणा* नाम चित्तस्य देहगते स्थानविशेषे बन्धः। तामिमां कण्ठरवेणैव कालिदासः स्मरति 'परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम् आदद' [ र० ८।१८ ] इति। शिवश्च चित्तं हृदि व्यवस्थापयत्येव [ कु० ३।५० ]। स हि अधोमयूखैर्नेत्रैर्घ्राणं लक्षयत्येव [ कु० ३।४७ ]।

छ. *ध्यानं* खलु प्रत्ययैकतानता[1]। तत्र मारीचाश्रमिणो रत्नशिलागृहेषु ध्यानं कुर्वन्ति [ शा० ७।१२ ]। कुमारसंभवे कामो भूतपतेः शिवस्य यद् आस्पदं विवेश तद् ध्यानास्पदतया व्यपदिश्यते [ कु० ३।४३ ]। नवोढया पर्वतराजपुत्र्या सह यन्मणिशिलागृहमीश्वरो विशति तत्र सर्वा विभूतयो ध्यानेन समभ्रियन्त [ कु० ८।८१ ]। दिलीपस्य सन्ततेर्निरोधे कारणं दिदृक्षमाणो वसिष्ठः क्षणमात्रं ध्यानस्तिमितलोचनस्तिष्ठति [ र० १।७३ ]। प्रयागोपान्त—वनभूमिस्था आश्रमिणो वीरासनैर्ध्यानं जुषन्ते [ र० १३।५२ ]। मारीचः शापवृत्तान्तं ध्यानेनावजगाम [ शा० ७।३२ ]। शापकषायितो दुष्यन्तः शकुन्तलापरिणये ध्यानमन्दो भवति [ शा० ६।७ ]। ब्रह्मैव हि ध्यातृत्वेनाभ्युपगन्तुं शक्यते ब्रह्मैव च ध्येयत्वेन [ कु० २।१५ ]। उपजातस्मृतिर्दुष्यन्तोऽकारणप्रत्याख्यातां शकुन्तलां ध्यात्वा [ शा० ६।६ ] विह्वलायते। हरिशयनपर्ववत्तयोत्कृष्टत्वेन प्रथमे आषाढशुक्लैकादशीरूपे दिवसे समाश्लिष्टसानुं मेघं दृष्ट्वाऽन्यथावृत्तिचित्तो विरही यक्षश्चिरं ध्यायति [ मे० १।३ ]। वसिष्ठो ध्यानस्तिमितलोचनः सन् प्रणिधानेन [ र० १।७३ ] दिलीपसन्ततेः स्तम्भकारणमपश्यत्। रघुः प्रणिधानयोग्यया [ र० ८।१६ ] शरीरगतान्

---

१. यो० सू० ३।२

पञ्चापि प्राणान् वशयति। तानीमानि योगस्य सोपाङ्गान्यङ्गानि।
ज. *समाधिश्च यः* स किल कालिदाससाहित्ये समीक्षितचर एव।

## ४. प्रकीर्णम्

क. एतेषु धारणा-ध्यान-समाधि-नामान्यन्त्यानि त्रीण्यङ्गानि 'संयम'-पदेन परिभाष्यन्ते 'त्रयमेकत्र संयम' इति [यो० सू० ३।४]। कुमारसंभवे शिवस्य मनः संयमेन स्तिमितं स्तम्भितं वोच्यते [ कु० ६।५६ ] कण्वः संयमधनः खलु [ शा० ४।१६ ] मारीचाश्रमिणो विबुधस्त्रीसन्निधौ संयममाचरन्ति [ शा० ७।१२ ]। शिवतपोवने संयमिनां मुनीनां तपःसमाधेः प्रतिकूलो वसन्तोऽवतरति [ कु० ३।२४ ]। तत्रैवोपस्थितः कामो देवदारुद्रुमवेदिकायां स्थितं संयमिनं शिवं सक्षादकरोत् [कु० ३।४४]। शिव एव हि संयमिनामाद्यः [ कु० ६।३४ ]। दिलीपः संयमिनो गुरोराश्रमं सायन्तने प्रविशति [ र० १।४८ ]। रघुः पारसीकाञ्जेतुं स्थलवर्त्मना तथैव प्रतिष्ठते यथा इन्द्रियाख्यान् रिपून् जेतुं तत्त्वज्ञानवर्त्मना संयमी [ र० ४।६० ]। गुणवत्सुतरोपितश्रियो दिलीपवंशजाः खलु वयःपरिणामे संयमिनां वसतिं प्रतिपेदिरे [ र० ८।११ ] संयमो हि सत्त्वसंश्रयसुखः [ शा० ७।१८ ][1] एतेषु स्थलेषु संयमः तितिक्षापरत्वेनापि क्वचिन्नीयेत।

ख. ईश्वर-प्रणिधानादपि[2] योगः प्रसिद्ध्यति चित्तवृत्तिनिरोधरूपः। तदिदमुक्तपूर्वम्। कालिदाससाहित्ये भगवतः शिवस्य विष्णोर्ब्रह्मदेवस्य च सन्ति स्तुतयः। तारकोपप्लुता देवास्तुराषाहं पुरोधाय स्वायम्भुवं धाम यान्ति [ कु० २।१ ]। स्तुवन्ति च भगवन्तं स्वयंभुवं तत्ताभिभूतार्थव्याहृतिभिः [ कु० २।२-१५ ] रावणोपप्लवे पुनस्त एव भगवन्तं हरिमभिगच्छन्ति निदाघार्ता अध्वगाश्छायावृक्षमिव [ र० १०।५ ] स्तुवन्ति च तथैव [ र० १०।१५–३२ ] शास्त्रार्थगभीरैरुद्गारैः। एषोऽत्र विशेषो यत् कविर्भगवतो विष्णोर्मूर्तिमपि प्रणिधानाय सूक्ष्मतया वर्णयति शब्दमयेनालेख्येनेव। सप्तर्षयः स्मरणसमकालमेवोपेत्य

---

१. संयतशब्दः संयमनशब्दश्चापि निग्रहार्थकतया प्रसङ्गान्तरेषु र० ३।२०, ४२, मा० १।७, शा० १।८ वि० ३।६—इत्येवं प्रभृतिषु संदर्भेषु न न लभ्येते। वशीत्यादयः शब्दा अपि तमिमं संयमं लक्षयन्ति। २. यो० सू० १।२३

भगवन्तं शिवं स्तुवन्ति [ कु० ६।१५–२३ ] प्रशंसन्ति च तमेव भगवन्तं भूयोऽप्योषधिप्रस्थमुपेता नगाधिराजस्य हिमालयस्य प्रमुखे [ कु० ६।७५–८३ ] स्वयं कालिदासोऽप्यवसरेऽस्मिन् भगवतः स्तुतिवचांस्यनुद्गीर्य न संतुष्यति [ कु० ६।८८, ८९, ९५ ]। वरयात्रायां भगवन्तमिमं पशुपतिं ब्रह्मदेवो विष्णुश्चेति देवावपि पर्युपासाते [ कु० ७।४३ ] 'जयेति' वाचमुदीरयन्तौ।

अस्ति च कालिदासस्त्रिमूर्त्तिसम्प्रदाये श्रद्धालुः। तन्मते य एव शिवः तावेव ब्रह्मविष्णू, य एव ब्रह्मा तावेव हरिहरौ, य एव च विष्णुस्तावेव शिवब्रह्माणौ [ कु० २।४, ५, ६।२३, ७।४४, र० १०।१६ ]। नास्त्येतेषु भेदः। मेघदूतस्य प्रमत्तोऽपि यक्षो भगवति महाकालेश्वरे विष्णौ च नितान्तं सश्रद्धः[1]। शङ्खणसूनुर्हरिदश्वो विश्वेश्वरमाराध्य विश्वसहं नाम पुत्रमाप [ र० १८।२४ ]। विश्वेश्वर एष काशीपतिर्विश्वनाथ इति मल्लिनाथः। विश्वसहस्यापि तनयो हिरण्याक्षरिपोर्भगवतो विष्णोरंश आसीत् [ र० १८।२५ ]। भगवदर्पितकर्मणां, भगवदावेशितचित्तानां च भक्तानां स एव भगवानभूयःसन्निवृत्तये गतिः [ र० १०।२७ ]। तदिदमीश्वरप्रणिधानं स्वयमीश्वर एव सर्वातिशायि। स हि आत्मानमात्मन्यवलोकयति [ कु० ३।५० ]। ईश्वरे स्थिरो भक्तियोग आशु कामधुग् [ वि० १।७ ]। ईश्वरस्य स्मरणे कालिदासोऽसाधारण्येन निरत इतीश्वरशब्दस्य प्रागुद्धृतैः सन्दर्भैः स्पष्टमेव !

ईश्वरस्य वाचकः प्रणव इति भगवतः पतञ्जलेरनुशासनम् [ यो० सू० १।२७ ]। तमिमं प्रणवमपि प्रणवशब्देनैव कालिदास उल्लिखति– 'पितामह ! तासां गिरां त्वमेव प्रभवः याः खलु उदात्तादिभिस्त्रिभिर्न्यायैरुदीर्यन्ते, यासां कर्म यज्ञः, फलं स्वर्गः, उद्घातश्च प्रणवः' [ कु० २।११ ] इति। यैरपरामृष्टत्वेन पुरुषविशेषस्येश्वरत्वं परणमति तेषाम् 'अविद्याऽस्मितारागद्वेषाभिनिवेशानां क्लेशानाम्, तन्मूलानां पुण्यापुण्यकर्माशयानाम्, तद्विपाकानां जात्यायुर्भोगानां' च[2] 'एकान्तविध्वंसिषु

---

१. मे. १।३४, ३५, ३६, ४३, ४४, ५०, ५२, ५५, ५६, ५८, ६० २।१०, विष्णु—१।१, १५, ५७, २।४७।

२. यो० सू० १।२४, २।३-९, १२; १३.

मद्‌विधानां पिण्डेष्वनास्था खलु भौतिकेषु' [ र० २।५७ ] इत्यादिषु वचनेषु, 'मामाकाशप्रणिहितभुजम्' [ मे० २।४३, ४२ ] इत्यादिषु वियोगादिसमापत्तिषु, 'एषा मनो मे प्रसभं शरीरात्' [ वि० १।८० ] इत्यादिषु रागप्रसङ्गेषु, 'कुशं द्विपामङ्कुशम्'-[ र० १६।८१ ] इत्यादिषु शात्रवकथासु 'दशरथ-दुष्यन्तमृगयाभिनिवेशोपाख्यानेषु, 'अखण्डं पुण्यानां फलमिव च तद्रूपमनघम् [ शा० २।११ ]' इत्यादिषु पुण्योल्लेखेषु 'परावृत्तभागधेयानां दुःखं दुःखानुबन्धि'—इत्येवंप्रभृतिषु [ त्रि० ४।३ ] 'ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः' [ र० १४।६२ ] 'आत्मानमेव स्थिरदुःखाजं पुनः पुनर्दुष्कृतिनं निनिन्द' [ र० १४।५७ ] 'भूयो यथा मे जननान्तरेऽपि स एव भर्त्ता न च विप्रयोगः [ र० १४।६६ ] 'तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि' [ शा० ५।२ ]—इत्यादिषु 'मरणं प्रकृतिः शरीरिणाम्' [ र० ८।८७ ] इत्यादिषु च—पातकदुःखजात्यायु-र्भोगानामुद्गारेषु न नास्ति कालिदाससाहित्येऽप्ररूढत्वम्।

ईश्वरप्रणिधानेन हि अन्तरायाभावोऽपि जन्यते[1]। तत्र च मूल-मीश्वरस्याणिमादिसिद्ध्युपलक्षिता ऐश्वर्यस्य परा काष्ठा[2]। अस्ति च कालिदासस्य सा सुविदिता। अत एव तस्योद्गाराः—

अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम्।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्त्ति यः॥

[ कु० ६।७५ ]—इति,

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः'—

[ मा० १।१ ] इति,

यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः'—

[ वि० १।१ ] इति,

प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव'—

[ र० १०।२८ ]—इति च।

अष्टमूर्त्ति—[ र० २।३५, कु० १।५७, ६।२६, ७।८७, शा० १।१, मा०

१. यो० सू० १।२९

२. यो० सू० १।२४ 'यत्र काष्ठाप्राप्तिरैश्वर्यस्य स ईश्वरः'—भाष्यम्।

१।१ ]—त्वेन भगवतः संभावनातोऽपि संयमैश्वर्यस्य पराकाष्ठा सुप्ररूढा महाकवौ। ईश्वरो योगानुशासने सर्वज्ञ इति, पूर्वेषामपि गुरुरिति, कालानवच्छिन्न इति चोपश्लोक्यते।[1] कालिदासोऽपि—

सर्वज्ञस्त्वमविज्ञात' [ र० १०।२० ] इति,
त्वं पितॄणामपि पिता [ कु० १।१४ ] इति,
ईशो हि जगतः पिता [ कु० ६।८० ]—इति,
जगद्योनिरयोनिस्त्वम् [ कु० २।६ ] इति,
चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥
—[ र० १०।२२ ] इति,

नाभिप्ररूढाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥
[ र० १३।६ ] इति च

निरर्गलप्रसरो वागारम्भेऽत्र।

ईश्वरो हि भूतानुग्रहार्थं निर्माणकायमधितिष्ठतीति भगवान् भाष्यकारो व्यासः[2]। कालिदासोऽपि तमिममभिप्रायमेवमेवानुवदति— 'लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोरि—[ र० १०।३१ ] ति। 'स्वार्थो न मे काश्चित्ः प्रवृत्तयः' [ कु० ६।२६ ] इति च।

ग. यया चित्तवृत्त्या स एव भगवान् गृह्यते योगे सा प्रमाणाख्या[3]। प्रमाणान्यपि त्रीणि प्रत्यक्षम्, अनुमानम् आगमश्चेति।[4] अत्रापि कालिदासो जागरूकः। अत एवास्य दर्शनम्—

प्रत्यक्षोऽप्यपरिच्छेद्यो मह्यादिर्महिमा तव।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा ॥
—[ र० १०।२८ ] इति।

प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीश'
[ शा० १।१ ]—इति च।

अयमत्र विशेषो यन्न्यायशास्त्रमनुमानाख्येन येन न्यायरूपेण हेतुना

१. यो० सू० १।२५, २६. २. यो० सू० १।२५–भाष्ये।
३. यो० १।६, ४. यो० सू० १।७,

भगवन्तं सिषाधयिषति सोऽपि सत्प्रतिपक्षत्वेना—किञ्चित्करः सन्नात्म-लब्धये यां श्रुतिमाश्रयति तामेव कालिदासोऽत्राप्तवाक्त्वेन प्रथमयति भगवदभ्युपगतौ। स एष भगवान् बुद्धेः प्रतिसंवेदीति भाष्यकृतोच्यते[1]। कालिदासो बुद्धेरपि कारणस्याव्यक्तस्यापि कारणत्वं भगवति पश्यति—'अव्यक्तो व्यक्तकारणम्' [र० १०।१८] इति। भगवदुपलक्षका येऽन्येऽपि विशेषाः पुराणेषु प्रसिद्धास्तानपि महाकविरसौ भागवतीषु स्तुतिषु प्रकाममुपगुम्फति। यथा चैतत् तत् तत एवावगन्तव्यम्।

घ. यथाभिमतध्यानादपि योगः प्रसिद्ध्यतीति[2] या भगवतः पतञ्जले-राज्ञा साऽपि पार्वतीतपश्चरणात् कालिदासे प्रसाधितभूयिष्ठा। पार्वत्या अभिमतः शिव एव। शिवश्च तस्या ध्यानविषयः। अत एव 'त्रिभाग-शेषासु सा तमेव भगवन्तं नेत्रनिमीलनास्वपि पश्यति प्रतिलभते च प्रतिबोधम्' [कु० ५।५७]। केयं त्रिभागशेषा निशा, कीदृश्चासौ प्रतिबोधः? व्यक्तमेव प्रतिभाप्राकाम्यभूमिर्ब्राह्मो मुहूर्त्त एव प्रथमः, द्वितीयश्च तत्त्वज्ञानम्। प्रतीयमानमिदं न मुख्यतया प्रविभातीति तु कथान्तरम्।

एवं हि प्रपञ्चिता योगदर्शनस्य योगशास्त्रस्य वा समाधिसाधन-पादागता विषयाः प्रामुख्येण, कटाक्षिताश्च लेशेन विभूतिकैवल्यपादा-वागता। अथापि विस्पष्टतायै कैवल्यार्थं कालिदासस्य—

नमस्त्रिमूर्त्तये तुभ्यं प्राक् सृष्टेः केवलात्मने।
गुणत्रयविभागस्य पश्चाद् भेदमुपेयुषे॥

—[कु० २।४] इति

त्वमेव हव्यं होता च भोग्यं भोक्ता च शाश्वतः।
वेद्यं च वेदिता चासि ध्याता ध्येय च यत् परम्॥

—[कु० २।१५]—इति,

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक्॥

—[र० १०।२०] इति काव्यानि स्थालीपुलाकतयाऽपि प्रकामं पर्याप्तानि।

---

१. यो० सू० १।७ भाष्ये।

२. यो० सू० १।३९.

ङ. विभूतये पुनस्तस्यैव महामतेः—

द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥

—[ कु० २।११ ] इति,

साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्त्तसे ॥

—[ कु० ६।२२ ]—इति,

अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥

—[ र० १०।२४ ] इति,

न सन्ति याथार्थ्यविदः पिनाकिनः'—[ कु० ५।७७ ] इति,
'ध्यानसंभृतविभूतिरीश्वरः' [ कु० ८।८१ ] इति

सत्यामपि तपःसिद्धौ नियमापेक्षया गुरुः ।
कल्पवित् कल्पयामास वन्यामेवास्य संविधाम् ॥

—[ र० १।९४ ] इति,

तमृषिः पूजयामास कुमारं क्लान्तवाहनम् ।
तपःप्रभावसिद्धाभि-र्विशेषप्रतिपत्तिभिः ॥

—[ र० १५।१२ ] इति च

वचनानि स्मरणसमकालमेवोपस्थितात्मानि विज्ञेषु, यदि नान्यानि गवेषणैकलभ्यानि । सन्ति च सिद्धाः, किन्नराः, यक्षाः, राक्षसाः, देवाः, पितरः, महर्षयश्च कालिदासेन निपुणमुपनिबद्धप्रभावाः । प्रसाधित-भूयिष्ठमेतैर्विभूतिसर्वस्वं योगदर्शनस्य ।

च. सांख्यप्रायं हि योगदर्शनम् । सेश्वरं सांख्यमेव योग इत्यपि केषांचन मतिः । शास्त्रयोरनयोः परिभाषाः परस्परं संवदन्ते । कालिदासः परिभाषास्वप्यासु पटिष्ठस्तत्र तत्र ता उद्धरन् । यथा चैतत् तत् तदुद्धृतैर्वचनैः स्पष्टमेव प्रसंख्यान–प्रणिधान–धारणादि–परिभाषा· घटितैः, अव्यक्तं, गुणाः,

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥
—[ कु० २।१३ ] इति,

पयोधरैः पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्याः।
ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति॥
—[ र० १३।६० ] इति,

किं येन सृजसि व्यक्तम् [ कु० ६।२३ ] इति च
'व्यक्ताव्यक्त-ज्ञ'—शब्दैरपि भृशमुद्धृतचरैः।

कर्म-भक्ति-ज्ञान-पूर्वका योगा गीतादिषु प्रसिद्धास्तेष्वपि कालिदासो न नास्त्यभ्यन्तरः कर्मयोगार्थं स 'सञ्चिकाय फलनिस्स्पृहस्तपः [ र० १६।२ ] इति सुदर्शनस्य फलनिस्पृहं तपः स्मरति। भक्तियोगः 'स्थाणोः स्थिरभक्तिसुलभत्वेन' विक्रमोर्वशीयनान्द्यां स्पष्ट एव। ज्ञानयोगश्च समलोष्टकाञ्चने रघौ [ र० ८।१०,२१ ] व्यक्तः।

स्पष्टमेतेन यत् कालिदाससाहित्ये व्यवहृतो योगः सांख्यमिश्रितः पुराणाश्रितश्चापि भवति, न पुनर्योगसूत्र-तद्भाष्यमात्राश्रितः।[1]



१. निबन्ध एष उज्जयिन्यामायोजिते १९७७-वर्षीयेऽखिलभारतीये कालिदाससमारोहे शोधपत्रगोष्ठ्यां पठितो विचारितश्च।

# वैदिकसंहितासु हंसशब्दः

*डा० रामनाथः वेदालङ्कारः*

लौकिकसंस्कृतसाहित्ये हंसः कवीनां प्रियः पक्षी। अयं हि ब्रह्मणो वाहनत्वेन विशिष्टं महत्त्वमावहति। नीरक्षीरविवेकेऽस्य शक्तिः श्रूयते। वर्षारम्भे हंसा मानस यान्तीति प्रसिद्धिः। वर्णतो हंसाः श्वेतपक्षा भवन्ति। केचिल्लोहितचञ्चुचरणाः सितशरीराश्च राजहंसा इत्युच्यन्ते। अपरे मलिनचञ्चुचरणाः श्वेतदेहा मल्लिकाख्याः। इतरे च कृष्णचञ्चुचरणाः श्वेतच्छदा धार्तराष्ट्रा इति ख्याताः[1]।

परं हंसशब्दो न केवलं पक्षिविशेषवाचकः, प्रत्युत लोकेऽस्य बहवोऽर्थाः प्रसिद्धाः। तद्यथा—सूर्यः, पक्षिविशेषः, निर्लोभनृपः, विष्णुः, परमात्मा, जीवात्मा, प्राणः, कामदेवः, अमत्सरः, संन्यासिविशेषः, मन्त्रविशेषः, गुरुः, पर्वतः, तुरङ्गमप्रभेदः, शिवः, विशुद्धः, अग्रतः स्थितः, श्रेष्ठः, गोविशेषः, जरासन्धनृपतेः सेनापतिविशेषः, मेरोरुत्तरस्थपर्वतविशेष इति मुख्यार्थाः कोशेषु[2] प्रतिपादिताः। उणादिकोषे[3] हन् हिंसागत्योरिति धातोः स प्रत्यये हंसशब्दः साध्यते। हन्ति गच्छतीति हंसः। अथ वैदिकसंहितासु हंसशब्दः केष्वर्थेषु प्रयुज्यते इति विचारयामः।

---

१. हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः। राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः। मलिनैर्मल्लिकाख्यास्ते धार्तराष्ट्राः सितेतरैः॥ ( इत्यमरः २.२३. २४ )

२. यथा—हंसो विहगभेदे स्यादर्के विष्णौ हयान्तरे। योगिमन्त्रादिभेदेषु परमात्मन्यमत्सरे। निर्लोभनृपतौ हंसः शारीरमरुदन्तरे॥ इति विश्वः ( १.७४.८–६ )। हंसोऽर्केऽमत्सरेऽच्युते। त्वगाश्वयोगिमन्त्रादिभेदेषु परमात्मनि। निर्लोभनृपतौ प्राणवाते श्रेष्ठेऽग्रतः स्थितेः, इत्यनेकार्थसंग्रहः ( २.५६८-६६ )। अन्ये कोशाः—मेदिनी ( १७०.१२-१४ )। मानियरविलियम्सकृतः संस्कृत-इङ्गलिशकोशः। आप्टेकृतः संस्कृत-इङ्गलिशकोशः।

३. वृतृवदिवचिवसिहनिकमिकषिभ्यः सः। ( उ० ३.६२ )

## हंसपक्षी

हंसाः पक्षिविशेषाः। 'हंसा हन्तेः, घ्नन्त्यध्वानम्' इति निरुक्तम् (४. १३)। वैदिकसंहितासु बहुत्र हंसा उपमानरूपेण प्रयुक्ताः। तैश्च प्रसङ्गैर्हंसानां स्वभावादिकमपि सूचितं भवति। अग्निरप्सु तथैव सीदति यथा हंसो जलेषु सीदंस्तरति—

श्वसित्यप्सु हंसो न सीदन् क्रत्वा चेतिष्ठो विशामुषर्भुत्॥ ऋग् १. ६५. ५

अग्निर्देवता। क्रत्वा स्वकीयेन प्रकाशप्रदानादिकर्मणा विशां प्रजानां चेतिष्ठः अतिशयेन प्रज्ञापयिता उषर्भुत् यज्ञाग्निरूपेण उषःकाले प्रबुद्धोऽयमग्निः अप्सु नदीसरोवरादिगतेषु जलेषु सीदन् उपविशन् हंसो न हंसपक्षीव अप्सु मेघवर्त्तिषु उदकेषु विद्युदात्मना सीदन् श्वसिति प्राणिति। श्वस-प्राणने। अनेन हंसस्याय स्वभावो द्योत्यते यदसौ जलतरङ्गाणामुपरि सीदन् श्वासोच्छ्वासं करोतीति।

हंसा इमे संमूहेषु बद्धाः सीदन्तीत्यपि कैश्चिन्मन्त्रैः सूच्यते। सोमवर्णनप्रसङ्गे कविर्व्याहरति—"आदीं हंसो यथा गणंविश्वस्यावीवशिन्मतिम्" ऋग् (९.३२.२) इति। हंसो यथा गणं समूहं विशति तथैव अयं सोमः विश्वस्य सर्वस्य मतिमवीविशत्, सर्वजनप्रियो जातं इत्यर्थः।

तथापि दिवि धावन्तः सूर्याश्वा वर्ण्यन्ते—

ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः।
हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः॥[1]
(ऋग् १.१६३.१०)

ईर्मान्तासः ईर्माः समीरिताः चालिताः अन्ता येषां ते, सिलिकमध्यमासः संसृतमध्याः, शूरणासः शूराः, अत्याः अतनवन्तः दिव्यासः दिवि भवाः अश्वाः सूर्यस्य वाजिनः यदा दिव्यम् अज्म आकाशमार्गम् आक्षिषुः आपुः तदा हंसा इव हंसपक्षिण इव श्रेणिशः श्रेणिबद्धाः सन्तः संयतन्ते सम्यक् प्रयत्नं कुर्वन्ति। अनेन हंसानाम् उड्डयनस्वभावः सूचितो भवति। तेऽपि संघीभूय उड्डीयन्ते, किञ्च उत्पतनकाले तच्छरीराणामपि मध्यभागोऽन्तभागश्च चलति।

---

१. मन्त्रोऽयं निरुक्ते व्याख्यातः। (निरु० ४.१३)

भूमौ श्रेणिशो निखाता अन्तरिक्षे उच्छ्रिता यज्ञिययूपाः पङ्क्तिबद्धैर्हंसैरुपमीयन्ते—

हंसा इव श्रेणिशो यतानाः शुक्रा वसानाः स्वरवो न आगुः ।
उन्नीयमानाः कविभिः पुरस्ताद् देवा देवानामपि यन्ति पाथः ॥

( ऋक् ३.८.६. )

श्रेणिशः पङ्क्तिशः यतानाः प्रवर्तमानाः हंसा इव शुक्राः शुक्राणि शुभ्राणि वस्त्राणि, हंसपक्षे शुभ्ररूपाणि वसानाः धारयन्तः स्वरवः यूपाः नः आगुः अस्मान् प्रापुः । कविभिः क्रान्तदर्शिभिः ऋत्विग्भिः पुरस्तात् वेद्याः पूर्वभागे उच्छ्रीयमाणाः देवा दीप्तिमन्तस्ते यूपाः देवानाम् अन्तरिक्षस्थानीयानां वायूनां स्थानं पाथः अन्तरिक्षमपि यन्ति प्राप्नुवन्ति । गगने उच्छ्रितान् श्रेणिबद्धान् शुभ्रवसनान् यूपान् दृष्ट्वैव प्रतीयते यत् शुभ्रवर्णा हंसा एव उपरि समुत्पतन्तीत्युत्प्रेक्ष्यम् ।

अथ च यज्ञे सोमाभिषवणानन्तरम् ऋत्विग्भिः क्रियमाणाः श्लोकाः हंसानां कलध्वनिभिरुपमिताः—

हंसा इव कृणुथ श्लोकमद्रिभिर्मदन्तो गीर्भिरध्वरे सुते सचा ॥

( ऋक् ३.५३.१० )

हे विप्राः, अध्वरे यज्ञे अद्रिभिः ग्रावभिः सोमे सुते सति मदन्तः हृष्यन्तो यूयम् सचा सह मिलित्वा हंसा इव श्लोकं कृणुथ स्तोत्रमुच्चारयथ । अत्र हंसानामियं प्रकृतिः सूच्यते यत् ते परस्परं मिलित्वा शब्दं कुर्वन्तीति ।

अन्यत्राप्युक्तम्—

हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् ।
बृहस्पतिरभिकनिक्रदद् गा उत प्रास्तौदुच्च विद्वाँ अगायत् ॥

( ऋक् १०.६७.३ )

सखिभिः स्वसहचरैः सह वावदद्भिः संलपद्भिः हंसैरिव वावदद्भिः भूयो भूयः वीरतासूचकं शब्दं कुर्वद्भिः सखिभिः मित्रभूतैः मरुद्भिः अश्मन्मयानि दृढानि नहना बन्धनानि व्यस्यन् विक्षिपन् , उत गाः पणिभिरपहृताः नद्याः पारे पर्वतगुहासु निरुद्धा धेनूः अभिकनिक्रदत् अभिशब्दयन् बृहस्पतिः प्र अस्तौत् प्रकर्षेण स्तुतिं चकार, विद्वानसौ

उद्गागयच्च सामगानं च कृतवान् । अत्रापि हंसाः स्वसखिभिः सह मिलित्वा संलपन्तीति सूच्यते ।

एकस्यामृचि मरुतां वर्णनप्रसङ्गे हंसा नीलपृष्ठा उक्ताः ।

सस्वश्चिद्धि तन्वः शुम्भमाना आ हंसासो नीलपृष्ठा अपप्तन् ॥

( ऋक् ७.५६.७ )

सस्वः[1] चिद् हि निश्चयरूपेणैव तन्वः स्वशरीराणि शुम्भमानाः अलङ्कुर्वाणा मरुतः नीलपृष्ठा हंसा इव असितपृष्ठा हंसपक्षिण इव आ अपप्तन् आगच्छन्तिति । एतेन ज्ञायते यद् हंसेषु केचिन्नीलपृष्ठा धवल-शेषभागाश्च भवन्ति ।

## आदित्यः

आदित्योऽपि हंस उच्यते । हन्ति विनाशयति तमः, हन्ति सततं गच्छतीति वा । तस्यैषा सौरी ऋग् भवति—

हंसः शुचिषद् वसुरन्तरिक्षसद् होता वेदिषदतिथिर्दुरोणसत् ।
नृषद् वरसद् ऋतसत् व्योमसद् अब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥

( ऋक् ४.४०.५ )

मन्त्रस्य सूर्यदेवताकत्वाद् हंसः सूर्यः । स एक एव सूर्यः पृथक् स्थानेषु पृथङ्नाम्ना स्मर्यते । स एक एव शुचिषद् शुचौ दीप्ते द्युलोके सीदतीति तादृशः सन् हंस उच्यते, स एव अन्तरिक्षे सीदती-त्यन्तरिक्षसत् सन् वसुः उच्यते । स एव वेद्यां सीदतीति वेदिषत् सन् 'होता' उच्यते । स एव दुरोणे गृहे सीदतीति दुरोणसत् सन् अतिथि-रुच्यते । स एव नृषु मनुष्येषु सीदतीति नृषद्, वरेषु श्रेष्ठेषु सीदतीति वरसत्, ऋते यज्ञे सीदतीति ऋतसद्, व्योम्नि आकाशे सीदतीति व्योमसद्, अप्सु उदकेषु जायते इत्यब्जाः, गोषु धेनेषु रश्मिषु वा जायते इति गोजाः, ऋते जायते इति ऋतजाः, अद्रिषु पर्वतेषु मेघेषु वा जायते इत्यद्रिजाः, ऋतम् सत्यस्वरूपश्च वर्तते । सूर्यतत्त्वं खलु सर्वेषु जङ्गम-स्थावरेषु व्याप्तम्, सूर्याभावे हि समस्तेयं पृथिवी समस्ताश्च ग्रहोपग्रहा व्याकुलतां प्राप्नुयुरिति सूर्यस्य महिमानमाचष्टे ।

---

१. सस्व इति निर्णीतान्तर्हितनाम । ( निघ० ३.२५ )

शौनकः ऋचोऽस्या विनियोगमाह—

हंसः शुचिषदित्यृचा शुचिरीक्षेद् दिवाकरम्।
अन्तकाले जपन्नेति ब्रह्मणः सद्म शाश्वतम्॥ ऋ॰ वि॰ २.२४०

ऋगियम् ऐतरेयब्राह्मणे[1] ऋग्वेदभाष्ये, माध्यन्दिन-शुक्लयजुर्वेद-संहितायां[2] उवटमहीधरकृते भाष्ये चापि सूर्यपरत्वेन व्याख्याता।

ऋग्वेदीयदशममण्डलस्य 'बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम्' (ऋक् १०.१२४.६.) इत्यादिमन्त्रेऽपि हंसशब्दः सूर्यपर एव व्याख्यातो भाष्यकृद्भिः। तथा सायणः—"बीभत्सूनां कम्पमानावयवानां यद् वा मेघेन बद्धानाम्। हन्ति गच्छतीति हंसः सूर्यः। तं सयुजं सखायम् आहुः ब्रह्मवादिनः कथयन्ति" इति।

अथास्मिन् यजुष्यपि हंसशब्द आदित्यार्थे प्रयुक्तः—
सोममद्भ्यो व्यपिबच्छन्दसा हंसः शुचिषद्। मा॰ यजु॰ १९.७४

'हंस आदित्यः अद्भ्यः सकाशात् छन्दसा वेदेन वेदरूपैः किरणैर्यथा सोमं व्यपिबत् पिबति, सोमोदकाभ्यां रविः सोममेव पिबति' इति महीधरः[3]।

---

१. ऐ॰ ब्रा॰ ४.२०

२. मा॰ यजु॰ १०. २४, १२. १४। यजुष्यन्ते 'बृहत्' इत्यधिकः पाठः।

३. 'सोमोदकयोः संसृष्टयोः सोमं वियुत्यापिबत् अद्भ्यः सकाशात्, छन्दसा छन्दोनिबद्धेन, हंस आदित्यः शुचिषत्' इत्युवटः।

The Haṁsa : the Swan, the Sun who floats through the sky—Griffith.

वैदिक इंडैक्स कोशे तु मन्त्रोऽयं हंसपक्षिपर इव गृहीतः। सोमोदकयोः संसृष्टयोः हंसः पक्षी सोममेव पिबतीति च व्याख्यातम्। The Haṁsa is credited with the power of separating Soma from water (as later milk from water) in the Yajurveda—Vedic Index.

**आदित्यरश्मयः**

आदित्यरश्मयोऽपि हंसा उच्यन्ते। तथा च निरुक्तम्—हंसाः सूर्यरश्मयः ( निरु० १४.२६ ) इति ।

तदभिवादिन्येषर्ग् भवति—

आ हंसासो न स्वसराणि गन्तन मधोर्मदाय मरुतः समन्यवः ।

( ऋग् २.३४.५ )

हे मरुतः, समन्यवः मन्युयुक्ता यूयं मधोः मदाय सोमस्य मदार्थम् स्वसराणि अस्मद्गृहाणि आगन्तन आगच्छत । तत्र दृष्टान्तः हंसासो न सूर्यरश्मयो यथा स्वसराणि[1]दिनानि आगच्छन्ति तद्वत्। उपमालङ्कारः 'स्वसराणि' इत्यत्रश्लेषः ।

**अश्वाः**

अश्वा अपि हंसा उच्यन्ते । यथा हि निघण्टौ हंसासः इत्यश्वनामसु पठितम् ( निघं० १.१४ ) । हंसा वै अश्विनो रथं वहन्तीत्युक्तम्—

हंसासो ये वां मधुमन्तो अस्रिधो हिरण्यपर्णा उहुव उषर्बुधः ।

( ऋक् ४.४५.४ )

हे अश्विनौ, ये वां मधुमन्तः मधुरगत्युपेताः अस्रिधः अविघ्नकराः उहुवः वोढारः उषर्बुधः उषसि बुध्यमानाः हिरण्यपर्णाः स्वर्णिमपक्षाः स्वर्णिमपक्षहंसवदुज्ज्वला द्रुतगामिनश्च[2] ।। हंसासः अश्वाः सन्ति तैर्युवाम् अस्मदीयानि सवनानि गच्छथः इति ।

केचित्तु हंसपक्षिण एवाश्विनो रथं वहन्तीत्याहुः[3] । तत्तु न समञ्जसं

---

१. स्वसराणि इति गृहनामसु पठितम्, निघं० ३.४. स्वसराणि अहानि भवन्ति स्वयंसारीणि, अपि वा स्वरादित्यो भवति स एनानि सारयति । ( निरु० ५. २२ )

२. 'हंसासः अध्वनि शीघ्रं गन्तारः—अश्वाः' इति सायणः 'हंसा इव सद्यो गन्तारोऽश्वाः' इति दयानन्दः । Swans : the Asvin's Chariot-steeds—Griffith.

३. Their car is drawn by horses ( Ṛg. 1. 117. 2 etc. ) more commonly by birds ( वि. 6. 63. 6

प्रतिभाति। क्वचिदपि तथानुक्तत्वात्। रासभा अश्वाश्चैव तद्रथवाहकत्वेनोक्ताः हंसशब्दस्तु द्रुतगतिद्योतनायैव तद्वाहकानां कृते प्रयुक्तः। सोऽपि ऋग्वेदस्य केवलं प्रस्तुतमन्त्र एव। अस्यैव सूक्तस्य द्वितीये सप्तमे च मन्त्रे साक्षादश्वशब्द एव प्रयुक्तः[1]। तेन द्योत्यते यत्तन्मध्यपतितः हंसशब्दोऽपि अश्ववाचक एव। अश्विनोरश्वैः सम्बधः तन्नाम्नैव प्रतीयते, यथोक्तं निरुक्ते 'अश्वैरश्विनौ इत्यौर्णवाभः (निरु० १२.१)

वायुः प्राणश्च

वैदिकसंहितासु वायुः प्राणश्चापि हंस उदीरितौ—

ये अर्वाङ् मध्य उत वा पुराणं वेदं विद्वांसमभितो वदन्ति।
आदित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं त्रिवृतं च हंसम्॥
(अथर्व १६.८.१७)

अथर्ववेदीयोऽयं मन्त्रः किञ्चित्पाठभेदेन तैत्तिरीयारण्यके समाम्नातः 'ये अर्वाङुत वा पुराणे वेदं विद्वांसमभितो वदन्त्यादित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हंसमिति' (तै० आ० १२. १५)। तत्रेदं सायणीय व्याख्यानम्—

"वेदं विद्वांसं पाठादर्थाच्च वेदतत्त्वाभिज्ञं महात्मानं, ये मूर्खा अभितो वदन्ति तत्र तत्र निन्दन्ति ते मूर्खाः सर्वेऽप्यादित्यमेव निन्दन्ति। ततो द्वितीयमग्निं निन्दन्ति। ततस्तृतीयं हंसं गमनशीलं वायुं निन्दन्ति। अस्य वेदविदोऽग्निवाय्वादित्यसायुज्ययोग्यत्वादेतन्निन्दैव तेषां निन्दा,

---

etc, or पतत्रिन् 10. 143.5, Swans 4. 45. 4, Eagles 1. 118.4, Bird steeds 6. 63.7 or Eagle steeds 8. 5. 7). Macdonell : Vedic Mythology, 1971, p. 50.

१. उद्वां पृक्षासो मधुमन्त ईरते रथा अश्वास उषसो व्युष्टिषु
(ऋक् ४.४५.२)

प्र वामवोचमश्विना धियंधा रथः स्वश्वो अजरो यो अस्ति
(ऋक् ४.४५.७)

इत्यनेनैव मन्त्रेणाग्न्यादिरूपत्रलक्षणं वेदविन्माहात्म्यं दर्शितम् इति"। एवमत्र सायणेन हंसशब्दो वाय्वर्थे गृहीतः।

अथर्ववेदेऽस्य सूक्तस्य सायणभाष्यं नोपलभ्यते। केचित्त्वत्रापि हंसशब्दं सूर्यवाचकत्वेन गृह्णन्ति[1]। परम् 'आदित्यः, अग्निः, हंसः' इति त्रयाणां पृथक् पठितत्वादत्र हंस आदित्याग्निभ्यां भिन्न एव कश्चिद् इति प्रतीयते।

अथर्ववेदीये प्राणसूक्ते प्राणपर्यायत्वेन हंसशब्दः प्रयुक्तः—

एकं पादं नोत्खिदति सलिलाद् हंस उच्चरन्।
यदङ्ग स तमुत्खिदेन्नैवाद्य न श्वः स्यान्
न रात्री नाहः स्यान्न व्युच्छेत् कदाचन॥

(अथर्व ११.४.२१)

हन्ति सततं गच्छति शरीरे श्वासोच्छ्वासरूपेणेति हंसः प्राणः। असौ हंसः प्राणः सलिलात् रक्तकेशिकाजालाधारभूतात् फुफ्फुसप्रदेशात् उच्चरन् बहिर्गच्छन्नपि एकं पादं नोत्खिदति एकमंशं बहिर्न निःसारयति। प्राणापानव्यानादिवृत्तिभिः शरीराभ्यन्तरमेव तिष्ठतीत्यर्थः। यदा हि प्राणी श्वासं त्यजति तदापि प्राणः आंशिकरूपेण शरीराभ्यन्तरे तिष्ठत्येवेति भावः। हे अङ्ग! हे भ्रातः, यत् यदि स प्राणात्मको हंसः तं द्वितीयं पादमपि उत्खिदेत् बहिर्निःसारयेत्, सर्वात्मना शरीराद् बहिर्गच्छेत् तदा शरीरं मृतिमुपगच्छेत्, तदा च मृतशरीरस्य कृते न अद्य स्यान्न श्वः स्यात्, न रात्रिः स्यान्न अहः दिनं स्यात्, नापि कदाचन व्युच्छेत उषसः प्रादुर्भावः स्यादिति[2]।

---

१. Āditya: the Sun, Agni and Haṁsa also are names of the Sun. The latter is called three-fold from his three strides as Viṣṇu or from pervading heaven, firmament and earth—Griffith.

२. सायणेन मन्त्रोऽयं विकल्पतया सूर्यपरो व्याख्यातः। हन्ति गच्छतीति हंसः जगत्प्राणभूतः सूर्यः—अथवा हन्ति गच्छति कृत्स्नं शरीरं व्याप्य वर्त्तत इति हंसः प्राणः। ग्रिफिथः सूर्यार्थमेव गृह्णाति। ह्विटनेभाष्ये यद्यपि सायणमतोद्धरणपूर्वकम्

जीवात्मा परमात्मा च

निरुक्तपरिशिष्टे 'अथात्मनो महतः प्रथमं भूतनामधेयान्युत्क्रमिष्यामः' इति प्रतिज्ञाय परिगणितेषु नामसु सर्वप्रथमं हंसशब्द एव उदीरितः ( निरु० १४.११ )'। पूर्वमादित्यप्रकरणे लिखितो 'हंसः शुचिषद्...' इत्यादि मन्त्रोऽध्यात्मदृष्ट्या जीवात्मपरमात्मपरमर्थं द्योतयति। निरुक्तेऽस्य मन्त्रस्य भाष्यं यद्यपि न सुसङ्गतं, तथापि तत्र 'हंस इति हंसाः सूर्यरश्मयः परमात्मा परं ज्योतिः ( निरु० १४.२९ )' इति परमात्मवाचकत्वसंकेतः सुस्पष्ट एव। तेन वेदे हंसशब्दो निरुक्तमतेनात्मवाचकोऽपीति स्पष्टम्।

स्वामिदयानन्दः ऋग्वेदभाष्ये जीवात्मपरां यजुर्वेदभाष्ये च दशमाध्याये परमात्मपरां द्वादशाध्याये च ब्रह्मजीवपरां व्याचष्टे।

यथा—"हंसः यः संहन्ति सर्वान् पदार्थान् स जगदीश्वरः। हे मनुष्याः, भवन्तो यः परमेश्वरो हंसः शुचिषद् वसुरन्तरिक्षसद् होता वेदिषद् अतिथिर्दुरोणसन्नृषद् वरसद् ऋतसद् व्योमसद् अब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदस्ति तमेवोपासीरन्" इति १०.१४. यजुर्भाष्ये।

अथर्ववेदे सर्पविषचिकित्सा-प्रसङ्गे मन्त्रोऽयं दृश्यते—

परि द्यामिव सूर्योऽहीनां जनिमागमम्।
रात्री जगदिवान्यद्धंसात् तेना वारये विषम्॥

( अथर्व ६.१०.१ )

अत्र हंसशब्दः सायणेन जीवात्मार्थे गृहीतः—"सूर्यो द्यामिव अन्तरिक्षमिव अहीनां सर्पाणां जनिं कृत्स्नं जन्म सर्पकुलम् अहं पर्यागमं

---

उभयोऽप्यर्थो निर्दिष्टस्तथापि तन्मते वास्तविकोऽर्थः सूर्य एव। परं प्राणसूक्तेऽस्य पठितत्वात् प्रकृतोऽर्थः प्राण एवेति मन्यामहे। सूर्यपरकोऽर्थस्तु शब्दशक्त्युद्भवेन ध्वनिना गृह्यते इति बोध्यम्। यद्वा "प्राणः प्रजानामुदयत्येषः सूर्यः" प्रश्नोप० १.८ इति सूर्यस्यापि प्राणात्मकत्वात् प्रधानतया प्राणजनकत्वाद् वा प्राणसूक्ते सूर्यस्तुतिरपि प्रकृतैव। तदा तु श्लेषेणोभयार्थप्रतिपादकोऽयं मन्त्रः।

परिप्राप्तवानस्मि । रात्री जगदिव—यथा रात्रिः स्वकीयेन तमसा कृत्स्नं जगद् व्याप्नोति एवं हंसात् हन्ति गच्छति व्याप्नोतीति हंस आत्मा तस्माद् अन्यत् कृत्स्नं शरीरं यद् विषं व्याप्नोति, हे विषग्रस्त ते त्वदीयं तद् विषं तेन प्रसिद्धेन भैषज्येन वारये निवारयामि” इति ।

अथर्ववेदस्यायमपि मन्त्रो द्रष्टव्यः—

सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः स्वर्गम् ।
स देवान् सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा ॥

स्वर्गं प्रति पततः उड्डयमानस्य अस्य हरेः हंसस्य पक्षौ सहस्राह्ण्यं परः सहस्रदिनपर्यन्तं वियतौ विततौ भवतः । स हि सर्वान् देवान् उरसि उपदद्य दत्त्वा विश्वा भुवनानि समस्तानि भूतजातानि संपश्यन् निभालयन् याति उत्पतति ।

सायणभाष्ये मन्त्रोऽयं न व्याख्यातः । एष खलु वायुसूर्यपरः, प्राणपरः, जीवात्मपरमात्मपरश्चापि व्याख्यातुं शक्यते । तथाप्यध्यात्मसूक्तेऽस्य पठितत्वाद् जीवात्मपरमात्मपरोऽर्थो मुख्यः । जीवो हि सततं मोक्षार्थं यतते । स हि पक्षित्वेन चित्रितः । मोक्षलोकं प्रत्युत्पततोऽस्य परः सहस्रदिनानि सञ्जातानि । स हि इन्द्रियमनोबुद्धिप्राणादिदेवान् स्वाभ्यन्तरे संस्थाप्य सर्वं विश्वं पश्यन्, पश्यन्नित्युपलक्षणम्, सर्वं भोगजातं भुञ्जान इत्यर्थः याति संसारयात्रां निर्वहति । तथैव परमात्माख्योऽपि हंसः ब्रह्माण्डरूपेऽस्मिन् स्वर्गे सनातनकालादुत्पतति । स हि सर्वान् देवान् अग्निवायुविद्युदादित्यादीन् स्ववशे संस्थाप्य विश्वानि भुवनानि संपश्यन् निरीक्षमाणः, न तु भुञ्जानः याति ।

उपनिषत्साहित्ये हंसस्य जीवात्मपरमात्मवाचकत्वं वेदसंहिताया अधिकतरं स्पष्टत्वेन समायाति । यथा श्वेताश्वतरोपनिषदि—सर्वाजीवे सर्वसंस्थे बृहन्ते अस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ( १.६ ), नवद्वारे पुरे देही हंसो लेलायते बहिः । वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ( ४.१८ ), एको हंसो भुवनस्यास्य मध्ये ( ६.१५ ) । अस्य वेदसंहितास्वेव सीमितत्वान्न तद्विषयेऽधिकं लिख्यते । हंसशब्दस्येतरेऽपि प्राक् प्रतिपादिता अर्था उत्तरवर्त्तिसाहित्ये समुपलभ्यन्ते । न ते वैदिकसंहितासु प्राप्यन्ते ।



# कालिदासभवभूत्योः काव्यबिम्बानुप्रेक्षा

डा० बुद्धदेवशर्मा वेदाचार्यः

नित्यवर्तमानकालो हि रसिकजनसञ्चारमण्डितदशदिशाद्वारः कविमानसलोकोऽतिरमणीयः। काव्यतत्त्वज्ञा उपदिशन्ति मार्गान् सरलातिसरलान् तदवगमनाय। श्रान्ता अपि तदध्वगाः सौन्दर्यमेव चिन्वन्ति। आकर्षणमूलं हि सौन्दर्यमिति नूत्नकाव्यालोचनपरा जना निगदन्ति। सौन्दर्यविहीनं काव्यं न प्रथते। तच्च काव्य द्विविधं हृदय-प्रधानं बुद्धिप्रधानं च। भवभूतिर्हृदयप्रधानानि काव्यानि रचयति। माघो बुद्धिप्रधानं काव्ययौवनं प्रदर्शयति, परन्तु कालिदासो हृदयस्य बुद्धेश्च प्राधान्यं समस्तमञ्जसा कृत्वा सृजति काव्यसंभारम्। अत एव स शाश्वतं लोकहृदयेषु विहरति। काव्यबिम्बालोचनया कालिदास-भवभूतिकाव्यानां पराध्र्यता भावुकता बौद्धिकता च विद्यन्ते। भावानां सामाजिकेभ्यः संप्रेषणं क्रियते। काव्यं हि भावानां संप्रेषणाय ललितं वर्त्म यद् ध्वनिरिति काव्याध्वगैरुद्घोष्यते। गीर्वाणवाणीहिन्दी-बङ्गलाङ्ग्लभाषादीनां काव्यानां संप्रेषणीयता भिन्नभिन्ना आभासते। सा यथा कालिदासे दीप्यते तथैव देशकालावस्थाविभिन्नेऽपि शेली-महाकवौ प्रकाशते। दिङ्मात्रं पाथेयमिव भावकल्पनासादृश्यं कालिदास-शेलीमहाकवितल्लजयोः काव्यपान्थेभ्य उपन्यस्यते—

'अत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पाः' उ. मे. ३१. तुलनायाञ्च

The foliage of the undecaying trees;

But fruits are ever ripe, flowers ever fair'.

The Daemon of the Word, Part II. L. 354-355.

एतादृशानि परस्सहस्राणि समानकाव्यरूपाणि दर्श दर्श सर्वे नूतना प्राचीनाः काव्यशास्त्रिण एकस्वरेण प्रवक्तुं विवशीभवन्ति यत् काव्य-कलेवरभेदे सत्यपि नात्मनो भेद इति। प्राचीनार्वाचीन-काव्यशास्त्र-मीमांसको डा० नगेन्द्रमहाभागः स्पष्टमाचष्टे यद् विभिन्नानां देशानां चिन्तनपद्धतिषु काव्यतत्त्वानां नामरूपाणि भिदां गतानि, परन्तु तत्त्वतः

दृष्ट्या न कश्चिन्मौलिको भेदो विद्यते। कालिदासभवभूत्योरपि कालोपक्रमभेदो बहुचीर्णः तथापि भावगौरवं तयोः समानमेव। अद्यावधि प्रायः सर्वेषु स्वशोधप्रबन्धेषु गीर्वाणभारत्या मुखायमानयोरेतयो कवीश्वरयोः कालिदासभवभूत्योः काव्यानां मूल्याङ्कनमकारि प्राचीन-साहित्यशास्त्रनिकष एव काव्यविद्यार्थिभिरधिगतज्ञानामृतैः परम् अस्य शोधप्रबन्धस्यैष प्रयासो यदेतयोः कविवरयोः काव्यानि पाश्चात्त्य-काव्यशास्त्रपावके प्रक्षिप्य जानीयात् तेषां पुनारूपमूल्याङ्कान्।

काव्यस्य मुख्यं प्रयोजनं जीवनस्यौदात्त्य-प्रकटनमेव। अमरभारती-परम्परा-कवीनां काव्येषु तत्त्वमेतज्ज्योतिरिव सर्वत्र भासयते। काव्य-बिम्बविषयो न केवलं काव्यशास्त्रस्यापितु विज्ञानस्याधुनिकस्याधिगतः। मनोविज्ञानं तस्य बिम्बाध्ययनस्य मुख्यस्तम्भो यतस्तद्विज्ञानं मनस-श्चेतनाचेतनाचेतनभावबिम्बनिर्माणादिक्रियाकलापं विस्तरेण विवेच-यति। भावकल्पनाप्रभृतीनां समयोगो ( सम् टोटल ) मन इति परि-भाषन्ते मनःशास्त्रिणः। यानि स्वकीयसिद्धान्तप्रतिपादनाय पुरस्कृतानि समुदाहरणानि फ्रायडादिमनःशास्त्रप्रवणैर्विचक्षणैस्तानि प्रायः सर्वाण्येव भिन्नभिन्नसाहित्यग्रन्थेभ्यः समुद्धृतानि सन्ति। दुष्यन्तादिनायकानां शकुन्तला-प्रभृतिनायिकानां चेतरेषां नटानां चरित्राणि विना मनोविज्ञा-नस्याध्ययनं समीचीनतया चित्रयितुं न शक्यन्ते यथा रामः स्तनाभि-रामस्तबकाभिनम्रां तटाशोकलतां सीताप्राप्तिबुद्ध्या परिरब्धुकामोऽस्ति, तस्य कीदृशी मनोदशा वर्तते तथा तस्याः कारणं किमित्यालङ्कारिक-चमत्कारेण नावगम्येते। विरहातुरस्य संमोहनग्रस्तस्य दाशरथेः सीताया भावनाया दिवास्वप्ने स्पर्शेच्छा जातेति मनःशास्त्रेण विविच्यते। तस्य चाधिः 'पेरानोश्येति कथ्यते। प्रायः सम्मोहने सत्येतादृशी भ्रान्तिर्जायते। विरहातुरस्यानुभूतिरस्यामवस्थायां समुत्कटा भवति। आधुनिकयुगे तयोः कविवरयोः प्रकाशने वैज्ञानिकमध्ययनमेतादृशं वैद्युतदीपक मिव विलसति। कविवरयोरेतयोश्चैतद्विधेनाध्ययनेन नूत्नार्थाश्च प्रकटी-भविष्यन्तीति गवेषणापरायणस्य जनस्यास्य सुदृढो विश्वासो यतो ह्यौचित्यानौचित्यविवेकेन साहित्यस्य गौरवं गिरिवरं चुम्बति।

काव्यबिम्बस्यातिसख्यं कल्पनया सह सहजमेव कल्पनायाश्च सौहार्द-

सौन्दर्येण सौन्दर्यञ्च कविहृदयेन कविहृदयञ्च भावेन भावश्च जीवनानुभवेन संयुज्यते। काव्यबिम्बकल्पनात्मकसौन्दर्यं कविजीवनानुभवेन जीवति। तच्च विकपर्णवर्जितं जयति। प्रकृतयोः कविमौलिशिरोभूषणयोः कालिदास-भवभूत्योर्विपयिगतकाव्यसौन्दर्यमकरन्दबिन्दुवृन्दं पायं पायं रसिक-चञ्चरीका गायन्ति तद्गुणविशेषम्। विषयगतसौन्दर्यलक्षणेन महादेवो विरूपाक्षः कपाली श्मशानशायी चिताभस्मलिप्तकलेवरो घृणास्पदरक्त-रञ्जितगजाजिनधारी वलयीकृतमहाव्यालश्चातिजुगुप्सितभयङ्करस्वरूपो वर्तते परन्तु स एव विषयिगतसौन्दर्यमयीक्षणवत्याः पार्वत्याः कृते चिताभस्माङ्गरागचर्चितो भोगिभूषणसज्जितस्तिलकायमानतृतीयनयनश्च विभुर्भवति। तथैव दूरबन्धोर्यक्षस्य कृते तुषाराद्रिवाताः—

आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति। उ. मेघ ४७.

विषयिगतसौन्दर्यभावनया परिम्भणयोग्या जायन्ते। एतदद्भुतं स्पृश्यसंवेदना-भरितं चाक्षुषसंवेदना-रहितमपि सर्वथामूर्तं मूर्तं वा तं बिम्बं यक्षिणीस्पर्शमयं तनोति। भवभूतिरप्यस्मिन् प्रसङ्गे कालिदासवत् स्पर्शसुखेच्छाया अभिव्यक्तिं कोमलकोमलामङ्गीकरोति—

उन्मीलन्मुकुलकरालकुन्दकोशप्रच्योतद्घनमकरन्दबन्धो
तामीषत्प्रचलविलोचनां नताङ्गीमालिङ्गन् पवन मम स्पृशाङ्गमङ्गम्।
मा. मा. १।३६

द्वयोरपि कविवरयोः कलात्मकं सौन्दर्यं भावात्मकं सौन्दर्यं परि-पोषयति।

चर्चित आङ्गलभाषाया 'इमेज्' इति काव्यशास्त्रीयोऽयं शब्दो भारते काव्यबिम्बनाम्ना प्रचलति। आङ्गलभाषाया. कोषे खलु पदार्थस्य मानस-चित्रमिति वर्तते। यस्य च चाक्षुष-सौन्दर्यभावोऽप्यस्ति। मानसशास्त्रे ख्यात 'इमेज' इत्यस्यार्थः प्रत्यक्षानुभवस्य स्मृतिरित्यङ्गीक्रीयते यस्याः परवर्तिनानुभवेन रूपान्तरणं जायते। संस्कृतभाषायां बिम्बस्यार्थः प्रतिच्छविरिति वर्तते। यथा 'उपनतजृम्भारम्भबिम्बैः' म. च. ६।४१, 'प्रतिबिम्बितेव' मा. मा. ५।४२ च। बिम्बशब्दस्यार्थो मूर्तिरपि प्राप्यते यथा आत्मबिम्बं पात्रीकुर्वन्' पू. मे. ५०, 'भर्तुः प्रणयमृदुकान्यक्षराणि

बिम्बान्तरितानि' मालवि. ६२ पृ० च। कालिदासस्योक्तपूर्वयोः प्रसङ्गयोर्बिम्बस्य स्पष्टार्थो मूर्तिरिति या खलु दृश्या भावमयी च द्विधा। तत्र बिम्बशब्दस्य 'इमेज्' इति शब्दार्थाङ्गीकरणे न किञ्चित् वैषम्यं भवेत्। सी. डे. लेविस् बिम्बं भावगर्भितं शब्दचारुचित्रमवैति। सुजान के लेंगर महोदयो बिम्बमाध्यात्मिकतलस्पर्शि मन्यमानो वाचमादत्ते यदेतदिन्द्रियसाधनेनाध्यात्मिकबौद्धिकसत्यावगामि वर्त्मोस्ति। ह्लेनामा कश्चित् पश्चात्त्यविपश्चिद् बिम्बममूर्तविचारस्य पुनर्निर्मितिमधिगच्छति। टी. ई. ह्यूमनामको विद्वान् बिम्बमान्तरिकसादृश्याभिव्यक्ति मन्यते। निगदितपूर्व-पण्डितानां बिम्बविषये काव्यप्रभया प्रकाशितानि मतानि निदिश्य विचार्यते यदेतद् बिम्ब मूर्तामूर्तभावयोः शब्दार्थद्वारैतद्विधं मूर्तनं चाक्षुषमपि अचाक्षुषं भवति यथा शकुन्तला श्रद्धया संश्लिष्टा सती मूर्तापि न मूर्ता जायते। सा च मनसा श्रद्धोपमा न तु नयनाभ्याम्। यथा वा 'आसञ्जयामास यथा प्रदेशं कण्ठे गुणं मूर्तमिवानुरागम्' रघु. ६.८३ मूर्तोऽत्र गुणो या खलु स्रगमूर्तेनानुरागेण संश्लिष्यते। एतादृशा संश्लिष्टबिम्बेन प्रायो हृदयहरणशीलश्चमत्कारः क्रियते कविभिः। अन्यत्र चामूर्तीकरणं विलक्षणं काव्यलोके स्पष्टं दृश्यते। यथा 'पपौ वशिष्ठेन कृताभ्यनुज्ञः शुभ्रं यशो मूर्तमिवातितृष्णः (स्तन्यम्) रघु. २.६९ अत्रामूर्तं यशः प्रकृतस्तन्ये पानयोग्यं मूर्तं कृतं कुशलेन काव्ये कालिदासेन। तथैवामूर्तस्य रहस्यात्मकस्य भावस्य चाक्षुष-विलक्षणप्रकारकं मूर्तनं रसिकहृदयमधिकं समावर्जयति। यथा राघ्याश्रममुनेरमूर्तमनुभावविशेषं प्रदर्शयन् 'शशाम वृष्ट्यापि विना दवाग्निः' रघु २।१४ इत्यादिवाक्यैः कालिदासो मूर्तं करोति। रूढोपमानानि बिम्बानि प्रतिरूपाणि जायन्ते यथा 'मनोरथानामगतिर्न विद्यते' कुमार, ५।६४ अत्र मनोऽमूर्तं रथश्च मूर्तस्तयोः संश्लेषेण प्राक्परम्परया लोकोक्तिबिम्बं सञ्जातम्। तथैव कामदेवो पुराणवर्णितस्वरूपोऽमूर्तो रति सफलतयाभिव्यनक्ति संस्कृतसाहित्ये। असम्भवार्थस्य भावस्य कृते दिवः पुष्पमिति वचनं मूर्तनार्थं लोकोक्तौ दरीदृश्यते। संस्कृतसाहित्ये मूर्तनं मनोविज्ञानसौन्दर्यशास्त्रानुरूपमेवास्ति। काव्यबिम्बस्य समुदय उद्दीपनाभावे सत्यपि कल्पनाद्वारैव जायते। एतन्नवनीतमांसलमन्ते च चिन्तनं सञ्जातं यद् बिम्बं खलु मूर्तामूर्तपदार्थयोः शब्दार्थद्वारा स्मृति-

मूर्तितसक्रियकल्पना सहजपुनर्मूर्तनं यस्य दर्शनं मनश्चक्षुरादीन्द्रियैः कर्तुं पार्यते। कालिदासस्य प्रतिरूपमिति शब्दो बिम्बपर्यायवाचिरूपेणापि ग्रहीतुं शक्यते। तस्य 'चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः' इति वाक्यं प्रमाणमेव परन्तु प्रसिद्धित्वादल्पाक्षरत्वाच्च बिम्बमित्येतन्नाम साधु प्रतीयते।

भाव विना बिम्बस्य किं सम्पूर्णस्य काव्यस्य नास्त्यस्तित्वम्। भावरूपाधारे कस्यचित् कवेर्जीवनानुभवस्य सत्त्वनिष्कर्षो भवति। पूर्वतोऽनुभूताना स्मृतयो भावान् पालयन्ति। ततः कारयितृप्रतिभया कविकर्म जागर्ति। विषयाणां रूपरसगन्धशब्दस्पर्शानामिन्द्रियाणां मनसश्च संकल्पविचिकित्साश्रद्धादिव्यापाराणामनुभवेषु प्रायो दृश्यश्रव्यसवेदनानुभवाः प्राधान्येन काव्येषु विलोक्यन्ते। अनुभवपरिपुष्टास्ते भावा न केवलं काव्यानि भूषयन्त्यपितु सर्वेषां सामाजिकानां जीवनानि दीपयन्ति लौकिकानि। मालविकाग्निमित्रे नृत्यावसरे सदुक्तिरस्मिन् प्रसङ्गे कालिदासस्य दीपशिखेवालोकयति। प्रस्तुतमस्मन्मतं 'भावो भावं नुदति' इत्यादिवाक्ये यादृशो भावो हृदि तत्तादृशो नृत्यभावो वर्तते। कालिदासस्य प्रतिकाव्यमालेख्यमिव प्रायश्चाक्षुषबिम्बप्रकारकं यथा वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि' शा० ६।२२ इत्यस्य बिम्बस्य विकासः क्रियते कविनान्यत्र त्वामालिख्य प्रणयकुपितां ·· 'इत्यादि श्लोके। श्लोकेऽस्मिन् यद्यपि चित्रमेतद् भावुकताभरितं स्पर्शेच्छासंवेदनाबलाच्चाक्षुषं प्रत्यक्षबिम्बम्। कालिदासस्य श्लोकस्यास्य प्रभावो भवभूतौ विद्यते मालतीमाधवस्य १.३६ श्लोकस्तत्र प्रमाणमेव। सादृश्यप्रतिकृतिसदर्शनेन किञ्चिन्मात्रं रागात्मकसुखमासाद्यते इति कामशास्त्रसम्मतं वचनं चित्रेऽस्मिन्नुक्तपूर्वे संघटते। मनःशास्त्रोपपादितसिद्धान्तः साम्यसंसर्गौ ( एनालाजी ) बहुप्रकाशं चित्तदशान्वेषणविषयेऽर्पयति। तदनुसारं कयोरपि सदृशपदार्थयोः परस्परं सम्बन्धः सहज एव। रूपवर्णाङ्गस्वभावचरित्रप्रभृतीनां सादृश्यं प्रोक्तमस्ति। विरहातुरो जनो दिवा स्वप्नेऽपि स्वजनसादृश्येन बिम्बानि सृजति। एवंप्रकार चित्रीकरणेन प्रियजनः स्वजनस्य स्मरति। सैषा प्राचीना वैज्ञानिकी आधुनिकी प्रक्रिया सञ्जाता। मनःशास्त्र सादृश्यसंसर्गारोपयोर्योगं बिम्बनिर्माणेऽनिवार्यमाकलयति। अलङ्कारेऽपि सैव प्रक्रिया प्रचलति

परन्तु 'शून्यं वासगृहं विलोक्य शयनादित्यादिश्लोकेऽस्मिन् कस्यचिदप्य-लङ्कारस्याभावो दृष्टः काव्यशास्त्रमर्मज्ञैरतः साम्यसंसर्गारोपयोर्योगस्या भाव एव पुनश्चात्रालङ्कारस्याबलता परन्तु बिम्बदृष्ट्या सम्भोगकर्म निखिलमालेख्यमिव गतिशीलं नयनगोचरीभवति। यदि तत्र रसो भवेत्तर्हि बिम्बविधानस्य पण्डितानां सहमतिर्भवेदिति न संशयविकाशः परन्तु चुम्बनव्यापारगतानन्दानुभूतिः प्राच्यं स्पृश्यप्रभावं जनयतीति सहृदयचेतसि साधारणीकरणप्रक्रियया कियत्परिणामता न रसशास्त्रा-लोचनविषयः रसस्य समानमेव बिम्बविधानं न न्यूनम्। अलङ्कारो रसाद् बिम्बाच्च बहु दूरीभवति ! दुर्वाससः शापो वस्तुरूपध्वनौ समा-पतति परन्तु सर्वेऽलङ्कारास्तत्र विफलाः। स शापो घटनाबिम्बमिति ज्ञायते। सम्पूर्णं रामचरित्रमुदात्तं कालिदासभवभूतिकाव्येषु न रस-विषयकं न चालङ्कारविचारणीयम। केवलं 'रामादिवत् प्रवर्तितव्यं न रावणादिवत्' धर्मशास्त्रस्य विषयवन्निर्दिष्टं विचित्रमेतद् यद् यादृशं विवेचनं चरित्रस्य पाश्चात्यशास्त्रे क्रियते तादृशं न भारतीयकाव्यशास्त्रे विद्यते। तत्र तु प्रत्येकाभिनेतुश्चरित्रबिम्बमुदेति। केवलं नायकादीनां धीरोदात्तप्रकारकाणां विलासिनीनां नायिकानां च परम्परागतं सीमितं चरित्रचित्रणं दृश्यते दिङ्मात्रम्। नायकस्य कस्यचित् विशेषः तत्रोपेक्षणीयो भवति। बिम्बस्याध्ययनक्षेत्रमतिविशालमत एव तदवगमनपदवी जटिला संवृत्ता। संस्कृतसाहित्ये यत् किञ्चिदलङ्कारस्य वैशिष्ट्यं तत्तु शब्दार्थश्लेष एव। अनुप्रासयमकादयः शब्दालङ्कारा नाद-बिम्बविषयेऽन्तर्भवन्ति। यस्तु कश्चिद् वक्तुमुपक्रमते यदुदात्तभाविकाद्य-लङ्कारेष्वेव बिम्बग्रहः करणीयः, साधु विचारणीयोऽयं विषयः। यद्येता-दृशा अलङ्कारा भावप्रधानास्तर्हि न कस्यचनविमतिस्तर्हि कथं न रसध्वनौ परिग्रहो विधीयते ? उदात्तालङ्कारस्तु वस्तुनः सम्पदमथवा गौरवं प्रकटीकरोति। यदि वाक्यगते प्रबन्धगते वा वस्तुरूपध्वनौ गृह्येत तर्हि का हानिः ? यद्यौदात्त्यविस्तरः तर्ह्योजोगुणविषयस्तत्। काव्य-कलेवरस्य कथं हारादिवदयमलङ्कारः ? बिम्ब औदात्त्यं मुख्यं वर्तते। उदात्तालङ्कारे वस्तुसम्पद् यदि रसावहा, गुणशालिनी' सा भवेत्। बिम्बप्रसङ्गे भाविकालङ्कारो विविच्यते। यल्लक्षणमकारि तस्यालङ्कारस्य

काव्यशास्त्रिभिस्तत्' प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनस्तद् भाविकमिति। अस्मिन्नलङ्कारे बिम्बग्रहः कर्तव्यो न वेति परिप्रश्नः। बिम्बे सम्भावना नास्ति प्रत्यक्षप्रमाणाधारात् परं भाविकालङ्कारे सास्ति। उत्प्रेक्षाविषय इव भाविकाङ्कारः। यदि च प्रत्यक्षस्यार्थो नयनगोचरतां प्राप्त एव तर्हि स बिम्बसमानो नैवास्ति यतो नयनेतरेन्द्रियार्थसन्निकर्षोऽपि जायते बिम्बे। यदि चेवरहितं 'प्रत्यक्षाः क्रियन्ते' इति लक्षणं क्रियेत तत्रापि च सकलेन्द्रियार्थसन्निकर्षप्रत्यक्षास्तर्हि वयमोमिति ब्रूमः। यथा साधारणीकरणप्रक्रियायां सम्भावनावकाशो नास्ति तथैव बिम्बेऽपि नास्ति। एतद्विधो यदि भाविकालङ्कारस्तर्हि सकलं बिम्बविधानं भाविकालङ्कारगर्भगतं भवेत्। यादृशमुदाहरणं विलोक्यते काव्यप्रकाशे तत्तु नयनगोचरतापरकं परं बिम्बं तु प्रत्यक्षमपि पुनर्निर्मीति ततो बिम्बभाविकालङ्कारयोराकाशपातालवदन्तरं महत्।

बिम्बालङ्कारयोरुपमानमभिव्यञ्जनायां महोपकरणम्। प्रायः सादृश्यविधानं खलूपमानेन भवति। परमुपमानस्य क्षेत्रं बिम्बादधिकं विशालं न विद्यते यतो ह्युपमानमपि बिम्बमेवोपमानं त्वस्त्येवार्थादुपमानोपमेये बिम्बमेव। काव्ये रूढमुपमानं प्रतीकरूपतामुपैति। बिम्बे विकासस्य सामर्थ्यं विद्यते। उपमानबिम्बं प्रस्तुतं सौन्दर्येण योजयति। बिम्बनिर्मितौ रूपककथाशास्त्रादीनि सादृश्यसंसर्गायावश्यकतत्त्वानि सन्ति। क्रोचेमहोदयस्य सहजानुभूतिविषयकं मतमस्मिन्नवसरे ग्राह्यं यतो हि बिम्बरूपा हि सहजानुभूतिः (इन्ट्यूशन)। सा च शब्दार्थद्वारा सहृदयान् जनानाह्लादयिततराम्। एतादृशानि बिम्बानि निश्चितं सहजरूपेणाभिव्यक्ति सामाजिकेभ्यः संप्रेषयन्ति। प्रतीकरूपतां गतानि बिम्बानि मुख्यार्थबाधसोपानादवतीर्य पुनः साक्षात् साङ्केतिकार्थवन्ति जायन्ते यथा 'दिवः पुष्पम्' इत्यस्यासम्भवार्थो मुख्यार्थबाधारहितोऽस्ति प्रयोगबाहुल्यात्।

इन्द्रियसम्बन्धिनोऽनुभवपाणिविटपस्य पञ्चशाखायमानबिम्बानि दिङ्मात्रमुपन्यस्यन्ते। (१) दृश्यान्यथवा चाक्षुषाण्यकारवन्ति बिम्बानि नयनगोचरतामुपयान्ति यथा 'देहं क्षात्रो धर्म इवाश्रितः' रघु १।१२ इत्यत्र क्षात्रो धर्मो देहीव मूर्तितो दर्शनीयः। (२) श्रव्याणि बिम्बानि कर्णेन्द्रियद्वारा पूर्वानुभवानां स्मृतानामवचेतनमनसि विद्यमानानि काव्ये पुनः

स्फुरन्ति यथा 'संगीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम्' उ. मे. १ इत्यस्मिन् वाक्ये मेघं मृदङ्गध्वन्यारोपः (प्रोजेक्शन) गम्भीरघोषेणातिमधुरेण मांसलीकरोति। भवभूतौ पौराणिकोपमानेन सह भयानके यथा 'पुष्करावर्तकस्तनितमांसलो वाङ्निर्घोषः' म. च. ७६ पृ० पुराणायातश्रव्यानुभवस्य बिम्ब मूर्तीकरणायाभिनेतुः स्वरस्य। वृत्त्यन्त्यानुप्रासादिछन्दोमयलयादीनि सर्वाणि श्रुतिसुखकराणि भारतीयकविरुचिप्रसूतानि तत्त्वानि शाब्दानि श्रव्यबिम्बानि योजयन्ति। विशेषतः संस्कृतवाङ्मये घनगर्जितं यूनोः कृते कामोत्तेजकरूपेण चित्रितं श्रव्येण बिम्बेन। (३) स्पृश्यानि बिम्बानि कोमलकठोरादिविशेषणैः स्पर्शसंवेदनया अवबोध्यन्ते। शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयौ कुमार १।४१, 'आनन्दशीतामिव वाष्पवृष्टिम्' रघु. १६।४४ तद्विकसितरूपं च 'आनन्दजः शोकजमश्रुवाष्पस्तयोरशीतं शिशिरो बिभेद" रघु. १४।३ अभ्यक्तमिव स्नातः, सोरस्ताडम्; 'लोचनानि शीतलयति' इत्यादीनि बहून्युदाहरणानि स्पृश्यसंवेदनानुभवानां बिम्बानि कालिदासस्य। तत्र भवभूतेः प्रायः स्पृश्यसंवेदनानुभवानां बिम्बेषु विशिष्टाभिरुचिर्वर्तते। 'आलिम्पन्नमृतमयैरिव प्रलेपैरन्तर्वा बहिरपि वा शरीरधातून्। संस्पर्शः उ. रा. ३।२६ 'क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम्' उ. रा. ४।७ दृश्यबिम्बस्य स्पृश्यबिम्बे रूपस्थानान्तरणं विलक्षणं परं समुत्कृष्टं समुदाहरणं तु 'निकृन्तन् मर्माणि क्रकच इव मन्युर्विरमति' उ. रा. ४।३ तथाविधेषूदाहरणेष्वनन्तेषु विद्यत एकम्। (४) घ्रातव्यानि बिम्बानि तत्पूर्वानुभवानां पुष्पादिमधुरैश्चिताधूमादिविकर्षणशीलैर्गन्धविशेषणैरवगम्यन्ते। सम्भोगावसरे गिरिजाया वदनं कल्पनात्मकरूपेण पूर्वमेव सुगन्धिमधुपानान्तरं रागातिरेकेण सुगन्धितरं संवृत्तमित्यत आह स्वकीयपूर्णकल्पनात्मकवैभवेन कालिदासः 'पार्वती—आम्रतेव सहकारतां ययौ' कुमार, ८।७८। एतादृग्बिम्बविधाने नावगन्तुं पार्यते यत् कुमारसम्भवस्याष्टमः सर्गः कालिदासस्य मेघदूतवत् प्रौढपरिमार्जितरचना। तदाननं मृत्सुरभि' इत्यन्तर्वत्न्याः सुदक्षिणायाः सहजबिम्बम् उक्तपूर्वविधम्। तथैव 'घ्रात्वा हविर्गन्धि रजोविमुक्तः—आत्मा' इति सत्त्वप्रकाशे, 'सुरभिर्यशोभिः' इति मनोहरतायामेतादृशानि बिम्बानि गन्धैः पूरयन्ति कालिदासकाव्यलोकम्। 'शिशिरकटुकषायः स्त्यायते

सल्लकीनामिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः' उ. रा. २।२१ इति भवभूतिमहाकवौ छाया कालिदासस्यैव 'स्थानमाह्निकमपास्य दन्तिनः सल्लकी विटपभङ्गवासितम्' कुमार ८।३३ बिम्बस्य परन्तु करालायतनं यथा घ्रातव्यबिम्बेन चित्रितं तथोपमानबिम्बमन्यत्र सुदुर्लभम्। 'इदं च पुराणनिम्बतैलाक्तपरिमृज्यमानरसोनकरसगन्धिभिश्चिताधूमैरधस्ताद् विभावितस्य श्मशानवाटस्य नेदीयः करालायतनम्' इति मा. मा. २०२ प्र० इति गद्यांशे भवभूतिः साधारणजनवच्चित्रयति प्रकृतमतो लोकप्रियोऽस्ति। (५) आस्वाद्यानि बिम्बानि पूर्वानुभवानां रसनेन्द्रियस्य मधुरकटुकषायादिविशेषणैर्विज्ञायन्ते यथा 'ईश्वरश्चक्षुषा चिरमुमामुखं पपौ' कुमार. ८।८०। अत्र दृश्यबिम्बस्य स्वाद्यबिम्बे स्थानान्तरणं रमणीयं दर्शनीयमस्ति। तत्र तथैव भवभूतावपि 'कवलित इव कृत्स्नश्चक्षुषा स्फारितेन' मा. मा. ३।१६ परमा काचिद् युवजनोचिताभिव्यक्तिः 'कवलित' इति शब्देन तीक्ष्णानुरागसम्प्रेषणशीला। श्रव्यबिम्बस्य च स्वाद्यबिम्बे स्थानान्तरणं यथा 'सन्देशं मे तदनु श्रोष्यसि श्रोत्रपेयम्' पू. मे. २३ तथैव 'अद्य श्रुतिः पिबतु किन्नरककण्ठि! वाचम्' (मा. मा.) स्पृश्यबिम्बस्य स्वाद्यबिम्बे परिवर्तनं यथा (स्पर्शः) संजीवनौषधिरसो नु हृदि प्रसिक्तः' उ. रा. ३।११ चाक्षुषमानसबिम्बस्य स्वाद्यबिम्बे रूपान्तरणञ्च यथा मनसश्च रसायनानि (सुवचनानि)' उ. रा. १।३६। भवभूताविन्द्रियसंवेदनानां बाहुल्यमेव काव्यवैशिष्ट्यम् इति सर्वैरुक्तपूर्वबिम्बैः सूच्यते। शकुन्तलाया मांसलमान्तरिकं च युगपत् सौन्दर्यं 'मधु नवमनास्वादितरसम्' इति स्वाद्यबिम्बेनाभिव्यक्तं को नाम विस्मर्तुं शक्येत।

कल्पनास्मृतिस्तम्भयोर्व्यवस्थितानि (१) स्मृतबिम्बानि, (२) कल्पितबिम्बानि, (३) लक्षितबिम्बानि (४) उपलक्षितानि बिम्बानि च परिगण्यन्ते काव्यशास्त्रज्ञैः। पौरस्त्यकाव्यशास्त्रिण एतादृग्बिम्बानि लक्षणाव्यञ्जनाव्यापारेषु गवेषयन्ति तेषामतः पाश्चात्यकाव्यविचक्षणैः सह न कश्चिन्महान् विरोधः।

संप्रेरकानुभवाधारस्थितानि बिम्बानि (१) सर्वसरलानि, (२) जटिलानि काल्पनिकविस्तरेण, (३) तन्मिश्राणि, (४) पूर्ण-

कल्पनात्मकरूपवहानि संपूर्णानि, (५) खण्डितानि मानसरोग-वशादाक्रोशाच्च, (६) विकीर्णानि न समाकलितरूपवहानि सन्ति। यावन्मात्रा कवेरनुभूतिर्भवति तावन्मात्रा (डिग्री) काव्यबिम्बनिमित्ति-रमणीयता। सैव बिम्बविधानमूलम्।

काव्यतत्त्वार्थदृष्ट्या (१) मुक्तकबिम्बानीतरबिम्बेभ्यः स्वतन्त्राणि सन्ति (२) अन्येषां बहुबिम्बानां स्वतन्त्राणां संयुक्तानि संश्लिष्ट-बिम्बानि उपमानोपमेयसंश्लेषाधारनिर्मितानि मनोहराणि सन्ति। अध्यवसानमपि तेषु गण्यते। उपमादृष्टान्तनिदर्शनाप्रतिवस्तूपमादयोऽल-ङ्कारास्तेषामेव बिम्बानां सौन्दर्यावहाः सन्ति। (३) घटनाबिम्बानि प्रासङ्गिकवस्तूनां सुग्रीवादीनां विलसन्ति समस्तरूपाणि सन्ति तानि च ध्वनावपि निर्दिष्टानि केवलमत्र शब्दकलेवरभिदा। (४) प्रबन्ध-बिम्बानि नानाघटनासमवायानुबन्धतारतम्यमयान्याधिकारिकाणि प्रायो हृदयरसायनानि सचेतसाम्। भारतीयाः काव्यशास्त्रप्रेक्षावन्त एतादृशेषु बिम्बेषु प्रबन्धध्वनिमथवा महावाक्यार्थध्वनिमाकलयन्ति यथा 'रामादिवत् प्रवर्तितव्यं न रावणादिवद्' इति पुञ्जीभूतरामायण-महाकाव्यतत्त्वार्थबिम्बं कस्य भारतीयस्य सामाजिकस्य मनसि न विद्यते। (५) चरित्रबिम्बानि च विशिष्टरूपेण चित्रितानि पाश्चात्य-काव्येषु समुल्लसन्ति। भवभूतौ 'रामोऽस्मि सर्वं सहे' रामस्य सर्वदुःख-साहिष्णुचरित्रं कथमेकवाक्य एव चित्रितम्। भारतीयमहाकाव्येषु नायको धीरोदात्त एवाङ्गीक्रियतेऽत एव सदोदात्तीकरणं प्रयोजनमेव काव्यस्य स्वीकृतं मनीषिभिः। तथैव मनःशास्त्रमपि लोकसंधारणायैवैतत् शिक्षयते।

काव्यदृष्ट्या (१) वस्तुपरकाणि चरितचरित्रौदात्त्यपराणि बिम्बानि संस्कृतसाहित्ये सन्ति। यथा रामस्य चरितं निश्चितं मधुरं मङ्गलकरं सघर्षपूर्ण च मन्वानाः कविद्विरेफास्तदेव वारं वारं गायन्ति। (२) स्वच्छन्दबिम्बानि कल्पनाप्रौढानि सचेतसामङ्गीकार्याणि। 'उदयनकथा-कोविदा ग्रामवृद्धाः' इतिवद् उदयनकथा स्वप्नवासवत्ते रत्नावल्यां च कवेः सम्पूर्णकाव्यैश्वर्येण विजयतो यथा वा वसन्तसेना-चारुदत्तयोः प्रणयने शूद्रकभासौ स्तस्तत्र चारुता काचित् कल्पनानां विशिष्टा चकास्ति।

काव्यशास्त्रीयबिम्बविवेचनेन सह मनःशास्त्रानुसारमपि कर्तव्यमध्ययनं समीचीनमुचितमस्माकम्। (१) स्वप्नबिम्बानि प्रायो रागात्मकानि कालिदासभवभूत्योः कृतिषु दरीदृश्यन्ते। 'प्रियायाः स्वप्नेषु क्षणिकसमागमोत्सवैः' रघु. ८।९२ एवंविधान्यानि समुदाहरणान्यपि उ. मे. ३१, ३७, ४६ पद्येषु विलोक्यन्ते। मालतीमाधवस्य सप्ताङ्के मदयन्तिका स्वप्ने मकरन्देन सह समागमेनासनमयूरकपर्यन्तमानन्दं विन्दति (२) आद्यबिम्बानि च सामूहिकावचेतनमनसः सन्ति। युंगनामा मनीषी मीमांसते यदेतादृशेषु बिम्बेषु मनसः संस्काराः परिलक्ष्यन्ते 'तानि बिम्बानि प्रायो धार्मिकेतिहासपुराणकथासहितानि भारतीयकाव्येषु समासाद्यन्ते। तानि बिम्बानि कथात्मकनामभिर्यदि प्रख्याप्येयुः तर्हि एतद्विधविधानाधिगमने सौकर्यं भवेत्। 'बर्हेणैव स्फुरितरुचिना गोपवेषस्य विष्णोः' पू. मे. १५ पद्येऽस्मिन् गोपवेषस्य भगवतो नारायणस्य श्यामरूपमुपमानरूपं मेघेन सह कल्पनात्मकचाक्षुषबिम्बं संश्लिष्य चमत्कारसर्वस्वं काव्यं किञ्चिन्नवमुद्भासयति। विष्णोर्गोपलीला रत्नमालेव सर्वेषां भारतीयानां जनानां बाल्यादेव स्मृतिमञ्जूषायां सदा संस्काररूपेण सुरक्षिता वर्तते। सैव कवेः प्रयोगकाले सामाजिकस्य च दर्शनश्रवणसमये सम्पूर्णलावण्यतरला पुनः प्रत्यक्षीभवति। सैव सहजा सरला बिम्बविधानप्रक्रिया। विदर्भपतेः श्रिय परिघगुरुभिर्दोर्भिः शौरेः प्रसह्य च रुक्मिणीम्' मालवि. ५।२ इति कालिदासबिम्बवदनुरागे भवभूतावपि 'अथ स मन्मथबलात्कारितो यदि कन्दर्पजननी त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयं ग्राहसाहसेन सहधर्मचारिणी करोति तदा कीदृशी प्रतिपत्तिः' मा. मा. पृ. ३३५ कल्पनात्मकं बिम्बं समाकलितनामास्ति। एतानि बिम्बानि भवभूतेस्तुलनाया कालिदासस्य बहुतराणि सर्वत्र काव्येषु विकीर्णानि सन्ति हरिन्मेदिन्यामवश्यायकणवत्। कालान्तरवशाल्लोकाभिरुचिवलाद्वा भवभूतिः सार्वभौमबिम्बानां प्रणेता संवृत्त इति मन्ये।

काव्यबिम्बविधानविषये द्वौ प्रकारौ विशेषतो स्मरणीयौ स्तः यतस्तयोः कारणेन प्रायः कवयोऽन्येभ्यः कविभ्यो विशिष्यन्ते। (१) पूर्वं बौद्धिकानि बिम्बानि (२) भावुकतामयानि चेति तानि प्रथमगद्यभागे

विवेचितान्यस्माभिः । प्रसिद्धरससिद्धकवीश्वर आङ्ग्लभाषायाः शैली प्रोक्तवान्—यद् अस्मिन् प्रसङ्गे कदापि कस्यचित् कवेः काव्यानि प्रयोगशालायां समीक्षितुं न शक्यानि यद्येवं भवेत्तर्हि सर्वेषां कवीनामपि काव्यानि व्यर्थव्यथाकारणानि स्युः ।

अन्येषां पाश्चात्त्यकाव्यशास्त्रज्ञानामन्यान्यपि मतानि समीक्ष्य सारोऽयं यच्चाक्षुषबिम्बेष्वेव स्पृश्यश्रव्यस्वाद्यघ्रातव्यबिम्बानामन्तर्भावः करणीयस्तत्र कारणमिदं यच्चक्षुरिन्द्रियेण संस्कारवशात् क्षौममसृणता, तिन्तिणीविलोकनेनैव ( सीधूपानोद्वेजितस्य तव तिन्तिण्यामभिलाषः' शा० ) लालासंदर्शिता यथा सहजमनुभूयतेऽतः पृथगिन्द्रियश्रवसंवेदना-बिम्बानां नास्ति कुत्राप्यावश्यकता। तत्परिहारार्थमुच्यते यदेतन्मतं लघुतायै साधु वर्तते परं पृथक् पृथग् इन्द्रियसंवेदना बिम्बवर्गः स्पष्टताध्ययने जायतेऽतः प्रायः सर्वैर्बिम्ब-विधानविशारदैर्विवेचिनपूर्वं वर्गीकरणमूरीक्रियते ।

मनोविज्ञानं काव्यबिम्बं प्रमाणयति । यथा मनोविज्ञानं काव्यबिम्ब-लक्षणमिदं वर्तते यदिन्द्रियाणां सम्मुखमनुपस्थितानामप्रस्तुतानां वा पदार्थानां घटनानां मानसचित्रं बिम्बमिति। तच्च मुख्यतया शारीरिकं मानसं च द्विविधम्। अन्याद्दक्षाणि ( १ ) प्रत्यक्षानुभव-सम्बद्धानि ( ५ ) मध्यवर्तीनि ( ३ ) परोक्षानुभवसम्बद्धानि च त्रिप्रकार-काणि बिम्बानि सन्ति। तत्र प्रत्यक्षानुभवसम्बद्धानि ( १ ) चक्षुर्द्वारा गृहीतद्रष्टव्यानि ( २ ) श्रोत्रद्वारा गृहीतश्रव्याणि ( ३ ) नासिकाद्वारा गृहीतघ्रातव्यानि (४) रसनाद्वारा गृहीतस्वाद्यानि (५) त्वग्द्वारा गृहीतस्पृश्यानि च संवेदनाबिम्बानि सन्ति। अनतिपल्लवेन भावोऽयं यद् बाह्योद्दीपनेऽनुपस्थिते सत्यपि पूर्वानुभववशात् कश्चिदपि जनस्तस्य साक्षात्कारं मनसा करोति । कवेः संरचना खलु मानसी सुता कथ्यते प्रायः भारतीयैः काव्यरसिकैस्तत्रापि मनोविज्ञानवद् वचनम्। यक्षद्वारा यक्षिणीकृतस्वप्नसमागमवर्णनं पूर्वानुभवबलादेव भवति, यद्यपि यक्षिणी यक्षसमक्षं नोपस्थिता तथापि तन्मनसा दृश्यते। एवंविधं बिम्बं दिवा-स्वप्नफलमिव मन्ये । ( २ ) अन्यानि मध्यवर्तीनि बिम्बानि तानि सन्ति यानि प्रत्यक्षसंवेदनाभ्यः पश्चादपि पूर्ववत् प्रभाववन्ति सन्ति यथा चञ्चलायाः प्रकाशात् पश्चादपि नयनयोः प्रत्यक्षीभवन् प्रकाशोऽल्प-

कालिकः सम्भवति। मनःशास्त्रिण एतानि बिम्बानि संवेदनामभिव्यवहरन्ति। तान्यपि दृश्यश्रव्यस्पृश्यस्वाद्यघ्रातव्यप्रकारकाणि भवन्ति। अथ च तानि प्रकारद्वयेनैव कथ्यन्ते (१) अनुबिम्बानि (२) प्रत्यक्षबिम्बानि च यथा कस्याश्चिद् गायिकायाः कर्णरसायनं मधुरातिमधुरं गीतमाकर्ण्य बहुकाले गतेऽपि श्रुतिकुहरयोर्मध्ये तत्तथैव गुञ्जति वारं वारं यथा वोत्तररामचरिते 'वदनकमलकं शिशोः स्मरामि स्खलदसमञ्जसमञ्जुजल्पितानि' (उ. रा. ४।४) पुनश्च परोक्षानुभवसम्बद्धानि चेतनमनसोऽवचेतनमनसश्च बिम्बानि द्विधानि (१) चेतनमनसः स्मृतिकल्पनाबिम्बानि सन्ति। तत्रोद्दीपनद्वारोत्पन्नप्रभावे परिसमाप्ते सत्यर्थाच्चेतनादेहल्या बहिर्गते सति प्रयासपूर्वकमुपस्थितानि स्मृतिबिम्बानि प्रोच्यन्ते। पूर्वानुभवस्य विभिन्नानामंशानां पुनर्नवनिर्माणगतानि मानसचित्राणि कल्पनाबिम्बानि सन्ति। तानि च वस्तुपरकेभ्योऽनुकृतिमात्रेभ्यो निष्क्रियेभ्यश्च स्मृतिबिम्बेभ्यो नितान्तभिन्नानि सक्रियाणि (क्रिएटिव) सन्ति। रमणीयं खलु सक्रियैः कल्पनाबिम्बैरतिनूतनैर्निर्मीयते। (२) अवचेतनमनसो वैयक्तिकानि सामूहिकानि च द्विप्रकारकाणि बिम्बानि प्रतिपादितानि मनोगतिज्ञैः पण्डितैः। (१) पुनरवचेतनमनसो वैयक्तिकानि स्वप्नतन्द्रा मिथ्याप्रत्यक्षबिम्बानि त्रिविधानि बहुचर्चितस्वरूपाणि सन्ति मनोविज्ञाने। (१) निद्रितावस्थायां पूर्वानुभवाधारादवचेतनतमनो यदा चित्राणि निर्मोति तानि स्वप्नबिम्बाभिधानानि (२) अवचेतनमनोभावबलाद् यदार्धनिद्रितावस्थायामिन्द्रियसन्निकर्षेण सह पूर्वानुभवाः संश्लिष्टाः सन्तः पूर्णानि खण्डितानि वा मिश्राणि वा रूपाणि धारयन्ति (काव्ये-चित्राणि) तान्येवोदितानि तन्द्राबिम्बानि प्रख्याप्यन्ते। सम्पूर्णं मन्ये काव्यजगत् तन्द्राबिम्बसङ्कुलम्। मानवो हि भीषणयथार्थजाताद्-(रिएलिटी)श्चिन्ताभ्यस्तः सन् लोकादस्मात् पलायनं कृत्वा दिवास्वप्नद्वारा (डे ड्रीम) शाश्वतसौख्यागारा कल्पनामरावतीं जिगमिषति। सुखानुभवाभावपूर्तिकरं (प्लेजर कम्पेंशेशन्) हि सकल दिवास्वप्नबिम्बभरं काव्यकुलमिति निश्चिन्वन्ति मानसशास्त्रिणः। त्वामालिख्यप्रणयकुपितामित्यादिवत् काव्यपद्यानि सर्वाणि तन्मतमेव परिलालयन्ति। (३) मिथ्याप्रत्यक्षबिम्बानि खलु विलक्षणानि सन्ति।

असन्नपि पदार्थः यदा प्रत्यक्षीभवति तदा मिथ्याप्रत्यक्षबिम्बविषयः प्रवर्तते। मिथ्याप्रत्यक्षवान् ( हेल्यूशिनेशन ) कश्चित् मनोरोगवशाद् रोगी यथा न सन्तमपि पुरुषं पश्यति स्पृशति पृच्छति च। यथा वा स एवासदपि फलं भक्षयति जिघ्रति च। एतादृशेषु बिम्बेषु स्वकीय-संस्कारवशाद् आत्मादर्श( धर्म )वशाच्च ( आइडियल प्रिंसिपल ) कस्यचिज्जनस्य दमितवासनामूलानुभवः ( सप्रेशन अथवा रिप्रेशन ) विद्यते। भयमपि तस्मादेव जायते। विक्रमोर्वशीयस्य चतुर्थाङ्के पुरुरवसो मालतीमाधवस्य नवमाङ्के माधवस्य च विक्षिप्तावस्थायां भ्रान्ति-बिम्बानि मिथ्याप्रत्यक्षबिम्बानि च विलोक्यन्ते। भ्रान्तिस्तु सति पदार्थेऽन्यथाप्रत्यक्षता यथा 'इमां तटाशोकलतां च तन्वी.........
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा साश्रुरहं निषिद्धः। रघु० १३।३२ प्रायो बिम्बे सादृश्य-विधानं किञ्चिद् भ्रान्तिवशाज्जायते। मिथ्या-प्रत्यक्षबिम्बं खलु न शुभशकुनमभिज्ञानशाकुन्तलस्य तृतीयाङ्के—( आकाशे ) छायाश्चरन्ति बहुधा भयमादधानाः संध्यापयोदकपिशाः पिशिताशनानाम्' शा० ३।२४ राजा दुष्यन्तो विलोकयति। खलु बह्वज्ञातभयग्रस्त ( फोबिया ) शून्य आकाशे राक्षसानां छायामसती-मपि विलोकयति। ( २ ) वैयक्तिकबिम्बेभ्यो भिन्नानि सामूहिकबिम्बानि सन्ति। तेषामवचेतनमनसो सामूहिकबिम्बानामेकप्रकारमङ्गमेव चाद्य बिम्बनाम्ना विज्ञायते। आद्यबिम्बानि पूर्ववर्तिनां विदुषां जनानां वादिमविद्यापुराकथानां संश्लेषेण ज्ञायन्ते। यथा वैदिका ऋषयः सूर्यं देवतारूपेण विलोकयामासुस्तस्य ( सूर्यस्य ) देवतारूपं सूक्तवर्णितं कवयः स्वकीयैर्नायकैः स संश्लिष्याद्यत्वेऽपि साधु कवयन्ति। कथात्मक-बिम्बान्येवाद्य बिम्बानि मया स्वीकृतानि।

केचन पाश्चात्याः किमुत भारतीया विद्वांसो भूयासो निगदन्ति यत् काव्यबिम्बानि रूढप्रकारशाखाप्रशाखातच्छाखाजालानि कमपि कोमलबुद्धिं भ्रमयन्ति जनं रुन्धन्ति च तदवगमनपदवीम्। नूतनैर्नूतनै-श्चिन्तननानाप्रवाहैर्बिम्बशिला विमलीभवति। यथा वा शाणोल्लेखेन रत्नानि सुसंस्कृतानि चेतोहराणि जायन्ते। अद्यत्वे बिम्बानां सूक्ष्म-चिन्तनानि वैज्ञानिकपद्धत्या क्रियन्तेऽतस्तत्स्वरूपं विज्ञानस्य सम्यग्ज्ञा-तृनाभावा काठिन्येन महता न विशदीभवति सारतो बिम्बानि संवेद्य-

नानां पुनरुद्भासितानि मानसानि चित्राणि सन्ति। शास्त्रालोचनयाऽलङ्कारः शब्दार्थयोः सम्बन्धात् पश्चाद् भावेन सम्बध्यतेऽर्थाद् भावालङ्कारयोरनुबन्धः परोक्षमेव तत्र बिम्बं साक्षादिन्द्रियसवेदनाभिभावैः सह सम्बद्धम्। एवैव मूलभिदा बिम्बालङ्कारयोः। डा० नगेन्द्रमहोदयोऽङ्गसाध्यगमद् यद् भारतीयसाहित्यशास्त्रस्य लक्षणाव्यञ्जनेऽस्यैव कल्पनात्मकप्रयोगस्योपकरणे स्तः। स तु ध्वन्यर्थमपि बिम्बरूपं मन्येते परन्तु रसध्वनिं बिम्बरूप न मन्यते। रसध्वनौ भावध्वनिर्वर्तते न बिम्ब, तच्च मध्यममिति निश्चिनोति। मदीय एष विचारो यद् यदि भावोऽभिव्यक्तस्तर्हि भावबिम्बतामालिङ्गति यदि चानभिव्यक्तस्तर्हि काव्ये किं प्रयोजनम्? स च कथं रसरूपध्वनिः कथं स्यात? अतो रसो रूपमेति ततो रसरूपो ध्वनिरभिव्यक्तिर्वा बिम्बं वा भवति। अस्मिन् प्रसङ्गे स विद्वान् भावबिम्बं कथं विसस्मार न जानेऽहमेतत् यः पूर्वं तद् बिम्ब भावसम्बद्धमङ्गीचक्रे तत्र स महामहिमशाली काव्यशास्त्री कथमतिदार्शनिकः सञ्जातः।

संस्कृतकाव्यशास्त्रोपवने काव्यबिम्ब विदेशिपुष्पबालतरुवरमिव विकसेदिति सर्वेषां प्रायस्तत्र सौन्दर्यसमुपासकानां सञ्चरतां रसिकचञ्चरीकाणां मानसोऽभिलाषो जागर्ति यतः काव्यतत्त्वं देशविशेषसीमानुबद्धं दशदिशापरिगतमाकाशमिव ज्योतिर्मयं नीलमेव विलसति। काव्यस्य संवेद्यतत्त्वमभिव्यक्तौ च मूर्तनं परस्परं न पृथक् स्तः। तयोर्यद्यपि सूक्ष्मरूपेणाखण्डं रूपं चकास्ति काव्ये तथापि वैशद्यायाध्ययनं पृथक्पृथक् क्रियते। पाश्चात्त्यसौन्दर्यशास्त्रेणांशतश्च मनःशास्त्रेणैवङ्कारमध्ययनमकारि। भावस्य कल्पनात्मकमूर्तनविषये त्रिदशगिरोऽलङ्कारवक्रोक्तिध्वनिरीतिवादिनः साहित्यशास्त्रिणोऽपि सूक्ष्मेक्षिकया गम्भीरां विस्तरविशदां च भिन्नभिन्नविचारणासरणीः स्वीचक्रिरे। तत्राप्रकृतोपमानाप्रस्तुतैः सहानुपूर्व्येण प्रकृतोपमेयप्रस्तुतानां कल्पनात्मकानि सादृश्यानि (एनोलोजी) प्रतिपाद्यन्ते। तथैव मनःशास्त्रं साम्यसंसर्ग-नियमं (लॉ ऑफ सिमिलैरिटी) समुपपादयति। उक्तपूर्वक्रिया बिम्बविधानसभा नैवास्ति। पाश्चात्त्यकाव्यशास्त्रे प्रकृतोपमेयप्रस्तुतानि बिम्बान्येव सन्ति।

डा० नगेन्द्रः स्वकीये काव्यबिम्बनामग्रन्थे लक्षणाव्यञ्जनाध्वनीनां बिम्बेन सह सम्बन्धं घनिष्ठं मन्यते। लक्षणायां यतो मूर्तीकरणे सहजा क्षमता विद्यतेऽतो बिम्बनिर्माणं तस्या लक्षणाया गुणो मुख्यो वर्तते। गौणीसाध्यवसानादिलक्षणभेदेषु शब्दस्य बिम्बविधायिन्याः शक्तेर्विपुलं विवेचनमस्ति। व्यञ्जनायामपि स काव्यशास्त्री बिम्बमुद्बोधयितुं शक्तिं प्रतिजानीते। ध्वनेर्विविधभेदानपि बिम्बरूपान् मन्यते। अत एवैवं विलोक्यते यद् बिम्बव्यापारे सम्पूर्णकाव्यशास्त्रव्यवहारोऽभिव्यक्तिसम्बद्धः प्रायो विद्यते। लक्षणामूलाया व्यञ्जनाया निखिलार्थतत्त्वं बिम्बपरागतमेव। स्फोटस्य रूपं ध्वनिमूलमिति ज्ञेयम्। आनन्दवर्धनाचार्याः शब्देन सह सम्बद्धेनापि स्फोटेन सङ्केतग्रहणं प्रकल्पयन्ति। डा० नगेन्द्रमहाभागः स्फोटं बिम्बस्य मूलरूपस्याधिकमन्तिकमवैति। सार्थकशब्दद्वाराथवा सार्थकवाक्यद्वारा यद् बिम्बं स्फुटितं भवति तन्न वैयाकरणानां स्फोटाद् भिन्नम्। काव्यस्य रूपवादिषु सम्प्रदायेषु कुन्तको वक्रोक्तिसिद्धान्तमतिगम्भीरतया प्रतिपादयामास। वक्रतायां चारुतानिबन्धनं बिम्बस्यान्तिकमेवास्ति। पर्यायविशेषणलिङ्गकारकादीनां विशेषप्रयोगैरुद्बुद्धानि बिम्बानि बहु विशदानि मूलभावानुकूलानि च सन्ति। यथा जुगुप्साभयप्रतीतिप्रसङ्गे पशुपतेर्विशेषणं कपालिनो भवेन्न तु पिनाकिनः। वाक्यवक्रतालङ्कारस्य विधानस्यान्यन्नामधेयम्। वस्तुप्रकरणप्रबन्धानां रमणीयतासखी, सा च घटनाप्रकरणप्रबन्धबिम्बानि प्रति सानुरागावश्यं भवेत्। रीतिवादे पदसंघटना नादबिम्बस्य समानैव प्रतिभाति। ओजोमाधुर्यप्रसादाः शब्द-सौन्दर्यस्याभिव्यक्तये सन्त्यतो बिम्बस्य सहोदरतां गता एव।

डा० नगेन्द्रो लक्षणावक्रोक्तिव्यञ्जनाध्वनीन् बिम्बस्यैतावदन्तिकमैषीद् यत् तत्र भारतीयमिव (बिम्ब) विलोक्यते। काव्यबिम्बभवनस्य रचनाप्रक्रिया सोपानत्रयचेतोहरा। (१) अनुभूतेर्निर्व्यक्तिकरणं तत्र सर्वप्रथमं कवेरनुभूतिसम्बद्धानां परिस्थितीनां पदार्थानां व्यक्तेः स्मृतीनां चाधारशिलायामबाह्योपकरणानां प्रयोगैस्तत्तत्पदार्थेषु व्यक्तिषु वानुभूतेरारोपणद्वारा प्रसङ्गविधानमथवा विभावानुभावौ योजयत्येवङ्कारमात्मनिष्ठामनुभूतिं वस्तुनिष्ठारूपां करोति। (२) साधारणीकरणं

प्रसङ्गविधानस्याङ्गभूतं विशेषं साधारण करोति साधारणीकरणं च पुनः सहृदयसंवेद्यधर्मं प्रकाशयन् प्रमुखतत्त्वानि सान्द्रीकरोति। (३) शब्दार्थाभ्यामभिव्यक्तिः कविवरलक्षितलक्षणाप्रयोगद्वारा वस्तुरूप-रेखासु विपुलवर्णवर्गसंकुलतुलिकया सौन्दर्यं चित्रीकृत्याप्रस्तुतविधान-साहाय्येन कलेवरमतिसंवर्धयन् बिम्बस्य गौरवाय पूर्णतां विदधाति।

कवेरन्तश्चेतना मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेन च। बिम्बनिर्माणं इन्द्रियसंवेदनाभिः सपद्यतेऽपरतो मनोभावैरन्यतः प्रेरणया बोभूयते काव्यभूमौ। डा० नगेन्द्रः प्राचीनामेतां काव्यबिम्बनिर्माणप्रक्रियां नूत्नपरिप्रेक्षणया व्याचष्ट। भामहमधस्ताद् विशदीकरोमि प्रकारान्तरेण—

अन्तश्चेतना (आत्मा)···मनः···इन्द्रियम्···अर्थः···मूर्तनम्
अर्थ.······इन्द्रियं···मनः···अन्तश्चेतना (आत्मा)···अमूर्तनम्

बिम्बं खलु मानवस्यानुभूतेः पुनःसृष्टेः (रिप्रोडक्शन) समये तदैव निर्मितिं याति यदा तस्याः परिपाकात् पश्चात् संस्कारो जायते। पुनश्च विविच्यते पूर्वं कवेरनुभूतिर्हृदये परिपचति तदनन्तरं तस्याः परिपाकोऽप्रतिकूलपरिस्थितौ जायते तदनन्तरं काव्यरचनावसरे कविस्तं संस्कारमनुभूतिपरिपाकानन्तरं स्मृतिकल्पना सहयोगेन पुनर्जीवयति। यावत्तीक्ष्णानुभूतिर्भवति तावद्रमणीयाभिव्यक्तिः सञ्जायते यथा 'अनि-र्भिन्नगभीरत्वादन्तर्गूढघनव्यथः। पुटपाकप्रतीकाशो रामस्य करुणो रसः' इति भवभूतेरुक्तिरतिसाम्यावहोक्तपूर्वरचनाप्रक्रियाविषये। कालिदासस्य च 'बभूव कृतसंस्कारा चरितार्थेव भारती' इति।

यदि बिम्बस्य जटिलतानुभूति संप्रेषणमार्गमवरुणद्धि तर्हि सा काव्यसौन्दर्यस्यापकर्षकतत्त्वमेव। अनुभूतिसप्रेषणं बिम्बसौन्दर्यं च परस्परमभिन्ने स्तः परमध्ययनसौकर्यार्थं चन्द्रचन्द्रिकयोरिव ते विवेच्येते। अनुभूतिपरिपाकान्तर यदेव बिम्बस्य संस्कृतरूप जायते तस्य निर्माणप्रक्रियायां साधनानि यानि सन्ति तान्यवश्यमेव प्रेक्षितव्यानि। संस्कारविषये विनिवेद्यते यदनुभूतिः कवेः प्रकृतिरूपा सती विभिन्नैरुप-मानैरप्रस्तुतैर्वा बिम्बभेदैः संश्लिष्यते तदनन्तर बहुगुणितं रमणीयं बिम्बं सुसंस्कृतं भवति। अत उपमानबिम्बानामपि रुचिरमध्ययनं कर्तव्यम्। तानि च बिम्बानि निम्नाभिधानानि—

१. कथात्मकानि । २. धर्मशास्त्रीयाणि ।
३. लोकव्यवहारात्मकानि । ४. दार्शनिकानि ।
५. शास्त्रीयाणि । ६. प्राकृतिकानि ।

एवंविधविविधपूर्वज्ञानेन काव्यं सौन्दर्यावहानि कवेर्बिम्बानि गरिम्णा मण्डयन्ति त्वरयन्ति चाभिव्यक्तीः । कविमूल्याङ्कनिर्धारणाय तेषां विद्यते महनीयता ! तेषामेव हेतोः कवेः कल्पनात्मकमूर्तनेषु निधीयते साफल्यसर्वस्वम् ।

कवेः ख्यातिर्बिम्बगुणानुवर्तिनी । बिम्बे महान् गुणः सजीवतैव या खलु सदालम्बनविभावस्य चरित्रं दीपयति तथोद्दीपनविभावस्य चित्रणे प्रत्यक्षवर्तमानतामापादयति यथा 'वर्तमान इव जनस्थान-वृत्तान्तः' उ. रा. ८३ पृ. 'प्रत्यक्षदृष्टामिव करोति' उ. रा. १।६ । सजीवतायाः सखीव गतिशीलता यथा दृश्यं चलचित्रवत्तारतम्यगामि जायते तत्र न कुत्रापि गत्यवरोधोऽतो वस्तुरसप्रवाहोऽस्खलितं याति । एवमनुभावेष्वाङ्गिकविक्रिया अभिनयवद् दरीदृश्यन्ते । सजीवतायाः संयोगेन बिम्बप्रकारगणना नावसानं याति ।

यदि कविर्विलोकयति यद् बिम्बं रमणीयं तर्हि स स्वप्रौढकृतिषु शनैः शनैर्विकासयति ततो रमणीयतरं करोति यथा 'मञ्जरीचामराणि' विक्र ४।१३ इत्यस्य बिम्बस्य पुनर्विकासोऽत्र गङ्गायमुने तदानीं सचामरे देवमसेविषाताम्' कुमार ७।४२ परन्तु विरूपीकरणप्रक्रिययात्यधिकं विकसितं संश्लिष्टबिम्बं विलोक्यते 'चमरान्.....नृपतीन् तान् वियोज्य सद्यः सितबालव्यजनैर्जगाम शान्तिम्' रघु. ६।६६ पद्ये। कालिदासः स्वानुभवपरिपाकान्तरसंस्कारविकासक्रमगतस्यैकस्यैवोपमानबिम्बस्य नानास्थलेषु विविधभावसंप्रेषणार्थं स्वेच्छया रूपपरिवर्तनं विधाय बहु प्रयोगान् सफलान् नवं नवं करोति । भवभूतिरुपमानबिम्बविषयेऽन्येषां कवीनां विशेषतः कालिदासस्याधमर्ण्यमङ्गीकरोति । विशिष्टा काचिद् भवभूतेरियं यत्तस्य काव्यमूर्तयो महावीरचरितादथवा मालतीमाधवाद् उत्थाय मन्य उत्तररामचरिते मन्दिरायमाणे सामाजिकेभ्यो बहुवारं प्रत्यक्षीभवन्ति ।

कालिदासभवभूत्योर्बिम्बेष्वन्येषां पूर्ववर्तिनां भासादीनां यद्यपि

कवीनां स्पष्टप्रभावो विलोक्यते तथापि तयोर्बिम्बमूर्तयः स्वकीया एव न तु परकीयाः। तौ स्वप्रतिभया ताः स्वीकुरुतः सौन्दर्येण चाकृष्टाः। डा० रमेशप्रसादो रस्तोगी 'संस्कृतसाहित्य में मौलिकता-अनुहरण' इति नामके शोधप्रबन्धे तथाविधं बहुचिन्तनं प्रास्तौत्। कानिचिदेतादृशान्यपि बहूनि बिम्बानि सन्ति यानि ताभ्यामात्महस्तार्जितानि मौलिकानि यथा दिङ्मात्रं चाक्षुषबिम्बमुपमानेन साधु संश्लिष्टं मनसो भव्यतापरं (फीलिंग आफ ग्रेन्ड्योर) 'कनकरसनिस्यन्दः सान्ध्य इव मेघपरिघः सानुमानालोक्यते' अभिज्ञानशाकुन्तले तथैव 'उत्तप्तद्रुतकनकसिक्ता इव दिशः' महावीरचरिते।

कालिदासः स्वकृतिषु प्रायः परम्परावादिरूपेण परिचीयते परन्तु भवभूतिर्बहुवारं परम्परा-परिपन्थिरूपं दर्शयति अत एव वक्ति यद् 'उत्पत्स्यते मम कोऽपि समानधर्मा' इति। कालिदासो लाक्षणिक-प्रयोगप्रियो भवभूतिस्तत्र भावानां सञ्चारिभावानां भावबिम्बानि भृशं योजयति। बिम्बदृष्ट्या भवभूतिः सहजानुभूतिधनो निर्धनश्च भारतीय-काव्यशास्त्रानुसारं यतः स व्यभिचारिरसस्थायिभावानां शब्दवाच्यतादोषं स्वयं परम्परामुक्तभावेनाङ्गीकरोति नवाभिव्यक्तये यथा 'विरहव्यथेव वनमेति जानकी' इति पद्यवद् बहूनि सन्ति समुदाहरणानि। तस्य कालिदासवत् त्रिषु रूपकेषु न कुत्रापि लोकोक्तिबिम्बानां मुखभूतः विदूषको विहसति यतः करुणरससिद्धः स कविस्तथापि प्राकृतभाषिणां जनानां तस्य कृतिष्वभावो न विद्यते। कालिदासो यत्र, भव्यताया विशिष्टः कविस्तत्र भवभूतिः साधारणजनताया प्रतिनिधिर्वर्तते।

तयोर्बिम्बानां विकासक्रमविषये प्रारम्भिकाणां प्रौढानां च रचनानां कालक्रमो विविच्यते। यानि प्राकृतिकानि- बालबिम्बानि मालविकाग्निमित्रे विक्रमोर्वशीये ऋतुसंहारे च दृश्यन्ते तानि रघुवंशे वाभिज्ञानशाकुन्तले वा मेघदूते वा यौवनमिवालिङ्गन्ति विकसितानि। तथैव भवभूतौ काव्यबिम्बमूर्तयो महावीरचरिते मालती-माधवे च मुग्धाः क्रमेणोत्तररामचरिते प्रगल्भायन्ते। तौ कविवरौ परम्परागतानि बिम्बानि स्वीकृत्य विस्तरेण (एक्सपैन्सन) सूक्ष्मी-करणेन च (कान्ट्रेक्शन) मौलिकानि कुर्वन्ति। आनन्दार्णवे तु तदा

स्नाति काव्यनदीष्णो रसलोलुपो जनो यदा तयोर्बिम्बं स्वीयं मूल प्रत्यक्षं परित्यज्येतरेन्द्रियप्रत्यक्षं परिरम्भते यथा नेत्रपानम्, श्रोत्रपेयं, मनसो रसायनं तथैवैवंविधानि बिम्बानि दर्शं दर्शं श्रवं श्रवं च साधुवादं च प्रस्तौति।

बिम्बनूतनताविषये चानवरतं मनश्चारुतां प्रति धावति। विचार्यते यत् सुन्दरं वासुन्दरं रूढं बिम्बं यदा विरोधिसोपानमालामारोहति तर्हि तस्मिन् किञ्चिन्नूतनं रूपं विस्फुरति तदेव 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति वचनान्तरेण प्रतिपाद्यते। मनःशास्त्रिणोऽपि तदेव विरोधिसंसर्गदृश्यं ( कॉन्ट्रास्टफिनोमिना ) समामनन्ति। सरसिजं स्वयं सहजसुन्दरतावहं परं विरोधिपदार्थेन शैवलेन विरूपेण सह संश्लिष्य नवमेव रूपं प्राप्य काव्यरसिकभ्रमरानावर्जयति। तत्र कालिदासः स्वयमप्येतादृशं रूपं दिदृक्षुरिव प्रतिभाति यतोऽग्रे भणति स 'इयमधिकमनोज्ञा ( वल्कलेनापि तन्वी )'। वल्कलेन शकुन्तलाया रूपं चरमशिखरं चुम्बति।

कवेः सिसृक्षया ( सब्जेक्टिविटि ) हि काव्यजगज्जायते। सैव सर्वमपि विरूपमपि सुन्दरयति। महाव्यालमपि वलयरूपं चिता-भस्माप्यङ्गरागरूपमनुरागवती पार्वती पश्यति। सुन्दरस्य पदार्थस्या-प्यतिसुन्दरीकरणं जायते यथा 'राजेन्द्रनेपथ्यविधानशोभा तस्योदिता-सीत् पुनरुक्तदोषा' इति। उक्तपूर्वमेतद् यत् कालिदासस्य काव्यतुलायां भावुकतायाश्च समानपरिमाणतास्ति तत्र भवभूतेर्भावुकताया बहुभार-नम्रता। एतदेव महत्कारणं यत् कालिदासस्य पुष्पाणां सौन्दर्यस्य दृश्यस्य मकरन्दस्य स्वाद्यस्य गन्धस्य घ्रातव्यस्य, दलकस्य स्पृश्यस्य-भ्रमरगुञ्जनस्य श्रव्यस्य चैकत्र पुञ्जीभूतं रूपं बलादाकर्षति मानसं काव्यारामविहारिणाम्। तस्य भावानां समासः ( ब्रेविटी ) विशद आन-न्दातिरेकी। भवभूतेस्तत्र सम्पूर्णमपि काव्यं बिम्बालोचनया भावुक-तामयं विस्तरतां ( एक्सपेन्सन ) समयते। यत्तस्य बिम्बं संस्कृत-काव्यशास्त्रिभिः प्रशस्यते तदेव बिम्बदृष्ट्या साधारणं भवेत्। दिङ्मात्र-मत्रोच्यते अयं तावद्बाष्पौघस्त्रुटित इव मुक्तामणिसरः इत्यादिपद्ये बिम्बविधाने भवभूतेरौचित्यं कथं स्वीक्रियेत यत्र दुःखानुभवप्रकाशपरैर-

श्रुभिः समं मौक्तिकोपमानबिम्बविधानं यत् खलु सौन्दर्यस्य सुखस्यानुभवपरं प्ररूढं रूपं कथं सङ्कच्छेल्लक्ष्मणस्य स्वाग्रजविषादकातरतापरस्य चासह्यमानस्य कथं पाठकान् द्रवीकुर्यात्। बाष्पकणेषु मौक्तिकभव्यता ( फीलिंग ऑफ ग्रेन्ड्योर ) हर्षमेवाभिव्यनक्ति न तु दुःखकातरताम्। अन्यत्र कालिदासो भावुकताकूलङ्कषौघमुत्तरति बौद्धिकनौकया तत्र विलोक्यतां तस्य बिम्बनिर्माणवैचक्षण्य निम्नश्लोके—

अनेन पर्यासयताश्रुबिन्दून् मुक्ताफलस्थूलतमान् स्तनेषु।
प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनेव हाराः॥ रघु. ६।२८

शत्रुस्त्रीणामश्रूणां मौक्तिकभव्यतोत्साहाभिव्यक्तये हास्योक्तिसहिता कल्पनात्मकं शत्रुसंहारं च तासां दैन्यं युगपद् बोधयति। यद्यपि मेघदूते मुक्ताफलस्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति उ. मे ४६ तमे शलोके बिम्बमुक्तपूर्वभवभूतिबिम्बवदाभासते। परिहारार्थं मुक्तास्थूला इत्यत्र परिमाणार्थो न्यासो विद्वद्भिस्तथैवोत्तररामचरितेऽपि परन्तु एतादृग्बिम्बदोषस्तु परिहरणीयः कविभिः। प्रयोगोऽस्ति शीतलापिटकस्थूलान्यश्रूणि इति तीव्रदुःखमोचनकृते ( कैथारसिस् ) वर्तते स्वीकृतः काव्यगोष्ठ्याम्। कालिदासस्य रामो भवभूतेः रामात् भिन्नः। तत्र प्रथमोऽन्तर्गूढव्यथो न भूयो भूयो रोदिति परं भवभूते रामः साधारणजनवत् सर्वत्र 'हा हेति' मुक्तकण्ठं विलपति। पूर्वो रामोऽसाधारणः उत्तरश्च साधारणः। मनोविज्ञानानुसारं भवभूतेः राम एव यो दुःखमोचनोपायं ( कैथारसिस ) विलापं शोकक्षोभे च हृदये प्रलापै रेव धार्यते, मन्यते सामान्यजनो ( नॉर्मल मैन ) वर्तते परन्तु काव्यशास्त्र-दृष्ट्या सामान्यान्यो नायको धीरोदात्त एव प्रशस्यते। एष एव बिम्बालोचनया तयोःकारयितृप्रतिभाभेदो मौलिकः।

पाश्चात्यकाव्येभ्यः संस्कृतकाव्यानि बिम्बमीमांसया कविसमयप्रसिद्धिवशादतिविलक्षणानि सन्ति। तत्र च कविनिर्मितस्य कल्पनालोकस्य लोकोत्तरचमत्कारपूर्णानि विचित्रेन्द्रिय-संवेदनाभिव्यञ्जनात्मकानि बिम्बानि विलसन्ति। ललनानां चरणताडनात् प्रियङ्गुः, कटाक्षपतनात्तिलकतरुर्गण्डूषाद् बकुलश्च विकस्यन्ते। एतादृशेषु बिम्बेषु प्रायो भव्यतैव सम्प्रेष्यते! परम्परानिर्वाहाविष्ठो यत्र कालिदासो

बहुविधैः कविसाम्यप्रसिद्धैः प्रयोगैः स्वकाव्यमलङ्करोति, तत्र भवभूतिरस्मिन् प्रसङ्गे कविपरम्पराविरोधी तिरस्करोत्येतादृशं दायाद्यमुक्तावलिशेवधिम्। तत्र कालिदासो दृश्यस्य भव्यताकरणाय विरूपीकरणाय च रूपपरिवर्तनदिशामवलम्बते। हंसनीरक्षीरविवेकादिबिम्बान्यद्भुतानुभूत्यभिव्यक्तये संस्कृतसाहित्योत्तमाङ्गालङ्कारस्यानन्यसामान्यानि रम्यातिरम्याणि रत्नानीव चकासति।

भावप्रत्यक्षयोः कल्पनात्मकं मूर्तनं द्विविधं तत्र (१) प्रथमं देहबद्धविग्रहवत्पुरुषाकाराङ्गवदादिशब्दानां प्रयोगैरथवा मानवीकरणद्वारा जायते (२) द्वितीयं च चित्रोत्कीर्णलिखितालेख्यगतादिशब्दानां प्रयोगैश्चित्रीकरणद्वारा विलोक्यते। एवं च मूर्तमूर्तिभूतिसञ्चरादि शब्दानां प्रयोगैर्मूर्तनद्वारा बिम्बविधानप्रक्रिया सहजा भवति। एवङ्कारं स्थिरेषु चाक्षुषबिम्बेषु जङ्गमसञ्चारिणी-प्रभृतिशब्दानां प्रयोगैर्गतिशीलता मुदा रसिकशिरो घूर्णयति। कवेर्मानसी वासना नैरन्तर्येण सक्रिया सती कल्पनात्मकं मूर्तनं प्रभावयति। अस्मिन्नेव प्रसङ्गे कवेर्ध्यानं नटवत् समीचीनतमायामभिव्यक्तौ वर्ततेऽतो विश्वसीति चेतो यद् 'ध्वनिरस्ति काव्यस्यात्मेति'। एष मूलपरिप्रश्नो न समाहितोऽद्यावधि। एतौ प्रकृतौ कविवरौ निश्चितरूपेण समाजकृते काव्यानां कर्तारौ स्तः। यदि कश्चित् कविर्व्यक्तिवादी न भूत्वा लोकहिताय काव्यं सृजति तर्हि तस्य काव्ये ध्रुवमर्थसंप्रेषणशीलाया अभिव्यक्तेः प्रधानता भविष्यति यदि च लोककृते नापि तु स्वान्तःसुखाय कवयति तर्हि रसस्याथवा भावस्य प्रधानता सहजैव भविष्यति। सामाजिकानां काव्ये ध्यानमभिव्यक्तौ तावत्पर्य्यन्तं निहितं भवति यावत्पर्य्यन्तं तेषां हृदयेष्वानन्दधारा-शिशिरबिन्दवः परिपतन्ति तस्मिन् समये 'वाक्यं रसात्मकं काव्यमिति मन्यते मनः। यदि कविः सामाजिकैः सह तादात्म्यं स्थापयित्वा काव्यं रचयति तर्ह्यभिव्यक्तौ स्वतो रसस्य मुख्यता भवति परन्त्वेषा कविकर्मप्रक्रिया सर्वदैव न भवति यतः कविः सामाजिकैरनुकार्यैरामादिभिश्च युगपत् तादात्म्यं कर्तुं प्रभवति बहुकाठिन्येनान्यथा तु न। पण्डितराजो जगन्नाथो यतः कारयितृभावयितृप्रतिभावानासीदतस्तस्य वचनं रमणीयार्थप्रतिपादकः शब्दः काव्यमिति रसाभिव्यक्त्योः

समानं प्राधान्यमुपदिशति। संस्कृतसाहित्यपरम्परादीक्षिताः प्रायः कवयो जगत् समक्षं मुख्यरूपेण काव्यनिर्माणसमये सत्कुर्वन्ति समाजसेवका इवातस्तत्रानुभूतीनां संप्रेषणे कदाचित् कृत्रिमतामनुभवन्ति। यत्र च कवि-र्व्यक्तिवादी सञ्जायते काव्ये तत्र स्वात्मनोऽनुभूति-कण्ठे स वचनमणि-मालामर्पयति। ऋतुसंहारे, मेघदूतेऽभिज्ञानशाकुन्तलेस्य षष्ठाङ्के, विक्रमो-र्वशीयस्य चतुर्थाङ्के च कालिदासः प्रायो व्यक्तिवादी विलोक्यते तत्र भवभूतिरपि व्यक्तिवादी प्राय उत्तररामचरिते तस्य रामस्यात्मनोऽभि-व्यक्तिः साधारणपुरुषस्यास्ति न तु भगवत्स्वरूपस्य विष्णोरिवालौकि-कस्य। भवभूतेरत्र परिपक्वस्य साफल्यस्य मूलमेतदपि वर्तते यदभि-व्यक्तिसमये रामो माधवायते न तु नारायणायते। एतदपि सत्यं यद् व्यक्तिगतानुभवाभिव्यक्तिः सर्वसाधारणजनैर्धिया महतायासेनावगम्यते काव्यशास्त्रिभिश्च रसभङ्गदोषस्तत्र गवेष्यते परं सा सहजाभावप्रधाना कृत्रिमतारहिता वा वर्तते न तत्र संशयावकाशः। निष्कर्षतो व्यक्तिगतं काव्यं भावप्रधानं सामाजिकञ्च तदभिव्यक्तिप्रधानम्। एतत्तु न गूढतत्त्वं यद्रसोऽभिव्यक्तिश्च न परस्परं पार्थक्यमितः। काव्यनद्यां नौकायमानाभिव्यक्तिस्तत्र रसो गन्तव्यस्थलवदस्ति। साधारणीकरण-प्रक्रिययावधार्यते यत् संस्कृतसाहित्ये कवेर्धर्मः सामाजिकानामानन्दाय हिताय वा वर्तते। पाश्चात्त्यकाव्येषु प्रसिद्धानि प्रायो व्यक्तिगत-काव्यानि प्रचलन्ति तत्र नवीनानि यानि मौक्तिकानि बिम्बानि तानि पौरस्त्याः सामाजिकाः परम्परागतोक्तपूर्वकाव्यानुशीलनपारवश्याद-भिगन्तुं किञ्चित् काठिन्यमनुभवन्ति। एषैव पद्धतिभिदा पौरस्त्य-पाश्चात्त्यकाव्ययोः। अभिव्यक्तिर्नौकेव यदि जविष्ठा तर्हि गन्तव्यस्थानं शीघ्रलभ्यं जनानाम्। गन्तव्यगृहप्राप्तिश्च नौकाया ऋते न जायते। काव्यबिम्बलक्षणा व्यञ्जनाध्वनिवक्रोक्तिरीतयः सर्वा अपि नानाप्रकारा-कारवत्योऽभिव्यक्तिर्नौका एव।

द्वितीयेऽध्याये बिम्बविधाने लोकव्यवहारे प्रयुक्तानां पदार्थानाम-प्रस्तुतविधानेन सरलानि संश्लिष्टानि च बिम्बानि भूयांसि काव्यानि लोकसौन्दर्येण मण्डयन्ति। तानि च लोकव्यवहारेषु प्रयुक्तानि कानिचिद् बिम्बानि दिङ्मात्रं प्रस्तूयन्ते यथा पितृपुत्रीभ्रातृस्वसृबन्धु-

सुहृत्पत्नी-प्रभृतिसम्बन्धिनाम प्रस्तुतविधानेन यथा 'प्राप्तासि वैदेहि पितुर्निकेतम्' रघु० १४।७२, कथा............मातेव गङ्गेव च' उ. रा० ७।२०, 'मातृपार्श्वपरिवर्तिनाविव' रघु० ११।६ इत्यादीनि बहून्युदाहरणानि सन्ति। तेषां तथैव दीपस्याप्रस्तुतविधानं 'उदितभूयिष्ठ एव भगवान् अशेपभुवनद्वीपदीपः' मा० मा० ५० पृ० सति खलु दीपे व्यवधान-दोषेणान्धकारदोषमनुभवति 'शा० २३२ पृ० अन्यच्च कुलदीपः' 'प्रवर्तितो दीप इव प्रदीपात्' रघु० ५।३७ दुःखसंप्रेषणार्थे गत एव न ते निवर्तते स सखा दीप इवानिलाहतः' कुमार० ४।३० इति बिम्बेन यत्र रति प्रति सहृदया द्रवीभवन्ति तत्राग्निवर्ण प्रति क्रियामन्यथैव कुर्वन्ति 'वैद्ययत्न-परिभाविनं गदं न प्रदीप इव वायुमत्यगात्' रघु० १६.५३ सर्वत्र भावानुसारं प्रतिमा-परिवृत्तिः कवेर्दोत्यं विज्ञापयति तत्रारोपो मुख्ययन्त्रविशेषः।

बिम्बविधानेन लोकयात्रानुभवसंप्रेपणमपि प्रयोजनं कवीनामस्ति। अलङ्कारशास्त्रिण एतादृशीमभिव्यक्तिमर्थान्तरन्यासेन भूषितां प्रकाशितां जीवलोकस्योपसमिव विलोकयन्ति। संश्लिष्टबिम्बानामर्थादप्रस्तुत-विधानसाहाय्येन निर्मितिं गतानां हेतोः कवीनां सामाजिकानां च मनःसु सन्तोषः कश्चित् परमो विश्रमश्च जायेते। रघुवंशमेघदूतोत्तर-रामचरितेषु तानि बिम्बानि विलोक्यन्ते बहुशः। अप्रस्तुतविधान-हीनान्यतिरिच्य सरलानि बिम्बानि भावसंप्रेषणं त्वरयन्ति यथा 'प्रत्युत्पन्नं स्त्रैणम्' इति दुष्यन्तवचनं शकुन्तलायाश्चरित्रबिम्बं प्रतूर्णं लक्षयति। शकुन्तलां प्रति सहानुभूतिवशान्न भवेत् कश्चित् पाठकः सहमतः परं स्मृत्यवरोधहेतोर्दुष्यन्तस्यैतद् वचनं साध्वेव। कविरेव प्रजापतिश्च-रित्रस्य नायकस्य। तेनैव राजर्षीक्रियते दुष्यन्तो, मुनीक्रियते दिलीपो, देवीक्रियते च रामोऽदेवीक्रियते चोत्तररामचरिते' मान्यतानुसारमतः कविरेव स्वयमालोचकस्तस्य शब्द आप्तोपदेशवद् ग्राह्यः। नकविः काव्यशास्त्री नितान्तबौद्धिकतयैवावचिनोत्यर्थान् न हृदा यथा 'विनिर्गतं मानदमात्ममन्दिरादिपद्ये महानन्यायोऽकारि काव्यप्रकाशकारेणाधम-काव्य कोटिप्राक्षेपेण। तत्राचार्यविश्वेश्वरोऽपि तथा समर्थकः। कालिदा-सस्य विषयिगतसौन्दर्यविषयकं मतं 'प्रियेषु सौभाग्यफला हि चारुता'

कुमार ५।१ 'स एव वेषः परिणेतुरिष्टं भावान्तरं तस्य विभोः प्रपेदे' कुमारः ७।३१ इत्यादिषु पद्येषु किं न हस्तामलकवत् स्फुटम् एतत्।

दर्शनधर्मशास्त्रविषयेभ्यो भिन्नानि कानिचिदुपमानबिम्बानि सन्त्येतादृशानि यानि रहस्यात्मकानि (मिस्टिक)। तेषामाधारो लोकविश्वासो लोकविश्वासस्य चाधाररूपाणि शकुनधर्मशास्त्रचामत्कारिककथामिथ्याप्रत्यक्षज्ञानप्रभृतिसञ्ज्ञाताज्ञातानि। तैरेव बिम्बैर्नृणामवचेतनमनसां विकाराणां ज्ञानं सपदि भवति किमुत चेतनमनसाम्। प्रायो भयमज्ञातं (फोबिया) मनसः कारणं दुःखस्यैतादृग्बिम्बे। विवशता चापदो हेतुः। नायकादयो विवशतया परिस्थितीनां सदैव दैवं क्रोशं हृदयेष्वाश्वासनं लभन्ते रहस्यात्मकम्। निरवग्रहो दहति दैवमिव दारुणो विवस्वान्' मा॰ मा॰ ३६० पृ॰ भावबिम्बं स्पृश्य-संवेदनां नयनगोचरीकरोति। 'कोऽप्यदृष्टः शृणोति' मालवि ७६ पृ॰ रहस्यमयं वाक्यमौत्सुक्यावरोहि। भयङ्कर-परिवेश-निर्माण-पराणिबिम्बानि यथा 'राक्षसी वाचं' उ॰ रा॰ ५।३०; मा पूतनात्वमुपगाः' मा॰ मा॰ ६।५१, 'सुस्निग्धव्याहारापि मानुष्यापि सीतास्माकं राक्षसानामतिराक्षसी जाता' म॰ च॰ २४८ तथैव 'छायाश्चरन्ति बहुधा भयमादधाना सन्ध्यापयोदकपिशाः पिशिताशनानाम्' शा॰ ३।२४। अद्भुताभिव्यक्तये यथा 'अम्बूनि मज्जन्ति अलाबूनि ग्रावाणः प्लवन्ते 'म॰च॰ २८ पृ॰ तत्र सौख्यार्थे 'रम्याणि वीक्ष्य च निशम्य शब्दान् पर्य्युत्सुकीभवति यत् सुखितोऽपि जन्तुः। तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि' 'शा॰ ५।२ अतर्कितस्वरूपाणि वाक्यान्येतादृशानि काले रहस्यात्मकं विशिष्टप्रकारकं सौख्यमातन्वन्ति।

तृतीयेऽध्याये प्राचीनभारतीयदर्शन-तत्त्वानि न केवलं दर्शनग्रन्थेष्वपितु तत्पूर्वपश्चाद्वर्ति-साहित्यग्रन्थेषु वेदोपनिषद्रामायणमहाभारतगीता-पुराणादिष्वप्यप्सु तरङ्गपतङ्गप्रकाशलेशा इव दृश्यन्ते। ताभ्यां कविभ्यां दार्शनिकबिम्बैः सरलैः संश्लिष्ट-गम्भीराणि भावचरित्रबिम्बानि सुनियोजितानि काव्येषु। अहं निष्कर्षतो मन्ये यद् दर्शनानां निगूढतत्त्वानां भावानां ललितनायकादिदृष्टान्तवाक्यसंवलिताः कोमलशेमुषीजुषां मानुषाणामप्यवगम्याः सरलातिसरला मूर्तनात्मकव्याख्या

भारतीयसंस्कृतेः सपर्या इव साधु कृतास्ताभ्यां कवितल्लजमूर्धन्याभ्याम् आत्मरचनासु। यानि खलु दर्शनपण्डितैः शास्त्रीयदुरूहव्याख्यानानि कृतानि, तेषां तत्त्वानां तानि प्रायः सर्वाण्यपि नूतनसमये शिरोवेदनायै कथ्यन्ते। यथा दार्शनिकबिम्बैः प्रतूर्णसंप्रेषणशीलं कल्पनात्मकमौदात्त्यं प्रसरति सर्वत्र तथैव लोकोत्तरं किञ्चिद्रहस्यात्मकं सौन्दर्यमुदयगिरिमिवारोहति। चरित्रोदात्तीकरणे यथा 'त्रयी विग्रहवत्येव सममध्यात्मविधया' मालवि. १।१४ नितान्तशान्तयोगाचरणपरिवेशनिर्माणे 'निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि' रघु. १३।५२, हर्षातिरेकाभिव्यक्तये' तस्मिन् गते विजयिनं परिरभ्य रामं स्नेहादमन्यत पिता पुनरेव जातम्' रघु. ११।६२. भवभूतौ च 'जन्मान्तरादिव कथं लब्धासि' मा.मा. १०।१२ मोक्षाप्रस्तुतविधानेन कार्यसिद्धिसूचनायै 'मारुतिः सागरं तीर्णः संसारमिव निर्ममः' रघु. १२।६० कालिदासच्छाया भवभूतौ 'तत्त्वामृतमपि भवाम्भोनिधिगतः' म. च. ६।५२ अनन्तनितान्तामन्दानन्दसंदोहकल्पनायां 'जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम्' पू. मे. ५२ तद्दार्शनिकविकासे च सति 'स्वल्पीभूते सुचरितफले स्वर्गिणां गा गतानां शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डमेकम्' पू. मे. ३१, तद्विपरीते नरके दुखाभिव्यक्तये घोरेऽस्मिन् मम जीवलोकनरके पापस्य धिग् जीवितम्' उ. रा. ४।२७, अलौकिकस्यात्मकविरोधत्यागोऽहिंसायाम् 'सिद्धाश्रमं शान्तमिवैत्य सत्त्वैर्नैसर्गिकोऽप्युत्ससृजे विरोधः' रघु. ६।१६, लोकोत्तरतायाम् अभिव्यक्तौ हिरण्मयी वृष्टिः संदर्शनीया रघुवंशस्य पञ्चमसर्गे।

चतुर्थेऽध्याये धर्मशास्त्रीयाणि बिम्बानि द्विधा विस्तरेण विवेचितानि प्रथमभागे विद्यमानानि शुद्धानि धर्मशास्त्रवचनानि बिम्बतुलायां निरीक्षितानि यथा 'प्रणवश्छन्दसामिव' रघु. १।११ तथैव 'एष तावदोंकारः सकलराक्षससंहारनिगमाध्ययनस्य' म. च. ३६ पृ० उक्तपूर्वयोरुदाहरणयोर्मध्ये कालिदासस्य संश्लिष्टबिम्बमुदात्तमपि नायकमत्युदात्तीकरोति परन्तु भवभूतेर्बिम्बमापाततोऽस्फुटमसम्बद्धं च विलोक्यते तथापि पुण्येन राक्षससंहारकार्येण सह निगमाध्ययनरूपकं सम्बध्यते। तत ओङ्कारस्तत्राग्रनेतृ रामस्य चरित्रमुदात्तीकुरुते। कालिदासे बिम्बस्य सरलता तत्र भवभूतौ तस्य भाषया जटिलता विलोक्यते। कालिदासस्य

काव्यशक्तिरतितीव्रा मर्यादिता भवभूतेश्च परशुरामप्रसङ्गे महावीरचरिते धर्मेणापि न सन्तुलिता। तत्र वशिष्ठादीनामृषीणां तिरस्करणं परशुरामद्वारा धर्मशास्त्रदृष्ट्या काव्यहानिकरम्। धर्मशास्त्रबिम्बैः सहजमेवोदात्तीकरणमनुदात्तीकरणं च जायेते। तयोश्च समन्वयात्मकं रूपं क्वचित् स्फुरति। बिम्बालोचनया प्रस्तूयते तेषां भावत्रयं वस्तुप्रसंगेन।

सुन्दर-विरूपयोः पदार्थयो संसर्गेणाभिव्यक्तमुदात्तीकरणम्। वस्तुप्रसङ्गः विरूप-सुन्दरयोः पदार्थयोः संसर्गेणाभिव्यक्तमनुदात्तीकरणम्।

सुन्दर-विरूपपदार्थबिम्बयोः संसर्गेणाभिव्यक्तं समन्वयात्मकमुदात्तीकरणम्।

तत्र प्रथमप्रकारः सरसिजमनुविद्धमित्यादिपद्यव्याख्यातपूर्वं बिम्बालोचनया यत् सुन्दरः पदार्थः कश्चिद् विरूपपदार्थसंसर्गेणोदात्तीभवति। तत्र मनोवैज्ञानिकप्रक्रियायां विरोधिसंसर्गस्य समानैव कालिदासाधिकारिकव्याख्यातु' श्रीमल्लिनाथस्य विचारणा कुमारसम्भवस्य सप्तमसर्गे सप्तदशतमे पद्ये टीकायामन्विष्यते गोरोचनारुणे गण्डस्थले पाण्डुरो यवाङ्कुरो विजातीयवर्णसन्निधानाल्लब्धवर्णोत्कर्षः' इति। अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया इति रमणीया वैदिकी यूपसत्क्रिया विरूपश्मशानशूलस्य बलेनाधिकं विरूपा जायत इति द्वितीयः प्रकारः। तृतीयप्रकारश्च यमाश्रित्य परस्परेण सिद्धाश्रमं शान्तमिवैत्य सत्त्वैर्नैसर्गिकोऽप्युत्ससृजे विरोधः अत्र सुन्दरविरूपयोः पदार्थयोर्न कस्यश्चिद् विरूपता जायते। यथाहिनकुलयोः शाश्वतिको विरोधः परं यदा तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् तपोवने तयोर्विरोधोऽपास्यते तदा द्वयोरपि सर्पनकुलयोः परस्परक्रौर्यत्यागः समन्वयात्मकं किञ्चिद्रहस्यात्मकमतोऽलौकिकमुदात्तीकरणं तच्च वातावरण पावनं जनयतितराम्। सर्वमपि धर्मशास्त्रविहितं समुपदेशजीवितं काव्यं वर्तते। उपदेशेन पवित्रभावं चरित्रे चातनुते। द्वितीये भागे च विधिमूलानि बिम्बान्यपि तथैव प्रभावन्ति यथा अध्वरस्येव दक्षिणा रघु १।३१ स्वाहयेव हविर्भुजम् रघु. १।५६ भवभूतौ च पर्याप्तिसप्तभुवनाभयदक्षिणानि उ रा. ५।३४ अन्यत्र कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीयाम् पू. मे. ३७ इत्यादि।

पञ्चमेऽध्याये कथात्मकानां ( माइथोलाजिकल )बिम्बालोचनानुसारमाद्यबिम्बानामप्रस्तुतविधानेन कविवराविमौ स्वकाव्यसौन्दर्यप्रयोजनं साधयतः। रामायणमहाभारतपुराणकथानामन्यबृहत्कथाप्रभृतिलोकगाथानां च प्रसिद्धानां वस्तूनां तदुपमानीभूतानां वा प्रयोगैः कालिदासस्य कीर्तिःप्रथते तत्र भवभूतियशो न तथा। इतिहासपुराणवर्णितविष्णुमहादेवादिस्वरूपगुणक्रियाकलापसन्निधानेनोपमानीकरणेन वा तौ दुष्यन्तमाधवादीनदिव्यान्नायकान् देवीकुरुतः। तेषां देवीभूतचरितानां नायकानां चरित्रबिम्बानि लोकोत्तराणीवाद्भूतप्रतीतिकराणी लोकचिन्तादग्धविदग्धान् रक्षन्तीव शीतलयन्तीवानन्तरं मदयन्तीव च यथा तिर्यगायामशोभी श्यामः पादो बलिनियमनादभ्युद्यतस्येव विष्णोः' पू. मे. ६० रूपसादृश्यं भावरसभरितं दिव्यमेव। महापुरुषाणामदिव्यानां सान्निध्येन बहूदात्तीकरणं जायते यथा राजन्यान् शितशरशतैर्यत्र गाण्डीवधन्वा धारापातैस्त्वमिव कमलान्यभ्यवर्षन् मुखानि' पू. मे. ५१, उत्साहाभिव्यक्तये मेघस्यार्जुनेन सह संश्लेषश्चाक्षुषं सौन्दर्य जनयति। कथात्मकदिव्यादिव्यकल्पनात्मकसश्लिष्टबिम्बविधानेनाकथ्यसंभोगादिवचनीयतां परिहरतः प्रकृतौ कवी यथा रतिप्रक्रिया निखिला कामदेवस्य शरपञ्चकैरेवोदीर्यते। कामदेवस्य चूताशोकारविन्दनवमल्लिकानीलोत्पलनामकाः पञ्चसायका उद्दीपनविभावेभ्यो न भिन्नाः। मनःशास्त्रानुसारं ते सर्वे कस्यचिज्जनस्य चेतनमनसः समक्षं रागात्मकं परिवेशं क्षेत्रं वा निर्मान्ति। अन्ये च कामस्योन्मादनतापनशोषणस्तम्भनसंमोहनपञ्चबाणा अतृप्तवासनाः सकल मूर्तरूपा इति यथामनःशास्त्रं विविच्यन्ते। तत्र प्रथम उन्मादनबाणोजातमन्मथहस्ततीव्रवेगो ( सेक्स फ्रस्ट्रेशन अथवा लाइफ फोर्स ) हर्षोन्मादं ( हिस्टिरिया ) दुःखोन्मादं ( मैनिक डिप्रेशन ) च जनयति। शोषणमार्गणश्च सामान्यदैहिकस्वास्थ्यस्यासन्तुलनं विदधाति कामज्वरस्तापकारी तत्प्रभव एव। तापनशिलीमुखो हृदये संतापं ( मेलं कोलिया ) शरीरे मांसलदौर्बल्यं चापादयति। स्तम्भनशरो देहयन्त्रगत्यवरोधं विदधाति। सम्मोहनबाणः स्पर्शेच्छां ( लिबिडो ) तीक्ष्णीकरोति। अतः परं तीव्रा मूर्च्छा ( डिसेन्शिया

प्रकोक्सकेटेनोइया ) जागर्ति। मानसशास्त्रिणो जे-एफ. ब्राउनमहोदयाः 'साइकोडायनेमिक-ऑफ-एब्नोर्मल-बिहेवियर' इति नामके पुस्तकविशेषे विवेचयामासुरसामान्यजनव्यवहारान्। तत्र च स्टेकिलमहोदयेनापि 'हाउ टू नो योर ड्रीम' इत्याख्ये ख्यातपुस्तके प्रतिपादितं सविस्तरमेतद् यद् बाणस्यासि-पुत्रिकाया वा स्वप्ने ( दिवास्वप्नेऽपि वा ) दर्शनेन मनसि जायमानः कामातिरेकः सूच्यते। निष्कर्षोऽपि यद् व्यभिचारिरसस्थायिभावानां मूर्तनेषु कथात्मकबिम्बविधानेन संप्रेषणे सदाजवमनुभूयते कविभ्यामेताभ्याम्। पारिजातादिपुष्पैर्दिव्यैरलौकिकगन्धि काव्योद्यानं रमयति रसिकान्। प्रतिनायक-दोषा अपि वृत्राद्यसुराणामुपमानीभूतानां सन्निधानेनापकर्षकप्रतिक्रिया जनयन्ति हृत्सु सामाजिकानां कवीनां च। ऋषीणामप्रस्तुतविधानेन च पवित्रं सच्चरित्रबिम्बं पूर्णतामेति यथा 'कुशलं पप्रच्छ राज्ये राज्याश्रममुनिं मुनिः' रघु १।५८ तथैव 'राज्याश्रमनिवासेऽपि प्राप्तकष्टमुनिव्रत.' उ. रा. ७।१ दिलीपरामयोरीदृशं पवित्रचरित्रस्य कुत्रास्ति समुदात्तीकरणम् ( सब्लिमेशन ) इतिहासपुराणादि-चर्चित-पूतसरित्पर्वततीर्थनानास्थानादिसंश्लेषेणापि समाकर्षणतत्त्वं काव्यस्यैधते यथा 'कथा······ मातेव गङ्गेव च' उ. रा. ७।२० 'गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिष्यन्द इवावतीर्णः' रघु. १४।३, इत्यत्र सात्त्विकभावौ पवित्रौ प्रदर्शितौ।

कालिदासभवभूती साहित्याम्बरे लसन्तावपि कृतसर्वशास्त्रभूरिश्रमौ दृश्येते। तयोर्बिम्बानि दर्शं दर्शं मानसं कस्यचिद् धावति निर्णयमेतं यदवचेतनमसि विद्यमानाः संस्काराः सर्जनावसरे सुप्तोत्थिता इव जायन्ते। कामकाव्यवास्तुज्यौतिषशकुनव्याकरणराजनीतिशास्त्रादिभिर्विहितानां तत्त्वानां कल्पनात्मकवाङ्मूर्तयोऽसंस्कृतावस्थावात्ययाप्यमलिनाः पुराण्योऽपि नित्यनवा अदेवता अपि सर्वगा दुष्टकालकरालारालकरदण्डसहस्रप्रहता अप्यखण्डिताः समलङ्कुर्वन्ति मनोमन्दिराणि।

आयुर्वेदशास्त्रीयकल्पनात्मकमूर्तनेषु मुख्यतो घटनावस्थादीनां स्पृश्यसंवेदनानां च प्रत्यक्षीकरणं प्रयोजनम्। प्रायः संस्कृतज्ञवर्गेषु परम्परैवासीद् यत् कर्मणा कवित्वेन च कश्चित् 'कविराज' एव स्यादिति। भवभूतिस्तु निश्चितमेवावलोक्यते तादृशः। पुटपाकव्रणकूट-

पाकलादिभिः सर्वत्र प्रयोगैरवधार्यत एतद् यदुक्तम्। रोगनिदानोपचारानुसारं चिकित्सापद्धतितत्त्वान्युपमानीकृतानि यथा वीर्यवत्यौषधानीव विकारे सान्निपातिके' कुमार २।४८ इत्यत्र सन्निपातज्वरेण तारकासुरस्यातङ्कमयः प्रभावो व्यञ्जितस्तुलनया च भवभूतेर्माधवो मालतीप्रणयच्छेदेन 'कलभं कठोर इव कूटपाकलः' कलभवदतिशयकामज्वरदाहपीडितः प्रदर्शितः। अतिशयकामुकोऽग्निवर्णो न केवलं नानानायिकापरिरंभणपाशबद्धोऽस्ति स तु राजयक्ष्म-सम्भुक्तः ( रघु. १९।५० ) कालिदासेन तत्र सफलमनुदात्तीकरणमकारि नायकस्य।

ज्यौतिषशास्त्रानुसारं नक्षत्रताराग्रहादीनां महान् जीवने प्रभावो विद्यते। ये ये ज्योतिषशास्त्रीयाः प्रयोगाः कृताः कविभ्यां प्रकृताभ्यां ते सर्वे प्रायो लोकव्यवहारेऽपि समुपलभ्यन्ते यथा 'उपप्लवाय लोकानां धूमकेतुरिवोत्थितः' कुमार. २।३२ तुलनया च 'उत्पातधूमरेखाक्रान्तेव कला शशधरस्य' मा. मा. ६।५० तथैव 'पौलस्त्यधूमकेतोर्महाराजरामस्य' उ. रा. १० पृ. पुनश्च 'राक्षस-प्रलयधूमकेतोः। किमद्यापि ते मन्युविषयः' उ. रा. ३०६ पृ० सर्वत्र मारकः प्रभावः संप्रेषितो धूमकेतुना। अन्यत्र रोहिणीचन्द्रयोगादयः सुखानुभूतीः संप्रेषयन्ति। भवभूतिः केवलं द्वित्रा प्रयोगानेतादृशानुपायनीकुरुते तत्र कालिदासस्य प्रयोगा नक्षत्रायमाणा विकीर्णाः काव्यच्छायापथे सन्तीतस्ततः।

पाश्चात्त्य-पौरस्त्यकाव्यजगत् सकलं शकुन-प्रभाववञ्चितं नास्ति। डॉ० दीपचन्द्रशर्मणः 'संस्कृतसाहित्य में शकुन' इत्याख्यग्रन्थमालोक्यैतदवगम्यते यत् सुघटनादुर्घटनातारतम्यविधाने शकुनानां प्रयोगा भवन्ति प्रायः काव्येषु यतः शकुन-साधनेन प्रायः सुन्दरं विरूपं वा भाविवस्तुनो निदर्शनं कविना क्रियते। नक्षत्राणां प्राकृतिकपदार्थानां शारीरिक-विक्रियाणां स्वप्नानां च प्रायः सुन्दरतायां सत्यां शुभशकुनानि विरूपतायां च सत्यामपशकुनानि मन्यन्ते यथा 'बुधबृहस्पतियोग्यदृश्यस्तारापति' रघु १३।७६ इत्यत्र शुभशकुनेन भरतस्यापि शाश्वतहर्षात्मकयोगो व्यञ्जितो 'विरूपतायां च "कामः पुरः शुक्रमिव प्रयाणे' एतेन भावि काममरणं लक्षितम्, 'रजस्वला इव दिशो बभूवुः' रघु. ११।६० इत्यत्र चाक्षुषमलिनदिशापशकुनं भाविपरशुरामागमनेन जनिष्यमाणक्षोभः

संसूचितः 'छायया च जलदाः सिषेविरे' रघु. ११।११ इति शुभशकुनं 'सव्येतरेण स्फुरता तदक्ष्णा-आख्यातमस्यै गुरु भावि दुःखम्' इति सीतायै प्रवासापशकुनम्' 'हा धिग् हा धिग् दुःस्वप्नेन विप्रलब्धाहमार्य-पुत्रमाक्रन्दामि' उ. रा. १४० पृ० इति स्वप्नापशकुनं, 'गुप्तं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः। जलजासिगदाशार्ङ्गचलाञ्छितमूर्तिभिः' रघु १०।६० इति स्वप्ने देवदर्शनं शुभशकुनम्। एतद्विधानि बिम्बानि रहस्यात्मकरूपेण भाविगर्भे विद्यमानानि वस्तुतथ्यान्युद्घाटयन्ति।

साहित्यं भाषया भाषा व्याकरणेन न च निरन्तरं सम्बध्यते। भवभूतौ व्याकरणशास्त्रीयबिम्बानां नितान्ताभावोऽस्ति। कालिदासेन व्याकरणप्रतिपादितसिद्धान्तानामप्रस्तुतविधानैश्चमत्कारो महान् कृतः। एषा मनसि प्रतिक्रिया स्फुरति यदश्मनामुपरि सुमनांसि प्ररोहन्ति मरौ वा तटिनीसलिलानि प्रवहन्ति।

गायत्री स्वरसंस्काराभ्यां विना नपुत्रा मातेवेति। एतद् बिम्बं विकासक्रमगतं प्रथमश्चरणः 'संस्कारवत्येव गिरा मनीषी' कु० १।२८ द्वितीयश्चपादः 'तस्य वर्णस्थान समीरित बभूव कृतसंस्कारा चरितार्थेव भारती' रघु. १०।३६ तथा च तृतीयः पदक्रमश्चरम एवोक्तपूर्वः।

विदिततत्समयप्रचलितकाव्यशास्त्रसिद्धान्तौ प्रकृतौ कविवरौ स्तः। भवभूतिस्तु मुक्तहस्तेन व्यभिचारिणां रसानां स्थायिभावानां प्रयोगान् परम्पराविरोधरूपेणैव करोति। कालिदासस्तत्र लोकज्ञो यथा प्रसङ्गौ-चित्यं काव्यशास्त्रपारिभाषिकशब्दान् चमत्काराय प्रयोजयति यथा 'उपमानस्यापि प्रत्युपमानम्' विक्र. २।३, 'तदाननश्रीः······चिच्छेद सादृश्यकथा प्रसङ्गम्' कुमार. ७।६, 'प्रहर्षचिह्नानुमितं प्रियायै शशास वाचा पुनरुक्तयेव' रघु. २।६८, अभिव्यक्तायां चन्द्रिकायां किं दीपिका-पौनरुक्त्येनं विक्र. १०५ पृ० तुलनया च 'स्निग्ध-पुनरुक्त-पर्यस्तलोचन-विभाविताशेष-चित्तसाराम्' मा. मा. ३२८ पृ० ( इत्यत्र चाक्षुषबिम्बे श्रव्यबिम्बारोपः ), 'प्रस्तावना कपटनाटकस्य' मा. मा. १०६ पृ०, 'प्रचण्ड इव पिण्डतामुपगतो वीरो रसः' म. च. २।२३, 'शृङ्गारैकरसः स्वयं नु मदनो मासो न पुष्पाकरः' विक्र. १।८ तत्तादृशानि बहुन्युदाह-रणानि काव्यशास्त्रीयाणि स्वतःसम्भवीनि तद्बहुलप्रयोगात्।

कल्पनात्मकेषु बिम्बेष्वेतत्तत्त्वमपि चकास्ति यत्तयोः कविचन्द्र-सूर्ययोः कालिदासभवभूत्योर्महतीदण्डनीतौ विशिष्टा गतिर्वर्तते। कालिदासस्तु बिम्बदृष्ट्यापि निःसंशयं राजकविवैभवं भुङ्क्ते इति मन्ये। तस्यानारतं मानससुतापि राजेन्द्रनैपथ्य-भव्यतां परिदधाति नानाभोग-रसलालितातिललिता, कोमलकोमला, नगणितमणिमण्डिताऽलङ्कारप्रिया प्रसादरीत्या सञ्चारिणीव, प्रत्यङ्गहावभावनिर्भरा, नयन-विभ्रमादेशदक्षा सङ्गीतसङ्गप्रतिपद्ध्वनिशालिनी परम्परागौरवमालिनी सर्वमानसानि विशन्तीवाधुनापि सौन्दर्यदीपशिखेव राजतेतराम्। मालविकाग्निमित्रादिरूपकत्रयनायका राजान एव। दिव्ये चोर्वशी-शकुन्तले नायिके। राजन्यानामनन्यसामान्यरघुवंशमहाकाव्यं ललितैतिह्यमिव। तत्र भवभूतिः साधारणजनतायाः प्रतिनिधिकविः। मालती पार्वतीवन्न दिव्या न च मालविकावद् भव्या। कालिदासस्य रामो घोषितराजर्षिर्वर्ततेऽतः स स्वकीयान् विरहजनितान् भावान् निह्नुते परं भवभूतेः स वारं वारं राजर्षिरूपेण चित्रितोऽपि सन् सर्वसाधारणीभूतः। हृदये यदनुभूयते तेन स्पष्टमुच्यते। भवभूतेः सीतारामयोः संवेदनाभावबिम्बानि सर्वसाधारणजनताया न भिन्नानि। मालतीमाधवे भवभूतिर्लोकप्रियः कविः साध्यते। अर्थशास्त्रीयतत्त्वानामप्रस्तुतविधानैः सर्वदा भव्यताया भूमिः प्रायो निर्मीयते। हिमालयस्य राजवद्वर्णने कालिदासस्य विशिष्टामभिख्यां को विस्मर्तुमीष्टे। ऋतुसंहारखण्ड-काव्यं तु राससिंहासनमिव यत्र क्रमेण नृपायमाणा ऋतवो विशिष्टैः सहायैश्चिह्नैश्च निषीदन्ति। तस्यैव राज्ञो बिम्बस्य कल्पनात्मकविकासो 'गिरिचक्रवर्ती' कुमार. ७।५२ तुलनायां च 'कपिचक्रवर्तिनम्' 'म. च. २४५ पृ० 'गृध्राणां चक्रवर्तिना' म. च. ५।६ बिम्बेषु जायते। कालिदासस्य केतुः प्रायः परम्परया 'मनुवंशकेतुम्' इत्यादिवत्स्थलेषु प्रायो दृश्यते परं क्वचिच्च काल्पनिकगतिशीलां बिम्बमौलिकतामपि लिम्पति। यथा 'सौदामिनी स्फुरति नाथ वियत्पताका' विक्र०। तत्र भवभूतिरत्र गङ्गा-विष्णुसन्निधानेन काल्पनिकाट्टालिकामधितिष्ठति बिम्बेऽस्मिन् 'यावद्विष्णोरुपरि चरणश्चारुगङ्गापताकः' म. च. ५।१०। अमात्यायमानता च 'गृहिणीसचिवः' रघु. ८।६७ तथैव चमत्कारे 'नृपतेर्नर्मसचिवः' मा.

मा. २।७ एतद्‌विधानि भूयांसि राजामात्यकोपदुर्गसेनादि राज्याङ्गानीत-राणि राजधान्युपायनादीनि राजसम्बन्धिचिह्नानि चोपमानरूपेण वर्णितानि तानि सर्वाणि सर्वत्र भव्यतासमुदात्तीकरणार्थं परं कुत्रचिद् वञ्चनार्थं प्रयोगा दृश्यन्ते यथा 'परातिसधानमधीयते यैर्विद्येति ते सन्तु किलाप्तवाचः' शा० ५।२५ इति दुष्यन्तस्यानुदात्तीकरणाय।

रागात्मकानि काल्पनिकानि ( रोमांटिक ) कामशास्त्रीयाणि च बिम्बानि विना कालिदासभवभूत्योः काव्यगृहाणि कलत्ररहितानीव। कामः खलु यौवनसर्वस्वम्। कालिदासो युवजनमनोदशाचित्रीकरणे ऋतुसंहारमेघदूतयोर्यावत् साफल्यमभजत तावन्नान्यरूपकमहाकाव्येषु कारणमिदं यद् गीतिकाव्यं मानवस्य मानसस्य गुह्यां शीतलामुष्णां च भावस्रोतोधारां बहिरानेतुं प्रकाशयितुं वा प्रभवति। गीतेर्मूलं कामः कालिदासे मनःशास्त्रे च। तस्य कामकल्पतरोर्गीतानि परिपाकरञ्जितानि फलानीव चेतोहरन्ति। स्नेहस्येव मलयपवनस्येरितैराकर्षणरूपाणि पुष्पाणि विकसन्ति। धर्मार्थमोक्षोपायैः यौनसम्बन्धिकामः समुदात्तीक्रियते न विनाश्यते। कामशास्त्रीयबिम्बेषु रत्यभावस्याधिर्निहितो भवति। कविरिव कश्चिन्मन्मथोन्मादनमार्गणविद्धो युवा दिवास्वप्ने सर्वमपि जगन्नारी-मयमेवेक्षते। स प्राकृतिकपदार्थेषु कलत्राणामकर्षकाणि वदनघनपयोधर-जघननाभिकेशाद्यङ्गानि हाररशनानूपुरकर्णपूराद्याभरणानि च समा-रोपयति ( प्रोजेक्ट )। रतिप्रक्रियां हस्तिचक्रवाकभ्रमरवानरमिथुनैः लतावृक्षसरित्सागरप्रभृतिनैसर्गिकप्रतीकचित्रैश्च विभावयति। क्वचिच्च स कामोत्तेजकसुरापानादिसेवनैकमदानां चित्रैः प्रसिद्धैर्मूर्तयति रागात्मकं वातावरणम्। संगीतजलोद्यानविहारकल्पनैश्च कामाशुक्षणिम् उत्तेजयति। काव्येषु कामशास्त्रवत् रतिप्रक्रिया सामाजिकेभ्यः सरल बिम्बैरर्थान् प्राय उपमेयबिम्बैर्न तथा प्रभावकारिणी यथोपमानबिम्बै-स्तत्संश्लिष्टैः सम्प्रेषणप्रवाहावहा। कालिदासस्तत्करणे विशिष्यते तत्र कालिदासस्य सर्वप्रियाणि चित्राणि लोकं लोकमेव स्वचित्राणि निर्माय भवभूतिर्भूषयति तैः स्वीयं काव्यसदनम्। मालतीमाधवस्य नवमाङ्को मेघदूतस्य प्रथितकीर्तीमूर्ती स्मारयति न तु विस्मारयति।

कामशास्त्रं किल कामस्य विधिनिषेधात्मकपरम्पराणां नियमरूपस-

ङ्ग्रहोऽस्ति। कामशास्त्रीय बिम्बानां प्रभावो धर्मकथादर्शन राजनीति प्रभृतिशास्त्रीयेषु लोकव्यवहारप्राकृतिकेषु च बिम्बेषु यदि भवति तर्हि काव्येऽनन्तं वैलक्षण्यं भवति यथा 'भेजेऽभिसारिकावृत्ति जयश्रीर्वीर-गामिनी रघु. १७।६६ एवं च मृगयायाः कामिनीवत्ता।

सम्भोगसुखाभावे सति युवजनहृदयावस्थाया विषये मल्लिनाथेना-ऽऽसालोचितं गुणपताकाया उद्धरणमेतद् वियोगावस्थासु प्रियजन-सदृक्षानुभवनैस्ततश्चित्रं कर्म स्वप्नसमये दर्शनमपि। तदङ्गस्पृष्टानामु-पनतवतां दर्शनमपि प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि गदितः' ( उ. मे. ४४ तमस्य श्लोकस्य टीकायाम् ) इति प्रमाणीकरोति स्पष्टं यद् रागात्मक काव्यं खलु दिवास्वप्नसम्भूतम्। रागात्मकसमारोपेण वृक्षादीनां नायकीकरण लतादीनां च कामिनीकरणं प्रायः सम्पूर्ण-ब्रह्माण्डे क्रियेते। मानवीकरणं च समासोक्त्याः प्रियं मित्रम्। 'भेजेऽभिसारिका ' ....' रघु. १७।६६ अस्य बिम्बस्य तुलनायां भवभूतेः 'युद्धाभिसारिणः' उ. रा. ४०६ पृ० अभिसारो न न्यूनप्रभावकारी कालि-दासात् प्रयोगः। 'कुमुदरुचिरकान्तिः कामिनीवोन्मदेयं प्रतिदिशतु शरद्' ऋतु० ३ २६ इति कामिनीकरणम्, 'कर्णपूरं वधूनां रचयति जलदौघः कान्तवत् काल एषः' ऋतु० २।२४ इति च नायकीकरणम्। पशुविहङ्गा-दिमिथुनानां रागात्मकानि चित्राणि विलोकनीयानि कानिचित् रथाङ्गनाम्नोरिव भावबन्धनं बभूव तत्प्रेम परस्पराश्रयम्' रघु० ३।२४ 'शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः' कुमार० ३।३६ 'मुखार्पणेषु प्रकृति प्रगल्भाः स्वयं तरङ्गाधरदानदक्षाः। अनन्यसामान्य कलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धुः' रघु. १३।६ च। कामक्रियाश्च तेषामवगम्याश्चित्रैर्यथा 'पलाशानि ..... नखक्षतानीव' कुमार० ३।२६ 'हसितमिव विधत्ते सूचिभिः केतकीनाम्' ऋतु. २।२३ तुलया च 'आविर्गन्धशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः' मा. मा. ६।१६ ( घ्रातव्यबिम्बस्य चाक्षुषबिम्बे परिवृत्तिः ) कामिनीनां हृदयावर्जकानामङ्गानामारोपा दर्शनीया यथा 'गाढोत्कण्ठकठोरकेरल-वधूगण्डपाण्डुच्छेदैस्ताम्बूलोपटलैः' मा. मा. ६।१६ तुलनायां च रघु. ४।५४, 'मरालजघन' मा. मा १३० पृ० तुलनया पू. मे.

४४। अङ्गक्रियाणामारोपाः सौन्दर्यावहाः स्वादनीया यथा 'विलोल-दृष्टं हरिणाङ्गनासु' कुमार० ५।१३ तुलया 'मा. मा. ६।२७, लतासु तन्वीषु विलासचेष्टितम्' कुमार ५।१३ तुलनया 'लतासु नम्रत्वमिति प्रमथ्य व्यक्तं विभक्ता विपिने प्रिया मे' मा. मा. ६।२७ आभरणानामा-रोपा रमणीया यथा 'शिरीषप्रसवावतंसाः' रघु० १६।६१ तुलनया च 'चारुचन्द्रावतंसः' मा. मा. ३।१४ पुष्पाभूषणानामारोपा नयनायन-मानेया यथा 'कर्णेषु च प्रवरकाञ्चनकुण्डलेषु नीलोत्पलानि विविधानि निवेशयन्ति' ऋतु० ३।१६ तुलनया 'स्त्रीहस्त रक्तोत्पलव्यक्तोतंसभृतः··· पिशाचाङ्गनाः' मा. मा. ५।१८। मुखप्रसाधनामारोपाः श्रवणीया यथा 'नवेषु लोध्रप्रसवेषु कान्तिः 'मा. मा. ६।२७, 'पूर्वदिङ्मुखं कैतकैरिवा-वृतम्' कुमार ८।५८ तुलनया च 'ऐन्दवः प्राक्प्रकाशः। व्रियनि पवन-वेगादुन्मुखः केतकीनां प्रचलित इव सान्द्रो मन्दमन्दं परागः' मा. मा. ८।१। उद्दीपनबिम्बानि यथा 'ओषधयो रजन्यामतैलपूराः सुरत-प्रदीपाः' कुमार० १।१०. 'प्राग्भागेषु मेघैर्वितानाय्यते' मा. मा. ६।१५। रागात्मककाव्योज्ज्वलयशोमनोहरशिखरं कालिदासस्य भवभूतिरारोढुं कामयत इव नेष्टे परन्तु।

कामवृक्षस्य फलद्वयमेकं स्वादु द्वितीयं विषकीटदष्टं प्राणहरं तत्र प्रथमं जिजीविषां ( लाइफ इन्स्टिक्ट ) मानवहृदये जनयति द्वितीयं च च मुमूर्षाम् ( डेथ इन्स्टिक्ट ) कामवासनानैराश्यादपि कालिदासस्या-भिनेतारः स्वप्राणेष्वोजोराजिदीप्तियुताः सदा तत्र भवभूतेः स्वस्व-प्रियजनान् स्मारं स्मारं दुर्मनायमाना सन्तो मूमूर्षवो दैव दैवं सदैव क्रोशं क्रोशं लक्ष्यन्ते। धत्ते चक्षुर्मुकुलिनि······बालचूते······ताम्य-न्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान्' मा. मा. ३।१२ अत्र माधवो मरणवृत्तिना ( थेनाटोज वा ) ग्रस्तोऽत्यधीरः परं कालिदासस्य पुरूरवा उन्मत्तोऽपि सन् न तथा चेष्टते। अननुकूलदशायामपि कश्चिदपि तस्य नायकः सर्वेषां प्राणिनां कृते 'जिजीविषेच्छत समाः' सन्देह-हारकः। 'कदापि सत्पुरुषाः शोकवक्तव्या न भवन्ति। ननुप्रवातेऽपि विष्कम्पा गिरयः' शा० १०६ प्र० इत्यत्र कीदृशोलोकयात्राकरणे विश्वासः सूक्तः। 'आत्मविश्वाससम्पन्नोऽचञ्चलो नायकः स्वरमणीयतां न रहयति विकल्परहितोऽत उच्यते' संस्कारोल्लिखितो महामणिरिव

क्षीणोऽपि न लक्ष्यते' शा० २ कृतापराधपश्चात्तापदग्धोऽपि दुष्यन्तो धैर्यं विधुरेऽपि काले न जहाति सोऽपि तु सौन्दर्यं वर्हति। यद्यपि भवभूतिना कालिदासवद् दुष्यन्तायमानो माधवो विरहे 'वपुः क्षामं क्षामं वहति रमणीयश्च भवति' मा० मा० ३।६ चित्रितः परन्तु स उक्त-पूर्वनैराश्याभिभूतो मुमूर्षुः क्वचित् कदाचिच्च कथं धीरोदात्तः स्यात्? तत्र कालिदासानुकरणं भवभूतेर्न शोभते। स मनोदशामतिशुचितया चित्रयति परं यदा कालिदासेन प्रभावितो भवति मन्ये स उभयतो भ्रष्टः सन् चरित्रबिम्बं न सम्यक् सुविदधाति। मौलिकस्य परम्पराप्रभाव-वर्जितस्य तस्य चरित्रचित्रणं मनःशास्त्रेणानुमतं स्यात्। सत्यमेतद् यद् यदा कदातिशयनैराश्याज्जगति जना आत्मनः घातयन्ति बहुप्रकारै-स्तत्र भवभूतिर्यथार्थधरातलस्य कविः। भवभूतेरभिनेत्र्यः स्वभावतः कातराः कालिदासस्येव सन्ति। तत्र न द्वयोर्भिदा। 'सिञ्चत मे तिलो-दकम्' शा० ८६ पृ० शकुन्तलात्र मालत्या अभिन्ना। कालिदासाभिव्यक्तिः परम्परासंस्कारवशात् समर्यादा तत्र भवभूतेः सैव सहजानुभूतिसनाथा। द्वयोरपि पृथक्-पृथक् सदा वैशिष्ट्यं विद्यते। भवभूतिरितरप्रभावरहितो मौलिकः प्रभावपूर्णाभिव्यक्तिशाली सरलः सूनृतवाक्।

वैरूप्यसंसर्गेणान्तरिकं बाह्यं च सौन्दर्यं काव्ये निरन्तरं वर्धते यथा 'वार्धक्यशोभिना' वल्कलेनापि मनोहारिणी शकुन्तला मदनबहुप्रयास-पूर्वकं निमितनानारमणीरमणप्रवणस्य दुष्यन्तस्य नागरस्यापि सहजं मानसं राजहंसीव प्रविशति। शकुन्तलाया बाह्यं सौन्दर्यं वल्कलेन परसहस्रगुणतामेत्यत्त आह कालिदासः 'इयमधिकमनोज्ञा' इति। आन्तरिकं सौन्दर्यमपि विपरीतपरिस्थितिसंसर्गवेगेन गगनमारोहति। प्रवासरूपाननुकूलपरिस्थितौ सद्यःपरिणयापकप्रणयः परिपच्यते तत्र कालिदासो व्याहरति यत् स्नेहानाहुः किमपि विरहे।

ध्वंसिनस्ते त्वभोगादिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति।' उ. मे. ५२। आन्तरिकं सौन्दर्यं देहपिहितद्वारात् स्वयं निःसरति 'कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः।' रघु० १४। तथैवोत्तररामचरितस्य छायाङ्केऽपि तदेव शब्दमांसलतां गतम्। मित्र-निर्माणेन प्रियायाः संदर्शनं साक्षाद्भव्यमूर्तनं 'त्वामालिख्य प्रणय-

कुपिताम् इत्यादि चित्रवद् भवभूतावपि मा० मा० १।३६ दृश्यते। अतः कश्चित् सौन्दर्यशास्त्री प्रतिपादयतियत् प्रेममूलं सौन्दर्यं काव्यं च तत्पुष्पम् इति। आन्तरिकसौन्दर्यविषये कालिदासस्य विचारणा भवभूतावपि संवादावता। 'प्रियेषु सौभाग्यफला हि चारुता' इति विचारः 'तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियोजनः' इति वाक्ये दुग्धे धवलतावत् संवदति तथैव। प्रेममूलसौन्दर्यमतिप्रतीपावस्थायामपि न हीयतेऽपितु कृशानौ काञ्चनरूपवद् अधिकं वर्धते यथा ब्रूते कालिदासः 'अहो सर्वास्ववस्थासु चारुता शोभां पुष्यति' मालवि॰ ३४ पृ॰ तथैव भवभूतिर्व्याहरति 'यद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद् विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः' उ॰ रा॰ ३।३९।

द्वयोरपि कविभूषणयोरान्तरिक बाह्यं च सौन्दर्यं काव्यबिम्बानि भित्वा भित्वा निःसरति। कलेवरस्य बाह्यस्य सौष्ठवं 'सर्वा स्थानवद्यता रूपस्य' इति खल्वनवद्यता कथ्यते। अङ्गानां सन्तुलना (प्रोपोर्शन) समुचिता भवेदिति प्रकृतकविद्वयकामना सदैव प्रवहति। अनूढाया नायिकायाः श्यामालताकल्पाङ्गानि, मृगाक्षशफरीन्दीवरवन्नयन आयते, कमलेन्दुवद् वदन गौर तरङ्गतरलशिरीषमृदुलमृणालशीतलभुजलते नते, घनौ कुड्मलचक्रवाकतनुस्तनावुन्नतौ, पार्श्व क्षालितमिव, मध्या पाणिमिता, कामसोपानतरङ्गितत्रिवली, हैममेखलाकिङ्किणीरणद्विपुलमसृणनितम्बबिम्बे, भरितपृथुलमरालजघनयुग्मं, सरसकदलीस्तम्भगौरचञ्चलकरभोरू, अनावृतावर्तनिम्ननाभि., किसलयबिम्बसन्निभाधरोष्ठपुटयुगलम् ऊढायाश्च सीतायक्षिणीवन् नायिकाया मांसल रूपमुद्दीपनोपमानसंयुक्तबिम्बसख्ये नाहुतिघृतसमिद्धहुताशनवद् देदीप्यते यथा कादम्बिनीसंयोगबिम्बेन कबरी सान्द्रार्द्रस्पृश्यानुभूतिगम्या सैव चमरीमयूरपिच्छसंपृक्ता सती भव्यदृश्यसंवेदनासम्पन्ना रससञ्चारं तीव्रतया तनोति। भ्रमरसन्निभविभ्रमादेशदक्षयोर्नयनयोर्मधुवद् मदः हरिणसदृश सरल तारल्य चकोरवद् रागात्मकाकारश्च, वदनेऽरविन्दरागः चन्द्रशीतलधवलता, ओष्ठाधरयोर्बिम्बसमानरञ्जित सरसता किसलयसममृदुता च, भुजयोर्मृणालशैत्यं चन्दनलतासुगन्धः शिरीषकुसुमसौकुमार्य च, स्तनयोश्चक्रवाकपृथुगोलमांसलसौन्दर्यं पुष्पस्तवकरागमयावर्जकत्व हेमकुम्भाकारललितविस्तारः पर्वतौन्नत्यं

मृणालसूत्रालभ्यावकाशत्वेनातिघनत्वं च मध्यायाः पाणिमितक्षामरूपं, त्रिवली कामसोपानतरङ्गरागो, नितम्बयोरधित्यकोपमविस्तृतिः, ऊर्वोः सरित्पुलिनकमनीयता कदलीसरसता च, चरणयोः स्थलकमलरागात्म-सौन्दर्यं प्रसङ्गानुसारमङ्गानामेतेषां चन्द्रकमलाद्युपमानबिम्बैर्दृश्यस्पृश्य-स्वाद्यघ्रातव्यश्रोतव्यसंवेदनाः कविभ्यां रसिकेभ्यः संप्रेषिताः सन्ति। 'प्रचलितभ्रमरं च पद्मम्' इत्यत्र गुञ्जितश्रव्यता गतिशीलरूपचित्रस्य दृश्यता, मधुनः स्वाद्यता, सौरभघ्रातव्यतेति यत्र कदा सर्वाः संवेदनाः पुञ्जीभवन्त्येकत्र। शरीरे विद्यमानानां सम्मात्रैकरूपता वैविध्यादीनां बाह्यतत्त्वानां सहजसंयोगेन सौन्दर्यं कविकल्पनात्मकप्रतिभाप्रभया स्फुटं दरीदृश्यते काव्येषु यत्र तत्र सर्वत्र। एतदेव सौन्दर्यं सापेक्षमेव।

कालिदासस्य किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इत्येतद् वाक्यं नैसर्गिकसौन्दर्यविश्वाससेवि। तेन भूषणान्यपि विभूष्यन्ते। ऊर्वश्या अनिन्द्यं कलेवरं भूषणान्यप्यलङ्करोति। (विक्र० १।३) न केवलमान्तरिकसौन्दर्यं रागात्मकं प्रथते संसारेऽपि तु वात्सल्यादिषु रसेषु मौक्तिकायमानजललवेषु तरलं लावण्यमिव तद् राजते यथा 'धन्यास्तदङ्गरजसा मलिनीभवन्ति' शा० दुष्यन्तो विविधस्वच्छराज-परिधानधारी बालकस्य भरतस्याङ्गरजोभिरङ्केन मलिनीभवन्नपि हृदयेन स्नेहानन्दसन्दोहं विन्दति। यथा वा 'भूयात् कुशेशयरजोमृदुरेणुरस्याः शान्तानुकूलपवनश्च सुखश्च पन्थाः' इत्यत्र शुभंयुः कण्वः शकुन्तलायाः कृते मार्गे विद्यमानं भस्मिनमपि रजः परागमिव प्रीतिकरं परिवृत्तरूप कामयते। अन्यत्र च 'भयोत्सृष्टविभूषणानां तेन केरलयोषिताम्। अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः' रघु. ४।५४ पद्ये हास्यात्मककेरली-दशया रघुविजयो घ्रातव्यबिम्बेन प्रत्यक्षीकृतः।

सप्तमेऽध्याये प्राकृतिकानि बिम्बानि सार्वभौमानि (यूनिवर्सल) तयोः काव्यानि संसारे व्यापर्यान्त। कालिदासः प्रकृतेः प्रायो भव्यता-दासस्तत्र भवभूतिस्तस्याश्चण्डरूपासकोऽप्यस्ति। भवभूतौ परम्परागत-कथात्मकशास्त्रीयबिम्बानां प्रभावः प्रकृतावेतादृशो न विद्यते यादृशः कालिदासे तत्र तु प्रकृतेरपि कथात्मकादिबिम्बेषु प्रभावः प्रलक्ष्यते। कालिदासः स्वतन्त्रगीतिकाव्ययोः प्रकृतिसमुपासको नितान्तरूपेण

विलसति। ऋतुसंहारसंस्कारः सर्वत्र रूपकेषु महाकाव्ययोश्च दृश्यते। विम्बक्षेत्रे प्रकृतिपदार्थाः सङ्ख्यातीताः सन्तो काव्ये वैविध्यं (वैराइटी) जनयन्ति तदनन्तरं नवता स्वयमेव जायते। प्राकृतिकमूर्तनानि वैविध्येन कविभ्यां सर्वत्र नवीकृतानीव। कालिदासे भासप्रभावः स्पष्टः परं यन्नवीकृतरूपं प्राकृतिकबिम्बेषु तस्य विद्यते तन्मौलिकमेव। प्राकृतिकप्रभाव एव मानवीकरणाय प्रेरयति। मेघस्य कालिदासे गङ्गायमुनयोरुत्तररामचरितस्य च भवभूतौ सफलनिदर्शनानि। कालिदासस्तु वर्ड्स्वर्थवत् प्रकृतौ सूक्ष्मद्रष्टा परमतत्त्वस्य रहस्यात्मकसत्तामीक्षते। भवभूतौ कालिदासस्य प्रभावो यत्र तत्र सर्वत्र परिलक्ष्यते। डा० गङ्गासागरमहोदयस्य मतमेतद् विचारणीय यत् कालिदासे प्रकृतेः सौम्यरूपं भवभूतौ च सौम्यरूपेण सह प्रचण्डरूपमपि विलोक्येते। प्रकरणकारणात् कालिदासेऽपि प्रचण्डरूपधारिणी प्रकृतिर्बहुवारं दृश्यते। प्रचण्डरूपं तस्याः भयानके, वीरे, रौद्रे, बीभत्से च स्वयं जायते यथा रघुवंशस्य नवमसर्गस्य पूर्वार्धे प्रकृतेः सौम्यं रूपमुत्तरार्धे च हस्तिव्याघ्रसिंहादीनां चित्रणमतिचण्डमेव; भाविभीषणपरशुरामागमनभूमिकायै तत्रैवैकादशसर्गे प्रकृतेः कोपः प्रदर्शितः; तथैव इन्द्ररघुकाज राजन्यरामरावणलक्ष्मणलवणासुरसङ्ग्रामावसरेषु प्रकृतिरूपमानखण्डरूपिणी दृश्यते। प्रसङ्गानुसारं रससिद्धौ यत् कमलं दृश्यघ्रातव्यरागात्मकसौन्दर्योपमानं प्रख्यातं रूढं वा तदेव घोरतम जायते यथा 'स तद्वक्त्रं हिमक्लिष्टकिञ्जल्कमिव पङ्कजम्। ज्योतिष्कणाहतश्मश्रुकण्ठनालादपातयन्।' रघु० १५।५२ प्रायो बिम्बालोचनया वस्तुनेतृवातावरणानां मृदुघ्रातव्यता कमलादिभिर्घोरघ्रातव्यता च सप्तच्छदादिभिर्मृदुश्रव्यता कोकिलादिभिर्भीषणश्रव्यता च शिवाकाकरुतादिभिश्चैवंविधैरन्यैः प्रयोगैः संवेदनाः संप्रेष्यन्ते। पुनश्च डा० गङ्गासागरस्य विचारोऽयं किञ्चित् स्वीक्रियते यद् भवभूतिना कालिदाससदृशी प्रकृतिचित्रणविषये न परम्पराङ्गीकृता। चन्द्रसूर्यमणिद्रवीभावावतिरिच्य न कुत्रापि भवभूतिना कविसमयः सम्भवाभावात् प्रयोजितः परं कालिदासस्य प्राकृतिकबिम्बानि किं भवभूतिना नानुहृतानि? प्रकृतिकसौन्दर्यनिरीक्षणे भवभूतेः काव्यावसराभावो विद्यते कारणमेतद् बलीयः।

अनेके सञ्चारिभावाः प्राकृतिकपदार्थचित्रणैर्मूर्तिताः काव्येषु सन्ति यथोन्मादः 'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः' इत्यादिवाक्य-चित्रणैः, विकसितकमलैर्हर्षो, दिनकरसंपर्केण विकसितनामरसैर्विबोध इत्यादिबहुभिःप्रतीकचित्रैः कवयश्चित्रयन्ति व्यभिचारिणः। भावानाम-मूर्तानामेवङ्कारं मूर्तयोजना ( ट्रान्सफर एपिथेट ) विलसन्ति भिन्नभिन्नेषु देशेषु भूतवर्तमानकाव्येषु।

उद्दीपनविभावाः प्रायः प्रकृतिदेव्याः प्रसादाः सन्ति। प्रकृतेः कस्यचिद् भावमुद्वेलयितुमसाधारणा रहस्यमयी क्षमता विद्यते यथा 'रम्याणि वीक्ष्य च निशम्य शब्दान् पर्य्युत्सुकीभवति यत् सुखिनोऽपि जन्तुः' इत्यादौ सैव दृश्यते। मनुष्यसमाना यद्यपि प्रकृतेः संवेदनशीलता नास्ति तथापि कविना मानवीकरणेन तदभावो दूरीक्रियते स्वकल्पना बलेन यथा 'त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा' तथैव सीताशकुन्तलादिनायिकादिः सह लता-मयूरवनदेवतादीनां समदुःखभावोऽस्ति। वैज्ञानिकास्तु संगीतप्रभावं वनस्पतिषु मन्यन्तेऽतः संवेदनाभाववार्ता तु प्राचीनैव। अद्वैतवादिनां मते ब्रह्मणि जीवप्रकृती स्तस्तत्र तयोश्चेतनता स्वीकार्या भवति तथैव वर्डस्वर्थमहोदयो महाकविः प्रकृतिं मानववत् संवेदनशीलां मन्यते परं कालिदासो न तादृशो भावुकः कविः तस्य बौद्धिकतां कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु' इति वाक्ये दृश्यते। परमेतदपि सत्यं यद् भावुकमनःसृष्टिरेव काव्यम्। क्वचिद् विरही हिमकिरणैः प्रदह्यते क्वचिच्च भोगी तैरेवोन्माद्यते। मनोवैज्ञानिकदृष्ट्या विवेचनान्तरं सत्यमेतत् स्फुटति यद् ऋतुसंहारे स्मृतीनां समानाः प्रकृतिपदार्था अतस्तैस्ता उद्बुध्यन्ते। स्मरणालङ्कारविषयोऽप्ययम्। उपमानबिम्बैरारोपाः परिपच्यन्ते। कुन्देषु हास्यं लतासु विभ्रम इत्यादय आरोपा भ्रान्ति-वशात् ( इल्युजन ) भावुकतया जायन्ते। मेघपशुपक्षिवृक्षादिषु मित्रपुत्रा-दिसम्बन्धस्थापनेनात्यन्ततादात्म्येन मानवीकरणं प्रवर्तते। तच्च कस्य-चित् कवेः प्रकृतिप्रियतायाश्चरमाभिव्यक्तिरूपं भवति।

प्रकृतिपदार्थानामप्रस्तुतविधानेन प्रायः सर्वेऽपि कवयः स्वकीय-जीवनानुभवबलाद् उपदिशन्ति। शरणागतरक्षा मेघपर्वतवृक्षादिभि-

विनयः फलितरसालशालिप्रभृतिभिः, सहिष्णुता पृथिव्या, पावनता सुरसरिता, धीरता पर्वतार्णवादिभिः परोपकारिता वदान्यता च जलदेन चेत्येवं विधैर्बहुभिः प्रकृतिपदार्थैः सह गुणाः संश्लिष्टाः सन्ति। तदुपकरणै स्तद् ग्रहणायोपदेशा भूयांसः संप्रेष्यन्ते। मन्मत्या कालिदास भवभूतिभ्यां धर्मशास्त्राणामञ्जसा कोमलबुद्धीनां कृते सोदाहरणव्याख्याः प्राकृतिकबिम्बैः क्रियन्ते। रघुवंशमहाकाव्यं त्वन्यल्ललितधर्मशास्त्रं मन्ये। काव्यशास्त्रिण' कान्तोपदेशं काव्यमिति मन्यन्ते। मदीय एष सुदृढो विचारो यत् कालिदासः स्वकीयप्रौढावस्थायां मेघदूतखण्डकाव्ये जीवनानुभवलेशान् सर्वत्र विकिरति। कारणादस्मादर्थान्तरन्यासा-श्चतुर्थपादेषु श्लोकानां विराजन्ते। उत्तररामचरिते भवभूतिरपि तथैव प्रवर्त्तते।

कालिदासभवभूती प्रकृति प्रेम च पृथङ् न मन्येते। रघुवंशस्य त्रयोदशसर्गे प्रथमाङ्के चोत्तररामचरितस्य रामस्य प्रेमसागरे प्राकृतिकं सौन्दर्यं तरङ्गायते। डा० कुन्हनराजा कालिदासस्य प्रकृतिं नाञ्जसाध्य-गमत्। तस्य कथनमिदं यत् प्रकृतिप्रासादयोः प्रकृतिवनयोश्च कालिदासः सत्यं जीवनं नोरीकृतवान्। कीदृश आरोपः कालिदासचन्द्रे मिथ्या! बिम्बदृष्ट्या स प्रासादेषु प्रकृति समारोपयन्ति यथा 'विलोलनेत्रैर्भ्रमरै-र्गवाक्षाः सहस्रपत्राभरणा इवासन्' इति एवं च' दूरीकृता गुणैरुद्यानलता-वनलताभि.' इति। कालिदाससमानस्य शैक्सपीयरमहाकवेरपि गीतेषु ( सोनेट ) प्रकृतिप्रियता बिम्बेषु विलोक्यते यथा 'ए बेल्ट ऑफ स्ट्रॉ एण्ड आइवी बड्स, विद कोरल क्लास्प एण्ड एम्बर स्टड्स, एण्ड इफ दीज प्लेजरस् मे दी मूव देन लिव विद मी, एण्ड बी माई लव' सोनेट्स टू सण्ड्री नोट्स ऑफ म्यूजिक, ५।

भवभूती रमणीयतया बिम्बविस्तरेण ( एक्सपेन्शन ऑफ इमेज् ) विषयाय प्राचुर्यं प्रददाति ततः काव्यमुद्दिपयति। यदा कदा मानसो-ल्लासोर्जस्वलता निमर्यादिता सती प्रतीयमानविकरालकलासौन्दर्यं सृजति। तदाधिक्यमेव कारण यन्नमहावीरचरितं लोकप्रियं नो विद्यते। अतिसौन्दर्यमपि काव्याकर्षणहानिकृत्। कालिदासस्य मानसोल्लासस्य तीव्रता न कूलङ्कषायतेऽतः सकलानि दृश्यश्रव्यकाव्यानां हाराणामिव

रत्नानि बिम्बानि रसिकहृदयेषु दीप्तानि स्फुरन्ति । क्रोधस्याप्यभिव्यक्तिः कालिदासस्यानिर्मर्यादिता तत्र भवभूतेः सैव' 'पुष्करावर्तकस्तनित-मांसलो वार्ङ्निर्घोषः' म० च० ७८ पृ० इतिवत् सद्यो न तु क्रमेण चरमं (क्लाइमेक्स) शिखरमारोहति कारणादस्माद् यत्र तत्र क्लान्तेव स्खलति । कालिदासस्य मानसी सुता वारणहंसगामिन्या रोहत्यवरोहति शिखरमतोऽस्खलितगमना मन्दाक्रान्तेवाश्रान्ता । आरोहावरोहक्रमे काव्येषु महान् भेद एष कालिदासभवभूत्योः ।

बिम्बालोचनया भवभूतेः परम्परा विद्रोही नवीनताकर्षणजनकस्त्वस्ति परन्त्वौचित्यघातीव किञ्चित्क्षणानन्तरं प्रतीयते । औचित्यं खलु बौद्धिकतत्त्वम् । यो महीरुहः प्रश्रयमूर्तिरूपेण रूढः कविकुल-काव्योपवने स एव भवभूतिना यदा 'दुर्विनयविटपिकोरकाः परितः प्रकीर्णा इव' म० च० २५४ पृष्ठे विपरीतमूर्तिः क्रियते तर्हि रूढोपमानस्य स्खलितमविषह्यं हि भवति यदनुचितम् ।

कालिदासभवभूत्योर्दिव्यानि बिम्बानि तानि सरलानि संश्लिष्टानि वा समानरूपेण प्रभावोत्पादकानि सन्ति । केवलं कालिदासे तेषां सर्वत्र बाहुल्यम् अस्ति । प्रकृतौ स्वर्गकल्पना अभिनेतरि वातावरणे दिव्यता-सञ्चारं कुर्वन्ति । क्वचिद् रघुकोषागारे जातरूपवर्षा क्वचिद् 'गन्धोदग्रं तदनुववृषुः पुष्पमाश्चर्यमेघाः' रघु० १६।८७ कुत्रचिद् 'अमृतह्रदमिवावगाढोऽस्मि' शा० २५४ पृ०, आनन्दममृतप्लवनादिवासीत्''हृदयम्'' मा० मा० १।२०, 'इयममृतवर्तिनयनयोः' उ. रा. १।३८ इत्यादिषु स्थलेषु कवी सहजमयरावती रसिकान् नयतः । पारिजातमन्दारकल्पतरूणां शश्वच्छायाफलपुष्पाभरणादीनि कस्य न मनो दिव्यतां प्रति हरन्ति । अमृतवचांसि कस्य न कर्णाभ्यां रसायनानि । नन्दनवनमपि काव्येऽति-नन्दनं जायते । विरूपीकरणेन चमत्कारसर्वस्वं काव्यं तनुते यथा—

ननु मम लुलितपारिजातशयनीये भवन्ति ।
नन्दनवनवाता अत्युष्णकाः शरीरे ॥ विक्र. २।१३ ।

समासत आलोचनाया बिम्बविधानं निखिलं कल्पनात्मकं बहु-प्रकारकं मन्मत्या तत्र तरलपदार्थानां जडपदार्थीकरणं, जडपदार्थानां

तरलपदार्थीकरणं, तरलजडपदार्थानां मानवीकरणं, चेतनानां मानवानां तरलजडपदार्थीकरणं, दृश्यंतरलजडपदार्थमानवानां च भावीकरणम्। एतानि मूर्तनान्यमूर्तनानि च स्थानरूपपरिवर्तनेन (ट्रांसफोर्मेशन) जायन्ते। यथा श्रोत्रपेयम्। कालिदासस्य बिम्बविधानेऽयं गुरूपदेशो द्रष्टव्यो यो मम शास्त्रदीप इवालोकयति बिम्बमीमांसासरणीं सर्वत्राधस्तात्।

ता राघवं दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि।
तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टाः॥ रघु० ७।१०

# अविश्रमोऽयं लोकतन्त्राधिकारः

*अयोध्या प्रसाद द्विवेदी*

लोकतान्त्रिकशासनपद्धतौ विश्वसता महाकविना कालिदासेन 'अविश्रमोऽयं लोकतन्त्राधिकारः' इति कथयता अनवरतकठिनपरिश्रमस्यापरिहार्यत्वमुद्घोषितम्। तन्मत्या व्यपगतविश्रमो भवति लोकतन्त्रस्याधिकारः। येषामुपरि लोकरक्षाया भारो वर्तते न ते कदाचिदपि विरामं लभन्ते। यद्यपि राज्योपलब्धिः अथवा उच्चशासकीयपदप्रतिष्ठा आपाततो बहुसुखावहा प्रतीयते, यतो जगति 'सर्वः प्रार्थितमधिगम्य सुखी सम्पद्यते जन्तुः, एषैव सर्वसाधारणा वृत्तिस्तथापि राज्ञो राज्याभिषेकः, शासकस्य पदभारग्रहणम् अधिकारिणो वा शपथग्रहणसमारोहः कालिदासदृष्ट्या नहि महत्प्रीतिकरं वृत्तम्। अत एव राज्यभारस्तेनातपत्रमिवोपकल्पितस्तद्यथा—

> औत्सुक्यमात्रमवसाययति प्रतिष्ठा
> क्लिश्नाति लब्धपरिपालनवृत्तिरेनम्।
> नातिश्रमापनयनाय न च श्रमाय
> राज्यं स्वहस्तधृतदण्डमिवातपत्रम्॥ शा० ५।६॥

वस्तुतः, भवतु नामोच्चपदासीनत्व क्षणिकमुत्कलिकापनोदि, परमुत्तरदायित्ववहने महत्कष्टमनुभूयते। यद्यपि यस्य सविधे 'छत्र' नास्ति तदपेक्षया तु 'छत्रधारी' गौरवास्पदतां भजते तथापि, छत्रस्य धारणे यावद् दुःखं जायते न तावत्सुखं भवति आतपात्त्राणे। अत एव कवेर्दृष्ट्या अविरतश्रमसाधनैव लोकतन्त्रस्य लक्षणम्। अधिकारोऽत्र कर्त्तव्यस्य पर्यायः।[1] अधीनस्थानामनुशासनेन प्राप्तपदोपभोगेन वा नाधिकारोऽत्र परिभाष्यते। अपि तु अहर्निशं राष्ट्रचिन्ता, जनसेवा, देशस्याभ्युन्नतौ निरतत्वं च प्रशासकस्याधिकारः कर्त्तव्यो वा। अत एव कविनोक्तम्—

---

1. '...स्वाधिकारात्प्रमत्तः'। पूर्वमेघ ॥ १ ॥

भानुः सकृद् युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥ शा० ५।४ ॥

कविरत्र सूर्यवायुशेषानामप्रस्तुतानां वर्णनेन प्रशासकस्य कर्त्तव्य-पालननैरन्तर्यं, स्थैर्यं, लोकोपकारित्वञ्च संकेतयति । सूर्यवत्तेजस्वि[1] कर्मठं वा वायुरिव लोककल्याणकामि व्यापकप्रभावशालि वा शेषो यथा दृढचरित्रं किमपि व्यक्तित्वमेव राष्ट्रस्य भारवहने क्षमते, नान्यत् । इदमपि ध्यातव्यं यत्सूर्यादयस्त्रयोऽपि स्वकर्त्तव्यनिष्क्रयमपि कुतश्चिन्न किमपि वाञ्छन्ति । निस्स्वार्थं निष्कामं चैतेषामियं साधना राष्ट्रस्यो-न्नायकानां लोकसेविनां समाजहितेच्छूनां च कृते अनुकरणीया वर्तते । राष्ट्रसेवाया इयमेवादर्शपद्धतिः । एतादृशमेव निष्कामलोकसेविनं कालिदासो वृक्षेण सह तुलयति—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ शा० ५।७ ॥

इह राष्ट्रनेतृभ्यो देशसेवकेभ्योऽथवा सर्वेभ्योऽधिकारिभ्यः कर्म-चारिभ्यश्च महाकविना कर्त्तव्यपालनस्योत्तमो मार्गो विनिर्दिष्टः । लोकतन्त्राधिकारिणो वास्तविकं रूपं वृक्ष एवोपस्थापयति । स भीषण-मातपं तुमुलां वृष्टिं दुस्सहं शीतमन्यान्वोत्पातान् स्वयं सहते, परं स्वाश्रितेभ्यश्छायादानेन सुखयति । एवमेवोदात्ता दृष्टिः प्रशासकस्या-पेक्षते । एषा तदैव संभवेत् यदा नैजं सुखभोगं प्रत्यनासक्तः प्रशासको निरन्तरमविचलभावेन लोकहिताय प्रयतेत । एवं सुस्पष्टं प्रतिभाति यत् कालिदासधिया लोकतन्त्रात्मकं प्रशासनं प्रकारान्तरेण लोकाराध-नस्यैवापरविधानमस्ति । वस्तुतः, राजा, मन्त्री, अधिकारी कीदृग्विधो वा प्रशासकः स्यात् , सर्वानप्यनुशासितान्प्रति पारिवारिकमात्मीयभाव-

---

१. आलोकान्ताव प्रतिहततमोवृत्तिरासां प्रजानां
तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः ।
तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये
षष्ठे काले त्वमपि लभसे देवविश्रान्तिमह्नः ॥

-मनुभवितुं स तदैव पारयेद्यदा, तुच्छस्वार्थेन तस्य जनसेवात्मिकोदारा[1] वृत्ति' कालुष्यं नेयात्। तदैवोचितानुचितयोः सम्यक् विवेको जायते समाजस्य च शान्तयेऽपेक्षमाणायानुशासनाय दण्ड्यादण्ड्ययोः साधु-निर्णयोऽपि तदैव भवति। तद्यथोक्तम्—

> नियमयसि कुमार्गप्रस्थितानात्तदण्डः
> प्रशमयसि विवादं कल्पसे रक्षणाय।
> अतनुषु विभवेषु ज्ञातयः सन्तु नाम
> त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम्॥ शा० ५।८॥

विभववतान्तु बह्वो हितैषिणः प्राप्नुवन्ति। किन्तु, सर्वसामान्यानां हितेच्छुरेवंविध उदारमना निस्पृहः कश्चित् प्रशासक एव भवितुमर्हति। तस्मिन्नेव निखिलोपि जनतावर्गो विश्वसिति आत्मीयतां चानुभवति। तद्यथा—

> अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत्।
> उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित्॥रघु०८।८॥

एवंविधं विगतस्पृहं निर्भीकं वा प्रशासकं प्राप्य प्रजा धनपिता-पुत्रादिमतीवात्मनं[2] मन्यते—

> तेनार्थवाँल्लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान्।
> तेनास लोकः पितृमान् विनेत्रा तेनैव शोकापनुदेन पुत्री॥ रघु० १४।२३॥

प्रशासनमतीव दुष्करं कर्म। यदा प्रतिदिवसात्मकं स्वकीयमेव प्रमादं वेदितु न कश्चित्प्रभवति तर्हि राज्यस्य निखिलजनवृत्तिं पूर्णतः ज्ञातु कः शक्नुयात्[3]? अत एव महाकविकालिदासेन प्रशासको मुनिरिव प्रति-बिम्बितः— पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः, यतः 'रक्षायो-

---

१. तदलं तदपायचिन्तया विपदुत्पत्तिमतामुपस्थिता।
वसुधेयमवेक्ष्यतां त्वया वसुमत्या हि नृपाः कलत्रिणः॥ रघु० ८।८३॥

२. येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥ शा० ६।२३॥

३. अहन्यहन्यात्मन एव तावज्ज्ञातुं प्रमादस्खलितं न शक्यम्।
प्रजासु कः केन पथा प्रयातीत्यशेषतः को नु विदाङ्करोतु॥
शा०। ६।२६॥

गादयमपि तपः प्रत्यहं संचिनोति' (शा० ७।१५)। अत्र महाकवेः लोकतान्त्रिकशासनविषयकं दृष्टिकोण सम्यगुन्मीलितमस्ति। स एव श्रेष्ठः प्रशासकस्तस्य मतो यो निस्पृहं धर्मबुद्ध्या जनसेवां तपश्चर्यामिव मत्त्वानुदिनं लोककल्याणाय वितनुते। प्रशासकस्येमामादर्शपद्धतिं पालयितुं स एव कल्पते यश्चरित्रवान् भवेत्। दुर्व्यसनेषु निमग्नस्य वैयक्तिकविलासरुचेस्तु लोककल्याणवृत्तिर्विनश्यति। व्यसनासक्तस्य कुतो विवेकः? निर्विवेकस्य राष्ट्रं कथमुन्नतिपथमियात्? अस्मात्कारणादेव कविर्मृगया—द्यूतक्रीडा—मद्यपानादिकं बलवद्विरुणद्धि। तद्यथा—

न मृगयाभिरतिर्न दुरोदरं न च शशिप्रतिमाभरणं मधु।
तमुदयाय न वा नवयौवना प्रियतमा यतमानमपाहरत्॥ रघु० ६।७॥

कालिदासदृष्ट्या प्रशासकस्य लक्ष्य भोगो नास्ति अपि तु त्याग एव तस्य प्रशस्यो गुणः। अत एव तेनोक्तम्—

दुरितैरपि कर्त्तुमात्मसात् प्रयतन्ते नृपसूनवो हि यत्।
तदुपस्थितमग्रहीदजः पितुराज्ञेति न भोगतृष्णया॥ रघु० ८।२॥

जनतान्त्रिकप्रशासकस्य सर्वस्वमपि प्रजार्थं भवति। न किमपि तस्य स्वकीयम्। इत्थं समाजवादस्य सर्वोत्तममुदाहरणं तेन प्रस्तूयतेः—

बलमार्तभयोपशान्तये विदुषां सत्कृतये बहुश्रुतम्।
वसु तस्य विभोर्न केवलं गुणवत्तापि परप्रयोजना॥ रघु० ८।३१

इत्थमुपर्युक्तोदाहरणैरिदं सुस्पष्टं भवति यन्मद्यपानादिकानि घातकानिदुर्व्यसनानि सर्वथा परित्यज्य, सूर्य-वायु-शेष-वृक्षेभ्योऽहर्निशं निष्काममुद्यमार्थं प्रेरणां च संगृह्य लोककल्याणभावनया राष्ट्रसंवृद्धयेऽविश्रमं प्रयतमानानां प्रशासकमुनीनामुपरि देशरक्षाया भारं समर्प्य महाकविः कालिदासो लोकतन्त्राधिकारं परिभाषितुमीहते। इयमेव तस्य लोकतान्त्रिकी दृष्टिरन्यथा राज्येन किम्[1]?



---

1. 'राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा' ॥ रघु० २।५३ ॥

## भासस्य बिम्बनविधिः

*अयोध्याप्रसाद द्विवेदी*

भासः संस्कृतसाहित्यस्यादिमो नाटककारोऽस्ति। सरलाभिव्यक्तिरेवास्य प्रमुखं वैशिष्ट्यम्। बिम्बधर्मिशब्दविन्यासद्वारा कस्यचिदपि कथ्यस्य साक्षादिवोपस्थापनेऽतीव समर्थोस्य लेखनी।

**स्वभावोक्तिबिम्बनम् :—**

सर्वप्रथममाश्रमस्यैनं मान्ध्यबिम्बं प्रस्तूयते:—

खगा वासोपेताः सलिलमवगाढो मुनिजनः
प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम्।
परिभ्रष्टो दूराद् रविरपि च संक्षिप्तकिरणो
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम ॥ स्वप्नवा० १।१६ ॥

अत्र सन्ध्यायाः सजीवचित्राङ्कनेनान्धकारस्यागमः कविना संसूचितः। अन्धकारो हि वस्त्वाच्छादको नाम। प्रकृतेऽपि वासवदत्ता अवन्तिकावेषेण दर्शकनाम्नो मगधनरेशस्यान्तःपुरे प्रच्छन्नतया निवसन्ती उदयनं प्रति पद्मावत्या हृदि प्रेमाङ्कुरमुत्पादयितुकामा वरीवर्ति। प्रस्तुतं बिम्बमिदमेव तथ्यमावेदयति। इयमेव चास्य प्रासङ्गिकतात्रोन्नेया। अतीव मनोहारि स्वाभाविकं चाश्रमस्य सायंकालिकं चित्रन्तु सुतरां स्पष्टमेव। सम्प्रति सद्यःसिक्त-वृक्षमूलस्य सूक्ष्मं रमणीयञ्च दृश्यम् :—

भ्रमति सलिलं वृक्षावर्ते सफेनमवस्थितं
तृषितपतिता नैते क्लिष्टं पिबन्ति जलं खगाः।
स्थलमभिपतन्त्यार्द्रा कीटा बिले जलपूरिते
नववलयिनो वृक्षा मूले जलरेखया ॥ प्रति० ४।२ ॥

सीतया वृक्षालवालो वारिणा प्रत्यग्रमेव पूरितो वर्तते येन वृक्षमूलमभितः फेनिलं तज्जलमिदानीमपि परिभ्रमति। अतोऽत्रागतास्तृषिता अपि पक्षिणस्तदस्वच्छं पयो पातुं नोत्सहन्ते। जलपूरितत्वाद्बिलेभ्यो द्रुततरं निस्सरन्ति कीटाः। वृक्षमूलमभितश्च जलरेखया नूतनो

वलयः प्रत्यङ्कितः। वृक्षसेचनप्रसङ्गस्त्वत्र पितृश्राद्धनिमित्तकमरण्योचितं फलमूलादिभिरसम्पाद्यं सीताकृतागामिप्रश्नानानुरूपमेवोपस्थापितः। किन्त्वकस्माच्छद्मवेषधारिणः संन्यासिनो रावणस्यागमनं संवृत्तम्। तत्कथनानुसारञ्चविधिवत् श्राद्धसम्पन्नतायै काञ्चनमृगमांसोत्सुकेन दुर्दैवात्तत्रागतस्य च कनकहरिणस्य रामेणानुसरणमकारि। ततोऽव-सरमवलोक्य रावणेन सीताऽऽपहृता इत्येषा नवीना विपद् रामस्य समापतिता। उक्तपरिस्थित्यनुरूपमेवात्र कविना बिम्बनिर्मितिर्विहिता। तद्यथात्र—'सलिलभ्रमणम्' इति बिम्बेन समयपरिवर्तनं, तस्य जलस्य सफेनत्वात् क्लिष्टत्वेन च श्राद्धविधौ व्याघात , 'तृषिता अपि खगा जलं न पिबन्ति' इति बिम्बेन पितृणामतृप्तिः तेषां दुःखातिशयत्वञ्च, 'जलपूरिते बिले आर्द्राः कीटाः स्थलमभिपतन्ति' इत्यनेन सति सीतापहारे शोक-सन्तप्तस्य रामस्येतस्ततोऽभिपतनम् . 'नववलयिनो वृक्षाः' इति बिम्बेन च वनवासानन्तरं रामस्य नवा विपत्तिरिति संकेत्यते। वलयस्तु बन्धकत्वाद्विपत्प्रतीकत्वेनोपकल्पितः वस्तुतः, अन्तिमोऽयमेव मुख्यो बिम्बः, यस्यानुषङ्गिकत्वेनेतरे प्रयुक्ताः। एवं चत्वारोपि बिम्बा घटिष्यमाणां विपत्तिं पृथक्त्वेन संश्लिष्टत्वेन च संसूचयन्ति।

साम्प्रतं दृश्यतां समुद्रस्यातीव स्वाभाविकं दृश्यम्—

क्वचित् फेनोद्गारी क्वचिदपि च मीनाकुलजलः
क्वचिच्छङ्खाकीर्णः क्वचिदपि च नीलाम्बुदनिभः।
क्वचिद्वीचीमालः क्वचिदपि च नक्रप्रतिभयः
क्वचिद् भीमावर्तः क्वचिदपि च निष्कम्पसलिलः॥ अभि०४।१७॥

समुद्रतरणस्य पश्चात् लङ्काक्रमणात्प्राक् प्रस्तुतेयं वर्णनात्मकबिम्ब-मेखला लङ्कानगर्यां अशान्तिं युद्धस्य भयावहतां च व्यनक्ति। अतः प्रसंगानुसारि एवात्र कविना समुद्रस्योद्वेजक रूपमकारि।

कौरवाणां सेना राज्ञो विराटस्य गोधनमपहर्तुमुद्यमते। तदुपद्रवेण त्रस्ता व्याकुलाश्च सवत्सा गावो बलीवर्दाश्चार्त्तं नदन्त इतस्ततो द्रुतं पलायन्ते। अतीव चिन्त्या दशा तेषां विद्यते—

द्रुतैश्च वत्सैर्व्यथितैश्च गोगणै—
निरीक्षणत्रस्तमुखैश्च गोवृषैः।

कृतार्तनादाकुलितं समन्ततो
गवां कुलं शोच्यमिहाकुलाकुलम् ॥ पञ्चरा० २।१ ॥

इह भयाक्रान्तानां वत्सानां गवां बलीवर्दानाञ्चार्तनादम्बिमेवाधि—मुखरमस्ति। भीतस्य गोकुलस्य व्याकुलता चापि चक्षुर्गोचरीभवति। अनेन बिम्बद्वयेनापि कविः कौरवचमूनां विशालतां भयङ्करताञ्चाविष्करोति।

वातोद्धूताग्रकेशः सलिलधरदरीमृष्टदष्टाङ्गरागः
सम्यग्बद्धासिकक्ष्यः प्रिययुवतिकरस्पृष्टसङ्गूढमध्यः।
वातोद्धूतोत्तरीयो मुकुटमणिगणैस्तारकाः सम्प्रमृद्नन्
श्रीमान् विद्याधरोऽसावुपरिगतिजवैः क्षीयमाणः प्रयाति ॥
( अविमारक, ४।१६ ) ॥

अत्र वायु वायुना प्रचलितकेशोत्तरीयस्य पयोदखण्डेष्वव्यक्ताव्यक्तावयवस्य प्रियाकरेणानेष्टितमध्यभागस्य च शिरोधृतमुकुटमणिगणस्योपर्याकाशमुत्पतो विद्याधरस्य गत्वरं बिम्बम्। 'क्षीयमाणः' इत्यनेन वेगाधिक्याद्दूरगामित्वं 'तारकाः सम्प्रमृद्नन्' इत्यनेन च मुकुटखचितरत्नबाहुल्यं दीप्तिमत्त्वं तथा च तस्य नक्षत्रपथे वर्तमानत्वमपि प्रकाश्यते।

इदानीं धरण्यामेव तीव्रवेगशालिनो रथस्य गतिचित्राङ्कनमवेदयताम्—

द्रुमा धावन्तीव द्रुतरथगतिक्षीणविषया
नदीवोद्वृत्ताम्बुर्निपतति मही नेमिविवरे।
अरव्यक्तिर्नष्टा स्थितमिव जवाच्चक्रवलयं
रजश्चाश्वोद्धूतं पतति पुरतो नानुपतति ॥ प्रति० ॥

सम्प्रति स्वभावोक्तिबिम्बनविधौ सृष्टं वियोगिन्याः कुरंग्याः दैन्याविष्टं स्थिरबिम्बमेकं प्रस्तवीमि। तद्यथा—

सव्ये करे समुपवेश्य मुखं सुदीनं
कालं मनोभवसहायसमृध्यमाणा।
व्यग्रा विचिन्तयति किञ्चिदलोलदृष्टि-
र्बाष्पं निवारयितुमूर्ध्वमवेक्षमाणा ॥ अवि०, ५।२ ॥

नायिकाया: 'सव्ये करतले मुखोपवेशनं, दृष्टेश्चाञ्चल्यं, बाष्पावरोद्धुकामायाश्चोर्ध्वनिरीक्षणमिति' बिम्बत्रयीह विरहिण्या व्यग्रमनोदशामुन्मीलयितुं साधु प्रभवति।

अतोऽतिरिक्तं तपोवनस्य सजीवचित्राङ्कने,[1] युयुत्सया पुरतो गच्छतः कोपाविष्टस्य अरिष्टर्षभस्य गत्वरचेष्टानिरूपणे,[2] रणाङ्गण एव पदातिना भीमेन रथस्थस्याभिमन्योर्निग्रहणे,[3] युद्धान्ते बीभत्सरणस्थल्याश्चित्रणे,[4] रामस्य राज्याभिषेककाले उपकल्पितसभारविवरणे[5] च भासस्य मनोहारिणी बिम्बनकला द्रष्टुं शक्यते।

वक्रोक्तिबिम्बनम् :—

उदयति हि शशाङ्कः क्लिन्नखर्जूरपाण्डु-
र्युवति जनसहायो राजमार्गप्रदीपः।
तिमिरनिचयमध्ये रश्मयो यस्य गौरा
हृतजल इव पङ्के क्षीरधाराः पतन्ति॥ चारु०, १।२९॥

चन्द्रोदयस्येदं चित्रम्। 'क्लिन्नखर्जूरस्य पाण्डुता' बालचन्द्रस्येषद्रागं प्रत्यक्षीकरोति। 'पङ्के दुग्धधारापातः' इति बिम्बं परिव्याप्ते गहने नभसि चन्द्रस्य धवलरश्मिप्रसारमुद्भावयति। चन्द्रास्तचित्रमपि द्रष्टव्यम्—

असौ हि दत्त्वा तिमिरावकाशमस्तं गतो ह्यष्टमपक्षचन्द्रः।
तोयावगाढस्य वनद्विपस्य विषाणकोटीव निमज्जमाना॥ चारु०, ३।२॥

यदा शुक्लपक्षस्याष्टम्याश्चन्द्रोऽस्तमेति तदेत्थं प्रतीयते यज्जलान्तनिमग्नस्य वन्यद्विपस्य दन्तकोटी अपि निमज्जिते। क्रमशः अस्तं प्रयातेऽर्द्धचन्द्रस्य अन्तिमे क्षणे तस्य कोटिद्वयमपि तिरोहितं भवति। एषा वस्तुस्थितिरत्र कविना जलोपरि प्रथम दृश्यमानस्यानन्तरं निमज्जमानस्य च गजदन्ताग्रभागस्य चित्रणे नादर्शि। एवमेवास्तमितसूर्यस्य दृश्याङ्कनम् :—

अस्ताद्रिमस्तकगतः प्रतिसंहृतांशुः
सन्ध्यानुरञ्जितवपुः प्रतिभाति सूर्यः।

---

१. स्वप्नवा०, १।१२।, २. बाल०, ३।४।,
३. पञ्च०, ३।१०।, ४. उरु०, १।१०।,
५. प्रति०, १।३॥

रक्तोज्ज्वलांशुकवृते द्विरदस्य कुम्भे
जाम्बूनदेन रचितः पुलको यथैव ॥ अभि०, ४।२३॥

अस्तोन्मुखस्य निस्तेजसो दिनकरस्य अविकलप्रत्यक्षायमाणतायामत्र 'रक्तश्वेतवस्त्रावृते गजमस्तके काञ्चनतिलककल्पना' अद्यापि नूतनत्वोद्भावनया न परिहीयते। न केवलं सूर्यस्यापितु प्रतीच्याः समग्रसान्ध्यपरिवेशस्यापि प्रत्यक्षं जायते। नैतावत्ता, रामरावणयोर्युद्धे भविष्यमाणराक्षससहारो रावणविनाशश्चापि अनेन संकेत्येते। एवमेव—

पूर्वा तु काष्ठा तिमिरानुलिप्ता सध्यारुणा भाति च पश्चिमाशा।
द्विधा विभक्तान्तरमन्तरीक्षं यात्यर्धनारीश्वररूपशोभा ॥
अविमा०, २।१२

अस्तङ्गतस्य भानोरिद चित्रम्। एकतः प्रतीची सान्ध्यारुणिम्नोपरक्ता अपरतश्च प्राची दिक् तमसावृता संजाता। इत्थमन्तरीक्षमात्राधनारीश्वरस्य शरीरशोभामादधाति। 'अर्धनारीश्वरस्यायं बिम्बः' पूर्वार्द्धे प्रयुक्तवर्णनात्मकबिम्बापेक्षया सूक्ष्मतरोऽतः बुद्धिग्राह्यः पौराणिकसस्कारापेक्ष्यश्च।

अन्धकार उत्तरोत्तरमेधमानोऽस्ति। मध्यनिशायां तस्य चरमावस्था जाता। सर्वं चराचरं जगत् निबिडध्वान्ते निमग्नः—

तिमिरमिव वहन्ति मार्गनद्यः
पुलिननिभः प्रतिभान्ति हर्म्यमालाः।
तमसि दश दिशो निमग्नरूपाः
प्लवतरणीय इवायमन्धकारः ॥ अविमा०, ३।४ ॥

अत्रान्धकारस्य प्रगाढत्व प्रकटयितुं तस्य प्लवतरणीयत्वमुपकल्पितम्। अयम्—अन्धकारस्य नावा तरणम्' प्रमुखं बिम्बम्। 'नदीषु तिमिरप्रवाह' 'प्रासादपंक्तिषु नदीतटकल्पनञ्च' ति बिम्बद्वयं तस्यैव सहकारित्वेन प्रयुक्तमस्ति। सश्लिष्टरूपेण त्रीणि अपि बिम्बानि तिमिरगहनत्वमेवोद्भासयन्ति।

कविर्भासोऽग्नेर्विनाशकं रूपं विस्तरेण प्रतिबिम्बितवान्। यज्ञीयोऽग्निर्यज्ञशालां परितः प्रसृत्य वातेरितत्वाज्ज्वालाकरालस्सन् दुर्योधनस्य यागयानमपि दग्धुं प्रवृत्तः। तदानीं स शकटचक्रारभागमुपेत्य मण्डला-

कारतया सूर्यायते।[1] तदग्निभयाद् वल्मीकछिद्रेभ्यः पञ्च सर्पाः समं तथैव विनिःसरन्ति यथोपरतान्मनुजदेहात्पञ्चेन्द्रियाणि[2]। एवमेव—

दह्यमानस्य वृक्षस्य सानिलेन मखाग्निना।
कोटरान्तरदेहस्थाः खगाः प्राणा इवोद्गताः॥ पञ्च० ११११
शुष्केणैकेन वृक्षेण वनं पुष्पितपादपम्।
कुलं चारित्रहीनेन पुरुषेणेव दह्यते॥ ,, १११२
एते वातोद्धता वंशा दह्यमाना मखाग्निना।
भाग्यानीव मनुष्याणामुन्नमन्ति नमन्ति च॥ ,, १११३
लतया सक्तया स्कन्धे शुष्कया वेष्टितस्तरुः।
निविष्टे दुष्कुले साधुः स्त्रीदोषेणेव दह्यते॥ ,, १११४

अत्र 'शरीरात्प्राणनिष्क्रमणं', 'दुश्चरित्रेण कुलस्य दूषणं', 'मनुष्यभाग्यानामुत्थानपतनं 'स्त्रीसंसर्गेण साधुदोषश्चे' ति चत्वारोऽपि बिम्बा जीवनस्य विविधव्यावहारिकक्षेत्रेभ्यो गृहीतास्सन्ति। अमूर्ताश्चेमे क्रमशः 'प्रज्ज्वलितवृक्षकोटरेभ्यः खगानां निष्क्रमणम्', एकेनापि शुष्कवृक्षेण पुष्पितवनस्य दहनं', 'वातेरितानां दह्यमानानाञ्च वंशानामुपर्यधःपतनं', 'शुष्कया लतया संसर्गेण ज्वलंस्तरुश्चे' ति मूर्त्तप्रस्तुतेभ्यः प्रयुक्ताः। उत्कर्षोतिशयोपि क्षयाय कल्पते, शक्तिमतामप्यत्याहृढिरधो याति तर्हि कथं न 'सत्पुरुषरोष इव' प्रशान्तो भवेत् हुताशनोऽपि ? किन्तु मन्दीभूतोऽपि स 'स्रुग्भाण्डादिकं होमसाधनमपि तथैव भक्षयति यथा कश्चित् क्षीणविभवो व्यसनी आत्मनः परिच्छदमपि विक्रीयोपभुङ्क्ते'[3] अग्नेरिमां विनाशलीलामवलोक्य नदीतटस्थो दुःखी पलाशपादपो वायुवेगाज्जले प्रकम्पितेन निजपत्रकरेण दग्धमृतात्मीयानां जलाञ्जलिभिस्तर्पणमिव करोति—

अवनतविटपो नदीपलाशः पवनवशाच्चलितैकपर्णहस्तः।
दवदहनविपन्नजीवितानामुदकमिवैष करोति पादपानाम्॥ पञ्च०, १११६

न केवलं प्रकृत्युपादभूते पलाशे चैतन्यारोपः कविना कृतः, अपितु चेतनपशुपक्षिणां व्यवहारेऽपि मानवीयव्यवहारारोपो विहितः। तद्यथा—

१. पञ्च० ११९। २. पञ्च० १११०। ३. पञ्च०, १११८।

इमे हि दैन्येन निमीलितेक्षणा मुहुः स्खलन्तो विवशास्तुरङ्गमाः ।
गजाश्च सप्तच्छददानगन्धिनो निवेदयन्तीव रणे निवर्तनम् ।
॥ कर्ण०, १।११ ॥

दीनभावापन्ना अशक्ता घोटकाः स्वचक्षूंषि निमील्य भूयोभूयस्स्खलन्ति । गजेन्द्राणामपि एतादृशी दशा सञ्जाता । तेषां विवशताचित्रणमत्र 'निमीलितेक्षणाः', 'स्खलन्तः' इति शब्दबिम्बद्वयेन प्रतिपादितम् । पादान्ते 'रणान्निवर्तननिवेदनात्मको' यः प्रमुखो वक्रोक्तिबिम्बो वर्तते तस्येमौ शब्दबिम्बौ प्रयोजकौ । 'सप्तच्छददानगन्धिनः' आघ्रेयबिम्बो येन गजेन्द्राणामुन्मादित्व प्रत्यायितम् । कवेः वक्तव्यं तु—यदेवंविधा मत्ता अपि द्विपेन्द्रा रणाङ्गणे स्थातुं न शक्नुवन्ति अश्वाश्चापि भयाकुलास्तर्हि दुर्जेयस्यापि कर्णस्य पराजयोऽद्य सुकर इति । एवं कविरत्र अश्वगजदैन्यबिम्बेन कर्णस्य पराभवसूचकमशुभं सङ्केतयति ।

घटोत्कचस्य रूपवर्णने भासस्य विराड्बैम्बिकी कल्पना प्रत्यक्षा, यत्र श्वेतपतिकृष्णवर्णानां सम समञ्जसप्रयोगो विहितः—

ग्रहयुगलनिभाक्षः पीनविस्तीर्णवक्षाः कनककपिलकेशः पीतकौशेयवासाः ।
तिमिरनिवहवर्णः पाण्डरोद्वृत्तदंष्ट्रो नव इव जलगर्भो लीयमानेन्दुलेखः ॥
म० व्या०, १।५

बालकस्याभिमन्योर्वधकारिणां कौरवाणां शिबिरं गन्तुं घटोत्कचस्य मनो नोत्सहते । किन्तु, भगवतो वासुदेवस्याज्ञया दौत्यं प्रतिपिपित्सुः स तथैव याति यथा अङ्कुशाक्रीतो गजेन्द्रो ग्रासमादातुं प्रवर्तते ( दूतघ०, १।३३ ) । सूक्ष्ममनोवैज्ञानिकतथ्याविष्करणमेतादृशैर्मूर्त्तबिम्बैर्भासस्याभिव्यक्तेर्वैशद्यम् सर्वत्र तद्रचनासु पाठकमाकर्षयति ।

यद्यपि भासः सर्वदा सर्वत्र कालपात्रपरिस्थितीनामौचित्यं प्रति दीयमानावधानो दृश्यते, तथापि प्रमादस्य कतिपयस्थलानि सुतरामुन्नेयानि । तद्यथैकमत्रोपस्थाप्यते—

माल्यैर्ध्वजाग्रपतितैः कृतमुण्डमालं लग्नैकसायकवरं रथिनं विपन्नम् ।
जामातरं प्रवहणादिव बन्धुनार्यो हृष्टाः शिवा रथमुखादवतारयन्ति ॥
ऊरु०, १।६

'कुलवधूभिः शिबिकातो जामातुरवतारणम्' इति बिम्बं हर्षसूचकं, यस्य साम्यमिह शिवाप्रसन्नतया तु वर्तते, किन्तु मृतयोद्धुर्जीवितेन

जामात्रा सहोपमितिर्नैव रुचिकरा प्रतीयते। परं, नन्दगोपमुखेन ज्योत्स्नाविहीनाया रजन्या औपम्यं नीलवसन्या गोप्या सह महदौचित्यमावहति ( बालच०, १।१६ )।

एभ्योऽतिरिक्तं रूपकात्मकबिम्बप्रयोगोऽपि प्रायो वीररसस्यावसरेषु कविना कृतः। कठोरकर्माणमारुणि प्रति क्रुद्धोदयनस्योक्तौ युद्धसमुद्रस्यातीवोत्साहि बिम्बं प्रेषणीयम् ( स्वप्न० ५।१२ )। एवमत्र युद्धयज्ञस्यैकं रूपकबिम्बं द्रष्टव्यम् :—

करिवरकरयूपो बाणविन्यस्तदर्भो
हतगजचयनोच्चो वैरवह्निप्रदीप्तः।
ध्वजविततवितानः सिंहनादोच्चमन्त्रः
पतितपशुमनुष्यः संस्थितो युद्धयज्ञः ॥ ऊरु०, १।६ ॥

सम्पन्ने युद्धयागेऽत्र गजेन्द्रशुण्डादण्डा एव यज्ञस्तम्भाः, इतस्ततो विकीर्णा बाणा एव दर्भाः, मृतद्विपनिचयमेवावचितकुसुमराशिः, प्रस्फुरन्तो ध्वजपटा एव वितानाः, कौरवपाण्डवयोर्विरोध एवाग्निः, योद्धॄणां तुमुलसिंहनादा एव वैदिकमन्त्राः मृतमनुष्या एव बलिपशवश्चोपकल्पिताः। वस्तुतो रूपकाबन्धनविधौ कवेरभिव्यक्तिसारल्यं तु दुष्प्राप्यमेव बुद्धेरधिकसक्रियत्वाद्रूपकरूपायणे।

## भाविकबिम्बम्

मातुलगृहादुपावर्तमानेन भरतेनोत्कण्ठावशाद्भावनातिरेकाद्वा विविधं यन्मार्गे कल्प्यते—'पितुश्चरणयोर्मस्तकमवनम्य प्रणम्यते, पित्रा च वात्सल्येनोत्थाप्यते, श्रुत्वा मदागमनं भ्रातरोपि त्वरितमुपस्थिताः'······ इत्यदि तदतीव हृदयस्पर्शि—

पतितमिव शिरः पितुः पादयोः स्निह्यतेवास्मि राज्ञा समुत्थापितः।
त्वरितमुपगता इव भ्रातरः क्लेदयन्तीव मामश्रुभिर्मातरः॥
सदृश इति महानिति व्यायतश्चेति भृत्यैरिवाहं स्तुतः सेवया।
परिहसितमिवात्मनस्तत्र पश्यामि वेषं च भाषां च सौमित्रिणा॥
॥ प्रति०, ३।३ ॥

सीतां रामलक्ष्मणौ च वने विसर्ज्योपावृत्तेन सुमन्त्रेण महाराजस्य दशरथस्य पुरतस्तेषां कातरदशा प्रतिबिम्ब्यते:—

कमप्यर्थं चिरं ध्यात्वा वक्तुं प्रस्फुरिताधरः ।
बाष्पस्तम्भितकण्ठत्वादनुक्त्वैव वनं गताः ॥ प्रति०, २।१७

यदा शृङ्गवेरपुररथादवतीर्याध्याभिमुखास्ते त्रयोपि स्थिता आसन् तदा दुःखातिशयेन तेषामधरोष्ठाः प्रास्फुरन्, बाष्पस्तम्भेन च कण्ठावरोधस्समजनि । ते चिरं ध्यात्वापि किमपि वक्तुं न प्राभवन् चान्तेऽनुक्त्वैव वनं जग्मतुः । अत्र 'प्रस्फुरिताधरः', 'बाष्पस्तम्भितकण्ठः' इति शब्दबिम्बद्वयी, यया तेषामन्तरानुतापो बहिः प्रतिच्छायितो कविना । 'वक्तुं कमप्यर्थं चिरं ध्यात्वा' तथा च 'अनुक्त्वैव वनं गताः' इति वाक्यबिम्बयुगलेन च तेषां चित्ताकुलता विशेषमार्मिकतयोप गुम्फिता । भासस्य भावनाप्रधानबिम्बनशिल्पस्यायमेव विशेषो यदकथनेपि निखिलं प्रकाश्यते ।

अत एवात्र गते सति रामे वनं शून्यायाः साकेतनगर्याः सर्वेऽपि मनुष्याः पशुपक्षिणश्च तामेव दिशं केवलमवलोक्यात्मव्यथां प्रकटयन्ति यतो रामो वनमगात्—

नागेन्द्रा यवसाभिलाषविमुखाः सास्रेक्षणा वाजिनो
ह्रेषाशून्यमुखाः सवृद्धवनिताबालाश्च पौरा जनाः ।
त्यक्ताहारकथाः सुदीनवदनाः क्रन्दन्त उच्चैर्दिशा
रामो याति यया सदारसहजस्तामेव पश्यन्त्यमी ॥ प्रति०, २।७॥

महाराजदशरथस्य दशा त्वतीव करुणाकुला—

पतत्युत्थाय चोत्थाय हा हेत्युच्चैर्लपन् मुहुः ।
दिशं पश्यति तामेव यया यातो रघूद्वहः ॥ प्रति०, २।३ ॥

एवं निष्कष्टुं सुकरं यत्कवेर्भासस्य बिम्बनविधौ स्वभावोक्त्युपमोत्प्रेक्षा एव सर्वाधिकं सहायाः । सरलतमेन बिम्बकल्पनेन च मर्मस्पर्शिभावानामभिव्यंजना तस्य श्लाघ्यो रचनाप्रकारः । भाविकबिम्बनाशिल्पदृष्ट्या तु 'प्रतिमा प्रथमा । 'चारुदत्ते' चन्द्रस्योदयास्तबिम्बानि सूर्यस्य 'अभिषेके' चास्तमनबिम्बमद्यापि सर्वथा नवीनं प्रतिभाति । कविना 'जामातर प्रवहणादिव बन्धुनार्यः' इत्यादिभिर्बिम्बैः यथावसरं सामाजिकपरम्पराः अपि संकेतिताः तथा च कवेर्यज्ञात्मकं यज्ञाग्नेर्विस्तृतविनाशलीलां च समीक्ष्य तदानीन्तने समाजे वैदिककर्मकाण्डस्य विशेषप्रभावोऽनुमातुं शक्यते ।

## ग्रन्थालोचनम्

### वक्रोक्ति-जीवितम्

लेखकः—कुन्तकः, सम्पादकोऽनुवादकश्च के० कृष्णमूर्ति, संस्कृत-प्राचार्यो विभागाध्यक्षश्च, कर्णाटक-विश्वविद्यालये, धारवाड। प्रथम-संस्करणं १९७७, प्रकाशकः—कर्नाटक-विश्वविद्यालयः, धारवाड, पृष्ठ-संख्या ६६४, मूल्य ४० रूप्यकाणि।

वक्रोक्ति-जीवितमिति साहित्य-शास्त्र-विदां सुसम्मतो ज्ञाननिधिः। अस्य ग्रन्थस्य यथा सम्भव पूर्ण रूप सम्यक् शोधयित्वा कृष्णमूर्तिना प्रकाशितमित्यनेन संस्कृत-जगन्महदुपकृतम्। तेन जैसलमेरहस्त-लिखित-भाण्डागारात् पूर्वं न केनाप्युपयुक्त वक्रोक्तिजीवितस्य पाठ-मनुसृत्य विशेषतस्तृतीयचतुर्थोन्मेषयोः पाठपूर्ति पाठशोधनं च विधाय भूमिका-भागे डा० डेमहाभागस्य डा० राघवन्-महाभागस्य च भ्रान्त-योऽपि दूरीकृताः। तथा हि कुन्तकस्य रसालङ्कारविमर्शमधिकृत्य तेन डा० डे० महाभागस्य डा० राघवन् महाभागस्य च तद्विषयक-व्याख्याः पूर्वपक्षेण निर्दिश्य सूक्ष्मदृष्ट्या समीचीन समाधान प्रस्तावितम्।

The central theory of Kuntaka is that all alaṅkāras such as rūpaka, utprekṣā and so forth themselves get the designation rasavadalaṅkāra also when they co-exnist with rasa. Dr Rāghavan has compeletely distorted this fundamental position of Kuntaka in the above passage which requires drastic revision in the light of the text.

वक्रोक्तिजीवितस्यद संस्करणं प्रो० मूर्ते: प्रातिभानुयोगेन विभा-वितयाङ्गलभाषानिबद्धया भूमिकया सुसमृद्धं सवलितम्।

### काव्यालङ्कार-कारिका

लेखको डा० रेवाप्रसाद द्विवेदी, प्राचार्यः साहित्य-विभागाध्यक्षश्च, प्राच्यविद्यासंकाये, हिन्दू-विश्वविद्यालये, वाराणस्याम्। प्रकाशकः

चौखम्भा-सुरभारती-प्रकाशन, वाराणसी, प्रथम-संस्करणम् १९७७, पृष्ठसंख्या ३३०, मूल्यम् ३० रूप्यकाणि ।

प्रो० द्विवेदी भारतीयकाव्यशास्त्रस्य सर्वतन्त्रस्वतन्त्रो विचारकः प्राचीनकाव्यशास्त्राणि सम्यगवगाह्य काव्यसिद्धान्तरत्नानि नवनव-चमत्कारानुसन्धानपूर्वकं प्रस्तौति । न खल्वेकापि कारिका विसंवाद-जननी नेति प्रायः सत्यमेव पारम्पर्योपदेशात् तथापि लेखकस्य बहुशोऽल्पज्ञाततथ्यानां सप्रमाणं विवेचनमभीष्टमेव प्रतिभाजुषा नवीनदृष्टिप्रसादो विष्वक् काव्यमूल्यं संवर्धयतीति द्विवेदिनः काव्य-तत्त्वानुसन्धानोपक्रमः साधुवादार्हः । अशुद्धमुद्रणं तु मुद्रणालय-स्यासामर्थ्यं प्रकटयति, तथापि शास्त्रग्रन्थेऽस्मिन् यथाकथंचित् परिहरणीयमासीत् ।

## अभिधावृत्तिमातृका

मुकुलभट्टस्य अभिधावृत्ति-मातृका डा० ब्रह्ममित्रेण व्याख्यासहितं सम्पादिता । प्रकाशकः इन्दुप्रकाशन, ८।२ रूपनगर, दिल्ली ७, १९७७ ख्रीष्टाब्दे, पृष्ठसंख्या १०२, मूल्यं १५ रूप्यकाणि ।

अर्थविज्ञानं हि व्याकरणशास्त्रे, दर्शनशास्त्रे, काव्यशास्त्रे च महत्त्व-पूर्णं स्थानं भजते । डा० ब्रह्ममित्रेणानुसन्धानवृत्त्या बहुसंख्यकान् सम्बद्धविषयसारान् ग्रन्थानालोड्य विषयस्य सुबोधतरं विवेचनं सम्यक् कृतम् । न खलु प्रथमेयं कृतिः लेखकस्यास्मिन् विषये परमोपक्रमः । योजनानुसारं स बहुभीरचनाभिः साहित्यशास्त्रं तद्विषयमधिकृत्य समर्धयिष्यतीति शोभनं वृत्तम् ।

## रससिद्धान्त के अनालोचित पक्ष ( हिन्दी )

लेखकः—डा० व्रजमोहन चतुर्वेदी, प्रवाचकः—संस्कृत-विभागे, दिल्ली विश्वविद्यालये, प्रकाशकः—अजन्ता पब्लिकेशन्स, दिल्ली ७, प्रथम संस्करणं १९७४, पृष्ठसंख्या २००, मूल्य ४० रूप्यकाणि ।

रससिद्धान्तमधिकृत्य बहुचर्चितमिति विदितचरमेव विदुषाम् । तथापि ब्रह्मानन्दसहोदरस्य रसस्यापि ब्रह्मवत् विवेचनं नैरन्तर्यमानन्त्यं च सम्यगर्हति । एकादशपरिच्छेदेषु विभक्तमिदं पुस्तकं साहित्यानुशीलनम्, रससिद्धान्त-विकासः, रसानुभूतिः, रसमनोविज्ञानम्, रससंख्या,

रसराज', काव्यात्मारसः, काव्यरसालौकिकता, रससिद्धान्त इत्येते विषया आनुपूर्व्यमधीताः। लेखकस्य पर्यालोचनं नावीन्यप्रवणं प्रशंसार्हमेव।

## सौन्दर्यशास्त्र प्रथमखण्ड ( हिन्दी )

लेखकः—रामाश्रय शुक्लः करुणेन्द्रः, व्याख्याता डिग्रीकालेज कॉंठ, मुरादाबाद, प्रकाशकः—महेशप्रसाद अग्रवाल, ओरियण्टल पब्लिशिंग हाउस, कानपुर, प्रथम सस्करणम् १९७७, पृष्ठसंख्या १४०, मूल्यम् ३५ रूप्यकाणि।

रामश्रयः काव्यशास्त्रेऽभिरामतत्त्वस्य परमोपासकः सौन्दर्यशास्त्रं सर्वजनसुबोधं प्रकाशयितु सम्यक् क्षम'। तेन पुस्तकेऽस्मिन् पाश्चात्य-सौन्दर्यशास्त्रदृष्ट्या सौन्दर्यस्य विवेचनं कृतम्। सौन्दर्यशास्त्रं नाम भारतीयशास्त्रेषु न परिगणितम्। तथापि सौन्दर्यस्य विनिवेदकानि तत्त्वानि कलासु निर्भराणि। एतादृशैः ग्रन्थैः पाठकाना भारतेऽपि पाश्चात्य-सौन्दर्य-निकषणशक्तिः प्रवर्तेत इति आशास्महे।

## कालिदासकाव्ये शब्दपरिपाकः

लेखक'—डा० नित्यानन्दः, संस्कृत-विभागः, डी० ए० वी० सान्ध्य-महाविद्यालयः, नवदेहली। हेमन्त-प्रकाशन, दिल्ली। प्रथमं संस्करणम् १९७७, पृष्ठ-संख्या २४०, मूल्यम् ५० रूप्यकाणि।

ग्रन्थेऽस्मिन् कालिदासीयरचनासु शब्दानां परिपाकदृष्ट्या विश्लेषणम्, निपातप्रयोगौचित्यम्, लिंगवचनसमासप्रयोगौचित्यम्, पदक्रमौचित्यम्, विशिष्टार्थप्रयोगश्चेत्ये विषया अधीताः। कालिदासस्य कतिपयासाधुप्रयोगा अपि लेखकस्य पर्यालोचनपथे कथं न समागता इति चिन्त्यम् साहित्यालोचनस्य व्यावहारिक स्वरूपं प्रतिष्ठापयता, नित्यानन्देन बहूपकृतमन्येषां तदर्थधियाम्।

## श्रीश्रीरामकृष्णकथामृतम्

प्रथमोभागः १८८२ ख्रीष्टाब्दीयः, प्रकाशकः रामकृष्णमिशन-कलिकाता विद्यार्थिआश्रमः, बेलघरिया, कलिकाता, प्रथमसंस्करणम् १९७६

खीष्टाब्दे, मूल्यं विंशतिरूप्यकाणि, प्राप्तिस्थानम्—अद्वैताश्रम ५—डिहि एण्टालिरोड, कलिकाता ७००,०१४।

रामकृष्णकथामृतमिति ग्रन्थरत्नं महेन्द्रनाथगुप्तमहाभागेन दैनन्दिनं वंगभाषया संयुजीकृतं परमहंस-रामकृष्णवचनं संस्कृतेनानूदितं परं प्रीणयति मादृशान् संस्कृतोपासकान् जनान्। संस्कृतं तु लोकोत्तर-विचारावतारणायानुत्तरा भाषा। अत एवानन्यतमेन संस्कृतेन प्रकटी-कृता महर्षिवाग्धारा विष्वक् पावनतमा संजातेति निश्चप्रचम्। राष्ट्रियै-कता-सम्पादनाय संस्कृतस्य महात्म्यमेवं विधाभिः कृतिभिर्नित्यं संवर्धनीयं महात्मभिः।

अस्मिन्ननुवाद-ग्रन्थे रामकृष्णपरमहंसानां वचोराशिः प्रथमकथन-दिवसक्रमेणैव सन्निबद्धः। तत्र मूलगतास्तत्समशब्दा सर्वशो रक्षिताः। वस्तुतः श्रीरामकृष्णकथामृतं संस्कृतेनापि परमरमणीयं सुबोधतमं यथा स्यात्तथानुवादकर्तृभिः सम्यक् चेष्टितं भाषायाः सारल्यविधानेन, सन्धिसमासातिशयपरिहारेण च।

रामकृष्णकथामृतं भागत्रयेण सम्पादनीयमिति व्यवस्थापकैः सूचितम्। भागद्वयस्योपलब्धिः संस्कृतज्ञानां शीघ्रमेव जायेतेति प्रयतनीयम्।

ग्रन्थोऽयमाभ्यन्तरबाह्यदृष्ट्या परमार्थतः शुचिः तथापि मूल्या-धिक्येन संस्कृतज्ञानां स्वल्पव्ययसमर्थानां सविधे न गमिष्यति। सर्व जनसुलभमिमं संसाधयितुमल्पमूल्यकं संस्करणं शीघ्रमेव प्रकाशनीयम्।

प्रासंगिकचित्रैः ग्रन्थस्य प्रभावो बहुवर्धितम्। तत्र समाधिस्थः रामकृष्णो ब्राह्मभक्तपरिवृतो हृदयरामधृतश्च, दक्षिणेश्वर-देवतायतनम्, दक्षिणेश्वर-मन्दिरस्था श्रीश्रीभवतारिणी, दक्षिणेश्वर-स्थितं श्रीराकृष्ण-वासगृहं, श्रीश्रीमाता सारदादेवी, नरेन्द्रनाथः ( परतः स्वामिविवेका-नन्दः ), राखालः ( परतः स्वामि-ब्रह्मानन्दः ), बाबुरामः ( परतः स्वामि-प्रेमानन्दः ), लाटु: ( परतः स्वामि-अद्भुतानन्दः ), बलराम-वसुः, मथुर-महोदयः ( मथुरानाथ विश्वासः ), सुरेन्द्रनाथ-मित्रः, केशवचन्द्रसेनः, विजयकृष्ण-गोस्वामी, विद्यासागरः ( ईश्वरचन्द्र-वन्द्योपाध्यायः ), श्रीमहेन्द्रनाथगुप्तश्चेति मूर्तदर्शनेन पावयन्ति।

## शक्तितत्त्व-दर्शन

लेखकः—रामप्रसादशर्मा, प्रकाशकः—शिवतत्त्वदर्शनग्रन्थ-प्रकाशन-समिति, विरलाग्राम-नागदा ( म० प्र० ), १६७७, पृष्ठसंख्या ७६५, मूल्यम् ५० रूप्यकाणि ।

महापण्डितो रामप्रसादो भारतीय-चिन्तनस्य सनातनस्वरूपं सम्यगवगाह्य राष्ट्रभाषया भक्तजनानुरोधेन प्रथम शिवतत्त्व-दर्शन-विरचनेन पुनश्च शक्तितत्त्वदर्शनसन्दर्भेण सर्वजनहितायोपबृंहितवान् । अस्य प्राक्कथने स्व० डा० मंगलदेवशास्त्री शक्तितत्त्वस्य वैदिकं सनातनं विवेचनं सम्यक् प्रस्तौति ।

शक्तितत्त्वदर्शनं स्कन्धत्रयेण संवलितम् । प्रथमस्कन्धे आद्याशक्ति-र्विविधस्वरूपेण भासमाना व्याख्याता । द्वितीयस्कन्धे मन्त्र-यन्त्राङ्गादि-शक्तीनां निरूपणं पूजाविधानं च प्ररोचितम् । तृतीयस्कन्धे दुर्गा-महालक्ष्मी-जगदम्बादीनां स्तुतिप्रकारं पूजोपचारं च सर्वाङ्गीण विहितम् ।

भारतीयं दिव्यरहस्य साधकैरेव निरूपयितु शक्यते न पुनरनार्य-भ्रष्टचरितैर्वा कृतं व्याख्यानं शोभते इति ग्रन्थस्यास्य विलोकनेन लेखक प्रति श्रद्धां जनयति । तस्य विष्णु-तत्त्वदर्शनं भाविप्रकाशनमस्मानु-त्सुकयतितराम् ।

## THE PHILOSOPHY OF NIMBĀRKA.

डा० मदनमोहनस्य अग्रवालस्य पी-एच्-डी. उपाधये शोधनिबन्धः, प्राप्तिस्थानं भार्गवबुक हाउस, राजामण्डी, आगरा २, प्रथमं संस्करणं १६७८, पृष्ठसंख्या १५०, डा० रसिकविहारिणः प्राक्कथनेन डा० राम-सुरेशत्रिपाठिनः भूमिकया संवलितम् । मूल्यम् ४० रूप्यकाणि ।

दर्शनप्रवणेयं कृतिः द्वैताद्वैत-जीव-जगद्-ब्रह्मादीनां तत्त्वज्ञानं समन्वयद्वारेण सम्यक् प्रकटयति । आश्मरथ्यः, औडुलोमी च द्वैताद्वैतस्य दर्शकौ, काशकृत्स्नश्चाद्वैतस्य प्रवर्तकः मन्यन्ते । परवर्तिकाले निम्बार्क-श्चैतन्यः श्रीपतिश्च द्वैताद्वैत समूहितवन्तः । सरलसुबोधरीत्या मदन-मोहनः सूक्ष्ममपि दार्शनिकचिन्तनं स्वकीयेनानुसन्धानवैशद्येन स्पष्ट-यतितराम् । ब्रह्मजीवैक्यं शाश्वतं विमर्शविषयो विलसतीति लेखकस्य मतं वैज्ञानिकमेव ।

## करुणाकटाक्षलहरी

लेखकः—डा० रसिकविहारी जोशी, संस्कृतप्राचार्यः, दिल्ली विश्वविद्यालये, प्रकाशकः—भारतीय-विद्याप्रकाशनम् , १ यू० बी० बंगलोरोड, जवाहरनगर, प्रथम-संस्करणं १९७०, मूल्यं २८ रूप्यकाणि।

इयं करुणाकटाक्षलहरी वृषभानुजानन्दिनीमधिकृत्य गीतिकाव्यं प्रवर्तते। अस्मात् पूर्वमेव कविना मोहभंगमिति महाकाव्य विरचितम्। मोहभङ्गे सति कटाक्षलहरी सम्भूतेति कविवचसा कश्चिल्लोकोत्तरो भावावेशः काव्यनिस्यन्दजनक इति प्रमाणितम्। दिव्यावेशेन सहृष्टः किंचिल्लौकिकं कविर्न पश्यति, सर्वं लोकोत्तरं परिवेशं भक्त-कविः स्वात्मने परिगृह्य पाठकानपि तादात्म्यद्वारेण राधाकटाक्षलहरीषु अवगाहयति आप्याययति चेति समूह्यम्। भक्तिरस-निर्भरे गीतिकाव्येऽस्मिन् ११३ पद्यानि हिन्दीभाषानुवादेन समुदितानि विलसन्ति।

## केरलोदयः

केरलोदयः चरित्रकाव्यम्। कविः—के० एन्० एलुत्तच्छन् , प्रथम-संस्करणम् १९७७। प्राप्तिस्थानम्—दुर्गामन्दिर, पन्थक्कल, पट्टम्बि, केरल। पृष्ठसंख्या ४९०, मूल्यम्—५० रूप्यकाणि।

केरलोदयमिति एकविंश सर्गात्मकमैतिहासिकं महाकाव्यं न केवलं केरलानपि तु विश्वभारतानुदाययति। तथा हि—

समरमहाङ्कणविधुतमहायुध विकटकिणाङ्कितवीरवराः।
शृणुत निबोधत विपदि च सम्पदि जनहितसर्गपरा भवत ॥ २१.१०७

अस्मिन् महाकाव्ये केरलस्य सांस्कृतिकं, राजनीतिकं सामाजिकं चेतिहासं २५०० पद्यैर्वर्णितम्। परशुरामस्य तपसा केरलस्याविर्भावः। स्वप्नमञ्जर्यां निरूपितम्। स्मृतिमञ्जर्यां चेरसाम्राज्यस्य केरलप्रदेशे उत्थानं पतनं च वर्णितम्। ऐतिह्यमञ्जर्यामार्याः केरलप्रदेशे समागच्छन्ति। तत्रेस्लामधर्मानुयायिनां प्रभावः सञ्जातः। पश्चात् जमोरिनराजानां शासनसत्ता प्रादुर्भवत्। पञ्चम्यां चरितमञ्जर्यां वास्कोडिगामा इत्यारभ्य केरलप्रदेशनिर्माणं यावत् वृत्तानि वर्णितानि शोभन्ते। काव्येन सह ऐतिहासिकचारुचर्यया विलक्षणं सफलं च सामञ्जस्य महाकाव्येऽस्मिन् पूर्वमेव।

## रामविजयः

लेखकः—एस्० बी० रघुनाथाचार्यः, न्याय-व्याख्याता, पद्मश्री-प्रकाशन ६–२–१५५ टी० नगर, तिरुपति, आन्ध्रप्रदेशः, प्रथम-संस्करणं १९७६. पृ० २०, मूल्यम् १ रूप्यकम्।

लघुकाव्येऽस्मिन् विवाहानन्तरं रामेण परशुरामो जितः इति पञ्चसर्गैः प्रपञ्चितम्। उपमार्थान्तरन्यासाद्यालङ्कारैः शब्दमाधुर्यगाम्भीर्यादिगुणैः तामरस-कलहंस-मत्ताप्रबोधितादिछन्दोभिः सुमण्डितं सुबोधं काव्यमिदं वस्तुतो न केवलं बालानामपि तु विदुषामपि हृदयावर्जनायालम्।

## रामगढ़ ( हिन्दी महाकाव्यम् )

लेखक :—देवनारायणसिंहः, अम्बिकापुरीयः प्रथम-संस्करणम् १९७६, प्रकाशकः—सरगुजा-मानसचतुशती-समिति, अम्बिकापुर, पृष्ठ-संख्या १२४, मूल्यम् १० रूप्यकाणि।

राष्ट्रगानादिकाव्यानां प्रणेता देवनारायणसिंहः रामगिरिमेव चित्रकूट इति मन्यते। रामगिरिस्तु नागपुर-समीपस्थो नास्ति, अपितु अम्बिकापुर-समीपस्थो रामगढ़ इति। नैतत्समीचीनं प्रतिभाति, यतो हि नाम वाल्मीक्यनुसारं प्रयागात् दशक्रोशं चित्रकूटोऽस्ति। रामगढ-स्तु अधिकदूरं वर्तते। तथा हि—

दशक्रोश इतस्तात गिरिर्यस्मिन्नवत्स्यसि
महर्षिसेवितः पुण्यः सर्वतः शुभदर्शनः।
गोलाङ्गुलानुचरितो वानरर्क्षनिषेवितः
चित्रकूट इति ख्यातो गन्धमादनसन्निभः॥ अयो० ५४. २८–२९

अथ च देवनारायणस्य बन्धे पावनशक्ति र्विद्यते। स सत्यमेवास्माकमन्धतमसावृतं नेत्रं विशदयति। तथा हि—

आज विदेशी भाषा में जो करता यहाँ ठिठोली।
खुलकर गौरव से न आज जो बोले अपनी बोली॥
कौन कहेगा वह स्वतन्त्र है अथवा पावन नर है।
जिसे नहीं अपनी संस्कृति की कोई खोज-खबर है॥

## प्लवङ्गदूतम्

लेखकः—डा० वनेश्वर पाठकः, सेण्ट जेवियर्स कालेज, रांची, द्वितीयसंस्करणम् १९७६, प्रकाशकः—सुबोध-ग्रन्थमाला, रांची, पृष्ठसंख्या ११२, मूल्यं ४। यथा नाम दूतकाव्यमिदं कालिदासस्य मेघदूतं विष्वगनुहरति। विहार-भूमि विशेषतो रांची सन्देशकाव्यानां स्वनिरेव। तत्र रामाशिषपाण्डेयस्य मयूखदूतम्, दिनेशप्रसादपाण्डेयस्य मित्रदूतम्, झा वाणीशस्य चकोरदूतं विरचितानि। अत्र भावाभिव्यक्तिः शैली च सरल-सुबोधरमणीया युगानुरूपैव। कथा तु कस्यचिद्भारतवासिनः शासकीयकर्मचारिणः पाकस्थाने जाम्रदे नियुक्तस्य भारतागमनात् १९७१ खीष्टाब्दत आरभ्यते। काश्यां निविष्टः सह कंचित्प्लवंगं जाम्रदे स्थितायाः पत्न्याः समीपमात्मवृत्तप्रेषणाय नियुनक्ति। काव्यमिदमुत्तरप्रदेशशासनेन सम्यक् पुरस्कृतम्।

## सुधाभोजनम्

लेखकोऽशोककुमार कालिया, व्याख्याता—संस्कृत-विभागे लखनऊ विश्वविद्यालये। प्रकाशकः—अखिलभारतीय-संस्कृत-परिषद्, महात्मागाधीमार्ग, हजरतगंज, लखनऊ, पृष्ठसंख्या ५०, मूल्यं ६.२५ रूप्यकाणि।

एकाङ्करूपकेऽस्मिन् आशा, श्रद्धा, श्री, ह्रीति चतस्रो भाव-रूपा भूमिकाः शक्रकन्याः पितुः सुधां प्राप्तुं तेन नियुक्ता इन्द्रं प्रति यान्ति। तासु निस्पृहा ह्रीरिन्द्रेण सुधाप्रदानाय विरचितः यतोहि नामान्या वाचाटा आत्मप्रशंसिका आसन्। ह्रीश्च पुनः प्रावदत्—

देव्यस्म्यहं ह्रीर्मनुजेषु पूजिता प्राप्ता तथा त्वन्निकटं सुधेच्छया।
साहं सुधां न प्रभवामि याचितुं याञ्चा हि नो निर्वसनत्वमुच्यते॥

## श्रीकृतार्थकौशिकम्

लेखकः—श्रीकृष्ण जोशी, प्रकाशकः—अखिलभारतीय-संस्कृत-परिषद्, महात्मागान्धीमार्ग, लखनऊ, पृष्ठ संख्या ११२, मूल्यं १० रूप्यकाणि।

नैनीतालनिवासिनः स्व० श्रीकृष्णजोशी-महाभागः, कविसुधांशुः, विद्याभूषणश्च सुप्रथितो देशसेवाव्रतेनात्मानं परिपूय कृतार्थ-कौशिकं सत्यसावित्रं, परशुरामचरितं चेति नाटकत्रयं चरित्रनिर्माणत्मकं

विरचितवान्। षडङ्के कृतार्थकौशिके नाटके कौशिको विश्वामित्रो नायकः प्रणयिन्या उग्रायाः हानिं सहते। विश्वामित्रः तपोवृत्तिं परित्यज्य राष्ट्ररक्षार्थं कर्मयोगं स्वीकुरुते। अमूल्यस्य कन्यया रोहिण्या तस्योद्वाहः परिणमति। स्त्रीभूमिकायाः काचिदभूतपूर्वसंवित्तिरस्मान्नाटकात् परिचीयते।

## प्राणाहुतिः

लेखकः—शिवसागरत्रिपाठी, प्रवक्ता—संस्कृतविभागे, राजस्थान-विश्वविद्यालये, जयपुरे, प्रथमसंस्करणं १९७७, प्रकाशकः—मातृशरणम्, ए—६५ जनताकालनी, जयपुर, पृष्ठसंख्या ८०७, मूल्यम् ५ रूप्यकाणि।

देशभक्तिपरमेकाङ्कं रूपकमिदमाधुनिकनाट्यशैलीमनुहरति। अत्र चरित्रनायको मीरमकबूल-शेरवानी स्वदेशस्य कश्मीरस्य रक्षणार्थमात्म-बलिदानमकरोदिति सत्प्रेरणापराणेयं कृतिः बहुप्रशंसामर्हति। संक्षेपेण प्राणाहुतेर्वस्तु कविना प्रस्तावितम्—

भावात्मके सुवैमल्ये यज्ञे कश्मीर-रक्षणे
प्राणाहुतिमकार्षीद्यो दायित्वं परिपालयन्।
कश्मीरदेशजो वीरो हुतात्मा जनताप्रियः
शेरवानी युवामीरमकबूलोऽत्र राजते॥

## भैरवानन्दनाटकम्

लेखकः—मणिककविः, सम्पादकः—श्रीमन्नारायण द्विवेदी, प्रकाशकः—पीयूष-प्रकाशन, रीवांरोड, अग्रिकल्चरल इंस्टिट्यूट, इलाहाबाद, प्राप्तिस्थानम्—साहित्यवाणी, गोसाईं टोला, इलाहाबाद, प्रथमसंस्करणम्, पृष्ठसंख्या ६४, मूल्यम् ४ रूप्यकाणि।

चतुर्दशाब्दिकमिदं षडङ्करूपकं यथानाम तन्त्राभिभूतानां नायिका-नायकानां प्रणयपरिणयपरम्परां विगाहते। रूपकमिदमपूर्णमेव प्रकाशितम्।

## पत्रकौमुदी

लेखकः—वररुचिः, सम्पादकः—श्रीमन्नारायण द्विवेदी, प्रकाशकः—पीयूषप्रकाशन, १८३ नईबस्ती, कृष्णनगर, इलाहाबाद, पृष्ठसंख्या ४४, मूल्यम् ३ रूप्यकाणि।

प्राचीनकाले पत्र-लेखन-कला सुविकसितासीदिति पत्रकौमुद्या स्पष्टं प्रमाणितं भवति। मध्ययुगीनेयं रचना प्रतिभाति नातिप्राचीनेति निश्चप्रचम्। प्रस्तुतग्रन्थेऽधोलिखितविषयाः स्पष्टीकृताः—

पत्राणां रंजनं चैव पत्रप्रमाणभंगकम्
पत्रलेखकचिह्नानि पत्रस्य रचनाक्रमः।
पत्रलेखप्रकारश्च पत्रस्य नचनाक्रमः
पत्रस्य पठनं चैव पत्रचिह्नं ततः परम्॥
पदन्यास-प्रकारश्च पत्रकोणस्य कर्तनम्।
प्रशस्तिपदविन्यासः श्रीशब्दस्य पदक्रमः॥
उत्थाप्याकाङ्क्ष्यपत्रं च शङ्कितं लिखनक्रमः।
अङ्कपत्र-विभाषा च भाषापत्रस्य लक्षणम्॥
कीर्तिवर्णनस्तोकाश्च प्रीतिश्लोकास्तथैव च।
नीतिश्लोकाश्च ग्रन्थेऽस्मिन् समासेनोपवर्णिताः॥ ५-६

उपर्युक्तविषयानधिकृत्य विरलविरला एव ग्रन्थाः प्राचीनकाले विलिखिताः स्वल्पतरा एवाधुना प्रकाशिताः सन्ति। श्रीमन्नारायण-द्विवेदी एतस्य प्रकाशनेन साधुवादं समर्हति।



अभिनव-प्रकाशनम्

# आधुनिक-संस्कृत-नाटक ( हिन्दी में )

( नये तथ्य : नया इतिहास )

कतिपयवर्षैः सागरिका-सम्पादकः, सागर विश्वविद्यालयस्य प्राचार्यो डा० रामजी उपाध्यायः संस्कृत-नाटकस्य बृहदितिहासं हिन्दी-भाषया प्रस्तावयितुं व्यापृतो वर्तते ।

प्रथमो भागः अश्वघोषतो भवभूतिपर्यन्तः

४७५ पृष्ठानि मूल्यं १० रूपकाः

द्वितीयो भागः अष्टमशतकात् पंचदशशतकं यावत्

५०५ पृष्ठानि मूल्यं २५ रूपकाः

तृतीयो भागः षोडशशतकात् १६७५ ई० यावत् प्रायः

१३०० पृष्ठानि मूल्यं ५० रूपकाः

तृतीयभागेऽस्मिन् संस्कृत-नाटकानां साहस्रं नाट्यशास्त्रीयविवेचन-पुरस्सरमैतिहासिकक्रमेण परिशीलितम् ।

मन्त्री, संस्कृत-परिषद्

## सागर-विश्वविद्यालय

सागर ( म० प्र० )